अमितौजसमानन्दमद्भुतं[1] चाब्दसंज्ञितम्[2] । अमेयाख्यं [3]तथाच्छाद्यं माधवोद्भूतमेव हि ॥ ६८ ॥
असंख्यममृतं[4] चेति दीप्तभेदा[5] नव स्मृताः । ग्रन्थसंख्या च नियुतं सूक्ष्मभेदो न विद्यते ॥६९
ग्रन्थसंख्या तु पद्मं [6]स्यादजितं विबुधं तथा । [7]विशुद्धमङ्गसंज्ञं च हस्तं [8]चाप्यथ जातिभाक् ॥७०
[9]अलंकारं [10]सुबोधं च प्रबुद्धं [11]चाप्रमेयकम् । [12]दश भेदाः सहस्रे तु [13]संख्या शङ्खं तु तद्गता ॥७१
वासवं काश्यपं [14]नीललोहितं भूततन्त्रकम् । विद्यापुराणमैन्द्रं [15]चाप्यात्मालंकारमेव च ॥७२
[16]वासिष्ठं गौतमं [17]ब्राह्ममीशानोत्तरमेव च । प्रकरणं [18]चापि भेदाः स्युर्द्वादशांशुमतः [19]स्मृताः ॥७३
ग्रन्थसंख्या भवेद्विष्णो [20]पञ्चलक्षेण लक्षिता । सुप्रभेदे न भेदोऽस्ति संख्या कोटित्रयं भवेत् ॥७४
अथोद्भवं [21]च विजयं सौम्यं वै [22]मृत्युनाशनम् । अघोरं [23]चाथ कौबेरं महाघोरं तथैव च ॥७५॥
[24]विमलं चेति भेदाः स्युर्विजयं च त्रिकोटिकम्[25] । पद्मं [26]हंसं च सामान्यं मातङ्गं [27]यक्षकं तथा ॥७६
पुष्कलं सुप्रियायोगं [28]पारमेशे प्रकीर्तिताः । भेदाः सप्त [29]भवेद्ग्रन्थो लक्षद्वादशसंयुतः ॥७७॥
निश्वासोत्तरनिश्वासे[30] तथा निश्वासकारिका । निश्वासनयनं चैव [31]गुह्यनिश्वासमेव च ॥७८॥
[32]अघोरनिश्वासमेवाथ निश्वासस्य मुखोदयम् । [33]सुधानिश्वासमेवाथ निश्वासश्चाष्टधा भवेत् ॥७९

---

[1] A : मरुतं pour अद्भुतं
[2] D : चाप्तसंज्ञितम् ; E : शाब्दसंज्ञितम्
[3] C : तथाच्छाद्यमासवोद्भुतमेव च
[4] E : अमृतं pour अमृतं
[5] D et E : दीप्ते भेदा
[6] A : स्याद्ध्यितं ; C et D : स्यादर्तातं ; E : स्याददितं
[7] C : शुद्धमङ्गलसंज्ञं च ; D : शुद्धं मङ्गलसंज्ञं च
[8] A : चाप्यथ भाजिभाक् ; D : चाप्यतिजातिभाक
[9] A : अलंकारः
[10] E : सुधाख्यं च
[11] D et E : च प्रमेयकम्
[12] A : दशभेदे
[13] A : संख्या च शङ्खसंज्ञका ; C : संख्या शङ्खस्तु तद्गता : E : सख्या शङ्खं तु तद्गतम्
[14] A : नीलं लोहितं
[15] A omet अपि
[16] A : वसिष्ठं
[17] C : ब्राह्ममीशानोत्तरसंज्ञिकम् ; D : ब्राह्ममीशानोत्तरसंज्ञकम् ; E : ब्राह्ममीशानोत्तरसंज्ञितम्
[18] C et E : च प्रभेदाः
[19] E : मताः
[20] A : पञ्चलक्षणलक्षिता
[21] A et C : विजयाख्यं
[22] D : वृत्तिनाशनम्
[23] C : चाधिकौबेरं
[24] C et E : वीरेशस्त्विति
[25] C et E : स्युर्विजये सा त्रिकोटिका
[26] A : हंसश्च
[27] C, D et E : यक्षिणी
[28] C : परमेशप्रकीर्तिताः
[29] A : भवेद्ग्रन्थं लक्षं द्वादशसंयुतम्
[30] A : निश्वासोत्तरनिश्वासौ
[31] A : मन्त्रनिश्वासमेव च ; C, D et E : निश्वासाख्यं मुखोदयम्
[32] C, D, E : अघोरं च सुधाख्यं च गुह्यमित्यष्टधा भवेत्
[33] C, D et E omettent le demi-*śloka* 79b

[1]निश्वासस्यैव संख्या तु कोटिरित्यभिधीयते। [2]वारुणं कवचं चैव [3]पाशबन्धं तु पिङ्गलम् ॥८०
कुशं वै दण्डधारं च धनुर्वेदं तथापरम् । [4]शिवज्ञानं तथा कोशं कालज्ञानं च [5]गीतकम् ॥८१
[6]भरतं [7]सर्पमृष्टं चाप्यायुर्वेदं धनुर्धरम् । आतोद्यमिति भेदाः स्युः [8]प्रोद्गीते षोडशैव हि ॥८२॥
[9]तस्य स्याद्ग्रन्थसंख्या तु लक्षत्रितयसंमिता । चतुर्वक्त्रं च संस्तोभं प्रतिबिम्बमयोगजम्[10]॥८३॥
[11]अर्थालंकारमैशान्यं[12] तुटिनीरं[13] तु कोटिकम् । कुट्टिमाख्यं तुलायोगं [14]तुलाप्रत्ययमेव च ॥८४
महाविद्या महासौरं [15]पट्टशेखरमेव च[16] । नैर्ऋतं [17]चेति भेदाः स्युर्बिम्बे[18] पञ्चदशैव हि ॥८५
ग्रन्थसंख्या तु लक्षं स्यादत्र [19]भेदे व्यवस्थिता। सारोत्तरमौशनसं[20] शालाख्यं शशिमण्डलम्[21] ॥८६
[22]सिद्धे भेदास्तु [23]चत्वारः संख्या कोटिस्तु [24]सार्धका। लिङ्गाध्यक्षं सुराध्यक्षं [25]शंकरं च महेश्वरम्॥
असंख्यमनलं[26] द्वन्द्वं सन्ताने सप्त भेदकाः। ग्रन्थसंख्या तु लक्षं स्यात्सन्ताने तु [27]प्रकीर्तिता ॥
ईशानं शिवधर्मं च शिवधर्मोत्तरं तथा । [28]दिव्यप्रोक्तं कुबेराख्यमिति भेदस्य पञ्चकम् ॥८९
नारसिंहे तु तत्संख्या द्विलक्षमिति कीर्तितम् । [29]स्थिरं स्थाणु महान्तं च नन्दीशं नन्दिकेश्वरम् ॥९०
एकपादपुराणं च [30]शांकरं नीलरुद्रकम् । [31]शिवं चन्द्रं कल्पभेदं [32]शिवशासनमेव च ॥९१॥

---

[1] C, D et E : निश्वासभेदास्तत्संख्या कोटिरित्यभिधीयते
[2] C, D et E : वाराहं
[3] C, D et E : पद्मबन्धम्
[4] C, D et E : शिवज्ञानं च विज्ञानम्
[5] D : पीतकम्
[6] C : भारतं
[7] A : सर्वभृष्टं ; C et D : सर्वमृष्टं
[8] A : प्रोद्गीतम्
[9] C, D et E : ग्रन्थसंख्या तु तेषां स्याल्लक्षत्रितयसम्मिता
[10] C : अधोगजम् pour अयोगजम्
[11] Ce demi-*śloka* manque dans le ms. E
[12] C et D : ऐशानं pour ऐशान्यं
[13] C : कुटीरं तु ; D : तुटिनीलं
[14] A : तुलप्रथनमेव च
[15] C et E : पट्टशेखरसंज्ञकम् ; D : पट्टशेखरसंज्ञितम्
[16] E ajoute : आलालङ्कारवायव्यौ मलयं प्रतिबिम्बकम्
[17] D : तु pour च
[18] A : बिम्बं pour बिम्बे
[19] D : भेदव्यवस्थिता
[20] D : औशनकं pour औशनसं
[21] E : शालाख्या शशिमण्डनम्
[22] A : सिद्धभेदास्तु
[23] A et C : चत्वारि संख्या
[24] A : सार्धकम्
[25] D et E : शङ्करं त्वनलेश्वरम्
[26] E : अनिलं pour अनलं
[27] A : प्रकीर्तिताः ; C : प्रकीर्तितः ; D et E : प्रकीर्तितम्
[28] C et E : दिव्यं प्रोक्तं
[29] A : सौरं स्थाणुं ; C : स्थिरस्थाणुं ; D et E : स्थिरं स्थाणुं
[30] A et D : शङ्करं
[31] C, D et E : शिवभद्रं
[32] C et D : श्रीमुखं शिवशासनम् ; E : श्रीमुख्यं शिवशासनम्

शिवशेखरसंज्ञं च [1]देव्यास्तु मतमेव च। चतुर्दशेन भेदेन चन्द्रज्ञानं त्रिकोटिकम् ॥ ९२ ॥
अनन्तं भोगमाक्रान्तं वृषगुह्यमतः परम् । वृषभं [2]वृषोदरं चैव [3]व्यनिभूतं तु रौद्रकम् ॥ ९३ ॥
[4]सुदन्तं भेदकं चैवाप्यारेवतमलंकृतम् । [5]अतिक्रान्ताट्टहासाख्ये भद्रमच्छिद्रमेव च ॥ ९४ ॥
विमले [6]षोडशोक्ता हि [7]भेदाः कोटित्रयान्वितम् । प्रजापतिमतं पद्ममिति भेदद्वयं मतम् ॥९५
स्वायंभुवे तु तद्ग्रन्थसंख्या कोटिस्तु सार्धका । प्रस्तरं फुल्लममलं [8]प्रबोधकमतः परम् ॥९६॥
अमोहं मोहसमयं [9]शाकटायितमेव च । [10]भद्रं विलेखनं वीरं [11]हलं वै बोधबोधके ॥ ९७ ॥
भेदास्त्रयोदश प्रोक्ता [12]वीरे नियुतसंख्यया । [13]कालाख्यं कालदहनं [14]रौरवं रौरवोत्तरम् ॥९८
[15]महाकालमतं चैन्द्रं षड्भेदा रौरवे स्थिताः । अस्मिंस्तन्त्रोत्तमे[16] प्रोक्तं ग्रन्थसंख्यार्बुदाष्टकम् ॥
[17]मकुटोत्तरं तु मकुटं [18]मकुटं द्विविधं स्मृतम् । [19]ग्रन्थसंख्या तु तस्यैव लक्षमेकं प्रकीर्तितम् ॥
गारुडं नैर्ऋतं नीलं [20]रुक्षभानु यवं तथा । धर्माख्यं च कलाख्यं च [21]प्रवुद्धं [22]धेनुसंज्ञितम् ॥
नव भेदाः समाख्याताः किरणे [23]कोटिपञ्चकम् । [24]ललितोत्तरं च कौमारं [25]द्विभेदौ ललिते स्मृतौ॥
ग्रन्थसंख्या भवेत्तत्र सहस्राणां तथाष्टकम् । आग्नेये तु न भेदोऽस्ति ग्रन्थसंख्यायुतत्रयम् ॥१०३
[26]वातुलोत्तरसंज्ञं च कालज्ञानं पुरोहितम् । सर्वं सर्वात्मकं नित्यं श्रेष्ठं शुद्धं [27]महात्मकम् ॥१०४

---

1 A : देव्या मतं तथैव च 2 D : वृषोदनं 3 C, D et E : आदिभूतं
4 A : सुदत्तं भेदकं चैव ; C et E : सुदत्तभेदकं चैव ; D : सुदत्तमति नूतं च
5 A : अतिक्रान्ताट्टहान्नाख्यं ; C, D et E : अतिक्रान्तं महार्मौख्यं
6 C : षोडशोक्तं 7 C : भद्रं ; D et E : भेदं
8 D : प्रबोधं बोधकं परम् ; E : प्रबोधं बोधमव्ययम्
9 C : शाकटादिकमेव च : D et E : शाकटायिकमेव च
10 C, D et E : भद्रं हि विमलं वीरं 11 A : भलं वै बोधबोधकौ ; E : हलं बोधकबोधकम्
12 E : वीरं 13 C et E : कालदाहं कलातीतं ; D : कालदाहं कालातीतं
14 C : रुरुवं भैरवोत्तरम् ; D et E : रुरुवं रौरवोत्तरम
15 C : महाकालनतं 16 A : तन्त्रान्तरे pour तन्त्रोत्तमे
17 C, D et E : मकुटोत्तरतन्त्रेण 18 A : मकुटस्य द्विधा स्मृता
19 C, D et E : ग्रन्थसंख्या तयोश्चापि
20 A : रुक्षभानुर्यत्रं तथा ; C : रुक्षमनुभवं तथा ; D : रुक्षं त्वनुभवं तथा ; E : रुक्षं च भानुकं तथा
21 C : प्रवद्धं ; E : प्रबुधं 22 C : धेनुसंज्ञतः ; E : धेनुसंश्रितम्
23 C, D et E : पञ्चकोटयः
24 Les demi-*śloka* 102b, 103a, 103b et 104a manquent dans le ms A ; ils y sont remplacé par ce demi-*śloka*, formé du début de 102b et de la fin de 104a : ललितोत्तरं च कौकालं कालज्ञानं पुरोहितम् 25 C : द्विभेदे ; D et E : द्विभेदा
26 C : वातुलोत्तरसंज्ञा च ; D : वर्त्तुलोत्तरसंज्ञा च 27 C : et E : महाननम्

विश्वं विश्वात्मकं तत्त्वं [1]द्वादशैवात्र [2]वातुले । भेदास्तद्ग्रन्थसंख्या[3] स्यादेकलक्षेण लक्षिता[4] १०५

[ सदाशिवादागमानामुद्भवः ]

कामिकं योगजं चिन्त्यं कारणं [5]चाजितं तथा । दीप्तं सूक्ष्मं [6]सहस्राख्यं [7]चांशुमत्सुप्रभेदकम् १०६
तन्त्राणां दशकं ह्येतदुपभेद[8]समन्वितम् । वेदाः [9]साङ्गाश्च चत्वारः शिवस्योर्ध्वमुखोद्भवाः १०७
विजयं [10]पारमेशं च निश्वासाख्यमतः परम् । प्रोद्गीतं मुखबिम्बं च सद्योजातमुखोद्भवाः १०८
सिद्धं सन्तानसंज्ञं च [11]नृसिंहं [12]चन्द्रभासकम् । विमलं चेति पञ्चैते वामदेवमुखोद्भवाः ॥१०९॥
स्वायंभुवं तथा वीरं रौरवं तन्त्रमुत्तमम् । मकुटं किरणं चैते घोरवक्त्रसमुद्भवाः ॥ ११० ॥
ललितं च तथाग्नेयं [13]वातुलं चेति तत्त्रयम् । [14]सोपभेदं समुद्भूतं [15]पुरुषाख्यमुखाम्बुजे ॥१११॥
अष्टाविंशतिभेदेन भिन्नेऽस्मिंस्तन्त्रसागरे । [16]दध्नीव सर्पिः संव्याप्तं पुरुषार्थचतुष्टयम् ॥११२॥
त्वयापि [17]पालकेनाद्य जगतां पुरुषोत्तम । धर्मार्थकाममोक्षार्थं [18]यततां दातुमुत्तमम् ॥ ११३ ॥
लघूपायं महार्थं तु [19]तन्त्रं पृष्टोऽहमस्मि यत् । [20]तद्ददामि शिवेनोक्तं शिवमुद्दिश्य निर्मितम् ॥

[ तन्त्रशब्दार्थः ]

तनोति विपुलानर्थांस्तत्त्वमन्त्रसमाश्रितान् । [21]त्राणं च कुरुते पुंसां तेन तन्त्रमिति स्मृतम् ११५
शिवरूपमिदं तन्त्रं प्रथमं वच्मि तत्त्वतः ॥ ११६ ॥

इत्यजिताख्ये महातन्त्रे [क्रियापादे] [22]तन्त्रावतारो नाम

प्रथमः पटलः[23]

---

[1] C, D et E : द्वादशैतेऽत्र　　[2] D : वर्तुले
[3] E : संज्ञा pour संख्या　　[4] A : स्याद्देहलक्षणलक्षिता ; D : स्यादेकलक्षकलक्षिता
[5] C, D et E : तु pour च　　[6] C et E : सहस्राख्यम् pour सहस्रं च
[7] A : अंशुमान् pour अंशुमत्　　[8] D : रूपभेद pour उपभेद
[9] E : साङ्गं च　　[10] C : परमेशं
[11] A : शर्वोक्तं　　[12] C : चन्द्रहासकम् ; E : चन्द्रभास्करम्
[13] D : वर्तुलं चेति ते त्रयः ; E : वातुलं च त्रयो भवेत्
[14] C et D : सोपभेदाः समुद्भूताः ; E : रुद्रभेदाः समुद्भूताः
[15] C, D et E : पुरुषस्य मुखाम्बुजे　　[16] D : दध्नः सर्पिस्तु संव्याप्तं
[17] E : बालकेनाद्य　　[18] D : यत्वादौ दातुमुत्तमम्
[19] A : तत्र पृष्टोऽहमस्मि यत्　　[20] A : तद्ददामि
[21] A : तन्त्र यत्कुरुते पुंसां तेन ; C D et E : त्राणं च कुरुते यस्मात्पुंसां
[22] A : तन्त्रावतारपटलः प्रथमः ; D : तन्त्रावतारः प्रथमः
[23] A ajoute : प्रथमश्लोकं तु त्रयोदशाधिकं शतम् । ; D ajoute : पटलग्रन्थः ११३, शिखामणिभट्टर् ; E ajoute : आद्य श्लोकसंख्यानि ११३

## [द्वितीयः पटलः]

### [शिवस्वरूपकथनम्]

[1]शिवः [2]सर्वोत्तरः स्थाणुः परमात्मा महेश्वरः । सच्चिदानन्दरूपी यः सदसद्व्यक्तिवर्जितः[3] ॥१॥
स एव सर्वगः सद्भिर्ब्रह्मशब्देन शब्दितः । [4]स्थूलं सूक्ष्मं परं चैव व्यक्ताव्यक्तोभयं तथा ॥२॥
बाह्यमाभ्यन्तरं चैव बाह्याभ्यन्तरमेव च । नित्यं चैव तथानित्यं नित्यानित्यं तथैव च ॥ ३ ॥
पुंलिङ्गं चैव स्त्रीलिङ्गं [5]नपुंलिङ्गं तृतीयकम् । [6]जाग्रत्स्वप्ने सुषुप्तिश्च [7]भूतं भव्यं भविष्यकम् ॥४
अदृश्यं च तथा दृश्यं दृश्यादृश्यं तथैव च । वाचिकं मानसं कर्म मानं माता च मेयकम् ॥ ५
आत्मविद्याशिवाख्यं च भोक्ता [8]भोज्यं च [9]भोग्यकम् । मायेयमाणवं [10]कर्म ज्ञानमज्ञानमेव च॥६
प्रकाशं तिमिरं चैव [11]स्थूलं सूक्ष्मं तथैव च । अन्तिकं च तथा दूरं हेयोपादेयमेव च ॥ ७॥
नित्यं नैमित्तिकं चैव [12]परं चापरमेव च[13] । [14]संहृतं च प्रकीर्णं च सत्यं चासत्यमेव च॥८॥

---

[1] Cf. *Suprabhedāgama*, IV, 1, 9b-12a :
शिवं परात्परं ब्रह्म अप्रमेयमिति स्मृतम् । मलत्वान्निन्दितं ज्ञेयममलत्वादनिन्दितम् ॥
अनौपम्यमसादृश्यादक्षीणात्तथथाव्ययम् । व्योमातीतात्परं सूक्ष्मं नित्यं कारणशून्यतः ॥
व्यापित्वात्सर्वगं प्रोक्तं स्वामिभावात्प्रभुः स्मृतम् । वाङ्मनोव्यतिरिक्तत्वात् प्रमाणातीतगोचरम ॥
Cf. *Vātulaśuddhākhya*, *paṭala* 1, *śloka* 19-23a :
शिवं परात्परं सूक्ष्मं नित्यं सर्वगमव्ययम् । अनिन्दितमनौपम्यमप्रमेयमनामयम ॥
शुद्धत्वाच्छिवमुद्दिष्टं परादूर्ध्वे परात्परम । व्योमातीततनुं सूक्ष्मं नित्यं कारणकारणम् ॥
व्याप्त्या सर्वगतं प्रोक्तमक्षीणादव्ययं भवेत् । अमलोऽनिन्दितं ज्ञेयमसादृश्यादनौपमम् ॥
प्रमाणव्यतिरिक्तत्वादप्रमेयमिति स्मृतम् । निर्गुणत्वाद्विशेषेण अनामयमिति स्मृतम ॥
इत्येतैर्लक्षणैर्युक्तं शिवरूपमिहोच्यते ॥

[2] A, B, C : सर्वान्तरः pour सर्वोत्तरः [3] D : व्यञ्जितः pour वर्जितः
[4] A, B, C et D : स्थूलसूक्ष्मपरं चैव [5] C : नपुंलिङ्गतृतीयकम
[6] A : जाग्रत्स्वप्नसुषुप्तिश्च [7] A, B et D : भूतभव्यभविष्यकम
[8] A : भोगं pour भोज्यं [9] E et F : भोगकम्
[10] C : कार्मं [11] C et F : स्थूलसूक्ष्मं [12] C : परश्चापर एव च
[13] Dans C l'ordre des *śloka* est le suivant : 8a, 10b, 10a, 8b, 9, 11 etc.
[14] C : शंसृतं : E : संभृतं

सच्चासच्च सुरश्रेष्ठ [1]कर्तृ भर्तृ तथैव च । [2]हृद्यं चैव तथाहृद्यं हृद्याहृद्यं तथैव च ॥ ९ ॥
वाच्यं च वाचकं यत्तदाधाराधेयमेव च । शीतमुष्णं च यत्प्रोक्तं सुखदुःखं तथैव च[3] ॥१०॥
[4]पवित्रं चापवित्रं च मृदु तीक्ष्णं तथैव च । रागद्वेषं च जन्तूनां [5]यत्नालस्यं तथैव च ॥ ११ ॥
उन्नतं [6]च नतं चैव संपच्चासंपदेव च । सुस्थितं दुःस्थितं चैव चलं चाचलमेव च ॥ १२ ॥
सर्वमेतत्स एवेशस्तस्मादन्यन्न विद्यते । [7]प्रकृतिश्च महांश्चैवाप्यहंकारक एव च ॥ १३ ॥
शब्दमात्रं स्पर्शमात्रं रूपमात्रं तथा परम् । रसमात्रं गन्धमात्रं श्रोत्रत्वक्चक्षुरेव च ॥ १४ ॥
[8]जिह्वा घ्राणं च वाक्पाणिपादं [9]पायुरुपस्थकम् । मनसा च पृथिव्यादिपञ्चकं पुरुषेण तु ॥१५॥
रागो [10]माया च विद्या च कला नियतिरेव च । विद्येशश्चैव[11] शक्तिश्च शुद्धमाया तथैव च १६
[12]शुद्धविद्या शुद्धकला सदाशिवशिवं विदुः । ईश्वरश्च स एव स्यात्स एवाहं भवांस्तथा ॥१७॥
[13]स एव देवो ब्रह्मादिकाश्यपाद्याः प्रजासृजः । स एव मुनयः सप्त चन्द्रादित्यौ ग्रहेश्वरौ ॥१८॥
स एव देवराजोऽपि कुबेरवरुणौ तथा । स यमोऽग्निश्च नागेशो निर्ऋतिर्वायुरेव च ॥ १९ ॥
ईशानो गणपाः सर्वे वसवोऽष्टौ तथैव च । रुद्रा एकादशान्येऽपि देवदानवपुङ्गवाः ॥ २० ॥

---

[1] E : कर्ता भर्ता तथैव च : F : कर्तृ भोक्तृ तथैव च. [2] E : हृद्यश्चैव तथा हृद्यमहृद्यश्च तथैव च.

[3] Cf. *Vātulaśuddhākhya, paṭala* 9, *śloka* 77-79 :
नित्यो नैमित्तिकश्चैव परं चापरमेव च । सच्चासच्च सुरश्रेष्ठ कर्तृ भर्तृ तथैव च ॥
हृद्यं चैव तथाहृद्यमहृद्यः श्वस्तथैव च । वाच्यं च वाचकं यत्तदाधाराधेयमेव च ॥
सुस्थितं दुःस्थितं चैव चलं चाचलमेव च । शीतमुष्णं च यत्प्रोक्तं सुखं दुःखं तथैव च ॥

[4] cf. *ibid.*, *śloka* 80-85 :
पवित्रं चापवित्रं च मृदु तीक्ष्णं तथैव च । रागद्वेषं च यज्ज्ञानं यत्नालभ्यं तथैव च ॥
उन्नतं चानतं चैव संपच्चासंपदेव च । सर्वमेतच्च एवेशस्तस्मादन्यन्न विद्यते ॥
प्रकृतिः शब्दमात्रं तु रूपमात्रं तथापरम । रसमात्रं गन्धमात्रं श्रोत्रत्वक् चक्षुरेव च ॥
जिह्वा घ्राणं च वाक्पाणिपादं पायुरुपस्थकम् । मनसा च पृथिव्यादिपञ्चकं पुरुषेण तु ॥
रागमायां च विद्यां च कलां नियतमेव च । विद्येशं च शक्तिं च शुद्धमायां तथैव च ॥
शुद्धविद्यां शुद्धकलां सदाशिवशिवं विदुः । ईश्वरश्च स एव स्यात्स एवाहं भवांस्तथा ॥

[5] A : यमतालं pour यत्नालभ्यं ; E : यत्तालभ्यं
[6] C, E et F : चानतं pour च नतं
[7] A : प्रकृतिं च महान्तं च अहंकारकमेव च
[8] E omet les trois demi-*śloka* suivants.
[9] F : पादपायुर् pour पादं पायुर्
[10] F : माया विद्या च pour माया च विद्या च
[11] F omet एव
[12] C : शुद्धिश्चाशुद्धिकं चैव सर्वं चैव शिवं विदुः

[13] Cf. *Vātulaśuddhākhya, paṭala* 9, *śloka* 86-89 :
स एव देवब्रह्मादिकाश्यपाद्याः प्रजासृजः । स एव मुनयः सप्त चन्द्रादित्यौ ग्रहेश्वरौ ॥
स एव देवराजोऽपि कुबेरो वरुणस्तथा । स यमोऽग्निश्च नागेशो निर्ऋतिर्वायुरेव च ॥
ईशानो गणपाः सर्वे वसवोऽष्टौ तथैव च । रुद्रा एकादशान्येऽपि देवदानवपुंगवाः ॥
देवमष्टविकल्पं च धैर्यमन्योन्यपञ्चकम् । मानुष्यं च जगत्कृत्स्नं स एव शिव उच्यते ॥

दैवमष्टविकल्पं च [1]तिर्यग्योनं च पञ्चकम् । मानुष्यं च जगत्कृत्स्नं स एव शिव उच्यते[2] ॥२१
[3]चत्वारश्च तथा वेदा रहस्येन वदन्ति तम् । सिद्धान्ते भूततन्त्रे च वामे स्रोतसि दक्षिणे ॥२२
[4]भैरवे च तथान्येषु [5]पशुपाशुपतादिषु । विष्णुतन्त्रे च बौद्धे च तथा [6]दिक्पालदर्शने ॥ २३ ॥
अष्टादशपुराणेषु [7]षडङ्गेष्वपरेषु च । योगशास्त्रेषु सर्वेषु न्यायवैशेषिकादिषु ॥ २४ ॥
[8]यैर्यैर्यद्यत्परीक्ष्यैव[9] तत्त्वमित्युच्यते बुधैः । तत्तत्स एव देवेशः शिवसंज्ञः सनातनः ॥ २५ ॥
आदिमध्यान्तनिर्मुक्तः स्वभावविमलः प्रभुः । सर्वज्ञः परिपूर्णश्च शिवो ज्ञेयः शिवागमे ॥२६॥
[10]दिक्कालाद्यनवच्छिन्नो [11]वाङ्मनोऽतीतगोचरः । निष्कलो [12]निष्क्रियश्चापि [13]सर्वगः सर्वदृक् सदा ॥
[14]अन्तर्यागो हि तत्पूजा योगिनामेव [15]सा भवेत् । [16]योगाभ्यासरतैः[17] [18]पुंभिर्हृत्कुशेशयमध्यमे ॥
यमाद्यष्टाङ्गयोगेन विमलीकृतमानसैः[19] । [20]पूज्यते नेतरैस्तस्य [21]पूजाकृत्यं विशिष्यते ॥ २९ ॥
हित्वा [22]तदर्चनां नान्यैः [23]श्रेयो भवति देहिनाम् । [24]अन्तर्यागाधिकारोऽत्र कश्चित्कस्यापि जायते ॥

[ सदाशिवादिमूर्तिभेदः ]

बहिर्यागाधिकारोऽयं[25] [26]किंचिज्ज्ञानां [27]च जायते । [28]इत्यवेद्य स देवेशः शिवः [29]सर्वान्तरस्थितः ॥
लोकानुग्राहको भूत्वा जन्तूनां भुक्तिमुक्तिदः । पञ्चब्रह्मतनुः साक्षात् [30]स शिवोऽभूत्सदाशिवः ॥

---

[1] A : तैर्यनन्योन्यपञ्चकम ; C : तैजनन्योन्यपञ्चकम

[2] Cf. *Sāṃkhyatattvakaumudī*, p. 375 :
अष्टविकल्पो दैवस्तिर्यग्योनं च पञ्चधा । मानुष्यं चैकविधः समासतो भौतिकः सर्गः ॥

[3] Les *śloka* 22 à 36a se trouvent dans le *Vātulaśuddhākhya* ; cf. *paṭala* 9, *śloka* 90-103a.

[4] C : भैरवेषु pour भैरवे च

[5] A : पशुपाशपतादिषु

[6] C, E et F : दिक्पददर्शने : V (*Vātulaśuddha*) : दिक्पनिदर्शने

[7] C, D et F : षडङ्गेषु परेषु च

[8] D : यैर्ये pour यैर्यै

[9] A : परीक्षैव pour परीक्ष्यैव : V : परिक्रम्य

[10] F : दिक्पाल pour दिक्काल ; V : केवल pour दिक्काल

[11] V : वामे नोदितगोचरे

[12] F : निष्क्रियश्यापि : V : निष्कलश्चापि

[13] V : सर्वगन्धर्वदिक् सदा

[14] A : अन्तर्यागे ; C, D et F : अन्तर्यागो.

[15] E : संभवेत्

[16] C omet ce demi-*śloka*

[17] E : योगन्यासरतैः

[18] V : सद्भिः pour पुंभिः

[19] V : मानसे pour मानसैः

[20] C : पूजिते

[21] C : पूजां कर्तुं ; V : पूजा कर्तु

[22] C : तदर्चनं नान्यत् : V : तदर्चनादन्यत्

[23] E : ज्ञेयो

[24] F : अन्तर्योग pour अन्तर्याग

[25] F : यत् pour अयं

[26] A, C et V : किंचिज्ज्ञानं pour किंचिज्ज्ञानां

[27] C : हि pour च

[28] C, E, F et V : इत्यवेत्य

[29] A : सर्वान्तरः स्थितः

[30] C : स शिवो यः सदाशिवः

तस्मादीश्वर उत्पन्नः सर्वदेवादिरव्ययः । [1]ततोऽहं च भवान्मत्तः समुत्पन्नो जगद्गुरुः ॥३३॥
[2]त्वन्नाभिकमलोद्भूतो ह्यजो लोकपितामहः । [3]शिवाश्रिता भवेद्विद्या सैव मायेति कीर्तिता ॥
मूलप्रकृतिरित्यन्ये[4] सापि पञ्चसु [5]मूर्तिषु । कार्यकारणभावेन [6]स्थिता [7]तस्याः स्थितिं शृणु ॥
[8]तस्या मनोन्मनी देवी सदाशिवसमाश्रिता । [9]तस्याश्च गौरी संभूता [10]महेश्वरसमाश्रिता॥३६॥
[11]तस्या उमा सा संजाता मदीया [12]स्याद्भवप्रिया। पद्मा तस्याश्च संभूता भवन्तं विष्णुमाश्रिता॥३७॥

[ जगत्सृष्टिस्थितिसंहारादि ]

तस्याश्चापि समुद्भूता वाणी ब्रह्माणमाश्रिता । पितामहेन सृष्टं हि जगत्सर्वमशेषतः ॥ ३८ ॥
त्वया च पालितं तद्वत्संहृतं च मया तथा । कार्यकारणभावत्वमेवमस्मास्ववस्थितम्[13] ॥ ३९ ॥
सदाशिवादिष्वेतेषु [14]तनुता शिव उच्यते । केवलं [15]कारणत्वं तु तस्मिन्नेकं व्यवस्थितम् ॥४०॥
सोऽयं सदाशिवो लोके महेश्वरपुरःसरैः । अस्माभिः पूज्यते लिङ्गे सर्वजन्तुभिरव्ययः ॥ ४१ ॥

इत्यजिताख्ये[16] महातन्त्रे [क्रियापादे] [17]शिवस्वरूपकथनं नाम

द्वितीयः पटलः ॥[18]

[1] C : यतो pour ततो ; V : ततो हि मत्तः सर्वज्ञः pour ततोऽहं च भवान्मत्तः
[2] V : तन्नाभि pour त्वन्नाभि
[3] V : अधिश्रिता
[4] V : एषा pour अन्ये
[5] V : मुक्तिषु
[6] V : स्थितः pour स्थिता
[7] A, B, C et V : तस्य pour तस्याः
[8] C : तस्यां pour तस्याः
[9] E omet les *śloka*, 36b à 38a
[10] A : माहेश्वर pour महेश्वर
[11] C : तस्याम् pour तस्याः
[12] F : स्याद्भवत्प्रिया
[13] A: एवमस्याः स्ववस्थितम् pour एवमस्मास्ववस्थितम्
Cf : *Suprabhedāgama*, I, 33, 15-18a
ब्रह्मणा सर्वमुत्पन्नं विष्णुना सर्वपालनम् । जगतां सर्वसंहारं शिवस्य परमेष्ठिनः ॥
यद्वच्छम्भोः समुद्भूतं तद्वच्छक्तेः समुद्भवम् । अमूर्तं चेदमूर्तं तु समूर्तं चेत्समूर्तका ॥
अग्नेरुष्णत्ववच्छक्तिरविनाभाविनी विभोः ॥ ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः ।
सावित्री श्रीरमा देवी ईश्वरी च मनोन्मनी ॥
[14] C, D et E : तनुर्या pour तनुता
[15] A : कारणं त्वं pour कारणत्वं
[16] F : इत्यजिते pour इत्यजिताख्ये
[17] A : शिवस्वरूपपटलो द्वितीयः, ग्रन्थम् ४० : D : शिवस्वरूपविधिः द्वितीयः पटलः ; E : शिवस्वरूपं नाम द्वितीयः पटलः
[18] Dans le ms. A, les *śloka* 1, 2, et 30b à 41 et le colophon इत्यजिताख्ये महातन्त्रे सृष्टिपटलस्तृतीयः se trouvent à la suite de ce *paṭala*

## [तृतीयः पटलः]

### [लिङ्गोत्पत्तिविधिः]

[1]लिङ्गोत्पत्तिं ततो वक्ष्ये[2] शृणु वारिजलोचन । पुरुषस्य तु यच्चिह्नं पुरुषव्यक्तिकारणम् ॥ १ ॥
सदाशिवस्य तल्लिङ्गं शिवलिङ्गमिति स्मृतम् । [3]कूटस्थश्च [4]महादेवः सर्वकारणकारणम् ॥ २ ॥
[5]त्वदादेर्यो ममादिस्तु तस्याप्यादिः सदाशिवः । युवां [6]मोहान्धमनसौ सर्वज्ञावपि सर्वगौ ॥३॥
[7]मां वेत्तुमसमर्थौ हि नारायणपितामहौ । परस्पर[8]बलाधिक्याद्दर्प[9]मोहसमन्वितौ[10] ॥ ४ ॥
[11]मत्तोऽधिकोऽन्यो नास्तीति [12]परस्परगतेर्ष्यया । [13]जिघांसू द्वौ मिथो रुष्टौ प्रलये [14]समुपस्थितौ ॥
ततस्तु युवयोर्मोहमीदृग्भूतं[15] सुरेशयोः । संवीक्ष्य [16]सर्वदेवादिः [17]शब्दब्रह्मतनुः शिवः ॥६॥
बोधार्थं युवयोश्चापि ज्वलनस्तम्भरूपधृत्[18] । [19]योऽतिष्ठत्परमेशानो मध्ये त्वाश्चर्यसंयुतः ॥७॥
युवां तेन परं गत्वा विस्मयं सुरपुङ्गवौ । किमिदं [20]न्विति संचिन्त्य तत्परीक्षासमुद्यतौ ॥८॥
गतावूर्ध्वमधस्तात्तु[21] लिङ्गरूपस्य तस्य हि । हंसक्रोडशरीरेण[22] तत्पर्यन्तदिदृक्षया ॥ ९ ॥
सर्वलोकेश्वरौ देवौ [23]निवृत्तावकृतार्थकौ । नत्वा स्तुत्वाथ[24] देवेशं युवां तत्पार्श्वयोः स्थितौ ॥
युवयोर्भक्तिमन्वीक्ष्य सर्वदेवेश्वरः शिवः । [25]ईश्वरं तु तदा तत्र [26]ज्ञानदं युवयोरपि ॥ ११ ॥

---

[1] Les *śloka* 1 à 15 manquent dans le ms. B.
[2] D : लिङ्गोत्पत्तिविधिं वक्ष्ये : E et F : लिङ्गोत्पत्तिमथो वक्ष्ये
[3] A : कूटस्थं च; C, D, E, F : कूटस्थं तं
[4] A, C, D, E, F : महादेवं
[5] A : त्वदादि व्योममादिस्तु तस्या व्यापि सदाशिवः
[6] C, D, E et F : मोहान्धतमसौ
[7] A : तत्को वक्तुं समर्थौ हि
[8] D et E : बलोद्रेकाद् pour बलाधिक्याद्
[9] D : रोष pour मोह
[10] F : बलान्वितौ pour समन्वितौ
[11] F : मत्तोऽधिको नान्योऽस्तीति
[12] A : अपस्वरकृतेर्व्यया:
[13] D : जीघांसू pour जिघांसू
[14] A : समुपस्थितं
[15] A : इहोद्भूतं pour ईदृग्भूतं
[16] A : सर्वदेवादीन्
[17] E : ब्रह्मशब्दतनुः
[18] E et F : धृक् pour धृत्
[19] A : ज्योतिस्तत्परमेशाने मध्येत्याश्चर्यसंयुतः
[20] E : चेति ; F : त्विति
[21] C, D, E et F : च pour तु
[22] C, D, E et F : शरीरेण pour शरीरौ तौ
[23] D : निकृत्तौ pour निवृत्तौ
[24] E : च pour अथ
[25] A : ईश्वरस्तु
[26] A : ज्ञानतो

[1]विसृज्य सोऽपि देवेशो युवां चैव स शंकरः । [2]युवां न वेत्थ[3] देवेशं सर्वकारणमव्ययम् ॥१२
सदाशिवं महादेवमीशानं सुरनायकम् । अहं रुद्रो युवां चैव सर्वे तस्य प्रसादजाः ॥ १३ ॥

[ लिङ्गपूजाफलम् ]

तस्य [4]लिङ्गमिदं तावदहं [5]रुद्रश्च सर्वदा । युवां [6]चेदृशमुत्पाद्य नानाद्रव्यैर्यथेच्छया[7] ॥ १४ ॥
[8]पूजयामोऽथ देवेशं [9]पूजितो लिङ्गमूर्धनि । ज्ञानं दास्यति सर्वज्ञः सदा मोहोपशान्तये ॥१५॥
[10]अस्मत्पूजाविधिं दृष्ट्वा चतुर्दशविधं[11] जगत् । पूजयिष्यति [12]लिङ्गं तत् पूजा [13]श्रेयोऽथ दास्यति॥

[ लिङ्गशब्दनिर्वचनम् ]

[14]इत्युक्त्वा सह लिङ्गेन तिरोऽभूत्सपदीश्वरः । [15]लयं गच्छन्ति भूतानि संहारे [16]निखिलानि च॥
निर्गच्छन्ति [17]यतश्चापि लिङ्गोक्तिस्तेन हेतुना । [18]तस्मिन्समर्चिते[19] लिङ्गे [20]सर्वे देवाः [21]समर्चिताः॥
एतत्कर्म त्वदीयत्वाज्ज्ञातमेव[22] पुरा त्वया । तथापि कथितं विष्णो [23]तन्त्रस्याथ क्रमागतम् ॥१९

इत्यजिताख्ये महातन्त्रे [क्रियापादे] [24]लिङ्गोत्पत्तिविधिर्नाम[25]

तृतीयः पटलः ।

---

[1] C, D, E, F : विसृज्य देवदेवेशं युवां चैव महेश्वरः

[2] C : युवामेवेत्थ

[3] On peut lire वित्तं pour वेत्थ

[4] E et F : भङ्गमिदं

[5] A : रुद्राश्च

[6] A : चेदीशमुत्पाद्य

[7] A : अथेच्छया pour यथेच्छया

[8] A : पूजायामेकदेवेशं ; D : पूजयामो थ देवेशं

[9] A : पूजिता

[10] A : अस्मान् pour अस्मन्

[11] A : विधिः pour विधं ; B, E et F : विधिं

[12] A : वेगं pour लिङ्गं

[13] A : श्रेयो स दास्यति ; C : श्रेयोऽधिदास्यति

[14] A : इत्युक्ताविह लिङ्गे तु ; C : इत्युक्त्वा संभवलिङ्ग

[15] Cf. *Suprabhedāgama*, I, 33, 1b-2a :
लयं गच्छन्ति भूतानि संहारे निखिलं यतः । सृष्टिकाले तथा सृष्टिस्तस्माल्लिङ्गमुदाहृतम् ॥
Cf. aussi *Vātulaśuddhākhya*, I, 52 :
लिङ्गात्सर्वं समुत्पन्नं लयं तस्मिन्प्रकीर्तितम् । सृष्टिसंहारमेवोक्तं लिङ्गनाम्ना त्विहोच्यते ॥

[16] A : निखिलं जगत्

[17] A : यथा चापि

[18] Cf. *Suprabhedāgama*, I, 8, 156
एवं समर्चिते सर्वमर्चितं च चराचरम् । तस्माल्लिङ्गार्चनं कार्यं प्राज्ञैश्च सुमहात्मभिः ॥

[19] A : यस्मिन् समर्पिते

[20] C : सर्वदेवाः

[21] A : समर्पिताः

[22] A : ज्ञानमेव

[23] A : ततस्तस्मान्ममार्चनम् ; D, E : तन्त्रस्यार्थक्रमागतम्

[24] A : लिङ्गोत्पत्तिपटलश्चतुर्थः ;

[25] B, D, E omettent नाम

## [चतुर्थः पटलः]

[लिङ्गलक्षणविधिः][1]

[2]अतः परमिदं वक्ष्ये लिङ्गलक्षणमुत्तमम्[3] । [4]लिङ्गं [5]तु त्रिविधं प्रोक्तं व्यक्ताव्यक्तोभयात्मकम्॥
[6]व्यक्तं यत्प्रतिमाव्यक्तं [7]शिवलिङ्गमिति स्मृतम् । मुखलिङ्गं भवेदन्यत्तृतीयमुभयात्मकम् ॥२॥
सदाशिवं तदुद्दिष्टमव्यक्तं लिङ्गमुत्तमम् । ऐश्वरं मुखलिङ्गं [8]स्याद्रौद्रं व्यक्तमिदं भवेत् ॥ ३ ॥
[9]मदीयमिति [10]तद्विद्धि व्यक्तलिङ्गं जनार्दन । अव्यक्तं प्रथमं तेषां [11]वदामि सुरसत्तम ॥ ४ ॥
[12]तत्तत्प्रासादमानेन [13]तन्मानात्तद्भवेदथ । प्रासादमार्धं निश्चित्य [14]तद्गर्भकरतोऽपि वा ॥५॥
द्वारमानेन वा कुर्यादेकैकं [15]नवभेदतः । सर्वार्थसाधनं लिङ्गं ब्रह्मविष्णुशिवात्मकम्[16] ॥ ६ ॥
प्रासादगर्भे[17] शरभागभागे[18] श्रेष्ठोत्तमं स्याद्गुणभागलिङ्गम् ।
गर्भार्धमानं [19]त्वधमाधमं स्यादन्यानि लिङ्गानि वदामि सप्त ॥ ७ ॥

---

[1] Pour la *liṅgalakṣaṇavidhi* voir *Kāraṇāgama* I, 9, *Suprabhedāgama*, I, 33, *Kiraṇāgama*, III, 21-23 etc.

[2] D : अत: परं प्रवक्ष्यामि

[3] F : उच्यते pour उत्तमम्

[4] Cf. *Mṛgendrāgama*, Appendice I, p. 251 ;
cf. aussi *Kiraṇāgama* III, 21, 3: 22, 2a ; 23, 11 :
त्रिविधं तत्समाख्यातमव्यक्तं प्रथमं भवेत् । . . व्यक्तं तत्प्रतिमा ख्याता : . . .
एकवक्त्रं त्रिवक्त्रं वा प्रासादे चैकवक्त्रके । स्थाप्यं चतुर्मुखं लिङ्गं चतुर्वक्त्रं विशालयेत् ॥
व्यक्ताव्यक्तमिदं लिङ्गम . . .

[5] B, C, D, E et F : तत् pour तु

[6] F : वितं pour व्यक्तं

[7] A : शिवलिङ्गमतीन्द्रियम्

[8] C : स्याद्रुद्रस्योक्तमिदं भवेत्

[9] C, D, E et F : तृतीयमिति

[10] E : तद्भक्ति ; F : तद्भक्तं

[11] C, E, F : व्यक्ताव्यक्तं द्वितीयकम्

[12] A : तद्धि pour तत्त्त्

[13] E : मानं तस्य pour तन्मानात्

[14] B, C, D : तद्गर्भेन pour तद्गर्भ

[15] F : न भवेदथ

[16] Cf. *Kāraṇāgama* I, 9, 1a-2 :
स्थावरं जङ्गमं चैव द्विविधं लिङ्गमुच्यते । शैलजं रत्नलोहं च मृन्मयेनैव कारयेत् ॥
शिलामयं तु यद्रूपमजविष्णुहरैर्युतम् । त्रिमूर्त्रं मुकुलैर्युक्तं स्थावरं लिङ्गमुच्यते ॥

[17] B : गृहे pour गर्भे ; F : गर्भेश्वर pour गर्भे शर

[18] C et D : भाजिते pour भागे ; E et F : भाजितो

[19] D : त्वधमासमं ; F : त्वथ माधवं

[1]यतस्ततः श्रेष्ठकनिष्ठयोस्तत्कृत्वाष्टभागं गगनांशवृद्ध्या ।
[2]अन्त्यान्त्यलिङ्गान्नवलिङ्गक्लृप्तिं श्रेष्ठोत्तमान्तं विदधीत विद्वान् ॥ ८ ॥
[3]हस्तैकलिङ्गं नवभिर्विदध्याच्छ्रेष्ठोत्तमं हीनकनिष्ठलिङ्गम् ।
हस्तेन चैकैककराभिवृद्ध्या नवैव लिङ्गं तु यथाक्रमेण ॥ ९ ॥
श्रेष्ठोत्तमं द्वारसमुच्छ्रयेण द्वारे गुणांशे गगनांशकेन ।
अन्त्यान्त्यलिङ्गान्नवलिङ्गक्लृप्तिर्मध्येऽष्टभागे सति पूर्ववत्स्यात्[4] ॥ १० ॥
रत्नं शिलाधातुमहीरुहाश्च शस्ता ह्यमी मृत्तिकयापि[5] पञ्च ।
लिङ्गार्थमेषामथ वच्मि [6]भेदं रत्नादिकानां शृणु तत्समस्तम् ॥ ११ ॥
नवप्रकारं कथितं [7]तु रत्नं शैलं चतुर्धाष्टविधं च [8]धातु ।
दारूद्भवं [9]स्यान्नवधा [10]हि लिङ्गं [11]तत्पार्थिवं च [12]द्विविधं प्रदिष्टम्[13] ॥ १२ ॥

---

[1] C, D, E et F : तदन्तरे pour यतस्ततः
[2] A : अन्त्यान्य pour अन्त्यान्त्य ; B : अन्यान्य ; C, D et F : अन्योन्य
[3] B, C, D, B et F omettent les deux *śloka* 8 et 9
[4] Cf. *Suprabhedāgama*, I, 33, 77-82 :
परीक्ष्यैव तु कर्तव्यं लिङ्गं गर्भादिवर्जितम् । प्रासादगर्भविस्तारं सूत्रेण समितं तथा ॥
गर्भविस्तारपञ्चांशस्त्रियंशेनोत्तमं विदुः । गर्भं तु नवधा कृत्वा पञ्चभागं तु मध्यमम् ॥
अधमं गर्भमानार्धं त्रिविधं तु प्रमाणतः । कनिष्ठज्येष्ठयोर्मध्ये गर्भेऽष्टांशे कृते सति ॥
प्रोक्तं तु नवधा मानं तेषां कार्यं यदृच्छया । अथवान्यप्रकारेण गर्भं तु नवधा पुनः ॥
उत्तमं त्रीणि चोक्तानि मध्यमं त्रीणि चादिशेत् । अधमं त्रीणि चोक्तानि नवभेदमुदाहृतम् ॥
हस्तादिनवहस्तान्तं नवधा हस्तमानकम् । त्रिनालादुद्रतालान्तं तथा नवविधं पुनः ॥
[5] B, C, D et E : च pour अपि
[6] C et D : भेदान्
[7] C et D : समस्तं pour तु रत्नं
[8] C, E et F : धातुम्
[9] C et D : तन्नवधा
[10] E : विभिन्नं pour हि लिङ्गं
[11] A : तन्मृत्तिकं च
[12] C, D, E et F : प्रथमं प्रशस्तम्
[13] Cf. *Suprabhedāgama* I, 33, 20a-23a :
लिङ्गे यानि प्रभेदानि सैकतादीनि तच्छृणु । क्षणिकं चैव मृल्लोहं रत्नजं दारुजं तथा ॥
शैलजं चैव विघ्नेश षडङ्गं लिङ्गमुच्यते । क्षणिका द्वादश प्रोक्ता मृन्मयं द्विविधं पुनः ॥
दारुजं चाष्टधा प्रोक्तमष्टधा लोहजं स्मृतम् । सप्तधा रत्नजं चैव शैलजं तु चतुर्विधम् ॥

माणिक्यमुक्ते [1]त्वथ वज्रनीलौ [2]वैडूर्यसंज्ञं हरिताश्मना च ।
[3]पुष्यादिरागस्फटिकप्रवाला नवैव रत्नानि भवन्त्यमूनि[4] ॥ १३ ॥
शिला सिता [5]रक्तनिभा च पीता कृष्णा च विप्रादिषु योजनीया ।
ग्राह्यानुलोमेषु[6] च [7]साथ कृष्णा सर्वेषु [8]वर्णेषु च कल्पनीया[9] ॥ १४ ॥
[10]कल्याणरूप्ये त्वथ [11]कांस्यताम्रे त्र्यारकूटायससीसकानि[12] ।
[13]धातूनि लिङ्गस्य विधावमूनि शुद्धानि चाष्टौ कथितानि [14]विष्णो[15] ॥ १५ ॥
बिल्वः शमी चन्दनदेवदारू[16] लिङ्गार्थमश्वत्थकरञ्जवृक्षौ[17] ।
अरिष्टवृक्षः खदिरो मधूको नवात्र वृक्षाः कथिताः ससाराः[18] ॥ १६ ॥

---

[1] A : अपि pour तु  [2] A : वैडूर्यमेतद्धरिताश्मनेव  [3] A : तत्पुष्यरागं स्फटिकं प्रवालं

[4] Cf. *Suprabhedāgama*, I, 33, 36-37a
मौक्तिकं च प्रवालं च वैडूर्यं स्फटिकं तथा । पुष्यं मरकतं नीलं रत्नजं संप्रकीर्तितम् ॥
स्फाटिकं भुक्तिमुक्त्यर्थमिष्टसिद्ध्यै तु रत्नजम् ॥

[5] A : रत्ननिभा  [6] B, C, D, E : अनुलोमेन pour अनुलोमेषु

[7] A : साधु pour साथ  [8] B, C, E : वर्णेष्वपि कल्पनिया ; D : वर्णेषु विकल्पनिया

[9] Cf. *Suprabhedāgama*, I, 33, 57b-60 :
शिलाभापि सुविज्ञेया जातिभेदपरीक्षणैः ॥ श्वेता रक्ता तथा पीता कृष्णा चैव चतुर्विधा ।
गोक्षीरशङ्खवर्णाभा ब्राह्मणानां प्रशस्यते ॥ जपाबन्धूकपुष्पाभा नृपाणां प्रोच्यते क्रमात् ।
रजनीस्वर्णसदृशा वैश्यानां तु प्रशस्यते ॥ माषगुग्गुलसङ्काशा शूद्राणां तु समृद्धिदा ।
सर्वेषां तु शिला कृष्णा सर्वसंपत्करी स्मृता ॥

[10] A, C, D, F : कल्याणरूप्यात्वथ  [11] C, D, F : कांस्यताम्रौ

[12] A, C, D, E, F : सीसकाश्च pour सीसकानि

[13] A, B, E : मयात्र pour धातूनि  [14] D : चाष्टौ pour विष्णो

[15] Cf. *Suprabhedāgama*, I, 33, 32b-35 :
सुवर्णं रजतं ताम्रं कांस्यमारकूटं तथा । आयसं सीसकं चैव त्रपुकं चेति लोहजम् ॥
सौवर्णं श्रीप्रदं प्रोक्तं राजतं राज्यसिद्धिदम् । ताम्रं पुत्रप्रदं चैव विद्वेषं कांस्यमेव च ॥
आरकूटं तथोच्चाटे क्षयकारकमायसम् । सीसकं रोगहरणं त्रपुरायुष्यवर्धनम् ॥
एवं तु लोहजं प्रोक्तम्"

[16] B, F : देवदारुं ; E : देवदारवो  [17] C, D, E : अश्वत्थकराज pour अश्वत्थकरञ्ज

[18] cf. *Suprabhedāgama*, I, 33, 52-57a :
निमित्ते शोभने गच्छेदाचार्यः शिल्पिभिः सह । संप्रविश्य ततो धीमान् वनान्युपवनानि च ॥
माहेन्द्रे मलये चैव सह्ये विन्ध्ये तथैव च । यावच्छिलाद्रुमौ चास्ति तावद्यायाद्विचक्षणः ॥
शमीमधुकरण्डूककर्णिकारं तथैव च । तिन्दुकार्जुनकौ चैव पिप्पलोदुम्बरं तथा ॥
एते वर्गास्तु चत्वारो ब्राह्मणादि यथाक्रमम् । अन्ये च बहवो वृक्षा मध्यवाराः सुशोभनाः ॥
स्निग्धपत्रा महाकायाः शुभदेशोत्थितास्तु ये । अग्निदग्धाश्च शुष्काश्च पक्षीणां तु निकेतनाः ॥
लतावल्मीकसंस्थाश्च वर्जयेत्साधकोत्तमः ।

[1]यत्पार्थिवं तद्द्विविधं प्रदिष्टं [2]पक्वामभेदेन शिवस्य लिङ्गम् ।
संस्कारमस्यास्त्वथ मृत्तिकाया वदामि यत्तच्छृणु [3]दाढर्यकारि ॥ १७ ॥
या [4]मृत्सिता [5]रक्तनिभा च पीता लिङ्गस्य निर्माणविधौ प्रदिष्टा ।
[6]शुद्धे तु तां संप्रतिगृह्य देशे [7]विशोध्य सिञ्चेत्त्रिफलोदकेन ॥ १८ ॥
[8]प्रसेचितायां [9]मृदि तत्र विष्णो क्षीरद्रुमत्वग्भव[10]चूर्णमिश्रम् ।
गोधूममाषोद्भवमाज्ययुक्तं[11] पयोदधी तैलयुतं क्षिपेच्च ॥ १९ ॥
सगुग्गुलुं बिल्वफलस्य सारं प्रक्षिप्य तस्यां बहुशो [12]विलोड्य ।
लिङ्गं तया लक्षणतो विदध्यान्मृदा तु मासोषितया शिवस्य[13] ॥ २० ॥

---

[1] A : यन्मृत्तिकं pour यत्पार्थिवं
[2] A : पक्वामभेदेन ; C : पक्वांशभेदेन
[3] C, D, E, F : दार्ढ्यकादि
[4] C, D, E : मृत्तिका pour मृत्सिता
[5] A : रत्ननिभा ; E : रक्तसिता
[6] C : शुध्येत pour शुद्धे तु
[7] D : विशोध्यमेतत् pour विशोध्य सिञ्चेत्
[8] D : प्रसेवितायां
[9] E : अमृतेऽत्र pour मृदि तत्र
[10] A : वर्ण pour चूर्ण ; B : पूर्ण
[11] A : मिश्रं pour युक्तं
[12] F : विशोध्य
[13] Cf. *Suprabhedāgama*, I, 33, 29–31a :

मृन्मयं राज्यफलदं पक्वापक्वप्रभेदकम् । शुद्धदेशे मृदं ग्राह्य पूजाभागं सयोनिकम् ॥
कृत्वा दग्धमिदं पक्वं तत्रापक्वमिहोच्यते । यवगोधूमचूर्णैश्च घृतक्षीरकषायजैः ॥
सर्जगुग्गुलुश्रीवेष्टकापित्थनिरयासकैः । चूर्णैरालोड्य भूमृदा मासपक्वोषितं तथा ॥
रक्तबीजसमायुक्तं पक्वलिङ्गं समाचरेत् ।

cf. *Kiraṇāgama*, III, 21, 56b-60 :

पार्थिवं द्विविधं ज्ञेयं पक्वापक्वविलक्षितम् । तत्र पक्वं भवेन्मुख्यमितरं तद्यथा भवेत् ॥
पीतरक्तसितं धूम्रं तत्राज्यं निक्षिपेत्पयः । अतसीतैलगोधूममाषपूर्णं क्षिपेत्पुनः ॥
क्षीरवृक्षत्वचा चूर्णं कषायं त्रिफलान्वितम् । निक्षिपेद्गुग्गुलुं श्रीमान् बिल्वोत्थं देवदारुजम् ॥
मर्दयेत्तत्प्रयत्नेन मासपक्षोषितं पुनः । तथा लिङ्गं प्रकर्तव्यं शैललिङ्गविधानतः ॥
अपक्वं सद्यमन्त्रेण कुर्यात्पक्वं हरेण तु ।

cf. *Kāraṇāgama*, I, 10, 190b-200 :

अपक्वं चैव पक्वं च पार्थिवं लिङ्गमुच्यते ॥ पार्थिवस्य तु लिङ्गस्य शैलवन्मानमिष्यते ।
यावदुत्सेधमानं तु तावद् वृत्तमिहोच्यते ॥ तालनिम्नगमेकांशमेकांशं पृष्ठबन्धनम् ।
त्रिसूत्रेण विना कुर्याच्चतुरष्टाश्रवर्जितम् ॥ पर्वताग्रे नदीतीरे पुण्यक्षेत्रे मनोरमे ।
लिङ्गार्थं मृत्तिका ग्राह्या प्रशस्ता सर्वकामदा ॥ श्वेता रक्ता तथा पीता कृष्णा चैव मनोरमा ।
श्लक्ष्णं चूर्णं ततः कृत्वा पञ्चगव्येन मर्दयेत् ॥ कापिलं तु घृतं क्षीरं दधि वा तैलमेव च ।
यवगोधूमजं चूर्णं माषचूर्णं तथा समम् ॥ आहृत्य सर्वचूर्णानि मृत्तिकासहितानि च ।
मर्दयेत्तु विशेषेण श्यामलाक्षां च कुन्दुरुम् ॥ श्रीवेष्टं गुग्गुलुं चैव सर्जगन्धरसं तथा ।
बिल्वोद्भवं रसं ग्राह्यमेकीकृत्य विमर्दयेत् ॥ पञ्चनिर्यासंसंयुक्तं मासपक्षोषितं तथा ।
ततो लिङ्गं प्रकुर्वीत श्रेष्ठमध्यमकन्यसम् ॥ पार्थिवं लिङ्गमाख्यातं पिण्डिकां तस्य मृण्मयीम् ।
लिङ्गविस्तारमानेन त्रिगुणं पीठविस्तरम् ॥ पूजयेत्तु प्रयत्नेन धर्मकामार्थमोक्षदम् ।
शान्तिपुष्टिकरं नित्यं पृथिवीराज्यसिद्धिदम् ॥

इष्टेन लिङ्गं कुर्वीत द्रव्येष्वेतेषु पञ्चसु । चलं चाचलसंज्ञं च [1]चलं शैवांशमेव हि[2] ॥ २१ ॥
तालादङ्गुलपर्यन्तं तल्लिङ्गं चलमुत्तमम् । अचलं यत्तु [3]तल्लिङ्गं [4]प्रासादस्थापने हितम् ॥ २२ ॥

[अचललिङ्गलक्षणम्]

अधोमध्योर्ध्वभागं तु[5] ब्रह्मविष्णुशिवात्मकम् । चतुरश्रं भवेद्ब्राह्ममष्टाश्रं वैष्णवं भवेत् ॥ २३ ॥
वृत्तं शैवमिति प्रोक्तमेवं [6]स्यात्तत्त्रिभागकम् । शैलं [7]सुवर्णमव्यक्तमचलं तत्त्रिभागयुक् ॥ २४ ॥
उक्तमानगृहीता या सा शिला चतुरश्रिका । आयामसमनाहं[8] स्यात्तत्त्रिधा विभजेत्सुधीः ॥ २५ ॥
अधोभागं परित्यज्य [9]तदूर्ध्वे भागयोर्द्वयोः । [10]कर्णार्धह्रासतः कुर्यादष्टाश्रं तु तयोः पुनः ॥ २६ ॥
शिवभागे [11]विकारांशं जनयित्वाथ[12] तत्क्रमाम् । [13]अश्रच्छेदेन वृत्तं स्यादेवं लिङ्गस्य लक्षणम् ॥
कारयेच्चतुरश्रार्धमष्टाश्रस्य तु नाहकम् । तस्यार्धं वृत्तनाहं तु भवेदेतत्सुरार्चितम्[14] ॥ २८ ॥

---

[1] A : चलं शैवांशमेव हि ; C, D, E : चलं वाचलमेव च : F : चलं चाचलमेव च

[2] Cf. *Suprabhedāgama*, I, 33, 24 :
रत्नजं लोहजं चैव बाणलिङ्गं चलं स्मृतम । शैलं चलाचलं प्रोक्तं मृन्मयं दारवं तथा ॥
cf. *Kāraṇa*, I, 9, 177 :
द्विविधं तत्समाख्यातं चलं चैवाचलं तथा । स्थिरं प्रासादलिङ्गं तु चलं सर्वत्र पूज्यते ॥
cf. *Dīptāgama*, 13, 1b-4b.
स्थावरं जङ्गमं चैव द्विविधं लिङ्गमुच्यते । शिलामयं तु यद्रूपं ब्रह्मविष्णुहरैर्युतम् ॥
त्रिसूत्रमुकुलसंयुक्तं स्थावरं लिङ्गमुच्यते । सौवर्णै रजतैर्वापि स्फाटिकैस्ताम्रकैरपि ॥
कुर्वीत मणिरत्नाद्यैर्जङ्गमं लिङ्गमुच्यते । जङ्गमात्स्थावरं श्रेष्ठं तस्मात्स्थापनमुच्यते ॥

[3] C, D, E, F : यल्लिङ्गं

[4] C, D, E, F : प्रासादस्थापनोचितम्

[5] B, C, D, E, F : भागस्थं pour भागं तु

[6] A : तस्य प्रभागिकम्

[7] A : सौवर्णमव्यक्तं चलं च

[8] A : समनाहाख्या pour समनाहं स्यात्

[9] A : तन्त्रोर्ध्वे

[10] C, D : कण्ठार्धं pour कर्णार्धं

[11] B, D, F : विकाराश्रं

[12] C : तु pour अथ

[13] A : अग्र pour अश्र

[14] Cf. *Kiraṇāgama*, III, 21, 21b-26 :
एवं यदीप्सितं लिङ्गं चतुर्धा विभजेत्समम् । चतुर्थांशप्रमाणेन शिलायाश्चतुरश्रकम् ॥
पुनस्तदायतं कृत्वा भागत्रयविकल्पितम् । कृत्वा कर्णार्धह्रासः स्याद्यावदूर्ध्वांशकं क्रमात् ॥
ब्रह्माख्यो विष्णुसंज्ञश्च रुद्राख्योऽशस्तृतीयकः । अधोमध्योर्ध्वगं ज्ञेयं क्रमाद्भागत्रयं शुभम् ॥
चतुरश्रं द्विरष्टाश्रं सुवृत्तं तत्प्रकल्पयेत् । दैर्घ्यं लिङ्गस्य यन्मानं तेन मानेन कल्पयेत् ॥
चतुरश्रांशके नाभौ मध्यमाने तदर्धतः । तदर्धं तु परित्यज्य वृत्तं तेनैव कल्पयेत् ॥
लिङ्गं सुरार्चितं कार्यम्''

[चतुर्विधलिङ्गानि]

लिङ्गायामं गृहीत्वाथ तदूर्ध्वं चाष्टधा [1]भजेत् । तद्भागैः पञ्चभिः कुर्याद्विष्कम्भं [2]चोत्तमोत्तमम् ॥
[3]त्रिसप्तांशे तदायामे षट्पञ्चचतुरंशकैः । विष्कम्भं [4]तु भवेच्छ्रेष्ठं मध्यं हीनमनुक्रमात् ॥३०॥
अथवा पञ्चविंशांशे नागद्वीपरसैरपि । भागैः पूर्ववदेवोक्तो विष्कम्भो लिङ्गसंस्थितः[5] ॥ ३१ ॥
एवं चतुर्णां लिङ्गानां विष्कम्भः परिकीर्तितः । [6]चातुर्विध्यमतस्तेषां क्रमेण परिपठ्यते[7]॥ ३२ ॥
आद्यं समं भवति [8]लिङ्गमथ द्वितीयं [9]तद्वर्धमानमपि चाथ शिवाधिकं च ।
[10]तत्स्वस्तिकाख्यमुदितं तु [11]तुरीयमेषां [12]भेदोऽत्र भागवशतः परिकल्पनीयः[13] ॥ ३३ ॥

[समम्]

[14]अजहरिहरभागं वेदवस्वश्ववृत्तं त्रिविधमपि समं [15]स्यादुन्नतेनाद्यलिङ्गे ।

[वर्धमानम्]

त्रिगुणितवसुभागे [16]तत्त्रयं वर्धमानं मुनिवसुनवभागं ब्रह्मविष्ण्वीश्वराणाम् ॥ ३४ ॥

[शिवाधिकम्]

उच्छ्रये कृतदशांशके भवेद्वह्निवायु[17]सखवेदभागिकम् ।
[18]यत्र पद्मजहरीश्वरात्मकं [19]लिङ्गमूर्तमिह तच्छिवाधिकम् ॥ ३५ ॥

---

[1] A : भवेत् pour भजेत् [2] A : चोत्तमं भवेत्

[3] Dans le ms. A on a त्रिसप्त पञ्चविंशांशे नागद्वीपरसैरपि à la place des demi-*śloka* 30a, 30b et 31a

[4] F : तद्भवेदेतत् pour तु भवेच्छ्रेष्ठं [5] A : संस्थितिः pour संस्थितः

[6] F : चतुर्विधमतस्तेषां

[7] Après le *śloka* 32, le *śloka* 30 et le premier mot du *śloka* 31 sont répétés dans le ms. E.

[8] F : भङ्गम् for लिङ्गम् [9] C, D : तद्वर्धमानं च शिवाधिकं च

[10] C, E, F : यत् pour तत् [11] A, B : च तुर्यम् pour तुरीयम्

[12] C, D, E, F : भेदोक्तिभावः परिकल्पनीयः

[13] Cf. *Dīptāgama*, 13, 71
समखण्डं वर्धमानं शैवाधिक्यं त्रिराशिकम् । शिवाधिकं वर्धमानं सामान्येन विधीयते ॥

[14] C : हयहरिशिवभागं ; B, D, E : अजहरिशिवभागं

[15] B : स्यादुन्नतेनान्नलिङ्गे ; C, D : स्यादुन्नतेनान्यलिङ्गे ; E : स्यादुन्नतेनापि लिङ्गे ; F : स्यादुन्नतो नान्तलिङ्गे

[16] B, F : तत्र तद्वर्धमानं ; C : तत्र तद्वर्तमानं ; E : तत्र तद्वर्धमाने

[17] F : सम pour सख [18] C, D, E : पद्मसंभवहरीश्वरात्मकं ; F : पद्मसंभवजहरीश्वरात्मकं

[19] C, D, E : लिङ्गमुक्तमिति ; F : लिङ्गमुक्तिमिति

[स्वस्तिकम्]

[1]आत्मायामे [2]रुद्रभागे गुणांशो वैरिञ्चः स्याद्वैष्णवो वेदभागः ।
[3]शैवस्तद्वत्स्वस्तिकेऽस्मिंस्तुरीये [4]लिङ्गे प्रोक्तो ह्येवमेव[5] क्रमेण ॥ ३६ ॥
चतुर्णामपि वर्णानां वर्धमानशिवाधिके[6] । [7]प्रोक्ते [8]क्रमविवक्षायां चत्वार्यप्यग्रजन्मनाम् ॥३७॥
भूपानां वर्धमानात्तु [9]लिङ्गत्रयमुदाहृतम् । लिङ्गद्वयमिति[10] प्रोक्तं वणिजस्तु शिवाधिकात् ॥३८॥

[लिङ्गशिरोवर्तनम्]

अन्त्यमेव [11]हि शूद्रस्य स्वस्तिकं लिङ्गमुच्यते[12] । [13]अथ चैषां तु लिङ्गानां [14]शिरसो वर्तनं भवेत् ॥
चतुर्विधं तु तत्प्रोक्तं [15]तद्विधिं शृणु सांप्रतम् । [16]कुक्कुटाण्डसमं चैव छत्राकारं तथैव च ॥४०॥
[17]खण्डेन्दुसदृशाकारं [18]त्रपुपाकारमेव च । [19]वेदांशे तु [20]शिरस्तारे [21]नेत्रभागेन वर्तितम्[22] ॥४१

---

[1] C, D, F : आत्मयामे ; E : आत्नायामे
[2] F : भूतभागे
[3] A : शैलं तद्वत्
[4] A : लिङ्गं प्रोक्तं
[5] A : एवं pour एव
[6] A : शिवाधिकौ pour शिवाधिके
[7] A : प्रोक्तौ
[8] B : क्रमविवक्षा च
[9] C, D : भाग pour लिङ्ग
[10] A : अत: pour इति
[11] C : तु pour हि
[12] Cf. *Kāmikāgama*, I, 62, 25—36
लिङ्गायामे विकारांशे चतुर्भूतरसैः क्रमात् । सत्रिभागैस्त्रिरंशैस्तु सुरेड्यानान्यके द्विजाः ॥
आद्यं सर्वसमं लिङ्गं विशिष्टं परिकीर्तितम् । तेषां तन्मध्यमेऽष्टांशे प्रत्येकं नवधा भजेत् ॥
लिङ्गायामे दिनांशे तु सप्ताष्टनवभागतः । ब्रह्मविष्ण्वीशभागानामुत्सेधाः संप्रकीर्तिताः ॥
समखण्डं वर्धमानं शैवाधिक्यं त्रिभागिकम् । वर्णानां ब्राह्मणादीनां क्रमेण परिकल्पयेत् ॥
वर्धमानशिवाधिक्ये सर्वजात्यर्हके मते । लिङ्गायामं त्रिधा कृत्वा ब्रह्मांशस्त्वेकभागतः ॥
विष्णवंशतद्द्वयं स्याद्रुद्रांशो भाग एव वा । एकांशस्ताद्दृगस्तारः समखण्डोऽयमीरितः ॥
चतुष्पञ्चषडंशं तु पञ्चषट्सप्तभागिकम् । षट्सप्ताष्टांशकं सप्तभागाष्टनवभागिकम् ॥
वर्धमानमिदं प्रोक्तं विप्रादीनामनुक्रमात् । सप्तसप्ताष्टभागं तु पञ्च पञ्च षडङ्गकम् ॥
वेदवेदशरांशे तु गुणानलयुगांशकम् । एवं शिवाधिकं प्रोक्तं द्विजातीनामनुक्रमात् ॥
कृत्वा नवांशं लिङ्गोच्चं बन्धबन्धगुणांशकम् । षट्सप्ताष्टकनाहं तु वृत्तेऽष्टाश्रे युगाश्रके ॥
त्रैराशिकमिदं शास्त्रे स्वस्तिकं त्वधुनोच्यते । नवधा लिङ्गमानेन व्यंशं मध्ये गुणांशकम् ॥
वृत्ते गुणांशकं दैर्घ्यं शूद्रेऽप्येतच्च शस्यते । त्रैराशिकं तु सर्वेषां सर्वकामप्रदं मतम् ॥
[13] A : अथवैषां
[14] A : शिरसा वर्तनं ; C : शिरसोद्वर्तनं
[15] D : द्विविधं
[16] F : कुक्कुटाण्डं समं चैव
[17] F : खण्डं तु सदृशाकारं
[18] C : त्रिपुपाकारमेव च
[19] F : देवांशे
[20] B : शिरःस्थाने
[21] B, C, E, F : नेत्रभागेऽनुवर्तितम्
[22] Dans le ms. B le demi-*śloka* 43b se trouve juste après 41b

कुक्कुटाण्डोपमं तस्मिन्वसुभागविभाजिते । वर्तितं भागयुग्मेन च्छत्राकारं भवेच्छिरः ॥४२॥
[1]लिङ्गतारेऽग्निभागे तु [2]पक्षभागविवर्जितम्[3] । [4]अर्धचन्द्रनिभं [5]विद्यात्तस्मिन्षड्भागभाजिते॥४३॥
[6]सार्धेनैव[7] द्विभागेन[8] [9]वर्तितं त्रपुषाकृति । विप्राणां [10]त्रपुषाकारं [11]छत्राकारं तु भूभृताम् ॥४४॥
[12]खण्डेन्दुवत्तु वैश्यानां शूद्राणां कुक्कुटाण्डवत् । छत्राकारं तु सर्वेषां भवेल्लिङ्गशिरो नृणाम्[13] ॥४५॥
सर्वं विप्रस्य निर्दिष्टं [14]छत्राकारात्त्रयं नृपे । विशां खण्डेन्दु[15]सदृशाद्द्वयमेवं प्रकीर्तितम् ॥ ४६॥
[16]शूद्राणामेकमेवोक्तं कुक्कुटाण्डनिभं हरे । [17]शिरसो वर्तनं[18] प्रोक्तं धारालिङ्गं [19]ततः शृणु ॥४७॥

[ धारालिङ्गम् ]

साधकेनाश्रलिङ्गं[20] तु पूजनीयं जनार्दन । [21]साधको यत्फलार्थी[22] स्यात्तत्फलं लिङ्गमुच्यते ॥४८॥
[23]त्र्यश्रं वरदं ज्ञेयं [24]द्व्यश्रं पुत्रविवर्धनम् । [25]वैरिनाशनमेकाश्रं [26]पञ्चाश्रं तु धनप्रदम् ॥४९॥

[1] F : लिङ्गभागेऽग्निकार्ये तु
[2] B, C, D, E, F : पक्षतार pour पक्षभाग
[3] A : विवर्जितम् pour विवर्जितम्
[4] Cf. p. 23, note 22
[5] C : विद्यां pour विद्यात्
[6] B omet le demi-*śloka* 44a
[7] F : साध्येनैव
[8] E, B : विभागेन
[9] C : वर्तितस्त्रिपुषाकृतिः ; D, E, F : वर्तितस्त्रपुषाकृतिः
[10] A : पुरुषाकारं ; C : त्रिपुषाकारं
[11] F : चित्राकारं
[12] B, C, D, E, F : विशां खण्डेन्दुसदृशं
[13] Cf. *Kiraṇāgama*, III, 21, 28-34a :
शिरोऽपि वर्तयेद्यत्नाद्वर्तनं तच्चतुर्विधम् । कुक्कुटाण्डातपत्रं च खण्डेन्दुत्रपुसंज्ञकम् ॥
चतुर्भागोदयं कृत्वा तद्भागद्वयवर्तनात् । कुक्कुटाण्डं भवेदेवं तत्कृत्वा त्वष्टधोदयम् ॥
अष्टांशेन शिरश्छत्रं पुनः कृत्वा त्रिधोदयम् । अर्धचन्द्रं भवेदेवमन्त्यांशद्वयवर्तनात् ॥
तत्षड्भागीकृतं क्षेत्रं भवेद्भागद्वयाश्रितः । वर्तितं त्रपुसंज्ञं तु शिरस्त्वेवं विवर्तयेत् ॥
शिरांसि त्रपुसंज्ञानि द्विजातिक्रमयोगतः । कर्तव्यं सर्वसामान्यमेवं वा कुक्कुटाण्डकम् ॥
त्रपुषा फलनिष्पत्तिश्छत्रं राज्यसुखप्रदम् । खण्डेन्दोरायुषो वृद्धिः कुक्कुटाण्डाद्बहुप्रजाः ॥
एवं लिङ्गशिरः कार्यमथवा सर्वतः समम् ।
[14] E : छत्राकारात्त्रयो नृपे ; F : छत्राकाराकुले नृपे
[15] A : सदृशं pour सदृशाद्
[16] A : शूद्रस्यान्तिकमेवोक्तं
[17] B omet le demi-*śloka* 47b
[18] C : शिरसोद्वर्तनं
[19] A : अतः pour ततः
[20] C, D : अग्रलिङ्गं pour अश्रलिङ्गं
[21] C : साधकोऽयं फलार्थी स्यात्
[22] B, E, F : यत्फलार्थः
[23] A : त्रियश्रं
[24] C : द्वयाश्रं पुत्रवर्धनम् ; F : व्यश्रं पुत्रविवर्धनम्
[25] A : वैरिनाशं तदेकाश्रं
[26] Le ms. A omet पञ्चाश्रं तु धनप्रदम् (49b), le *śloka* 50 et धन्यं पञ्चदशाश्रं (51a), donnant वैरिनाशनमेकाश्रं षडश्रं भोगदं भवेत्

सप्ताश्रं [1]द्वेषदं प्रोक्तमुच्चाटाय नवाश्रकम् । एकादशाश्रं [2]व्याध्यर्थं शोषणं त्रिदशाश्रकम् ॥५०॥
धन्यं पञ्चदशाश्रं तु षडश्रं भोगदं भवेत् । अष्टाश्रं क्लेशदं प्रोक्तं द्वादशाश्रं [3]भयावहम् ॥५१॥
षोडशाश्रं [4]सुखार्थं स्यात्साधकानां विशेषतः[5] । एवमश्रफलं प्रोक्तं रत्नानां फलमुच्यते ॥५२॥

[ रत्नलिङ्गम् ]

[6]माणिक्यं श्रीप्रदं प्रोक्तं यशसे [7]नीलमुच्यते । [8]हरितं फलदं प्रोक्तं [9]दोषमुक्त्यै च मौक्तिकम् ॥५३॥
प्रवालं [10]वशदं विद्याद्वज्रं[11] राज्यप्रदं भवेत् । वैडूर्यं [12]वैरिनाशार्थं [13]सौभाग्ये पुष्यरागकम् ॥५४॥
[14]सर्वकामप्रदं प्रोक्तं स्फटिकं तु जनार्दन । [15]उत्तमं स्वस्वयोनि[16] स्यान्मध्यमं स्वर्णयोनिकम् ॥५५॥
अधमं रौप्ययोनि[17] स्यात्तदभावे तु [18]ताम्रजम् । तस्याप्यभावे शैलं [19]स्याद्रत्नलिङ्गस्य पीठकम्[20] ॥५६॥

[ चलरत्नलिङ्गे विशेषः ]

[21]चललिङ्गे विशेषोऽयं कथ्यते सुरसत्तम । आयामसदृशं [22]नाहं तत्समं पीठविस्तृतम् ॥ ५७॥
विस्तारसममुत्सेधं पीठस्यापि विशेषतः । शिरसो वर्तनं कुर्यात्पूर्ववच्छास्त्रचिन्तकः[23] ॥ ५८ ॥

---

[1] B, E : विद्वेषं; C, D, E, F : चेष्टदं
[2] B, E : वाक्यार्थं
[3] E : भयापहम्
[4] D, E, F : धनार्थं
[5] Cf. *Kiraṇāgama*, III, 21, 45-49a :
साधकेनाश्रलिङ्गं तु पूजनीयं तदुच्यते । चतुरश्रं तु यल्लिङ्गं चतुर्वर्णफलप्रदम् ॥
त्र्यश्रं तु वरदं ज्ञेयं द्व्यश्रं पुत्रविवर्धनम् । शत्रुवर्धनमेकाश्रं पञ्चाश्रं मरणे हितम् ॥
सप्ताश्रं द्वेषकृत्ख्यातमुच्चाटार्थं नवाश्रकम् । दशाश्रं तु महाव्याधिकारकं तद्विचक्षणम् ॥
शोषणं त्रिदशाश्रं स्याद्धन्यं पञ्चदशाश्रकम् । षडश्रं भोगदं ज्ञेयमष्टाश्रं कीर्तिवर्धनम् ॥
द्वादशाश्रं भयं हन्ति षोडशाश्रं सुखावहम् ।
[6] B, D, E, F : माणिक्कं
[7] D : लिङ्गम् pour नीलम्
[8] A : हारितं ; F : हरिदं
[9] E : दोषमुक्त्यैकमुक्तिकम्
[10] A : फलदं ; B : वंशदं ; F : वंशजं
[11] F : वक्रं pour वज्रं
[12] A : वैरिनाशं स्यात् ; B, E : वज्रनाशार्थं ; C : वैरनाशार्थं
[13] A : सौभाग्यं
[14] B, E : सर्वज्ञत्वप्रदं ; C, D, F : सर्वज्ञत्वपदं
[15] B omet les *śloka* 55b et 56
[16] A : योनिः pour योनि ; C : योनिं
[17] A : योनिः pour योनि : C : योनिं
[18] E : तादृशम्
[19] E : स्यादुक्तलिङ्गस्य
[20] A : पीठिका ; F : पीठके
[21] A omet le demi-*śloka* 57 a ; D : चललिङ्गविशेषोऽयं
[22] E, F : नाभं
[23] Dans le ms. A, les *śloka* 60b et 61 se trouvent entre 58b et 59a

[1]चतुरंशे तु तल्लिङ्गे त्रिभागं[2] दृश्यमुच्यते । भागमेकं स्थितं [3]पीठे निश्चलं तच्च कारयेत्[4] ॥५९॥

[ क्षणिकलिङ्गम् ]

चललिङ्गमिति प्रोक्तं क्षणिकं लिङ्गमुच्यते । गोमयं नवनीतं च पिष्टं [5]चान्नं फलं तथा ॥६०॥
गुलं च [6]सैकतं चैव पल्लवं [7]चाष्टमं स्मृतम् । क्षणिकानां तु लिङ्गानां [8]पीठं [9]नैवास्ति लक्षणम् ॥
पूजावसाने चोद्धार एतेषां परिकीर्तितः । गोमयं [10]रोगनाशाय नवनीतं सुखप्रदम् ॥ ६२ ॥
पिष्टं पुष्टिप्रदं विद्यादायुषे चान्नलिङ्गकम्[11] । फलं [12]चाभीष्टसिद्ध्यर्थं गुलं प्रीतिप्रदं भवेत् ॥ ६३
[13]सैकतं मुख्यतां दत्ते पल्लवं सद्गुणप्रदम् । प्रोक्तं तु क्षणिकं लिङ्गं स्वयमुद्भूतमुच्यते[14] ॥६४॥

---

[1] B omet les *śloka* 59 et 60a  [2] A : चतुरश्रे तु तल्लिङ्गत्रिभागं  [3] A : पीठं

[4] Cf. *Kiraṇāgama*, III, 21, 50-52a :
श्रीप्रदं पद्मरागोत्थं यशोदं नीलरत्नजम् । हारिद्रं धनदं ज्ञेयं सौभाग्यं पुष्यरागजम् ॥
मौक्तिकाद्दोषमुक्तिः स्यात्स्फाटिकं सर्वकामदम् । प्रवालजाद्वशं क्षिप्रं वज्राद्वज्रजयो भवेत् ॥
वैडूर्याद्वैरिनाशः स्याच्छङ्खं सौख्यप्रदं महत् ।

Cf. *Kāraṇāgama*, I, 9, 176b-185 :
" रत्नलिङ्गविधिं शृणु ॥
द्विविधं तत्समाख्यातं चलं चैवाचलं तथा । स्थिरं प्रासादलिङ्गं तु चलं सर्वत्र पूज्यते ॥
मरकतं पुष्टिदं ज्ञेयं पद्मरागं धनार्थकम् । आयुष्यवृद्धि वैडूर्यं स्फटिकं पुत्रवर्धनम् ॥
स्तम्भनं पुष्यरागं स्याद्दृष्टवश्यं प्रवालकम् । आकर्षणं स्याद्विद्राव्यं माणिक्यं सर्वसिद्धिदम् ॥
इन्द्रनीलं तु मोक्षार्थं रत्नजानां फलं भवेत् । अङ्गुल्यादिवितस्त्यन्तं कुर्याल्लिङ्गं तु रत्नजम् ॥
आयामसदृशं नाहं शिरोवर्तनसंयुतम् । स्वप्रभागेन कर्तव्या रत्नलिङ्गस्य पिण्डिका ॥
पिण्डिका स्वस्वयोनिः स्यात्तदभावे हिरण्मयम् । रजतं ताम्रकं चैव अधमं चेति कीर्तितम् ॥
चतुरश्राथ वृत्ता वा चललिङ्गस्य पिण्डिका । आयामद्विगुणार्धं वा द्विगुणं त्रिगुणं तु वा ॥
विस्तारं तत्समं ज्ञेयं शेषं पूर्वोक्तवत्कुरु । लिङ्गायामं त्रिभागैकं पीठमध्ये निवेशयेत् ॥
सर्वत्र वृत्तकं लिङ्गं त्रिभागं मन्त्रवर्जितम् । रत्नलिङ्गं समाख्यातम् " ॥

[5] C : चान्नफलं  [6] A : सिकता  [7] A : चाष्टजं

[8] A, B, C : पीठे  [9] A : नैव तु

[10] C, D, E, F : रोगनाशं स्याद्  [11] C, E, F : चान्नमिष्यते

[12] C, D, E, F : चैवेष्टसिद्ध्यर्थं  [13] A : सिकता

[14] Cf. *Suprabhedāgama* I, 8, 5-6 :
सिकतं तण्डुलं चान्नं नदीमृद्गोमयं तथा । नवनीतं च रुद्राक्षं पिष्टं चन्दनकूर्चकम् ॥
पुष्पमाला गुलं चेष्टं क्षणिका द्वादश स्मृताः । पूजान्ते क्षणिकास्त्याज्यास्तत्त्वं हृदि निवेशयेत् ॥
*Ibid.*, I, 33, 25-28 :
क्षणिकाणां फलं वक्ष्ये सैकतं मोक्षकांक्षिणाम । तण्डुलं विभवार्तानामन्नमन्नप्रदं स्मृतम् ॥
नदीमृद्भूमिलाभः स्याद्गोमयं रोगनाशनम् । नवनीतं मनोह्लादं रुद्राक्षं ज्ञानवर्धनम् ॥
गन्धं सौभाग्यकांक्षीणां कूर्चं मुक्त्यर्थिनां स्मृतम् । आयुष्यवर्धनं पुष्पं गुळमिष्टार्थसिद्धिदम् ॥
पैष्टं पुष्टिप्रदं प्रोक्तं क्षणिकानां फलं भवेत् । एतेषां चैव लिङ्गानां न प्रमाणं न च स्थितिः ॥

[ स्वायंभुवलिङ्गम् ]

छत्राकारं भवेदैन्द्रमग्नेर्विषममस्तकम्[1] । यमस्य [2]चिपिटं प्रोक्तं शूलाग्रं नैर्ऋतं मतम् ॥ ६५ ॥
वारुणं [3]कलशाकारं वायव्यं [4]ध्वजवद्भवेत् । गदाकारं तु सौम्यं स्यात्त्रिशूलाकारमस्तकम्॥६६॥
ईशानस्य भवेल्लिङ्गं [5]ब्रह्मणः पद्ममस्तकम् । वैष्णवं शङ्खशीर्षं [6]स्याद्विद्यादेतानि लक्षणैः ॥ ६७ ॥
अन्यैश्च देवदैत्येन्द्रदानवेन्द्रनिशाचरैः । [7]सिद्धविद्याधराद्यैश्च तथैवान्यैर्गणेश्वरैः[8] ॥ ६८ ॥
मुनिभिश्चापि यल्लिङ्गं [9]स्थाप्य वास्थाप्य पूजितम् । स्वयंभूतं तदुद्दिष्टं [10]लक्षणं यत्र नो भवेत् ॥
नानाचिह्नसमायुक्तं नानावर्णसमन्वितम्[11] । कर्कशं सुषिराद्यैश्च [12]युतं यद्यत्र दृश्यते ॥ ७० ॥
नागेषु वापि सर्वं तदेवमेव हि कीर्तितम् । [13]शिरसो वर्तनं [14]तस्य सूत्रवर्तनमेव च ॥ ७१ ॥
[15]नाहोत्सेधादिमानं च न कदाचित्प्रदृश्यते । पीठप्रासादकल्पिस्तु [16]लिङ्गमानाद्विधीयते ।।७२।।
स्वयंभूतमिति प्रोक्तं सर्वलोक[17]सुखावहम्[18] । लिङ्गस्य लक्षणं प्रोक्तं सर्वकामार्थसाधनम्।।७३।।

इत्यजिताख्ये महातन्त्रे [क्रियापादे] [19]लिङ्गलक्षणविधिर्नाम
चतुर्थः पटलः ॥

---

[1] A : अग्नेर्विग्णममस्तकम् ; E : अग्नेर्विष्णोष्टमस्तकम् ; F : अग्ने विष्णुष्टमस्तकम्

[2] A : लिङ्गिमं pour चिपिटं ; C : च विडं ; D : चिवडं ; E : चपिटं ; F : चिविडं ; *Kiraṇāgama :* विविधं

[3] F : कलशावारं

[4] F : ध्वजवाहयेत्

[5] C, D : ब्राह्मणं ; E, F : ब्रह्माणं

[6] C, D : स्याद्विद्यते तानि लक्षणैः

[7] F : सिद्धविद्याधराश्चैव

[8] D, F : गुणेश्वरैः pour गणेश्वरैः

[9] A : स्थाप्यावस्थाप्य ; C : स्थाप्य या स्थाप्य

[10] A : क्षणं तत्र यतो भवेत् ; C, E, F : तत्क्षणं यत्र नो भवेत्

[11] E, F : समायुतम् pour समन्वितम्

[12] A : तं यं तद्दृश्यते भुवि ; D : युतं सद्यमदृश्यते

[13] C : शिरसोद्वर्तनं

[14] B, E, F : तद्वत् ; D : चैतत्

[15] A : नाहं चोत्सेधमानं च

[16] A : लिङ्गमानं विधीयते

[17] D, E : हितावहम् pour सुखावहम्

[18] Cf. *Kiraṇāgama*, III, 21, 61-67 :
स्वयमुद्भूतलिङ्गस्य स्थापितस्य महार्षिभिः । देवैर्वा स्थापितस्यापि रूपमानं न विद्यते ॥
तल्लिङ्गाकृतिरूपेण नामभेदः पृथग्भवेत् । ज्ञातव्यः फलभेदश्च साधकेन यथार्थतः ॥
ऐन्द्रं छत्राकृति ज्ञेयं क्षितौ राज्यफलप्रदम् । आग्नेयं विषमं मूर्ध्नि शत्रुसंतापकारकम् ॥
विविधं याम्यमुद्दिष्टं हर्म्यभागविनाशनम् । शूलायां नैर्ऋतं राक्षं यथेष्टक्षयकारणम् ॥
वारुणं कलशाकारमाप्यायनविधौ शुभम् । वायव्यं ध्वजवद्दीर्घमुच्चाटार्थं नियोजयेत् ॥
गदाकारशिरः सौम्यं मुक्त्यर्थं पुष्टिकारणम् । ज्ञानयोगार्थमीशानं त्रिशूलाकारमस्तकम् ॥
पद्मोर्ध्वमस्तकं ब्राह्मं वेदवेदार्थदर्शनम् । वैष्णवं शङ्खमूर्धानं यशःसौभाग्यदायकम् ॥

[19] A : लिङ्गलक्षणपटलः पञ्चमः । अशीतिश्लोकाः ; D : लिङ्गलक्षणपटलश्चतुर्थः ; E : लिङ्गलक्षणविधिश्चतुर्थः पटलः ; F : लिङ्गलक्षणचतुर्थः पटलः

## [ पञ्चमः पटलः ]

### [ शिलादिग्रहणविधिः[1] ]

[2]अतः परमिदं वक्ष्ये शिलादिग्रहणं हरे। आचार्यः शिल्पिना सार्धं [3]यदा गच्छेच्छिलां प्रति ॥१॥

[शुभनिमित्तानि]

सुमुहूर्ते निमित्तानि [4]तदा समुपलक्षयेत्। दध्यन्नं मधु [5]सर्पिश्च [6]पूर्णकुम्भं तथैव च ॥ २ ॥
काञ्चनं रजतं चैव सर्वरत्नानि [7]मृत्तिकाम्। भूषणानि च सर्वाणि सायुधानि सरोरुहम्॥ ३ ॥
[8]साक्षतं [9]सफलं चैव [10]रोचनां गैरिकं तथा। भद्रपीठं च शङ्खं च सितपुष्पं तथैव च ॥ ४ ॥
[11]अम्बराणि च शुक्लानि [12]मत्स्यं मांसं तथैव च। [13]वृषेन्द्रं च गजेन्द्रं च [14]विप्रान्वेश्याश्च शोभनाः॥
[15]कन्यां तुरङ्गं मिथुनं मयूरं चाषमेव च। [16]व्याघ्रं च नकुलं चैव यानं मित्राणि चैव हि ॥ ६ ॥
गीतमङ्गलवाद्यानि वेदघोषादिकं तथा। उपश्रुतिं[17] च गच्छेति दृष्ट्वा श्रुत्वा व्रजेत्सुधीः[18] ॥७॥

[अशुभनिमित्तानि]

कार्पासमौषधं सर्वं कृष्णधान्यं तथैव च। लवणं [19]चाथ तैलं च मद्यं क्षीरं तथैव च ॥ ८ ॥
[20]पङ्कमङ्गारकं चैव [21]गुलं चर्म तथैव च। [22]शकृदिन्धनपाषाणतुषकेशानि चैव हि ॥ ९ ॥

---

[1] Cf. *Kāmikāgama*, I, 62; *Kāraṇāgama*, I, 9; *Kiraṇāgama*, III, 21; *Dīptāgama*, 13; *Suprabhedāgama*, I, 33.

[2] A : अतः परं प्रवक्ष्यामि ; B : अतः परमहं वक्ष्ये

[3] D : यथा pour यदा

[4] C : तदायमुपलक्षयेत्

[5] F : सर्पं च

[6] D : पूर्णं कुम्भं

[7] A : मौक्तिकम् ; C, E, F : वृत्तिकाम्

[8] A : साक्तकं ; E : साक्षतान्

[9] E : सफलांश्चैव

[10] Dans le ms. E il manque de रोचनां गौरिकं तथा à वृषेन्द्रं च गजेन्द्रं च (*śloka* 5b)

[11] A : अम्बानि शुक्लवस्त्राणि

[12] A : मत्स्यमांसं ; E : मत्स्यमण्डं

[13] A : वृषेन्द्रश्च गजेन्द्रश्च ; C, D, F : वृषेन्द्रं च गजं चैव

[14] A : विप्रा वैश्याश्च शोभनाः ; F : विप्रान् वैश्यांश्च शोभनाः

[15] D : कान्त्या

[16] A : व्याघ्राटनकुलं चैव ; [ व्याघ्राटः पक्षिविशेषः ]

[17] A : उपश्रान्ति

[18] Cf. *Kāraṇāgama*, I, 9, 15-17 :
शुभाशुभनिमित्तानि तस्मिन् काले परीक्षयेत्। वृषभं पूर्णकुम्भं च शङ्खं मांसं गजं ध्वजम् ॥
कन्यां च पद्मपुष्पं च दीपगोमेरिकादिभिः। सितपुष्पं क्षितीशं च वेश्यां च छत्रपल्लवौ ॥
ब्राह्मणं शुभवाक्यं च दीप्ताग्निं तुरगं फलम्। शुभान्येतानि सर्वाणि गन्तव्यपथि दर्शने ॥

[19] F : चात्र

[20] D : पाकम् pour पङ्कम्

[21] A : गलचर्म

[22] D omet les *śloka* 9b et 10

[1]उन्मत्तं जटिलं मुण्डं नग्नं काषायिणं तथा । [2]क्षुत्क्षामं विकृतं चैव [3]नरवाहं तथैव च ॥ १० ॥
अभ्यक्तं [4]मुक्तकेशं च रोगयुक्तं तथैव च । [5]सर्पं गोधां च [6]शरभं वराहं [7]जाहकं तथा ॥ ११ ॥
शशं च रोदनाक्रोश[8]कलहं[9] शवतूर्यकम् । आगच्छ विश तिष्ठेति वचनानि तथैव च ॥ १२ ॥
किमर्थं गच्छसीत्येवमादिप्रोक्तं [10]वचस्तथा । दृष्ट्वा श्रुत्वा च नो गच्छेदुषित्वा त्र्यहमुन्मनाः[11] ॥ १३ ॥
संपूज्य दीक्षितान् विप्रान्शिव[12] व्रतपरायणान् । [13]हुत्वा दोषनिवृत्त्यर्थमघोरेण[14] शताहुतीः ॥ १४ ॥

[वृक्षसंग्रहणम्]

[15]ततो गच्छेद्वनं शैलं [16]सनाथो देशिकः सुधीः । तत्र [17]रम्यतरे देशे [18]वानप्रस्थाश्रमैर्युते ॥ १५ ॥
नदीतटाकसंयुक्ते फलपल्लवशोभिते । [19]पुष्पभारावनम्रैश्च[20] [21]तरुषण्डैरलंकृते ॥ १६ ॥
[22]जिघांसुसत्त्वनिर्मुक्ते [23]प्रविश्याचार्यशिल्पिनौ । वृक्षसंग्रहणं [24]चैतदुक्तं वृक्षं समाश्रयेत् ॥ १७ ॥
[25]ऋजुं वृत्तं समं चैव [26]ग्रन्थिरन्ध्रविवर्जितम् । सत्वचं[27] पत्रपुष्पाढ्यं गृह्णीयाद्वृक्षमुत्तमम् ॥ १८ ॥

---

1 E, F : उन्मत्तजटिलं मुण्डनग्नं

2 A : क्षरक्षामं ; F : क्षुत्क्षमां

3 A : नरं वाजं

4 F : मुक्तशेषं

5 A : सर्पं गोतं च; B: सर्वगोधां च

6 C, D, E, F : सुरभं

7 [जाहकः = मार्जारविशेषः]

8 F : क्रोड pour क्रोश

9 C : कलाभं pour कलहं

10 A : वचः स्मृतम् ; D : शवस्तथा; E : तथैव च

11 Cf. *Muhūrtacintāmaṇi*, 11, 102-103 :
वन्ध्याचर्मतुषास्थिसर्पलवणाङ्गारेन्धनक्लीबविट्तैलोन्मत्तवसौषधारिजटिलप्रव्राट्तृणव्याधिताः ॥
नग्नाभ्यक्तविमुक्तकेशपतितव्यङ्गक्षुधार्ता असृक्स्त्रीपुष्पं सरटः स्वगेहदहनं मार्जारयुद्धं क्षतम् ॥
काषायीगुडतक्रपङ्कविधवाकुब्जाः कुटुम्बे कलिर्वस्त्रादेः स्खलनं लुलायसमरं कृष्णानि धान्यानि च ।
कार्पासं वमनं च गर्दभरवो दक्षेऽतिरुड्गर्भिणीमुण्डार्द्राम्बरदुर्वचोऽन्धबधिरोदक्या न दृष्टा शुभाः ॥

cf. *Suprabhedāgama*, I, 48b-52a :
उल्कापातदिशादाहं महावातप्रवर्तनम् । अशुभं ह्यन्तरिक्षे तु पूर्वोक्तविपरीतकम् ॥
तैलाभ्यङ्गं च तत्पात्रं मुक्तकेशस्य दर्शनम् । दर्शनं नवमृद्भाण्डं छिन्ननासिकमेव च ॥
एते तु भौमजा ज्ञेया परीक्ष्यैवं शुभाशुभम् । शुभेषु प्रस्थितो यायादशुभे तु निवर्तयेत् ॥
अशुभेऽग्निं समास्तीर्य शिवेनैव शतं हुनेत् । निमित्ते शोभने गच्छेदाचार्यः शिल्पिभिः सह ॥

12 A : वृन्द pour व्रत

13 B, C, E : भुक्त्वा; F : मुक्त्वा

14 A : शताहुतिम् ; C, D, E, F: शतं हुनेत्

15 D : अथ pour ततो

16 C, D, E, F : सनाथं

17 F : रम्यतले

18 A : वानप्रस्थाश्रमे शिवे

19 C : फल pour पुष्प

20 A : तु pour च

21 A : वृक्ष pour तरु

22 A : शिखां सुसत्त्वनिर्मुक्ते

23 A : प्रविशाचार्य शिल्पिना

24 A : चैव तदुक्तं वृषनाचरेत्

25 A : नन्द्यावर्त pour ऋजुं वृत्तं

26 E : ग्रन्थिनं मन्धिवर्जितम् ; F : ग्रन्थिनं तु विवर्जितम्

27 B, E, F : तत्त्वजं

गजादिभग्नं वज्रादिदग्धं[1] वक्रं[2] क्षुपं तथा । स्वयं शुष्कं च मन्त्रज्ञो वर्जयेद्भूरुहं तथा[3] ॥१९॥
पूर्वरात्रे[4] तु [5]तद्वृक्षे शिलायां वा समाहितः । पुण्याहं वाचयित्वाथ[6] रक्षासूत्रं तु बन्धयेत् ॥२०॥
सौवर्णं [7]राजतं वाथ क्षौमं कार्पासमेव वा । बन्धयेद्धृदयेनैव [8]वृक्षं वामेन पूजयेत्[9] ॥ २१ ॥
शिलामघोरमन्त्रेण ततो होमं [10]च कारयेत् । [11]वृक्षस्य च शिलायाश्च पूर्वे वा चोत्तरेऽपि वा॥२२॥
समिदाज्यचरूणां तु प्रत्येकं तु शताहुतीः[12] । [13]हुत्वा स्पृष्ट्वा च हस्तौ च प्रभाते छेत्तुमारभेत् ॥
[14]मधुप्लुतकुठारेण छेदयेत्पुरुषेण [15]तु । प्रागुत्तरप्रपातस्तु[16] [17]शुभदो [18]वृक्षजो भवेत्[19] ॥ २४ ॥

[शिलासंग्रहणम् ]

तथैव हि शिला ग्राह्या तस्या लक्षणमुच्यते । सरित्सरस्तटाकादितीरजातां[20] च कज्जलैः[21] ॥२५॥
[22]क्षालितां च [23]द्रुमच्छायागृहीतां सुसमां दृढाम् ।[24]आयामपरिणाहाढ्यां शिलां लिङ्गार्थमाहरेत्[25]॥
प्राच्यां [26]शिरः प्रतीच्यां च मूलं तस्याः प्रकीर्तितम् । उदीच्यां वा शिरो मूलं दक्षिणां दिशमाश्रितम्॥

---

[1] D: दंस्यं pour दग्धं

[2] E ajoute : रुग्णं

[3] Cf. *Suprabhedāgama*, I, 33, 54-57a
शमीमधुकरण्डूककर्णिकारं तथैव च । तिन्दुकार्जुनकौ चैव पिप्पलोदुम्बरं तथा ॥
एते वर्गास्तु चत्वारो ब्राह्मणादि यथाक्रमम् । अन्ये च बहवो वृक्षा मध्यवारास्तु शोभना: ॥
स्निग्धपत्रा महाकाया: शुभदेशोत्थितास्तु ये । अग्निदग्धाश्च शुष्काश्च पक्षीणां तु निकेतना: ॥
लतावल्मीकसंस्थाश्च वर्जयेत्साधकोत्तमः ।

[4] C, D, E, F : पूर्वरात्रौ

[5] D, E, F : तद्दृक्षे

[6] C: तु pour अथ

[7] C, E : रजतं

[8] A : वृक्षमानेन

[9] A ajoute: शिलासारेण मन्त्रेण प्रभाते च्छेदमारभेत्

[10] A : तु pour च

[11] A : वृषाक्षस्य pour वृक्षस्य च; D: वृक्षस्य तु

[12] A : शताहुति:

[13] A omet le demi-*śloka* 23b

[14] A : मधुप्लुतं कुठारेण

[15] A : च pour तु

[16] A: प्रवातं तु pour प्रपातस्तु

[17] A : शुभदं; B, D, E, F : शुभजं

[18] A : वृक्षजं

[19] Cf. *Suprabhedāgama*, I, 33, 62-67a
तस्याश्चोत्तरपार्श्वे तु स्थण्डिलेऽभिमुखं कृते । शतं हुत्वा शिवास्त्रेण तमग्रे शयने वसेत् ॥
स्वप्नेशाणवकं जप्त्वा रात्रौ सुप्त्वा शिवं स्मरेत् । अशुभे दर्शने स्वप्ने मूलेनैव शतं हुनेत् ॥
शुभे स्वप्ने तु चेद्दृष्टे तदा च्छेदनमारभेत् । अभिषिच्य शिवाद्भिस्तु प्रभाते विमले शुभे ॥
अघोरास्त्रेण मन्त्रेण छित्वा मधुयुतेन च । अधोभागमुखं तस्य पृष्ठमूर्ध्नि प्रकल्पयेत् ॥
पार्श्वयो: पार्श्वमेवं तु मूलं याम्यापरे विदुः । पूर्वे चोत्तरपार्श्वे वा शिरः संकल्प्य बुद्धिमान् ॥
लाञ्छयित्वाक्षराण्यत्र ततस्तक्षणमारभेत् ।

[20] A : तीरजातं pour तीरजातां च; C, E : तीरजातांश्च

[21] A : तज्जलै:

[22] A : क्षालितं

[23] A : द्रुमच्छायां गृहीतां

[24] A : आयामपरिणाहं स्यात् ; E : आयामपरिणाहाद्यं

[25] E : आरभेत् pour आहरेत्

[26] A : दिशि pour शिरः

अधोभागे मुखं [1]तस्या लाञ्छयित्वा समुद्धरेत् । [2]बाला सुयौवना वृद्धा शिला सा त्रिविधा मता[3]॥
दृषद्बाला समादिष्टा मन्द[4]ध्वनियुता च सा । [5]पीवकङ्काभिघाता च सा बालेति निगद्यते ॥ २९
शीतला [6]धीरशब्दा च सुगन्धा चापि या भवेत् । सुस्निग्धा निबिडाङ्गा च सैव स्याद्युवती शिला ॥
ग्राह्या लिङ्गविधौ [7]सैव सर्वदोषविवर्जिता । रूक्षा[8] बन्धूकवत्खण्डा[9] [10]निःशब्दा जर्जरा च या ॥
[11]सा वृद्धा स्याच्छिलानां तु वर्जयेद्बालिकामपि । रूक्षां क्षाराम्बुमध्यस्थां [12]त्यजेदुपहतामपि[13] ॥

---

[1] D : तस्यां

[2] Les *śloka* 29b à 57a manquent dans le ms, A

[3] A : त्रिविधा भवेत् ; F : त्रिधा मता     [4] B, D, E, F : स्वन pour ध्वनि

[5] B : पीवगङ्गाकघाताश्च ; E : द्वीपगङ्कघाताश्च ;
[पीवाः पीवराः कङ्काः तरङ्गाः, तैरभिघातं यस्याः ; एतेन 'मृदुतला' इत्यन्यत्रागमेपूक्तं घटते ;

cf. *Suprabhedāgama*, I, 33, 48 :
स्निग्धा मृदुतला चैव बाला क्षीणस्वरान्विता ।

'द्वीप्यकङ्काभिघाता च' इति वा पाठः स्यात् । द्वीप्याः काकविशेषाः, कङ्काः गृध्राः तैरभिघातं यस्याः ।
अस्मिन् पाठे मूलं मृग्यम् ]

[6] D : शीरशब्दा ; F : तिरशब्दा ; F : दिरशब्दा     [7] F : चैव

[8] B : रक्षा     [9] E : घण्टा pour खण्डा

[10] D : निःशब्दजर्झरा शिला ; E : निःशब्दाश्च जरामयाः ; F : निःशब्दा जर्जरामयाः

[11] E : सा वृद्धाश्च फलानां तु ; F : सा वृद्धा च शिलानां तु

[12] B : त्यजेदुभयजामपि

[13] Cf. *Suprabhedāgama*, I, 33, 68-70a :
बाला च यौवना वृद्धा ज्ञातव्या लक्षणैस्ततः । स्निग्धा मृदुतला चैव बाला क्षीणस्वरान्विता ।
सुस्वरा कान्तिसंयुक्ता सा शिला यौवना स्मृता । अग्निदग्धा झर्झरूक्षा वृद्धा सा निस्वरा शिला ॥
बालां वृद्धां तु संत्यज्य यौवनां संग्रहेद् बुधः ॥

cf. *Kāraṇāgama*, I, 9, 57b-59a :
तालशब्दशिला या तु सा शिला युवती स्मृता । दीर्घशब्दा तु या वृद्धा ह्रस्वा बालेति कीर्तिता ॥
एवं स्वरं तु संलक्ष्य प्रहरेच्छिल्पवित्तमाः । बालवृद्धशिला यास्तु वर्जयेत्तु प्रयत्नतः ॥

cf. *Dīptāgama*, 13, 30a-31, 33b
तालशब्दं तु यच्छैलं तच्छैलं युवती भवेत् । दीर्घशब्दा तु या वृद्धा ह्रस्वा बाला इति स्मृता ॥
एवं स्वरं सुसंलक्ष्य प्रहरेच्छिल्पवित्तमः । . . . दशद्वादशकोणं तु बालवृद्धं तु वर्जयेत् ॥

रेखा[1]बिन्दुकलङ्काढ्यां विमलैरन्वितां [2]त्यजेत् । [3]हेमं लोहं च [4]कांस्याख्यं विमलं [5]तत्त्रिधा भवेत्[6]॥
[7]हानिर्मृत्युरनावृष्टिर्मण्डलानां क्रमात्फलम् । गैरिकाविषकासीसैः क्षीरवृक्षैस्तु तां शिलाम् ॥३४॥
परिलिप्योषितां कृत्वा ह्यहोरात्रमतन्द्रितः । प्रक्षाल्य तु पुनः सम्यक् स दोषं च परीक्षयेत् ॥ ३५
[8]परीक्ष्य [9]बहुधा पश्चात्तक्षणं तु समाचरेत् । मण्डलं [10]तक्षणे [11]यस्यास्तां सगर्भां विनिर्दिशेत्॥
[12]माञ्जिष्ठे मण्डले [13]भेको गोधा स्यात्पीतवर्णके । [14]शुभ्रे सर्पः समुद्दिष्टः कपिले [15]मूषिको भवेत्॥
सरटो रक्तवर्णे च गुलवर्णे [16]दृषद्भवेत् । कपोतवर्णे गौली च चित्राभे [17]वृश्चिका तथा ॥३८॥

---

[1] B, F : बिम्ब pour बिन्दु

[2] B : भवेद् ; E, F : भजेत्

[3] B : हेमलोहं

[4] F : कांसाख्यं

[5] B : तन्त्रता ; D, E, F : तत्र ता

[6] Cf. *Kāraṇāgama*, I, 9, 63b-68 :
रेखाबिन्दुकलङ्कानि विमलं परिवर्जयेद् । पृष्ठपादवदाकारा सूत्रपादवदायता ॥
सूर्यरश्मिवदाकारा रेखा वै त्रिविधा स्मृता । स्तनचूचुकसङ्काशो जम्बूफलसमप्रभः ॥
बिन्दुरेवं समाख्यातो द्विविधेन प्रजायते । बर्हिपिञ्छसमाकारं कृष्णामृगसमप्रभम् ॥
कृष्णलोहवदाकारं कलङ्कं त्रिविधं भवेत् । त्रासः स्फटिकसङ्काशः शुक्त्यभ्यन्तरसन्निभः ॥
त्रासोऽपि द्विविधो ज्ञेयो विमलं त्रिविधं भवेत् । शातकुम्भनिभं चैव दर्वीकृतसमप्रभम् ॥
कांस्याभं विमलं ज्ञेयं सर्वदोषकरं भवेद् ।

cf. *Suprabhedāgama*, I, 33, 72-77a :
बिन्दुरेखाकलङ्काश्च शिलादोषाः प्रकीर्तिताः । दृश्यते मण्डलं यत्र गर्भं तत्र विनिर्दिशेत् ॥
सिते तु मण्डले सर्पो रक्ते तु कृकलासकः । गोधा वै मण्डले पीते माञ्जिष्ठे दर्दुरो भवेत् ॥
कापिले मूषिका प्रोक्ता चित्रवर्णे तु वृश्चिकः । श्वेतरक्तविमिश्रे तु मण्डूको मण्डले भवेत् ॥
खद्योतं मधुवर्णे तु कापोते गृहगौलिका । गुलवर्णे तु पाषाणं निस्त्रिंशाभे जलं भवेत् ॥
वर्जिता गर्भयुक्तास्तु विमलैरन्वितास्तथा । विमलं हेमकांस्याख्यं लोहाख्यं च त्रिधा स्मृतम् ॥
परीक्ष्यैव तु कर्तव्यं लिङ्गं गर्भादिवर्जितम् ।

cf. *Dīptāgama*, 13, 54 :
कलङ्कं रोगदं ज्ञेयं त्रासं राष्ट्रविनाशनम् । बिन्दुना पुत्रनाशः स्याद्विमला सर्वदुःखदा ॥

[7] E : हरि pour हानि

[8] E omet les *śloka* 36 à 38 a

[9] D, E : बहुना पश्चात्तक्षकं तु समर्चयेत्

[10] D, E, F : तक्षणे

[11] F : यस्य स तां गर्भां विनिर्दिशेत्

[12] E : मञ्जिष्ठे

[13] B, F : ह्येको pour भेको

[14] E : पीते pour शुभ्रे

[15] E : मूषिका

[16] E : तु षट्पदम्

[17] B : वृश्चिकं

निस्त्रिंशसदृशे तोयं खद्योतो मधुसंनिभे । सिकता भस्मवर्णे तु तेषां फलमथ[1] शृणु[2] ॥३९॥
राजनाशप्रदा गोधा पशुनाशं तु [3]वृश्चिका । ज्वरमारीप्रदः[4] सर्पो [5]मण्डूकः कभयप्रदः ॥ ४० ॥
[6]गर्भस्रंसो जलात्प्रोक्तः[7] [8]खद्योतोऽग्निभयप्रदः । पाषाणवृष्टिः पाषाणात् [9]क्षयरोगस्तु [10]वालुकात्॥
सरटो व्याधिदः प्रोक्तो [11]मूषिको धान्यनाशकृत् । गौलिका शोकदा ज्ञेया तस्माद्गर्भयुतां त्यजेत्[12]॥
[13]चिह्नानि यदि सन्त्यत्र तच्चिह्नान्युपलक्षयेत् । [14]पद्मस्वस्तिकचन्द्रार्क[15]चक्रयोनिध्वजोपमम् ॥

---

[1] B : अतः pour अथ

[2] Cf. *Kāraṇāgama*, I, 9, 76-89 :
चतुरश्रां शिलां सम्यक् छेदयेत्तु विचक्षणः । तक्षकश्छेदने चैव मण्डलं यत्र दृश्यते ॥
सगर्भां तां विजानीयाद्यत्नेन तु परीक्षयेत् । मञ्जिष्ठवर्णे मण्डूकं कर्कटो हरितालके ॥
पीते गोधा सिते सर्पः खद्योतो मधुवर्णके । कपिले मूषिकं विद्यात् कृकलासमथारुणे ॥
गुलवर्णे तु पाषाणं कपोते गृहगौलिका । भस्माभे सिकतां विद्यात्स्फटिकाभे जलं स्मृतम् ॥
रक्तमण्डलके चित्रं चित्रवर्णे तु वृश्चिकम् । शफरं कृष्णचित्रे तु किंशुकाभेन्द्रगोपकम् ॥
एवं गर्भास्तु विज्ञेया बाह्यलक्षणलक्षिताः । लक्षणं नास्ति चेद्बाह्ये तेषां लेपानि लेपयेत् ॥
ब्रह्माणं वज्रपाणिं च शूलपाणिं च वैष्णवम् । अजाक्षीरेण संयोज्य उपलं लेपयेत्ततः ॥
लेपिते यदि क्लिन्नं स्यादेकरात्रोषितं तथा । सगर्भां तां विजानीयादभिगोधा च वृश्चिकम् ॥
कासीसं पीतलोध्रं च गोक्षीरेण तु पेषयेत् । लेपितेन शिला तेन रुधिराभा यदा भवेत् ॥
दिवसैस्तु दिशैश्चैव एकरात्रोषितोऽपि वा । दर्दुरस्तत्र विज्ञेयः कूर्मो वाथ न संशयः ॥
पृथ्वीं त्रिशूलिनं ब्राह्मं महिषीक्षीरपेष्टितम् । लेपिते तु शिला तेन रुधिराभा यदा भवेत् ॥
कृष्णमीनो भवेत्तत्र कृकलासमथापि वा । मुस्तकं करवीरं च कुष्ठं मांसी फलत्रयम् ॥
एतानि पेषयित्वा तु स्त्रीस्तन्येन तु पेषयेत् । अश्मानं लेपयेत्तेन यदि स्याच्चिलिशिलेनकैः ॥
कालकूटविषं तत्र न तु हस्तेन संस्पृशेत् । गर्भाणां लक्षणं ह्येवं शिलाग्रहणमारभेत् ॥

[3] E : वृश्चिकम्

[4] B : ज्वरमारिप्रदः

[5] B, E, F: मत्स्यकेन भयप्रदः

[6] D : गर्भस्रावो

[7] E : प्रोक्तं

[8] D : खद्योता निर्भयप्रदः

[9] B : क्षयरोगौ तु ; E: क्षयरोगास्तु

[10] E : वालुकैः [वालुकाशब्दः कोशेषु स्त्रीलिङ्गतया प्रसिद्धः]

[11] B : मूषको

[12] Cf. *Kiraṇāgama*, III, 21, 8-11 :
तां त्यजेद्गर्भसंयुक्तामहोरात्रं परीक्ष्य च । गोधायां नृपनाशः स्याद्वृश्चिके पशुपीडनम् ॥
भुजङ्गे क्षणमारी स्यान्मण्डूकादुदकाद्भयम् । गर्भस्रावो जले प्रोक्तः खद्योते वह्निजं भयम् ॥
पाषाणे तत्कृते वृष्टिः सिकते क्षयरोगता । कृकलासाद्भवेद्व्याधिर्धान्यनाशश्च मूषिके ॥
गौलिकायां भवेच्छोकस्तेन गर्भं परित्यजेत् । एवं परीक्ष्य पाषाणं पश्चाल्लिङ्गं तु कारयेत् ॥

[13] F : छिन्नं नियति सन्तत्र तच्छिन्नान्यपलक्षयेत्

[14] B : पद्मा pour पद्म

[15] E : चमू pour चक्र

[1]खङ्गच्छत्रमृगेन्द्राभवृक्षकच्छपमत्स्यवत् । हस्तिश्रीधेनुवच्चापि[2] स्रग्जटानेत्रवत्स्थितम् ॥ ४४ ॥
एवंभूतानि चिह्नानि कल्याणानि भवन्ति हि । [3]गृध्र[4]कङ्कसमानं च काकसर्पकबन्धवत् ॥४५॥
श्येनोलूकसमं चैव वृषदन्त[5]खरोपमम् । गोमायुष्टोपमं चैव पिण्डरेखा च निन्दितम् ॥ ४६ ॥
वर्णात्मकं तथा चिह्नं शुभाशुभफलप्रदम् । शृणु लिङ्गेषु [6]संश्लिष्टं वक्ष्यमाणं मया[7] हरे॥४७॥
स्वरेषु ऋ ॠ ऌ ॡ च ए ऐ ओ औ अशोभनाः[8] । [9]वर्गेष्वाद्यं शुभं ज्ञेयं द्वितीयं निन्दितं भवेत् ॥
तृतीयं शुभदं ज्ञेयं चतुर्थमुभयात्मकम् । [10]आद्याक्षरं च प्रासादमतीव शुभदं भवेत् ॥ ४९ ॥
[11]अनुनासिकविसर्गौ च त्याज्यावेतौ[12] मनीषिभिः। [13]कूटो विसर्गयुक्त्याज्यः सबिन्दुः सोऽतिशोभनः ॥५०॥
मकारोकारकौ चापि वर्णौ शुभफलप्रदौ । शुभचिह्नयुता ग्राह्या त्यजेदन्यामशोभनाम्[14]॥ ५१ ॥
एवं परीक्ष्य बहुधा [15]क्षालनं च पुनः पुनः । सर्वात्मसंज्ञमन्त्रेण संप्रोक्ष्य च शिलां तदा॥५२
[16]जुहुयादुत्तरे [17]तस्याः समिदाज्यचरून् क्रमात् । प्रत्येकं तु शतं वाथ तदर्धं वा तदर्धकम् ॥
[18]ब्रह्मविष्णुशिवान्मत्वा मूलमन्त्रैः पृथक्पृथक् । मन्त्रसंहितया पश्चाज्जुहुयात्सर्पिषा[19] सुधीः ॥

---

[1] B : खङ्गं च्छत्रं मृगेन्द्राभं वृत्तकच्छपमत्स्यवत्

[2] B : पद्मापि pour वच्चापि

[3] B : ग्रन्थि pour गृध्र

[4] B, E : काक pour कङ्क

[5] B : स्वर pour खर ; D, F : कर ; E : वर

[6] B : सर्वेषु ; F : संस्पृष्टं

[7] B : अथो pour मया

[8] B, D : ए ऐ अं चापि शोभना ; E : ए ऐ अं चापि शोभनम्

[9] D : अवर्गेष्वाद्यं

[10] B, E : आद्यक्षरं च प्रासाददन्तीव ; D : आद्यक्षरप्रासाददतीव ; F : आद्यक्षरं च प्रासाददन्तं

[11] E : अनुनासिविसर्गौ च

[12] C : त्याज्या चेति ; D : त्याज्या चैतौ

[13] C : कूटौ विसर्गकौ त्याज्यौ ; D : कौटौ विसर्गकः त्याज्यौ : E : कूटं विसर्गकं त्याज्यौ

[14] Cf. *Kiraṇāgama*, III, 21, 37b-44 :
एवं परीक्ष्य निर्वृत्य तच्चिह्नान्युपलक्षयेत् । पद्मस्वस्तिकचन्द्रार्कखड्गमुद्रासिगुह्यवत् ॥
सज्ञा [खड्गा ?] तपत्रसिंहं च कूर्ममत्स्यवृषाङ्कितम् । हस्तिश्रीधेनुलिङ्गं च स्रग्जटानेत्रभूषणम् ॥
एतच्चिह्नं शुभं ज्ञेयं तद्वर्णासितरेखिणम् । कङ्ककाकासिगृध्रोष्ट्रश्येनमार्जारकीटवत् ॥
कबन्धकौटिकोलूकखण्डरेखमशोभनम् । ज्ञेयं वर्णात्मकं चिह्नं वर्णानामादिमं शुभम् ॥
तद्द्वितीयं त्यजेद्यत्नात् तत्तृतीयं शुभं भवेत् । तच्चतुर्थं द्विरूपं स्यात्प्रासादामृतवर्तनात् ॥
तथानुनासिका त्याज्या तथा कूटो विसर्गवान् । स एव बिन्दुसंयुक्तो मकारोकारकं शुभम् ।
स्वरमध्ये तथा ऋ ॠ ए ऐ ओ औ त्वशोभनम् । एवं परीक्ष्य यत्नेन वक्त्रं रन्ध्रान्वितं त्यजेत् ॥
स्फुटितं स्थूलमूलान्तं त्यजेद्यच्च कृशोदरम् ॥

[15] E : प्रक्षाल्य ; F : प्रक्षाल्यं

[16] E : जुहुयादन्तरे

[17] B, D, E : तस्य pour तस्याः

[18] B : ब्रह्मविष्णुशिवात्मश्च ; D : ब्रह्मविष्णुशिवात्मत्वात् ; E : ब्रह्मविष्णुशिवात्माख्य॰ ; F : ब्रह्मविष्णुशिवात्मत्व॰

[19] C : सर्पिषा जुहुयात् pour जुहुयात्सर्पिषा

प्रत्येकं पञ्चभिर्मन्त्रैरीशानाद्यैर्दशाहुतीः[1] । हुत्वान्ते त्वप्रमत्तस्तु शिलां स्पृष्ट्वाथ देशिकः ॥५५॥
पूर्णाहुतिं शिवेनैव दत्त्वा देवं विसृज्य च । गृहीत्वा तां शिलां[2] मन्त्री व्योमव्यापि जपन्सदा ॥
[3]तक्षणं शिल्पिना पश्चात्कृतहस्तेन कारयेत्[4] ॥ ५७ ॥

इत्यजिताख्ये महातन्त्रे [क्रियापादे] [5]शिलादि-
ग्रहणविधिर्नाम पञ्चमः पटलः ॥[6]

---

[1] C : दशाहुतिः pour दशाहुतीः ; D : दशाहुतिम्

[2] B : शिवा pour शिलां

[3] C : तत्क्षणं शिल्पिना पश्चात् ; D : तक्षकशिल्पिनौ पश्चात्

[4] Cf. *Kāraṇāgama*, I, 9, 90-99 :
शोधयित्वा भुवं पश्चात्तत्समीपप्रदेशकम् । पञ्चगव्येन संप्रोक्ष्य पवमानमुदीरयेत् ॥
गन्धं पुष्पं तथा धूपं दीपं नैवेद्यमेव च । सद्यादिब्रह्मभिर्दत्त्वा शिलां वस्त्रेण वेष्टयेत् ॥
तस्यैव पूर्वभागे तु होमकर्म समारभेत् । समिदाज्येन चरुणा प्रत्येकं तु शताहुतिः ॥
हृदयेन समिद्धोमं सर्पिरीशानमन्त्रतः । अघोरेण चरुं हुत्वा प्रत्येकं व्याहृतीर्हुनेत् ॥
ततः स्विष्टकृतं हुत्वा परिषेचान्तमाचरेत् । शिलां प्रदक्षिणं कृत्वा दिग्देवानां वलिं ददेत् ॥
एकरात्रं वसेतत्र स्वप्नेमाणवकं जपेत् । ओं नमः शंभवे त्रिनेत्राय पिङ्गलाय महात्मने ॥
वामाय विश्वरूपाय स्वप्नाधिपतये नमः । आचक्ष्महे महादेव प्रसन्नोऽसि तवान्तिकम् ॥
स्वप्नजातानि सर्वाणि हृदिस्थानि भवन्तु मे । ओं हिलि हिलि शूलपाणये स्वाहा ॥
दृष्टं स्वप्नं द्विजश्रेष्ठो ब्राह्मणेभ्यो निवेदयेत् । दुःस्वप्नं चेज्जपेद्धीमान् पाशुपतं सहस्रकम् ॥
वस्त्राङ्गुलीयकैश्चैव तोषयेद्गुरुशिल्पिनौ । शिलां सम्यग्गृहीत्वा तु लिङ्गं कुर्यात्तु वुद्धिमान् ॥

[5] B : शिलाग्रहणविधिः पञ्चमः पटलः ; C : शिलासंग्रहणं नाम पञ्चमः पटलः ; D, शिलासंग्रहणविधि-पटलः पञ्चमः ; E : शिलाग्रहणपटलः पञ्चमः ; F : शिलाग्रहणपञ्चमः पटलः

[6] D ajoute : ग्रन्थं ५८.

## [ षष्ठः पटलः ]

## [ देशनिर्देशः ][1]

[2]अथ देशं प्रवक्ष्यामि लिङ्गसंस्थापनोचितम् । मेरुमन्दरकैलासशिखरेषु च [3]सानुषु ॥ १ ॥
[4]नीले श्वेतगिरौ चैव शृणु वेरगिरौ तथा । निषधे हेमकूटाख्ये हिमाख्ये च महागिरौ ॥ २ ॥
विन्ध्ये च मलये [5]सह्ये गिरौ रैवतके तथा । श्रीपर्वते देवगिरौ [6]महेन्द्रे गन्धमादने ॥ ३ ॥
गिरिष्वेतेषु सर्वेषु पुण्यतीर्थयुतेषु च । तथाभूतेष्वरण्येषु गङ्गातीरे तथैव च ॥ ४ ॥
यमुनायाः सरस्वत्या गोदावर्यास्तथैव च । नर्मदासिन्धुशोणानां तीरयोरुभयोरपि ॥ ५ ॥
[7]कवेरकन्यकातीरे [8]सर्वासां मध्यमेऽपि च । नदीनदानामन्येषां[9] [10]पुण्यानां तीरयोरपि ॥६॥
मानसादिसरस्तीरे ह्रदानां महतामपि । समुद्रतीरे सर्वत्र [11]पुण्यक्षेत्रसमीपतः ॥ ७ ॥
[12]सर्वक्षेत्रेषु[13] पुण्येषु [14]कुरुक्षेत्रमुखेषु च । [15]अविमुक्तादिसर्वेषु पुण्यस्थानेषु चैव हि ॥ ८ ॥

---

[1] Pour देशनिर्देश voir *Aṃśumadāgama*, 31, *Kāraṇāgama*, II, 3, *Kiraṇāgama*, III, 24, *Dīptāgama*, 78

[2] Cf *Dīptāgama*, 78, 3-13
महेन्द्रे मलये चैव हिमाद्रौ चार्जुने तथा । सह्ये विन्ध्ये च गङ्गायां नर्मदायां तथैव च ॥
गोदावर्यां सरस्वत्यां कुरुक्षेत्रे विशेषतः । नैमिशे चान्तर्वेद्यां तु महाकालवने तथा ॥
क्षीरवृक्षसमीपे तु सौगन्धिकवनेऽपि च । पारियात्रे च गोकर्णे प्रासादं परिकल्पयेत् ॥
महेन्द्रे चायुरारोग्यं कर्तुः सर्वप्रसिद्धिदम् । मलये चैव सौभाग्यं धनधान्यविवर्धनम् ॥
हिमाद्रौ पुत्रलाभः स्यादर्जुने शत्रुनाशनम् । गवां संवर्धनं सह्ये विन्ध्ये योगप्रसिद्धिदम् ॥
गङ्गायां धौतपापायां नर्मदायां श्रियं ददेत् । गोदावर्यां महासिद्धिर्धनधान्यविवर्धनम् ॥
सरस्वत्यां महाकीर्तिर्नैमिशे राष्ट्रवर्धनम् । शत्रोरुच्चाटनार्थं य कुरुक्षेत्रे विशेषतः ॥
अन्तर्वेद्यां तु राज्यार्थी कारयेदालयं क्रमात् । महाकाले तु मोक्षः स्यात्क्षीरवृक्षेऽतिशान्तिकम् ॥
सौगन्धिकवने कुर्यात्स्वर्गार्थी तु विशेषतः । यशोबले प्रवर्तेन्ने पारियात्रे विशेषतः ।
गोकर्णे कन्यकालाभपुष्टितुष्टिकरं स्मृतम् । सामान्यलक्षणं प्रोक्तं ग्रामादिष्वधुनोच्यते ॥
ग्रामे च नगरे चैव पत्तने खेटके पुरे । कुब्जके राजधान्यां तु कुर्याद्देवालयं क्रमात् ॥

[3] C, D : धातुषु

[4] B, D : नीलश्वेतगिरौ

[5] F: सव्ये pour सह्य

[6] B, C : माहेन्द्रे

[7] A: कवेरकन्या कावेरी

[8] A: सर्वस्मिन्

[9] A: अन्यानां pour अन्येषां

[10] A: तीरयोरुभयोरपि

[11] D: पुण्यक्षेत्रेषु वा पुनः

[12] D omet les *śloka* 8 et 9

[13] C: सर्वेष्वेतेषु

[14] C: कुरुक्षेत्रे तु मुख्यतः

[15] F: अविभक्तादिसर्वेषु

प्राकाराभ्यन्तरे वापि लिङ्गे पूर्वस्थिते सति । उद्यानेषु च रम्येषु सिद्धक्षेत्रेषु वा पुनः ॥ ९ ॥
मुनीनामाश्रमे रम्ये [1]वानप्रस्थाश्रमेऽपि च ।
विपुलकुमुदपद्मप्रान्तविस्तीर्णतोयप्रचुरविततवीचीचक्रसंश्लेपरम्ये ।
मृदुतरबहु[2]शष्पास्वाद[3]बद्धादराणां[4] सततवसतिभूते चोत्सुकानां मृगाणाम् ॥ १० ॥
अरुणकुमुदनीलनीरजाद्यैरपि समलंकृतपुण्यतोयसिक्ते ।
फलकुसुम[5]भरावनम्र[6]सान्द्रैस्तरुनिकरैर्बहुभिः सदोपगूढे[7] ॥ ११ ॥
[8]यत्र वृक्षलतागुल्माः पुष्प[9]स्तबकसंयुताः । श्लक्ष्णच्छायायुताः[10] [11]श्लक्ष्णफलपल्लवशालिनः[12] ॥
[13]हृष्टपुष्टविहङ्गाश्च [14]सदाबद्धजनाश्रयाः ॥ १२ ॥
[15]तत्रोपविष्टतरुशाखकलान्यपुष्टे पुल्लोरुकैरवदलद्युतिशुभ्रभृङ्गे[16] ।
[17]कूजत्कलापि[18]कुलशालिनि वृक्षमूले सुप्त[19]प्रबुद्धरुरुमण्डलमण्डिते[20] च ॥ १४ ॥
उत्पुल्लस्थलकमले[21] ततो मनोज्ञे[22] विस्तीर्णे विततसरित्तटाककूले ।
[23]आलोलन्मृदुकुशकाशशोभ[24]वीरुत्पर्यन्तोन्मुखमृगगोकुलैश्च[25] रम्ये ॥ १५ ॥
आलोलद्विकच[26]महोत्पलावलीपूद्वायद्भिः पतदलिभिः कृतोपशोभे ।
हंसानामपि मिथुनैश्च[27] चक्रनाम्नां[28] संकीर्णामलसलिले [29]ससारसानाम् ॥ १६ ॥
[30]एवंभूते [31]स्थापितं चारुदेशे कुर्यान्नृणां [32]सर्वदेष्टार्थसिद्धिम् ।
[33]शैवं लिङ्गं देशिकैः पापदेशे नेष्टं दद्यात्तेन [34]तं वच्मि देशम् ॥ १७ ॥

---

[1] E: वानप्रस्थाश्रमेषु च
[2] A: पुष्प pour शष्प
[3] C, F: बन्ध pour बद्ध
[4] A, B: आतुराणां pour आदराणां
[5] B: वर pour भर ; D, E: भार
[6] A: सान्द्रः pour सान्द्रैः
[7] F: सदोपगूढैः
[8] F: पत्र pour यत्र
[9] E, F: स्तम्बाक pour स्तबक
[10] A: युत pour युताः
[11] C: श्लक्ष्णा pour श्लक्ष्ण
[12] शाखिनाम् pour शालिनः ; D: शोभिताः ; E: शाखिनः
[13] E: हृष्टपुष्टविभङ्गाश्च
[14] A, E, F : सदापानजनाश्रयाः ; D: सदा जपजनाश्रयाः
[15] F: तत्रोपविष्टतनुशाखकलान्यघुष्टे
[16] D: शृङ्गे pour भृङ्गे
[17] A: गुञ्जन् pour कूजन् ; F: गच्छन्
[18] C: कलाप pour कलापि
[19] F: प्रबन्ध pour प्रबुद्ध
[20] A: मण्डलमाश्रिते pour मण्डलमण्डिते
[21] D : कोमले pour कमले
[22] D : मनोज्ञदेशे pour ततो मनोज्ञे
[23] A : आलोलं pour आलोलद्
[24] F : शोक pour शोभ
[25] D : कोकिलैश्च pour गोकुलैश्च
[26] D, E : महोत्पलावलीपद्मायद्भिः ; F : महोत्पलालिविरद्वायद्भिः
[27] A omet च
[28] D : चक्रनम्रा
[29] C, E : ससारसारम्
[30] F : एवंवृत्ते
[31] C : स्थापिते
[32] E : सर्वदेवार्थसिद्धिम्
[33] C : लेशं pour शैवं; A : शैलं
[34] D : तद्वाच्यदेशम

[लिङ्गस्थापने वर्जनीयाः प्रदेशाः]

[1]यत्र दावाग्निना दग्धो वृक्षो वज्रहतोऽपि वा । यत्र कण्टकिनो वृक्षाः श्लेष्मातकतरुस्तथा ॥१८

[2]पारिभद्रो विषतरुः [3]करञ्जाङ्कोलकौ तथा । [4]पूतीको [5]ब्रह्मदण्डी च तं देशं परिवर्जयेत् ॥

यत्र [6]चास्थिकपालानि यत्र सर्पाश्च भीषणाः । वल्मीका बहवो यत्र यत्रोप्तं न प्ररोहति[7] ॥

यत्र [8]शुष्कलता गुल्माः [9]परिक्षीणा महीरुहः । यत्र [10]दूरतरं खातेऽप्यधस्तोयं[11] न दृश्यते॥२१

[12]पाषाणाः शर्कराश्चापि प्रभूतं यत्र दृश्यते । चिराध्युषित[13]चण्डालपुलिन्दादिस्तु यो भवेत् ॥

[14]योऽतिनिम्नोऽतिदरितो [15]यो वा द्रुमसमावृतः । [16]तं देशं वर्जयेद्धीमाँल्लिङ्गस्थापनकर्मणि॥२३

[ग्रामादिषु लिङ्गस्थापनविधिः]

ग्रामादीनां तु सर्वासु दिक्षु स्थापनमिष्यते । [17]ब्रह्मस्थानस्थितं लिङ्गं ब्रह्म[18]क्षत्रहितावहम् ॥२४॥

[19]ऐन्द्रे राज्यप्रदं प्रोक्तं याम्ये [20]वृद्धिस्तथायुषः।आरोग्यं [21]वारुणे चापि सौम्ये [22]वित्तप्रदं भवेत्॥

---

[1] A omet les *śloka* 18, 19 et 20a

[2] C : पर्वभद्र

[3] C : करजाङ्कौचकौ; F : करजं कोलकौ

[4] F : पूजितको pour पूतीको

[5] D : ब्रह्मषण्डी च; F : ब्रह्मदण्डश्च

[6] C : चास्ति कपालानि

[7] Cf. *Dīptāgama*, 78, 51b:

वल्मीकाढ्यां तथोषर्यां कृमिदुष्टां च वर्जयेत् ।

cf. *Suprabhedāgama*, I, 25, 33-36 :

पर्वतेषु च रम्येषु ग्रामे च नगरेऽथवा । इन्द्रेशाने त्वथेशाने सोमेशानेऽथवा पुनः

यस्मिन् देशे मनोज्ञे तु तत्र प्रासादमारभेत् । अथ भूमिं परीक्ष्यादौ कर्षणं तदनन्तरम् ॥

श्वेता रक्ताथवा पीता कृष्णा भूर्ब्राह्मणादयः । मोक्षदा ब्राह्मणी भूमिर्जयदा क्षत्रिया तथा ॥

वैश्या भूमिस्तु धनदा वृषला पुत्रदायिका । ऊषरां कृमिभिर्जुष्टां वल्मीकाढ्यां विवर्जयेत् ॥

[8] A: शुल्कलता ; F: शुष्कतला

[9] A: परिक्षीणमहीरुहाः ; E, F: परीक्षणमहीरुहाः

[10] E: निर्कृतं pour दूरतरं ; F: दुरुत्तरं

[11] E: प्रियस्थोऽयं pour अधस्तोयं

[12] F: पाषाणं कर्कराश्चापि प्रफुल्लं यत्र दृश्यते

[13] B: चाण्डाल pour चण्डाल

[14] E: योऽतिनिम्नर्दितरितो

[15] F : यो चन्द्रमसमावृतः

[16] A: तद्देशं

[17] B: ब्रह्मस्थाने स्थितं

[18] D, E: क्षेत्र pour क्षत्र

[19] A: ऐन्द्रं

[20] B: वृद्धि तथायुषः ; C, D: वृद्धि तथायुषम् E: वृद्धि ततायुषाम्

[21] E: वरुणे

[22] A: पक्तप्रदं ; E: वृतप्रदं

वह्निदेशे सुखं दद्याद्विजयं [1]नैर्ऋते तथा । वायव्ये संपदं दद्यान्मोक्षमीशानगोचरे ॥ २६ ॥
[2]दिग्विदिक्ष्वेवमष्टासु स्थापिते विधिना भवेत् । अन्तरालेषु चान्येषु फलमेवं विनिर्दिशेत्[3] ॥२७

[4]इत्यजिताख्ये महातन्त्रे [ क्रियापादे ] [5]देशनिर्देशो
नाम षष्ठः पटलः ॥ [6]

---

[1] C, E: निर्ऋतौ
[2] C, E: दिशि दिक्ष्वेवमष्टासु
[3] Cf. *Dīptāgama*, 78, 14b-15 :
ग्रामं च पञ्चधा कृत्वा भागमेकं बहिर्न्यसेत् । तत्पैशाचमिति प्रोक्तं तत्र देवालयं कुरु ।
दिग्विदिक्षु च मध्ये च कुर्याद्देवालयं क्रमात् ।
cf. *ibid.*, 78, 39-42 :
आलयं पावके स्थाने महामोट्यास्तु कल्पयेत् । श्रीदेव्यास्तु प्रकर्तव्यं याम्यायां श्रीकरं ततः ॥
सुब्रह्मण्यस्य नैर्ऋत्यां कारयेत्कुलटालयम् । मातृस्थानं तु सौम्यायां प्रासादे मन्दिरं बुधः ॥
कैलासगिरिदिग्भागे ईश्वरस्य विनिर्मितम् । अथवान्यप्रकारेण वक्ष्यते शिवमन्दिरम् ॥
इन्द्रईशानयोर्मध्ये सोमईशानयोरपि । यथेष्टं कारयेद्धीमान् तत्तद्ग्रामानुरूपतः ॥
cf. *Suprabhedāgama*, I, 23, 64-73 :
ईशाने चेश्वरस्थानं सोमेशानान्तरेऽथवा । तथैन्द्रेशानयोर्मध्ये कल्पयेत्तु विचक्षणः ॥
सहस्रभूसुरादूर्ध्वे ब्रह्मेशोवायुदेशके । पञ्चमूर्तिविधानेन स्थापयेद्वै जनार्दनम् ॥
ऐन्द्रे तु भास्करस्थानं महामोट्यास्तु पावके । दुर्गास्थानं तु याम्यायां महेशितुश्च नैर्ऋते ॥
विष्णुस्थानं तु वारुण्यां सुब्रह्मण्यं तु वायवे । विनायकसमातॄणां स्थानं सम्यक् तथोत्तरे ॥
प्राकारपरिखाबाह्ये मातॄणां स्थानमिष्यते । तासां वै चोत्तरद्वारं ग्रामादीनां हिताय वै ॥
सूर्यस्य पश्चिमद्वारमन्येषां पूर्वतो मुखम् । तटाकस्य तु तीरे च ज्येष्ठादेवीं प्रकल्पयेत् ॥
बाह्ये चाभ्यन्तरे वापि देवागारं पृथक् पृथक् । शिवस्य वास्तुबाह्ये तु प्रासादं प्रोक्तदेशके ॥
सन्धिमार्गेषु वीथ्यग्रे देवानामालयं न हि । ग्रामायामस्य पञ्चांशं परितः कल्पयेत्पृथक् ॥
पैशाचमिति विख्यातं तत्र देवालयं स्मृतम् । शिवस्याराधनं नित्यं भुक्तिमुक्तिप्रदायकम् ॥
अन्येषां पूजनं नित्यं ग्रामवृद्धिकरं भवेत् । देवस्थानं विना यत्र चैककालं न वासयेत् ॥
[4] E: इत्यचिन्त्यविजिताख्ये
[5] A: देशनिर्देशपटलः सप्तमः; B: देशनिर्देशविधिः षष्ठः पटलः; D: देशनिर्देशपटलः षष्ठः; E : देशनिर्देशनामा षष्ठः पटलः; F : देशनिर्देशः षष्ठः पटलः
[6] D et E ajoute: ग्रन्थं २६

[ सप्तमः पटलः ]

[ कर्षणविधिः[1] ]

कर्षणस्य विधिं वक्ष्ये भूपरीक्षापुरःसरम् । यत्र [2]देशे तु तच्छैवं [3]लिङ्गं संस्थाप्यमिष्यते ॥ १ ॥

[ भूपरीक्षा ]

[4]तं देशं [5]समनुप्राप्य [6]प्रणम्य च महेश्वरम् । दिव्यान्तरिक्षभौमानि[7] निमित्तान्युपलक्षयेत् ॥२॥
तच्छुभाशुभमालक्ष्य [8]शुभे भूमिं परीक्षयेत् । अशुभेषु निमित्तेषु [9]घोरेणाज्यशताहुतीः ॥ ३ ॥
[10]हुत्वा परीक्षयेत्पश्चाद्देशिकः शास्त्रवित्तमः[11] । पुण्याहं वाचयित्वादौ स्थित्वाथ[12] प्राङ्मुखः सुधीः
दक्षिणेन तु पादेन कुट्टयेदस्त्रमुच्चरन् । कुट्टने यदि [13]सा भूमिर्गम्भीरा [14]नदति स्थिरा ॥ ५ ॥
संग्राह्या [15]ह्यथवा [16]तत्र खात्वा [17]हस्तमितां बुधः । पूरयेदवटं भूयो न्यूने [18]न्यूना समे समा॥
अधिके तूत्तमा [19]सा वा समा वा शोभना मही । हीना सा न भवेद्ग्राह्या तस्याः पांसुरथापि वा ।
आढको यदि [20]षष्टिः स्याद् [21]पलानीह च सा शुभा । [22]ग्राह्या भूमिर्विनिन्द्या स्यान्न्यूना [23]लिङ्गस्थितौ तदा ॥ ८ ॥
अथवा [24]हस्तविस्तारे तद्वत्खाते महीतले । पूरयित्वाम्भसा [25]सद्यो [26]गच्छेन्नवपदं सुधीः ॥९॥

---

[1] Pour कर्षणविधि voir *Aṃśumatkāśyapa*, 1, *Aṃśumadāgma*, 78, *Kāmikāgama*, I, 11–14, *Kāraṇāgama*, II, 3, *Suprabhedāgama*, I, 25

[2] A: देशेषु pour देशे तु

[3] C, D, E: लिङ्गसंस्थापमिष्यति

[4] A: तद्देशं

[5] C : अनुसंप्राप्य

[6] D: प्रणम्य परमेश्वरम्

[7] E, F: भौमानां pour भौमानि

[8] A: शुभां

[9] B : अघोरेण शताहुतिः ; C, D, E, F : अघोरेण शताहुतिम्

[10] E: भुक्त्वा pour हुत्वा

[11] Cf. *Kiraṇāgama*, III, 24, 8 :

दिने योगादिसंयुक्ते पुण्याहजयमङ्गलैः । ततः प्रसारयेत्सूत्रमाचार्यः शिल्पिभिः सह ॥
प्रसार्यमाणे सूत्रे तु निमित्तान्युपलक्षयेत् । निमित्ते सति किंकुर्यादनिमित्ते क्रतुर्भवेत् ॥
घोरेणाष्टसहस्रं तु कार्यो होमः सितैस्तिलैः । घृतक्षीरयुतैः शान्तिर्भवत्यत्र न संशयः ॥

[12] A: च pour अथ

[13] C: या pour सा

[14] A: निरतिस्थिरा

[15] A: च तथा pour ह्यथवा

[16] D: यत्र pour तत्र

[17] C: वा स्तिमितां pour हस्तमितां

[18] C, D, E: हीना pour न्यूना

[19] E: वा सा pour सा वा

[20] A: षष्टी pour षष्टिः

[21] A: फलानीति च

[22] A: ग्राह्यभूमिर् pour ग्राह्या भूमिर्

[23] A: लिङ्ग स्थितौ

[24] C: हस्ततारे च तद्वद्धाते ; E: हस्तमानेन तद्वत्खाते

[25] E: गर्तं pour सद्यो

[26] D: गच्छेन्नैव पदं

[1]तथागत्य [2]पुनर्दृष्टे यदि [3]न्यूनं जलं भवेत् । [4]अवटे स्यान्मही निन्द्या विपरीता तु वृद्धिदा[5] ॥१०

[ कर्षणम् ]

एवं परीक्षितायां तु धरायां कर्षणं भवेत् । याज्ञिकैस्तु[6] हलं कृत्वा युगं च तरुभिर्नवैः ॥११॥
[7]वृषौ चैव सितौ पुष्टौ [8]युवानौ संविगृह्य च । हेमशृङ्गखुरौ कृत्वा वस्त्रवेष्टितकन्धरौ[9] ॥ १२ ॥
शुचिवल्कलसंभूतरज्जुना त्रिवृता वृषौ । युगेन सह संयोज्य वृष[10]गायत्रिमन्त्रतः ॥ १३ ॥
हलं च तेन [11]संयम्य प्राङ्मुखो देशिकः स्थितः[12]। नववस्त्रोत्तरीयश्च बद्धपश्वाङ्गभूषणः[13]॥१४॥
[14]वृषावभ्यर्च्य तद्बीजमन्त्रेणैव समाहितः । लाङ्गलं वामहस्तेन गृहीत्वा दक्षिणेन तु ॥ १५ ॥
[15]ब्रह्मवृक्षतरोः[16] शाखां [17]कर्षयेत्तां वसुन्धराम् । वृषगायत्रिमुच्चार्य [18]हुंकारान्तेन हुंकृतिम्॥१६॥
कृत्वा प्रचोदयेत्सद्यो वृषौ पूर्वमुखौ तदा । चतुर्दण्डप्रमाणेन गत्वा [19]पूर्वोत्तरं सुधीः ॥ १७ ॥

---

[1] D: तदागत्य
[2] C, D, E : पुनर्दृष्ट्वा
[3] C : न्यूनजलं ; D, E, F : न्यूनजलो
[4] C : अवटं स्याद् ; D : अवटः स्याद्
[5] Cf. *Kāraṇāgama*, I, 4, 13b-14 :
हस्तमात्रावटं कृत्वा पूरयेतन्मृदा पुनः । श्रेष्ठा च अवटाधिक्या मध्यमा समता मता ॥
न्यूने तु कन्यसा प्रोक्ता यादृशी तादृशी फला ॥
cf. *Suprabhedāgama*, I, 25, 37-38a :
जानुमात्रं खनेद्भूमिं तन्मृदापूर्य चावटम् । उत्तमा त्वधिका भूमिस्तत्समं चेत्तु मध्यमा ॥
न्यूना वर्ज्या प्रयत्नेन"
cf. *Kiraṇāgama*, III, 24, 3-7 :
द्विजातिप्रक्रमात्सिद्धं रूपभारवतीं दृढाम् । शूर्पसूर्प्याकृतिं त्यक्त्वा सा ग्राह्या स्फुटिता न या ॥
समं कृत्वा तथा कोष्ट्या निशि पक्षे घटे शुभे । वर्धमानं तदूर्ध्वं स्यात्स्थाप्यं नक्तचतुष्टयम् ॥
पूर्वादिक्रमयोगेन द्विजातीनां क्रमो भवेत् । कल्प्यं नरादिभिर्मन्त्रैरभिमन्त्र्य शतं शतम् ॥
ज्ञेयो ह्रासविवृद्ध्या स संकीर्णः केवलोऽथवा । क्षितिं च कर्षितां कृत्वा यवान्वापि तिलान् किरेत् ॥
या बीजक्षेपणाद्बीजास्त्र्यहोभिः साङ्कुराः शुभा । अन्यथा विफला ज्ञेया"
[6] A : च pour तु
[7] B : वृषं च सुपितौ ; C, E : वृषौ च सुधितौ ; F : वृषौ च सुमितौ
[8] B, C, E, F : यौवनस्थौ विगृह्य च
[9] A : कुण्डलौ pour कन्धरौ
[10] F : गायत्र pour गायत्रि ; [गायत्रं गायत्रीच्छन्दसा निर्मितम् । वृषगायत्री = वृषभराजाय विद्महे तीक्ष्णशृङ्गाय धीमहि तन्नो वृषः प्रचोदयात् ]
[11] C, D, E, F : संयोज्य
[12] A, D : ततः pour स्थितः
[13] E, F: भूषणैः pour भूषणः
[14] A, D : वृषमभ्यर्च्य
[15] [ब्रह्मवृक्षः पलाशः, उदुम्बरो वा । 'ब्रह्मवृक्षतरुः' इति ब्राह्मणवसिष्ठन्यायेन]
[16] E: तयोः pour तरोः
[17] A, D: कारयेत् pour कर्षयेत्
[18] C: हुंकारं तेन हुंकृतम् ; E: हुंकारान्तेन हुंकृतिः
[19] A: पूर्वं ततः सुधीः ; B: पूर्वोत्तरतः सुधीः

[1]आवर्तयेद्वृषावेवं त्रिःकृत्वा [2]चोत्तरायतम्। तथा विकृष्य पश्चाच्च [3]हलैरन्यैश्च कर्षयेत् ॥ १८ ॥
[4]बीजावापनयोग्यां तां कृत्वा भूमिमतन्द्रितः[5] । तत्र [6]सम्यक्तिलव्रीहिमुद्गान्मूलेन[7] वापयेत् ॥
संसिच्याथ [8]जलैः पश्चाद्रक्षयित्वा[9] भुवं तदा । परीक्षयेत्ततस्तां[10] तु भुवं देशिकसत्तमः[11]॥२०
[12]त्रिरात्राङ्कुरिता श्रेष्ठा [13]पश्चाहान्मध्यमा स्मृता ।[14]निन्द्यान्याङ्कुरिता भूमिर्देशिकैः[15] शास्त्रवित्तमैः[16]
श्रेष्ठा मध्या च संग्राह्या [17]निन्द्या या स्यान्मही तदा । हुत्वा घोरेण मन्त्रेण [18]शतं तां च समाहरेत्[19]

---

[1] A: आवृते pour आवर्तयेद्
[2] C: चोत्तरा यतम्; E, F: चोत्तरायनम्
[3] C, E: हरैर् pour हलैर्
[4] C, E: बीजावापनयोग्यान्तं ; F: बीजावापनयोग्यान्तां
[5] E: अतन्द्रितम् pour अतन्द्रितः
[6] C: सम्यक् तिलं व्रीहिमुद्गं मूलेन
[7] E: मुद्गकेन तु pour मुद्गान् मूलेन; F: मुद्गलेन तु
[8] D: जलैश्चैव pour जलैः पश्चात्
[9] E: रक्षां दत्वा pour रक्षयित्वा ; C : वृक्षा दत्त्वा
[10] B, C, D, E, F: भुवं तां तु ततो pour ततस्तां तु भुवं
[11] Cf. *Suprabhedāgama*, I, 25, 40b-47 :

पिङ्गलौ पालितौ रक्तौ वृषौ वै नाङ्गहीनकौ । अन्यवर्णं न कर्तव्यं न बालौ न च वृद्धकौ ॥
हेमश्रृङ्गखुरौ न्यस्त्वा वृषमन्त्रेण पूजयेत् । युगं च सहलं बध्वा याज्ञकैर्वृक्षसंभवैः ॥
शमी बिल्वं च खदिरो पनसः स्तम्बकस्तथा । तक्षकेन तथा कृत्वा यन्त्रयित्वा सलोहकम् ॥
हलं युगेन संबध्वा गोचर्मकृतरज्जुना । आचार्यस्त्वादिशैवस्तु सकलीकृतविग्रहः ॥
पुण्याहं वाचयित्वा तु संप्रोक्ष्य पञ्चगव्यकैः । कर्षयेच्छिवमन्त्रेण प्रागुदक्प्रणवां महीम् ॥
आचार्यं पूजयित्वा तु दद्यात्तु सहलौ वृषौ । तिलसर्षपमुद्गांश्च शालिबीजांश्च वापयेत् ॥
पञ्चरात्र्यां त्वङ्कुरिता ग्राह्यान्या तु विवर्जिता । तेषु पक्षेषु कालेषु गोगणानां निवेदयेत् ॥
एवं परीक्ष्य वसुधा संग्राह्या देशिकोत्तमैः ॥

[12] B, D, E : त्रिरात्रेऽङ्कुरिता
[13] C, E: पञ्चाहं मध्यमा
[14] C : निन्द्यानङ्कुरिता ; D: निन्द्यायाकुलिता; E, F: निन्द्यायाङ्कुरिता
[15] B: देशिकः pour देशिकैः
[16] A: शास्त्रचिन्तकैः
[17] D: निन्द्यापास्या मही तदा
[18] A: शतानां च pour शतं तां च ; C, D: शतान्तांच
[19] C, D, E: समारभेत्

Le type *nindya* ou *adhama* de terrain est prohibé dans la plupart des autres *āgama*. Mais l'on trouve dans celui-ci, au *śloka* 21b, la prescription d'un rite d'expiation, prescription qui ne peut se comprendre que par référence au type *nindya* ; ce type de terrain pouvait donc être accepté sous cette condition. C'est pourquoi nous avons adopté dans notre texte la leçon निन्द्या या स्यान्मही तदा donnée par cinq mss. Nous plaçons en note la leçon निन्द्यापास्या मही तदा du ms. D,bien qu'elle soit soutenue par la comparaison avec les autres *āgama*. On peut supposer qu'elle est une correction faite par un copiste influencé par la lecture d'autres *āgama*.

अङ्कुराणि च वक्राणि [1]धूम्राणि विरलानि च। [2]शुष्काणि तिर्यग्जातानि निन्द्यानीति [3]समादिशेत्
तद्दोषशमनार्थं तु होमयेद्बहुरूपिणा । गते [4]मासेऽथवा पक्षे त्रिचतुःपञ्चसंयुते[5] ॥ २४ ॥
सस्येऽस्मिंस्तत्समस्तं तु गोगणेभ्यो निवेदयेत् ॥ २५ ॥
इति [6]कृषिविधिपूतां कारयित्वा धरित्रीं दधिघृतगुलमिश्रं ब्राह्मणान् भोजयित्वा ।
[7]अजवृषमहिषादीन् गोगणं वासयित्वा[8] [9]पुनरवनिमिमां तां प्रोक्षयेत्पञ्चगव्यैः ॥ २६ ॥

इत्यजिताख्ये महातन्त्रे [ क्रियापादे ] [10]कर्षण-
विधिर्नाम सप्तमः पटलः ॥

---

[1] D: धूतानि ; E: सूत्राणि
[2] C, D, E, F: शुक्लानि pour शुष्काणि
[3] C, D, E, F: समाचरेत्
[4] A: मासे च पक्षे वा
[5] A: संज्ञिता pour संयुते
[6] C, D, E, F: कर्षणपूतां pour कृषिविधिपूतां
[7] B, E: अजयुतवृषभस्थां गोगणान् वासयित्वा
[8] F: स्वामयित्वा pour वासयित्वा
[9] E: पुनरिव निमित्तं तां
[10] D: कर्षणविधिपटलः सप्तमः । ग्रन्थ २५ ; E: कर्षणविधिः सप्तमः पटलः ; F: भूकर्षणसप्तमः पटलः

## [ अष्टमः पटलः ]

### [ वास्तुपूजाविधिः ][1]

अतः परं [2]प्रवक्ष्यामि [3]वास्तुपूजां यथाक्रमम् । पुराभूत्पुरुषः कश्चिद्भुवनत्रयभीषणः ॥१ ॥
भुवनानि शरीरेण च्छादयन्भीमविक्रमः । तं दृष्ट्वा [4]सर्वदेवाश्च भीता ह्यासन्परस्परम् ॥ २ ॥
[5]संप्रधार्य तु संभूय गृहीत्वा [6]तमधोमुखम् । अवष्टभ्य भुवः पृष्ठे सहसैव [7]न्यपातयन् ॥ ३ ॥
स एव वास्तुरित्युक्तस्तस्याङ्गानि सुरासुरैः । यत्र येन गृहीतानि तत्र तस्य बलिं हरेत् ॥ ४ ॥
बलिं गृहीत्वा ते सर्वे [8]प्रीणन्ति सुचिरं सुराः[9] । यदि तेषां तदा पूजा सुराणां न विधीयते॥ ५ ॥
तदा [10]देवास्तदङ्गानि [11]हित्वा गच्छन्ति वै ध्रुवम् । गतेषु तेषु[12] [13]तद्वास्तु क्षीयते नात्र संशयः ॥६
क्षयहेतुस्तदङ्गानां विक्षेपोऽत्र भविष्यति । तस्मात्तद्वास्तु[14]देहस्थानमरानर्चयेत्[15] सुधीः ॥ ७ ॥
ईशाने तु शिरो [16]वास्तोः पादौ निर्ऋतिगोचरे[17] । कुक्षिर्ब्रह्मणि विज्ञेयमेवमङ्गानि कल्पयेत् ॥८

---

[1] Pour वास्तुपूजा voir *Aṃśumatkāśyapa*, 3, *Aṃśumadāgama*, 7, *Acintyaviśvasādākhya*, 50, *Kāmikagama*, I, 19, *Kāraṇāgama*, I, 3, et II, 10, *Kiraṇāgama*, III, 24, *Dīptāgama*, 19, *Suprabhedāgama*, I, 27

[2] C, D, E, F: इदं वक्ष्ये pour प्रवक्ष्यामि

[3] B, C, D, E, F: वास्तुपूजाविधानकम्

[4] D: सर्वदेवानां

[5] A: संप्रसार्य

[6] A: यम् pour तम्

[7] A: अभ्यपातयन्

[8] C, D, F: प्रीणन्तः ; E : प्रीणन्तं

[9] Cf. *Suprabhedāgama*, I, 27, 14-15a :
असुराणां हितार्थं तु शुक्रः कृत्वा महातपः । महातपसि संभूतो भूताकारो महाबलः ।
अप्रयुक्तस्ततो भूतो देवैर्युद्धं प्रवर्तते । न हतेऽस्त्रादिभिर्ज्ञात्वा देवैस्तु निहितः कृतः ॥
भूम्यामधोमुखस्तत्र सर्वे देवाश्च संस्थिताः ।

Pour la legende de Vāstupuruṣa voir *Matsyapurāṇa*, chap. 226

[10] A: ते च pour देवाः

[11] A: भित्वा pour हित्वा

[12] A: एतेषु pour तेषु

[13] A: तद्वस्तु

[14] A: तत्तस्य pour तद्वास्तु

[15] A: अर्पयेत् pour अर्चयेत्

[16] C, E: वास्तुपादौ

[17] E: गोचरः pour गोचरे

अन्येष्वङ्गेषु ये देवास्ते [1]पूजायां पराश्रिताः । [2]यत्र [3]प्रासाद अन्यद्वा क्रियते तत्र [4]देशिकः ॥९॥
[5]भुवि निम्नोन्नतं सम्यक्समं कृत्वोपलिप्य च । गोमयेन पुनः कृत्वा पुण्याहं तत्र देशिकः ॥
[6]सितपिष्टाक्त[7]सूत्रेण [8]प्रासादसमविस्तृतम् । [9]प्राङ्मुखं दशसूत्राणि तथोदीच्याननानि च ॥११॥
आस्फाल्य तत्र संजातेष्वेकाशीतिपदेषु च । ब्रह्मा नवपदं [10]भुङ्क्ते वास्तुमध्ये विशेषतः॥१२॥
[11]समर्यको विवस्वांश्च मित्रस्तु पृथिवीधरः । ब्रह्मणश्च चतुर्दिक्षु [12]स्थित्वा षट्पदभोगिनः[13]॥१३

---

[1] C: पूजाया पराश्रिनाम् ; D: पूजायां पुराश्रिना: ; E: पूजामपराश्रिना: ; F: पूजायामपराश्रिताम्

[2] Cf. *Suprabhedāgama*, I, 27, 10-13 :
यावत्प्रासादविस्तारस्तत्समं वा तदर्धकम् । अधिकं तथाप्यर्धं खात्वा प्रासादमानतः ॥
अवटस्य चतुर्थांशं त्र्यंशं वा वालुकैः समम् । अश्मपादगुलैर्मुद्गरैस्तु घनं कृतम् ॥
समं कृत्वा ततः पश्चात्प्रोक्षयित्वा शिवाम्भसा । पञ्चगव्येन संसिच्य पवनानमुदीरयन् ॥
वास्तुविन्यासमार्गे तु दशसूत्रेण देशिकः । एकाशीतिपदं वास्तु सर्वसंपत्करं नृणाम् ॥

cf. *Kāraṇāgama*, I, 3, 105-112a :
ग्रामं तु पञ्चधा कृत्वा भागमेकं बहिर्न्यसेत् । तत्पैशाचमिति ज्ञेयं तत्र देवालयं भवेत् ॥
कति तस्मिन्विशेषोऽस्ति तं विशेषं शृणु द्विज । वास्तुपैशाचिके स्थित्वा ईशो विष्णुश्च मातृभिः ॥
अन्येषां वास्तुदेवानां पदे पैशाचिकेऽथवा । चतुःषष्ट्येकाशीतिर्वा वास्तुभूम्यखिलं ततः ॥
चतुःषष्टिविभागे तु प्राचीनान्यतदेव हि । सूत्राणि कल्पयेत्तद्वदुदीचीनानि वास्तुवित् ॥
ब्रह्म विद्याच्चतुःषष्टिमध्ये ब्रह्मन्तश्चतुष्पदम् । तद्बहिर्द्वादशं पद्मं परितो दैविकं विदुः ॥
दैविकं विहितो [परितो ?] विंशत्पदं मानुषमुच्यते । पैशाचान्तं बहिः प्रोक्तमष्टविंशत्पदं तथा ॥
एकाशीतौ तु षष्ठ्यादि स्थानानि नव नर्जयेत् । युग्मकोष्ठे सूक्ष्मसूत्रयुग्मकेषु पदस्थितान् ॥
देवानभ्यर्चयेत्तत्र पूर्ववैः स्वस्वनामभिः ।

[3] A: प्रासादमन्यद्वा ; B, C, D, E, F: प्रासादमन्यं वा

[4] A: देशिका: [5] B: मु pour भु

[6] Cf. *Kāraṇāgama*, I, 3, 119-122a :
दश प्राङ्मुखसूत्राणि दशैवोदङ्मुखानि तु । एकाशीतिपदान्यत्र लभ्यन्ते तेषु मध्यमे ॥
ब्राह्मं नवपदं विद्यात्तद्बाह्यकावृते तथा । षोडशानि पदानीह विद्यन्ते दैविकं त्विति ॥
बाह्ये त्वथावृते चैव चतुर्विंशति मानुषम् । बहिरावरणे चैव द्वात्रिंशत्पदके तथा ।
पैशाचमिति विख्यातं तद्देवावान्तरे स्थितः । नव पञ्च तथा बाह्ये तुर्यथं शूलके तथा ॥
चत्वारिंशन्नवैतानि संयजेदात्मभूतये ।

[7] C, F: उक्त pour अक्त [8] D: प्रासादमपि विस्तरम् ; B, C, E, F: प्रासादसमविस्तरम्

[9] B, E, F: प्राङ्मुखानि च सूत्राणि दशोदीच्याननानि च ; C: प्राङ्मुखानि च सूत्राणां दशोदीच्याननानि च

[10] C, D, E, F: भूमेः pour भुङ्क्ते

[11] A: समर्यश्च ; C: समर्थको ; *Kāraṇa* et *Kiraṇa* : मरीचिः pour समर्यः ; *Suprabheda* : समरीकः

[12] C, D, E, F: स्थिता: pour स्थित्वा [13] C: भागिनः pour भोगिनः

पूर्वाद्युत्तरपर्यन्तेष्वथ [1]प्रोक्ता विदिक्षु च । आपश्चैवापवत्सश्च [2]सविता सावित्र एव च ॥ १४॥
इन्द्र इन्द्रजयश्चैव रुद्रो [3]रुद्रजयस्तथा । [4]एते [5]द्विपदभोक्तारश्चाष्टौ देवाः प्रकीर्तिताः[6] ॥ १५ ॥
आग्नेयादिषु कोणेषु प्राक्पश्चिमपदाश्रयाः । बाह्य[7]वीथीगतान्देवान्क्रमशोऽद्य वदामि ते ॥१६॥
ईशानश्चैव पर्जन्यो जयन्तश्च महेन्द्रकः । [8]आदित्यः सत्यक[9]भ्रंशावन्तरिक्षश्च [10]पूर्वगाः ॥ १७॥
[11]अग्निः [12]पूषा च [13]वितथो [14]गृहक्षतयमौ तथा । गन्धर्वो [15]भृङ्गराजश्च [16]मृगश्चैव तु दक्षिणे॥१८
पश्चिमे [17]पितरश्चैव दौवारिकस्तथैव च । सुग्रीवः पुष्पदन्तश्च [18]वरुणश्चासुर[19]स्तथा ॥ १९ ॥
[20]शोषश्च [21]पापयक्ष्मा च ते चाष्टौ कथिताः सुराः । उत्तरे च तथा [22]रोगो नागो मुख्यस्तथैव च॥

---

[1] E: प्रोक्तो

[2] *Suprabheda*: शुनासीर pour सवितृ

[3] *Kiraṇa* et *Dīpta* : रुद्रदास pour रुद्रजय

[4] F : श्रुते pour एते

[5] A: द्विद्विपदः प्रोक्ता अष्टौ

[6] Cf. *Kāraṇāgama*, I, 3, 134b-140a:

ब्रह्मणे ब्रह्मगोष्ठेषु बलिं दत्त्वा विशेषतः । मरीचिश्च विवस्वांश्च मित्रश्च पृथिवीधरः ॥
अब्जोद्भवाच्चतुर्दिक्षु दिक्षु प्रागादिदिक्स्थिताः । षट्पट्पदेषु तान्यष्टौ पायसं सरलं तथा ॥
हरिद्रान्नं गुलान्नं च तेभ्यो दद्यात्क्रमेण तु । आपश्चैवापवत्सश्च पद्मेशजानुमध्यतः ॥
सविता चैव सावित्रो ब्रह्माग्निमध्यमे स्थितौ । इन्द्र इन्द्रजयश्चैव विरिञ्च्यनिलमध्यमे ॥
तद्वद्द्विद्विपदं यष्ट्वा कर्णमार्गपदानुगान् । प्रियङ्ग्वन्नं च मुद्रान्नं माषान्नं वेणवान्नकम् ॥
गोधूमान्नं यवान्नं च कुलुत्थान्नं तृणान्नकम् । आपादीनामथाष्टानां बलिं दद्यात्क्रमेण तु ॥

cf. *Suprabhedāgama*, I, 27, 29b-33:

ब्रह्मा नव पदान् भुङ्क्ते वास्तुमध्ये विशेषतः । समर्गकस्तथैन्द्रे तु विवस्वांश्चैव दक्षिणे ॥
मित्रश्च पश्चिमे भागे ह्युत्तरे पृथिवीधरः । ब्रह्मणश्च चतुर्दिक्षु स्थिताः षट्पदभागिनः ॥
आपश्चैवापवत्सश्च ऐशान्यां दिशि संस्थितौ । शुनासीरश्च सावित्र आग्नेय्यां दिशि संस्थितौ ॥
इन्द्र इन्द्रजयश्चैव नैर्ऋत्यां दिशि संस्थितौ । रुद्ररुद्रजयौ वायौ चतुष्कोणे प्रकीर्तिताः ॥
एते द्विपदभोक्तारो द्व्यर्धमेव पदं स्मृतम् ।

[7] A, B : पीठ pour वीथी

[8] A: आदित्यः सत्यको भ्रंशो अन्तरिक्षश्च : E, F : आदित्यसत्यकभ्रंशा अन्तरिक्षश्च

[9] *Kāraṇa* : भ्राज pour भ्रंश

[10] F: पूर्वतः

[11] F: मूर्ध्नि pour अग्निः

[12] F: पूर्वा pour पूषा

[13] *Kiraṇa* : धाता pour वितथः

[14] A: गृहक्षतो यमस्तथा

[15] F : भृङ्गवाजश्च

[16] *Kiraṇa* : मृगराट् pour मृगः

[17] *Kiraṇa* : प्रेतसंवहः pour पितरः, *Suprabheda* : निर्ऋतिः

[18] C, E: पुरुष pour वरुण ; *Dīpta* : रोग pour वरुण

[19] *Suprabheda*: रोग pour असुर

[20] A : शोणश्च

[21] *Kiraṇa* : रोगः pour पापयक्ष्मन्

[22] E, *Kiraṇa*, *Dīpta* et *Suprabheda* : वायुः pour रोगः ; *Kāraṇa* : पवनः

भल्लाटश्च तथा [1]सोम ऋगोऽदितिर्दितिस्तथा । एकैकपदभोक्तारो [2]द्वात्रिंशत्परिकीर्तिताः[3] ॥२१
ब्रह्माणं मध्यमे पूर्वं पूजयेद्देशिकोत्तमः । [4]पाद्यैराचमनार्घ्यैश्च गन्धपुष्प[5]सुधूपकैः ॥ २२ ॥
दीपैश्च परमान्नं तु चरुं [6]तस्य निवेदयेत् । [7]समर्यकस्य शुद्धान्नं मुद्गान्नं [8]तु विवस्वतः ॥ २३ ॥
[9]गुलान्नं मित्रसंज्ञस्य दध्यन्नं पृथिवीधरे । आपादीनामथाष्टानां यववेणुकुलत्थकैः ॥ २४ ॥
माषनिष्पावगोधूम[10]मसूरश्यामकैरपि । मिश्रं चरुं क्रमेणैव दद्याद्रुद्रजयान्तकम् ॥ २५ ॥

---

[1] A, B, C, D, E: सोमो मृगो pour सोमो ऋगो ; *Kiraṇa*: ऋक् pour ऋग: *Kāraṇa*: अर्भक: pour ऋग:

[2] B, C, D, E, F: द्वात्रिंशत्पदगास्तथा

[3] Cf. *Suprabhedāgama*, I, 27, 25-29a :

ईशानश्चाथ पर्जन्यो जयन्तोऽथ महेन्द्रकः । आदित्यः सत्यकश्चैवावन्तरिक्षश्च पूर्वगाः ।
अग्निः पूषा च वितथो ग्रहक्षतयमौ तथा । गन्धर्वो भृङ्गराजश्च मृगश्चैव तु दक्षिणे ॥
निर्ऋतिर्दौवारिकश्चैव सुग्रीवः पुष्पदन्तकः । वारुणो रोगशोषौ च पापयक्ष्मा च पश्चिमे ॥
वायुर्नागस्तथा मुख्यो भल्लाटः सोम एव च । ऋगोऽदितिर्दितिश्चैव द्वात्रिंशद्वाह्यदेवताः ॥
एकमेकं पदं भुक्त्वा त्वीशानाद्याः सुसंस्थिताः ।

cf. *Kāraṇāgama*, I, 3, 140b-150:

ईशानस्त्वथ पर्जन्यो जयन्तश्च महेन्द्रकः । भास्करः सत्यकश्चाजावन्तरिक्षश्च पूर्वगाः ॥
तान्यष्टौ गन्धपुष्पाद्यैः स्वस्वमन्त्रैर्यथाक्रमम् । पद्मकन्दसमायुक्तं लाजापूपसमायुतम् ॥
क्रमेणैव चरुं दत्त्वा एकैकस्य पृथक्पृथक् । वह्निः पुष्पा [पूषा ?] च वितथो ग्रहक्षतयमौ तथा ॥
गन्धर्वो भृङ्गराजश्च मृगो दक्षिणतः स्थिताः । पूजयित्वा तु तान्सर्वान् गन्धपुष्पाक्षतैः क्रमात् ॥
कदलीफलसंयुक्तं सितसिद्धार्थसंयुतम् । शाल्यन्नं तु यदा दद्यात्तिलान्नं फलमिश्रितम् ॥
[पितृदौवारिकौ चैव सुग्रीवः पुष्पदन्तकः] । पाशकश्चासुरश्चैव[शोषः ?] पापयक्ष्मा तथैव च ॥
पश्चिमे संस्थितान् देवान् यष्ट्वा तु विधिपूर्वकम् । सतिलं पुष्पकोपेतं पनसस्य फलान्वितम् ॥
गुडान्नं च बलिं तेषां क्रमेणैव तु दापयेत् । पवनो नागमुख्यौ च भल्लाटो अर्भकस्तथा[सोमऋक्तथा ?] ॥
अदितिश्च दितिश्चैवासौ दिक् सव्यं व्यवस्थिताः । तान्यष्टौ गन्धपुष्पाद्यैर्नालिकेरफलान्वितम् ॥
तथा चोत्पलकन्दं च चारु चाम्रफलान्वितम् । बलिक्रमेण वरुणं दद्यान्नाम्ना तथा बुधः ॥
सर्वेषामथ शुद्धान्नं बलिं वा दापयेत् पृथक् । वास्तुपूजाविहीनं चेत्सर्वं ग्रामो विनश्यति ॥

[4] B, C, E, F: पाद्यनाचमनार्घ्यं च ; D: पाद्यनाचमनं चार्घ्यं

[5] A: स pour सु

[6] A: तेभ्यो pour तस्य

[7] C: समर्थकस्य

[8] F: स्यात् pour तु

[9] A: गौलान्नं

[10] F: मधुर pour मसूर

द्वात्रिंशानामथेशान[1]मुखानां च क्रमाच्चरुम् । पृथक् पृथक् [2]ससर्पिष्कं दद्यात्तेषां वदामि ते ॥२६
मन्त्रान्ब्रह्मादिकानां तु [3]क्रमेणैवामृताशिनाम् । ओंकारमादितः कृत्वा हां हं[4] हामिति चोपरि ॥२७
वास्तोष्पते ब्रह्मणे [5]च नम इत्यन्ततो भवेत् । अन्येषामपि सर्वेषां [6]स्वनामाद्यं तु बीजकम् ॥२८॥
प्रणवेन [7]सहोच्चार्य चतुर्थ्यन्तैः स्वनामभिः । पृथक् पृथग्भवेन्मन्त्रस्तैस्तैर्मन्त्रैर्बलिं हरेत्[8] ॥ २९॥
[9]चरकी च विदारी च पूतना पापराक्षसी । एताश्चतस्रो बाह्यस्थाः शक्तयः पद्मवर्जिताः ॥३०॥

---

[1] A, D: ऐशान pour ईशान

[2] D: सर्पिषस्तद् pour ससर्पिष्कं ; E: सर्पिषां च

[3] A: क्रमेणैव मृताग्निनाम् ; D: क्रमेणैव मृदाग्निनाम् ; E: क्रमेणैव मृताग्निनाम्

[4] A: हां pour हं

[5] A omet च

[6] C: स्वनामान्तं

[7] A: सहोच्चार्यं

[8] Cf. *Suprabhedāgama*, I, 27, 43b-59

पुण्याहं वाचयित्वा तु प्रोक्षयेत्पञ्चगव्यकैः । गन्धपुष्पादिभिर्धूपैर्वास्तुदेवान् प्रपूजयेत् ॥
ईशानं जयेत्पूर्वं घृतेनाक्षतमिश्रितम् । पर्जन्याय विशेषेण दद्यान्नीलोत्पलादिकम् ॥
जयन्तस्य पताकां तु नीलवर्णां विशेषतः । महेन्द्रस्य तु रत्नानि भास्करस्य वितानकम् ॥
गोधूममण्डकान् सत्ये दद्यान्मत्स्यं भृशस्य तु । दद्यात्तु शाकुनं मांसमन्तरिक्षाय देशिकः ॥
अग्नये तु स्रुवं दद्याल्लाजं पूष्णे तथैव च । क्षीरान्नं वितथस्योक्तं मध्वन्नं हि ग्रहक्षते ॥
मांसोदनं यमस्याथ गन्धं गन्धर्वकस्य तु । भृङ्गे तु शाकुना जिह्वा मृगे यवतिलास्तथा ॥
कृसरं त्वथ पित्रे तु दन्तकाष्ठं च दौवारिके । यावं त्वथ च सुग्रीवे कुशान्वै पुष्पदन्तके ॥
दवापद्मं तु वरुणे रोगस्य मधु चैव हि । घृतोदनं तु शोषस्य यवान्नं पापयक्ष्मणि ॥
घृताक्तमण्डकं दद्याद्रोगाय[दद्याद्वायवे ?] तु विशेषतः । नागपुष्पाणि नागाय मुख्यस्यापूपमुच्यते ॥
मुद्गान्नं चैव भल्लाटे पायसं मधु सोमके । ऋगस्यैव तु शाल्कं लोहितान्यदितौ तथा ॥
पूरिकां च दितौ दद्यात्क्रमेणोक्तो बलिक्रमः । पयो दधि कुर्यांश्चैव हरिद्रान्नं गुलान्नकम् ॥
पक्वमांसं च शुद्धान्नं पक्वं च पिशितं तथा । विदिक्ष्वापादिदेवानां बलिं दद्यात्पृथक्पृथक् ॥
घृतान्नं रक्तहारं च लड्डुकं माषमेव च । समरीयकपूर्वेभ्यो दद्याद्दिक्षु विशेषतः ॥
तिलाक्षतयवांश्चैव पञ्चगव्यं कुशं तथा । दातव्यं चरुणा तत्र ब्रह्मणे तु विशेषतः ॥ ......
सर्वेषां चैव शुद्धान्नं गुलाज्यदधिसंयुतम् । अलाभे सति दातव्यं गन्धाद्यैश्च समन्वितम् ॥
सर्वेषामेव मन्त्रास्तु नामप्रणवसंयुताः । पूजादीनां नमोऽन्तं तु बलिः स्वाहान्तमुच्यते ॥

[9] Cf. *ibid.*, I, 27, 34 et 57b :

चरकी च वितारी च पूतना पापराक्षसी । ईशानादिषु कोणेषु बाह्यस्थाः पद्मवर्जिताः ॥ . . . .
चरकीप्रभृतीनां तु मांसं पक्वं निवेदयेत् ।

प्रागादिषु क्रमात्तासां मांसोदनबलिं हरेत् । बलिं समाप्य पश्चात्तु [1]शल्योद्धारं समाचरेत्॥३१॥

[शल्योद्धारः]

यजमानस्तदा त्वङ्गं[2] संस्पृशेत्तत्र चैव हि । वास्त्वङ्गे शल्यमस्तीति [3]निश्चित्यात्रैव खानयेत् ॥३२॥
[4]शिरःस्पर्शे करोटिः स्यान्मुखस्पर्शेऽस्थि चैव हि । बाहुस्पर्शे [5]च दारुणि [6]कण्ठस्पर्शे च लोष्टकम् ॥
[7]कुक्षिस्पर्शे तथा [8]लोहमूरुस्पर्शे दृषद्भवेत् । [9]पादस्पर्शे भवेत्खड्गं[10] [11]पदस्थानि समुद्धरेत्[12] ॥३४

[वास्तुहोमः]

एवं कृत्वात्र शास्त्रज्ञो होमं चापि प्रकल्पयेत् । [13]समर्यकपदे तत्र होमस्थानं विधीयते ॥ ३५ ॥
सैकतं स्थण्डिलं तत्र कृत्वा [14]पूर्वमतन्द्रितः । [15]स्थण्डिलादिस्रुवान्तानां कृत्वा शुद्धिं यथाविधि ॥
पञ्चसंस्कारमादौ [16]तु कृत्वा तत्र [17]हविर्भुजः । ब्रह्माणं तत्र चावाह्य [18]ब्रह्माग्निरिति चिन्तयेत् ॥

---

[1] A : शाल्योद्धारं ; F : शालोद्धारं

[2] D : ततं वाहं pour तदा त्वङ्गं : E : ततस्त्वांसं ; F : नत: स्वांसं

[3] C, D, E, F : निश्चित्वात्रैव

[4] A : शरस्पर्शे करे कोस्यां

[5] E : तु pour च

[6] D, E : कर्ण pour कण्ठ

[7] D : अक्षि pour कुक्षि

[8] C, E : लोहं मूलस्पर्शे

[9] A : पादस्थाने

[10] A : खश्व pour खड्गं ; E : खट्वा

[11] B, C, E, F : पादस्थानि

[12] Cf. *Kiraṇāgama*, III, 24, 39-47 :
वास्तुसंकल्पकाले तु यदंशं स्पृशते गृही । वास्तुदेहेऽपि तत्रैव शल्योद्धारविधिर्मतः ॥
शिरःस्पर्शाद् गृहेशस्य हेमशल्यं नराधतः । हस्तद्वये मुखस्पर्शात्काष्ठं पृष्ठे गले ध्रुवम् ॥
अस्थिशल्यं त्रिभिर्हस्तैरुपस्पर्शे भवेद्ध्रुवम् । हस्तानां तु चतुष्केण चोपशल्यं भवेत्खग ॥
खड्गं पादपरस्पर्शाज्जानुमात्रादधो भवेत् । गण्डको बाहुसंस्पर्शाद्धस्तमात्रविकर्षतः ॥
पादमूलदलस्पर्शाच्चर्माङ्गुष्ठप्रमाणतः । पेटिकाङ्गुष्ठसंस्पर्शादधो हस्तत्रयेण तु ॥
कनिष्ठाङ्गुलिसंस्पर्शात्कांस्यं तत्र कराधतः । लोहं स्यात्कटकं ख्यातं कटिस्पर्शात्करद्वये ॥
ऊरुस्पर्शात्करस्तत्र द्वादशाङ्गुलतो ह्यधः । जानुस्पर्शाच्च हस्तेनाप्यधःशल्यं भवेद्ध्रुवम् ॥
गुल्फस्पर्शात्त्रपुःशल्यं स्याद्वितस्तिप्रमाणतः । पादस्पर्शाद्द्विजस्यास्थि द्वादशाङ्गुलतो द्विज ॥
एवं संक्षेपतः प्रोक्तः शल्योद्धारक्रमो मया । एवं विशोध्य तां भूमिं कार्यं वास्तुसुरार्चनम् ॥

[13] C : समर्त्यकपदे

[14] D : पूर्वमतन्द्रितम् ; E : पूर्वमतन्त्वतः ; F : पूर्वमन्वतः

[15] A : स्थण्डिलाग्निध्रुवाद्यानां ; C : स्थण्डिलादिस्रुवाद्यानां

[16] C, D, E, F : च pour तु

[17] A : विभुर्जयः

[18] A : ब्रह्मा निर्ऋति चिन्तयेत् ; B : ब्रह्माग्नीरिति चिन्तयेत् ; E : ब्रह्माग्नेरिति चिन्तयेत्

पूजयित्वाथ[1] गन्धाद्यैस्ततो होमं [2]समारभेत् । [3]हुत्वाग्निमुखमादौ तु परिषिच्य तु पावकम् ॥ ३८॥
समिदाज्यचरूणां तु प्रत्येकं तु शताहुती:[4] । [5]ब्रह्मणे प्रथमं हुत्वा सर्पिषा [6]सकलं ततः॥ ३९॥
समर्यकादिदेवानां चतुर्णां च यथाक्रमम् । हुत्वा [7]दशाहुतीस्तेषां [8]स्वाहान्तं च स्वनामतः[9] ॥
आपादीनामथाष्टानामष्टौ प्रत्येकमाहुतीः[10] । ईशानप्रमुखानां [11]तु प्रत्येकं [12]पञ्चपञ्चतः ॥४१॥
पूर्णाहुतिं ततो दद्याद्ब्रह्ममन्त्रेण देशिकः । एकाहुतिप्रयोगेण स्वनाम[13]पदमन्त्रतः ॥ ४२ ॥
चरकीप्रभृतीनां [14]च जुहुयाद्देशिकोत्तमः । परिषिच्य ततश्चाग्निमुद्वास्याथ[15] समापयेत्[16] ॥४३॥

इत्यजिताख्ये महातन्त्रे [ क्रियापादे ] [17]वास्तुपूजाविधिर्नामाष्टमः पटलः ॥[18]

---

[1] A : तु pour अथ
[2] A : प्रकल्पयेत् ; E : समाचरेत्
[3] A : कृत्वा pour हुत्वा
[4] A, B, D, E : शताहुतिः
[5] Les *śloka* 30b, 40 et 41a manquent das le ms. E
[6] D, F : केवलं pour सकलं
[7] A : दशाहुतिं pour दशाहुतीः
[8] A : स्वाहान्ताच ; C : स्वाहान्तां च
[9] F : समन्ततः
[10] A : आहुतिः pour आहुतीः
[11] B, C D, E, F : च pour तु
[12] A : पञ्च पञ्च ताः
[13] A : पर pour पद
[14] B, C, D, E, F: तु pour च
[15] A : उद्वाह्याथ pour उद्वास्याथ
[16] Cf. *Suprabhedāgama*, I, 27, 60–67a :
कृत्वैवं बलिदानान्ते पुण्याहं तु विशेषतः । संप्रोक्ष्य पञ्चगव्येन मूलमन्त्रमुदीरयन् ॥
वास्तुहोमं ततः कृत्वा मध्ये चोत्तरपूर्वके । आरम्भस्यादिकाले तु होमं कृत्वा विशेषतः ॥
स्थण्डिलं तत्र कुर्वीत हस्तमात्रप्रमाणतः । चतुरङ्गुलमुत्सेधं गन्धपुष्पं सदर्भयुक् ॥
शिवाग्निं जनयेत्तत्र पूर्वोक्तेन विधानतः । अग्निमध्ये न्यसेद्वास्तुं तत्रस्थैर्दैवतैर्युतम् ॥
आज्यादिद्रव्यमेवं तु वास्तोर्वक्त्रे हुनेत्क्रमात् । पार्थिवेन तु बीजेन सर्वद्रव्यैस्तु होमयेत् ॥
तत्रस्थदेवतानाम्ना स्वाहान्तेन तु होमयेत् । एवं पृथक् शतं प्रोक्तं तदर्धं वा तदर्धकम् ॥
दशसंख्याथवा तत्र प्रत्येकं द्रव्यमाचरेत् । द्रव्यान्ते व्याहृतिं हुत्वा पूर्णाहुतिं शिवस्य तु ॥
वास्तुदेवान्विमृज्याथ पश्चादग्निं विसर्जयेत् ।
[17] A : वास्तुहोमबलिपटलो नवमः ॥ ९ ॥ ; D : वास्तुपूजापटलोऽष्टमः; F : वास्तुपूजा अष्टमः पटलः
[18] A ajoute श्लोकास्त्रिचत्वारिंशत् ; D ajoute ग्रन्थं ४३

## [ नवमः पटलः ]

### [ शङ्कुस्थापनविधिः[1] ]

[2]शङ्कुच्छायाविधानेन वक्ष्ये [3]प्राचीं विनिश्चिताम् । देवविप्रनृपादीनां[4] गृहारम्भविधेः पुरा ॥१॥
उत्तरायणकाले तु शुक्लपक्षे शुभे दिने । यजमानानुकूलर्क्षे[5] शिल्पिना सह देशिकः ॥ २ ॥

[ शङ्कुस्थापनम् ]

विमलेऽ[6]भ्युदयात्पूर्वं स्थापयेच्छङ्कुमुत्तमम् । [7]गृहीतवास्तुनो[8] मध्ये [9]दण्डमात्रं तु भूतलम् ॥३॥
समं कृत्वा जलेनैव कृत्वा दर्पणवत्सुधीः । तन्मध्ये [10]लक्षणोपेतं तस्य लक्षणमुच्यते ॥ ४ ॥

[ शङ्कुलक्षणम् ]

[11]चतुर्विंशाङ्गुलोत्सेधं[12] वरं तस्य प्रकल्पयेत् । षडङ्गुलक्षये तस्मिन्मध्यमोत्सेध[13] उच्यते ॥५॥
[14]तस्मात्षडङ्गुले हीने कन्यसोच्छ्रय उच्यते । आयामसदृशं नाहं [15]मूलेनास्य प्रयोजयेत् ॥६॥

---

[1] Pour शङ्कुस्थापन, voir *Kāmikāgama* I, 15, *Kāraṇāgama*, I, 3, et *Mṛgendrāgama*, *kriyāpāda* 7, 7 (commentaire)

[2] B omet le *śloka* n° 1.

[3] C : प्राच्यादिनिर्दिशम् ; D, E : प्राचीविनिर्दिशम्

[4] A : नृपाद्यानां pour नृपादीनां : E : नराणां च ; F : नराणां तु

[5] C : नक्षत्र pour ऋक्षे

[6] D : हि pour अभि

[7] Cf. *Kāraṇāgama*, I, 3-5 :

कृत्वैवं वास्तुभूमेस्तु मध्येऽनिलदिगाश्रितम् । मण्डलं दण्डमानेन षडङ्गुलसमन्वितम् ॥
जलेन समतां नीत्वा दर्पणोदरवत्समम् । कृत्वा तु तस्य मध्यं तु भ्रामयेच्छङ्कुमानतः ॥
शङ्कुद्विगुणमानेन वृत्तं संभ्रामयेद्बहिः । तद्बहिर्भ्रामशङ्कुश्च त्रिगुणेनैव मध्यतः ॥

[8] A: गृहीतवास्तुनो ; C: गृहीत्वा वास्तुतो

[9] F: दण्डमाकुञ्च्य

[10] A: श्लक्ष्णोपेतं ; E, F: लवणोपेतं

[11] E omet les *śloka* 5 et 6a

[12] C, F: चतुर्विंशदङ्गुलोत्सेधं

[13] C, D, F: उत्सेधम् pour उत्सेधः

[14] C omet le *śloka* 6a

[15] E : मूले तस्य

[1]तत्त्रिभागैकभागेन [2]शिरोनाहः प्रकीर्तितः[3] । शङ्कुमानेन तद्बाह्ये परितो मण्डलं लिखेत् ॥७॥
मण्डलत्रितयं चैव कृत्वा सूत्रेण संमितम् । पूर्वापराह्णयोश्छायां प्रवेशे चाथ निर्गमे ॥ ८ ॥
[4]छायाग्रयोगवृत्तेषु लक्षयित्वात्र[5] लाञ्छयेत् । [6]पूर्वपश्चिमभागेषु [7]मण्डलत्रयसंस्थिताः ॥ ९ ॥

---

[1] C, D : तत्र भागैकभागेन [2] A : शिरोनाहं ; C, D, E, F : शिरोभागं

[3] Pour les détails de *śaṅkulakṣaṇa* voir le *Kāmikāgama*, I, 15, 1-20:

देवानां ब्राह्मणादीनां वर्णानामनुलोमिनाम् । गृहग्रामादिकर्तॄणां शिवदीक्षान्वितात्मनाम् ॥
अदीक्षितानामन्येषां शिवभक्त्यन्वितात्मनाम् । शङ्कुसंस्थापनं वक्ष्ये ग्रामादीनां शुभावहम् ॥
ब्रह्मस्थानस्य नैर्ऋत्यां शङ्कुस्थानं प्रकल्पयेत् । अन्यत्र स्थापितः शङ्कुर्ग्रामाद्यं नाशयिष्यति ॥
दण्डप्रमाणविस्तारं षडङ्गुलसमुन्नतम् । शङ्क्वर्थं मण्डलं कुर्याद्देवानां च सनातनम् ॥
युक्ताष्टषट्चतुर्मात्रं द्विमात्रोच्चं मनोहरम् । निर्दरं निर्जरं स्निग्धं सुस्पृश्यं सुसमं शुभम् ॥
त्रिहस्तार्धं त्रिहस्तं च द्विहस्तार्धं द्विहस्तकम् । द्विजातीनां यथासंख्यं योजनीयं विचक्षणैः ॥
आपूर्य सलिलं तत्र वंशकीलान्समोदयान् । खातयेत्तान् बहून्सम्यक् समान्समतरान्तरान् ॥
तत्र फुल्लमृदा सूक्ष्मवालुकेन सगोमयम् । दध्याज्यक्षीरसंमिश्रं सवल्मीकमृदा दृढम् ॥
समं संपातयेत्सूत्रपातयन्त्रेण मण्डलम् । अजर्झरमनीचोच्चं सुस्निग्धं दर्पणोपमम् ॥
दन्तश्च चन्दनो देवमहीदेवसमीरिताः । खादिरस्तिनिशो राज्ञां वणिजां शाकखादिरौ ॥
शाकश्च तिन्दुकः कृष्णसारः स्याच्छूद्रजन्मनाम् । क्षीरवृक्षशमीसालाः सर्वे योग्याः समीरिताः ॥
शङ्कुः षडङ्गुलो नाहस्त्वायामो द्वादशाङ्गुलः । अग्रे त्वेकाङ्गुलो वास्तुः सर्ववर्णेषु योग्यकः ॥
चतुर्दशाङ्गुलायामस्तावान्स्यान्मूलनाहकः । अग्रे त्र्यङ्गुलविस्तारः शङ्कुर्वा सर्ववास्तुषु ॥
हस्तार्धायामनाहोऽग्रनाहस्तत्पादपादयुक् । एकाङ्गुलक्षयादायो मूलनाहो विधीयते ॥
ब्राह्मणादिचतुर्वर्णक्रमेण परिकल्पयेत् । देवादीनां शिरोऽग्रं स्याद्द्विजानां छत्रसंनिभम् ॥
कुशकीचकपत्राभं भूपानां वैश्यजन्मनाम् । कदलीमुकुलाग्रं स्याच्छूद्राणां मण्डलाग्रकम् ॥
बैल्वं कीलं सुराणां स्यात्खादिरं सालमाग्रजम् । आसनं वाकुलं राज्ञां तैन्दुकं चापि खादिरम् ॥
कीलं विशां च शूद्राणां सर्वसामान्यमेव वा । योजयेद्देशिको धीमान्ख्यातशङ्कौ पुरातने ॥
द्रुमैरेभिः प्रकर्तव्यो ग्रामादिर्भ्रमवर्जितः । मध्याद्यन्तस्थितैः कीलैर्मण्डलैर्नवभिर्युतैः ॥
वितस्त्यन्तरितैस्तावत्कीलं सूचिसमन्वितम् । ग्रामकेदारशैलं स्यात्सूचिरेकाङ्गुलायता ॥

[4] A : छायाग्रे योगवृत्तेषु ; C : छायाप्रयोगवृत्तेषु ; F : छायाश्रयोगवृत्तेषु [5] B : अथ pour अत्र

[6] A : पूर्वे पश्चिमभागे तु ; B, C, E : पूर्वपश्चिमभागे तु ; F : पूर्वत्पश्चिमभागे तु

[7] A : मण्डलत्रितयस्थिताम्

[1]छायाकारा भवन्त्यत्र[2] [3]तानाश्रित्य च संस्थिताः। पूर्वापरायता रेखास्तिस्रः कुर्याद्यथाक्रमम्[4] ॥
[5]मण्डलाध्यधिके ह्रासो [6]न्यूने वृद्धिर्यथा भवेत्। कारयित्वा [7]तथा धीमान्मध्यवृत्तस्य मध्यगाम्॥
पूर्वापरायतामेकां रेखां तदनुसारतः। तन्मण्डलप्रमाणेन सूत्रेण [8]सुमितं ततः ॥ १२ ॥
पूर्वपश्चिमपर्यन्त[9]स्थितं[10] [11]पार्श्वक्रमेण[12] तु। [13]दक्षिणोत्तरगं मत्स्यं जनयित्वा तथा पुनः॥१३॥
पार्श्वयोरपि तन्मानात्पूर्वपश्चिमयोरपि। मत्स्यद्वयं [14]तु तन्मध्ये पार्श्वस्थभ्रमणेन च ॥ १४ ॥
जनयित्वा [15]ततस्तद्वद्दक्षिणोत्तरगं बुधः[16]। कृत्वा मत्स्यद्वयं पश्चात्प्राङ्मुखोदङ्मुखेषु[17] च[18]॥१५
मत्स्येषु षट्सु [19]पाश्चात्यनिर्गताभिर्जनार्दन। रेखाभिरथ षड्भिस्तु जनयेच्चतुरश्रकम् ॥ १६ ॥
तेनैव चतुरश्रेण प्रासादं [20]त्वत्र कारयेत्[21] ॥ १७ ॥

इत्यजिताख्ये महातन्त्रे [क्रियापादे] [22]शङ्कुस्थापनविधिर्नाम
नवमः पटलः ॥

---

[1] Les *śloka* 10 à 17 et les *śloka* 1 à 28 du *paṭala* X manquent dans le ms. D

[2] A : छाया काया भवेन्यत्र ; C : छायाकारे भवेत्तत्र ; E : छायाकारैर्भवेन्यत्र ; F : छायाकारे भवेयत्र

[3] E : ताराश्शक्यं च संस्थिता: ; F : ताराशक्त्यसंस्थिता:

[4] A : आदिमम् pour क्रमम्

[5] A: मण्डलार्धेऽधिको ह्रासे

[6] A: ननु pour न्यूने

[7] A: ततो pour तथा

[8] C: समिधं तथा; E: सुमतिं तथा

[9] A: पर्यन्तं pour पर्यन्त

[10] C: स्थित pour स्थितं

[11] C: प्राग्वत् pour पार्श्व

[12] E: भ्रमेण pour क्रमेण

[13] A: दक्षिणोत्तरगमध्यस्य

[14] C: च pour तु

[15] C, E: तद्वत्पूर्वपश्चिनगं

[16] Cf. *Kāmikāgama*, I, 15, 29-32a :
शङ्कुप्रमाणया रज्ज्वा शङ्कुव्यासार्धयुक्तया। वृत्तं संभ्राम्य तन्मध्ये स्थापयेत्तमिनोदये ॥
पूर्वापराह्णयोः शङ्कोश्छाया रेखागता तथा। तद्बिन्दुद्वयगं सूत्रं पूर्वापरदिगिष्यते ॥
यत्नस्य तु तुरीयांशं पूर्वापराह्णयोर्गता। बिन्दुद्वयान्तरं भ्रान्तः शम्बराननपुच्छकम् ॥
दक्षिणोत्तरमित्युक्तम्"

[17] C : मुखोऽपि pour मुखेषु ; E : मुखेऽपि

[18] B, E : यन् pour च ; F : तत्

[19] A : पाश्चास्य pour पाश्चात्य ; B, E : नाचास्य

[20] B, C, E, F : तत्र pour त्वत्र

[21] Cf. *Kāraṇāgama*, I, 3, 89-104 :

शङ्कुस्थापनकात्पूर्वरात्र्यामेवाधिवासयेत् । प्रोक्षयेत्पञ्चगव्यैस्तु शुभैश्च शुद्धमृज्जलैः ॥
नवाम्बरै रसैर्वेददर्भैः सप्तभिर्मनोरमैः । शालिभिः स्थण्डिलं कृत्वा मण्डले तिलतण्डुलैः ॥
वस्त्रेणास्तीर्य दर्भैस्तु संप्रोक्ष्य प्रणवेन तु । स्थण्डिले शाययेच्छङ्कुं प्राक्छिरस्कं सदर्भकम् ॥
अपरे दिवसे भानोरुदये तु शुभे तथा । पुण्याहं वाच्य तत्रैव शङ्खकूजननिस्वनैः ॥
शयनाच्छङ्कुमादाय शङ्कुमण्डलमध्यमे । स्थापयेत्प्राङ्मुखो धीमानाचार्यः शिल्पिभिः सह ॥
गुरुं संपूजयेत्पश्चाच्छिल्पिनं पूजयेत्तदा । वस्त्रहेमाङ्गुलीयाद्यैर्गन्धपुष्पादिभिस्तथा ॥
पूर्वापराह्णयोश्छायाप्रवेशे निर्गमेऽपि च । सूत्रत्रयेण तत्प्राचीं निश्चित्य दृढमानसः ॥
इष्टमासे तु तद्व्यक्तत्रये लाञ्छनबीजकान् । संख्यादिकामनायैव न्यूने रोप्याधिके ह्रसेत् ॥
शुद्धा प्राचीति विज्ञेया सर्वशास्त्रं च संश्रितम् । . . . . . .
प्राचीसूत्रप्रमाणेन कृत्वा मत्स्यद्वयं ततः । सफलान्तस्थसूत्रेण याम्यसौम्ये विनिर्दिशेत् ॥
कोणेषूत्पलकं कुर्याद्विन्यसेच्चापरं क्रमात् । तद्वत्सूत्रत्रयं कृत्वा प्राचीसूत्रस्य पार्श्वयोः ॥
तथोदीचीनसूत्रस्य सूत्रं याम्योत्तरे द्वयम् । लेखयेत्तु चतुःकोष्ठं चतुरश्रं भवेदिह ॥
सूत्राणि विसृजेत्तस्मात्तत्तद्दिक्षु प्रमाणतः । विप्राणां समतुर्यश्रं प्रशस्तमथवा पुनः ॥
चतुरश्रार्धभागं वा चतुर्भागमथार्धकम् । त्रिपादं वा त्रिभागं वा द्व्यंशे च द्व्यंशकं भवेत् ॥
आरोप्य समतुर्यश्रे यथा पूर्वापराधिकम् । कल्पयेत्तु तदायस्थौ दीर्घं तुर्याश्रमावहेत् ॥
अशुभं युग्मदण्डं च दश युग्मभवं भवेत् । दण्डच्छेदेन कार्यं स्याद्गृहग्रामेषु यत्नतः ॥

[22] A : शङ्कुच्छायाविधिपटलो दशमः ; B : शङ्कुस्थापनविधिर्नवमः पटलः ; C : प्राचीननिश्चयाख्य-शङ्कुस्थापनविधिर्नाम नवमः पटलः ; E : प्राचीनिश्चायकं नाम नवमपटलः ; F : प्राचीनिश्चयः नवमः पटलः

## [दशमः पटलः]

## [आद्येष्टकाविधिः][1]

### [ इष्टकालक्षणम् ][2]

[3]वक्ष्याम्याद्येष्टकान्यासमतस्तल्लक्षणान्वितम् । प्रासादस्य त्रिहस्तस्य [4]भवेदेकाङ्गुलायता ॥
[5]तदर्धविस्तरोपेता[6] तदर्धघनसंयुता[7] । इष्टका सर्वधाम्नां च[8] प्रोक्ता [9]पक्वेष्टकात्मनाम् ॥ २ ॥

---

[1] Pour आद्येष्टकाविधि voir *Kāmikāgama*, I, 51, *Aṃśumatkāśyapa*, 4, *Aṃśumadāgama*, 25, *Kāraṇāgama*, I, 4, *Dīptāgama*, 80, *Suprabhedāgama*, I, 28, *Svāyambhuvāgama*, 49

[2] Cf. *Svāyambhuvāgama*, 49, 78b-81a :

पूर्वरात्रे तु कुर्वीत चतस्रः प्रथमेष्टिकाः । शिलां वा मृण्मयं वाथ कृतलक्षणसंयुतम् ॥
शिला दोषविनिर्मुक्ता सुपक्वा मृण्मया तथा । विस्तरेणेष्टिकाः प्रोक्ताः षट्पञ्चचतुरङ्गुलाः ॥
उत्तमादिक्रमादेव विस्तारद्विगुणायताः । विस्ताराधर्घनाः प्रोक्ता इष्टकास्तु प्रमाणतः ॥

Cf. *Suprabhedāgama*, I, 28, 1-14 :

अथातः संप्रवक्ष्यामि शृणु त्वं प्रथमेष्टकाम् । खननं पूरणं कृत्वा वास्तुदेवान्प्रपूजयेत् ॥
तस्योत्तरे प्रपां कृत्वा पूर्वे वाथ विशेषतः । स्थण्डिलं तस्य मध्ये तु शालिभिश्चतुरङ्गुलम् ॥
अधिवास्यार्धरात्रौ तु चतस्रः प्रथमेष्टकाः । शिलामयविधानं चेच्छिलाखण्डाधिवासयेत् ॥
इष्टकामयधाम्नि तु इष्टकाः स्थापयेत्सुधीः । तालत्रयसमुत्सेधं द्विगुणेन सुविस्तृतम् ॥
विस्तारद्विगुणायामं कारयेन्मध्यमोत्तमे । अध्यर्धतालनातालं मध्यमान्मध्यमं भवेत् ॥
तालमात्रसमुत्सेधं मध्यमादधमं भवेत् । मध्यनत्रयमित्युक्तमधमत्रयमुच्यते ॥
एकादशाङ्गुलोन्नत्या ह्यधमोत्तनमाचरेत् । नवाङ्गुलेन तन्मध्यं सप्ताङ्गुल्याधमाधमम् ॥
उन्नतिस्त्वेवमाख्याता द्विगुणैर्विस्तृतिर्भवेत् । तासां द्विगुणकैर्दैर्घ्यं मानैः सर्वाणि कारयेत् ॥
शिलायाः कथितं मानमिष्टकायाः शृणु क्रमात् । षडङ्गुलं तदुत्सेधं द्वादशाङ्गुलविस्तृतम् ॥
विस्तारद्विगुणं दैर्घ्यमुत्तमोत्तममेव हि । त्र्यङ्गुलप्रमाणेन कनीयससमुन्नतिः ॥
उत्तमाधमयोर्मध्ये समधा सुविभाजिते । नवधा भेदमाख्यातं यथारुचि समाचरेत् ॥
उन्नतेर्द्विगुणं तारं तस्माद्द्विगुणमायतम् । एवं सुपक्वकैः कार्यं सुदृढैः सुमनोहरैः ॥
मूलं स्थूलं भवेन्नारी ह्यग्रं स्थूलं नपुंसकम् । मूलमग्रं समं चेत्तु पुल्लिङ्गमिति निश्चितम् ॥
पुल्लिङ्गैश्चैव पुंसां स्यात्स्त्रीणां स्त्रीलिङ्गकैस्तथा । पाटलीपुष्पसंकाशामिष्टकां संग्रहेत्ततः ॥

[3] A : वक्ष्याम्येवेष्टकान्यायं ततस्तल्लक्षणान्वितम्

[4] F : भवेदेकाङ्गुलायता

[5] C omet le *śloka* 2a

[6] E, F : उपेतां pour उपेता

[7] E : संयुताम् pour संयुता

[8] C, E, F : तु pour च

[9] F : पक्ष pour पक्व

शिलाधाम्नि विशेषोऽयं कथ्यते सुरसत्तम । उपर्युपरि धाम्नां च [1]प्रतिहस्तविवर्धनम् ॥ ३ ॥
दैर्घ्यतारघनेषूक्तमङ्गुलार्ध[2]तदर्धकैः । तासामग्रं [3]भवेन्मूलं विकारांशविहीनकम् ॥ ४ ॥

[ इष्टकानामानि ][4]

एवं [5]कृत्वेष्टकाः पञ्च शिला[6] वा विन्यसेत्तदा[7] । नन्दा भद्रा जया रिक्ता [8]पूर्णा [9]स्युर्नामतश्च [10]ताः

[ इष्टकास्थापनार्थमवटकरणम् ]

ततः प्रासादमानेन खानयेद्धरणीतलम् । खातं [11]पादप्रमाणेन भूपृष्ठं तु [12]शुभावहम् ॥६॥
पादाद्वेदांश[13]हीनेन[14] [15]खातं मध्यममुच्यते । अधिष्ठानप्रमाणेन[16] कन्यसं परिकीर्तितम् ॥७॥
उत्तमानां [17]विमानानां [18]खननं चोत्तमं भवेत् । मध्यमानां मध्यमं [19]तदधमानां तथा भवेत् ॥
प्रथमं फलकोत्सेधं हित्वा [20]श्वभ्रोपरीरितम् । वालुकाभिः [21]समापूर्य समं कृत्वा समन्ततः ॥ ९
जलस्थितिं तु तत्रैवं कृत्वा च त्रिदिनं [22]सुधीः । कुट्टयेत्सुदृढं[23] सम्यग्गजपादैश्च [24]दारुजैः[25] ॥१०

---

[1] A : प्रतिहस्तं तु वर्धनम्

[2] A : अङ्गुलार्धं pour अङ्गुलार्ध

[3] A : भवेन्मूलां विकारांशविहीनका: ; B, E, F : भवेन्मूलविकारांगविहीनका: ; C : भवेन्मूलविकारांश-विहीनकम्

[4] Cf. *Dīptāgama*, 80, 23 :
तासां नामानि वक्ष्यामि शृणु वह्रे विशेषत: । नन्दा भद्रा जया रिक्ता पूर्णा च परिकीर्तिता: ॥

[5] F : कृत्वेष्टकापर्वशिलां वा

[6] A : शिलां pour शिला:

[7] A : तत: pour तदा

[8] C, E : पूर्णा: pour पूर्णा ; F : पूर्वा

[9] A : स्युर्युतदिच्छताम्

[10] F : या: pour ता:

[11] E : पद pour पाद

[12] C : शुभाशुभम्

[13] A : दशांश pour वेदांश

[14] C : मानेन pour हीनेन

[15] A : खात pour खातं

[16] A : प्रकारेण pour प्रमाणेन

[17] B, E : समानानां

[18] C : घनानां

[19] B, E, F : तद्वद् pour तद्

[20] A, F : शुभ्र pour श्वभ्र ; C : त्वद्भ्य

[21] E : समं पूर्य pour समापूर्य

[22] A : सम्मम् pour सुधी: ; E, F : सुम:

[23] A, E : सुदृढै: pour सुदृढं

[24] A : दारुणै:

[25] Cf. *Kāraṇāgama*, I, 4, 94b-96a :
सिकतोपरि मृद्भिस्तु सजलं सुदृढं कुरु । अथो मुसलपातैश्च हस्तिपादस्य पातकै: ॥
मुष्टिमृद्भिश्च पाषाणै: शर्करैरिभपादकै: । पातयेत्तत्तले हर्म्यसूत्रांश्च भित्तिसूत्रकान् ॥

[ इष्टकान्यासः[1] ]

[2]प्रासादगर्भे निश्चित्य सूत्रेण सुमितं [3]तथा । द्वारस्य दक्षिणे पार्श्वे [4]भित्तिमध्यगतं[5] यथा ॥११॥
विन्यसेदिष्टका[6]स्तस्मिन्नवटे च [7]घनीकृते । गोपुरेषु तथा प्रोक्तं [8]प्राकारेष्वीशगोचरे[9] ॥ १२ ॥

[ मण्डपेषु विशेषः ]

[10]मण्डपेष्वथ[11] सर्वेषु [12]विशेषोऽयं निदर्शितः । प्राचीमुखैस्त्रिभिः सूत्रैस्तथोदीचीमुखैरपि ॥१३॥
[13]मण्डलाभ्यन्तरं कृत्वा चतुष्केषु [14]समन्वितम् । चतुर्ष्वपि च कोष्ठेषु [15]वह्नेर्वा शांकरे दिशि ॥१४
[16]कोणस्तम्भं [17]परित्यज्य [18]स्तम्भमूले तु विन्यसेत् ।

[ इष्टकासंस्कारः ]

शुद्धिं कृत्वा तु पश्चात्तामिष्टकानामनुक्रमात् ॥१५॥

---

[1] Cf. *Dīptāgama*, 80, 24 :
द्वारस्य दक्षिणे श्रीमान् स्तम्भमूले तु विन्यसेत् । आचार्यः शिल्पिभिश्चैव विन्यसेत्प्रथमेष्टकाम् ॥
cf. *Kāraṇāgama*, I, 4, 128b-131a :
मन्दिरे मण्टपे चैव प्राकारे गोपुरे तथा । परिवारालये चैव विधिनैतेन विन्यसेत् ॥
मुहूर्ते समनुप्राप्ते द्वारं निश्चित्य बुद्धिमान् । द्वारस्य दक्षिणे वाङ्घ्रिमूले भित्त्यन्तरालके ॥
शिलाश्चैवेष्टका वापि स्थापयेत्स्थापकोत्तमः । ईशानादिकमन्त्रैश्च प्रक्षिप्येन्द्रादितः क्रमात् ॥

[2] A : प्रासादगर्भमग्निं च ; B : प्रासादगर्भाग्निं निश्चित्य

[3] A : ततः pour तथा

[4] A : भक्ति pour भित्ति

[5] B, E : मध्यागतं pour मध्यगतं

[6] A, E : इष्टकां pour इष्टकाः ; C : इष्टिकाः

[7] E : खनीकृते

[8] E : प्राकारं वेशको चरेत् ; F : प्राकारे वेशगोचरे

[9] Cf. *Kāmikāgama*, I, 51, 37-39 :
मन्दिरे मण्टपे चैव प्राकारे गोपुरे गृहे । परिवारालये पीठे शालायां च सभाविधौ ॥
पुष्करिण्यां च कुल्यायां कूपे सेतोश्च बन्धने । अनेनैव प्रकारेण कर्म चैतत्समाचरेत् ॥

[10] Les *śloka* 13 et 14 manquent dans le ms. E.

[11] B : मण्डपेषु च

[12] A : विशेषोऽयमिति शंसितः

[13] C, F : मण्टपाभ्यन्तरं

[14] F : समन्वितः

[15] C, F : नवौ वा शंकरो दिशि pour वह्नेर्वा शांकरे दिशि

[16] A : कोणे स्तम्भं

[17] C: परित्याज्य

[18] F : स्तम्भं मूले

पुण्याहं वाचयित्वादौ[1] पञ्चभूतात्मकानि तु । बीजानि तानि विन्यस्य देशिकः शान्तमानसः ॥
शिल्पिहस्ते चतस्रश्च [2]दापयेदिष्टकास्तदा । तासामप्यधिवासं तु तेनान्यत्र प्रयोजयेत् ॥ १७ ॥
व्योमाक्षरसमोपेतां [3]पञ्चमामुपरीष्टकाम् । आचार्यो मण्टपे [4]रम्ये निशि [5]पूर्वेऽधिवासयेत् ॥ १८

[ इष्टकानाममधिवासविधिः[6] ]

अधिवास[7]विधिश्चाथ क्रमेण परिपठ्यते । [8]भूताब्धिनवहस्तेषु मण्डपेषु यथाक्रमम् ॥ १९ ॥
[9]हीनमध्योत्तमानां च [10]विमानानां [11]यथाक्रमम् । नवधा मण्टपं कृत्वा [12]मध्ये कृत्वा च[13]
तालमात्र[14]तलोत्सेधां दर्पणोदरसंनिभाम् । वेदिकाम् ॥ २० ॥

[अग्निकुण्डानि]

[15]प्रागादिषु पदेष्वग्नेः कुर्यादायतनानि च ॥२१॥

---

[1] B, C, E, F : तु pour आदौ [2] A : स्थापयेद् pour दापयेद्

[3] A : पञ्चमापुपरीष्टकाम् ; C : पञ्चकामुपरीष्टकाम् ; E : पञ्चकः क्षणलक्षकाम् ; F : पञ्च...कर्षकाम्

[4] E : चैव pour रम्ये [5] C : पूर्वे विवासयेत्

[6] Cf. *Dīptāgama*, 80, 26-33a :

प्रासादस्याग्रतः कुर्यान्मण्डपं नवहस्तकम् । सप्तहस्तादि वा कुर्यात्पञ्चहस्तमथापि वा ॥
वितानध्वजसंयुक्तं दर्भमालोपशोभितम् । प्रासादस्योत्तरे भागे रात्रावधिवसेद्बुधः ॥
स्थण्डिलं कारयेत्तत्र शालिभिश्चतुरङ्गुलम् । तिलतण्डुलसंयुक्तं भूषयेत्स्थण्डिलं प्रति ॥
जातीपुष्पतिलैर्दर्भैर्विकिरेच्च समन्ततः । गन्धादिभिः समभ्यर्च्य विन्यसेदिष्टकां पुनः ॥
हेमकौतुकसंयुक्तां सवस्त्रां देशिकोत्तमः । तदग्रे स्थण्डिले स्थाप्य कलशान्नवसंख्यया ॥
सवस्त्रान्सापिधानांश्च सकूर्चान्हेमसंयुतान् । गन्धादिभिः समभ्यर्च्य प्रत्येकं जापयेद्गुरुः ॥
प्रासादस्य चतुर्दिक्षु होमं कुर्याद्यथाविधि । समिदाज्यचरूँल्लाजांस्तिलसर्षपसंयुतान् ॥
शिवाङ्गैः शतमन्त्रेण व्याहृतिं च ततो हुनेत् ।

[7] C : क्रम pour विधि [8] F : भूतावदनहस्तेषु

[9] C, E : हीनमध्योक्तमानं च [10] E : विमानं च ; F : विमानां च

[11] C, E : क्रमेण तु [12] B : कृत्वा तु नववेदिकाम् ; E : मध्यभागे तु वेदिकाम्

[13] C, F : तु pour च [14] A : तत pour तल

[15] A : प्रागादिषु भवेदग्नेः ; F : प्रागादिष्वपतेष्वग्ने

चतुरश्रं धनुर्वृत्तं त्रिकोणं च यथाक्रमम् । ऐशान्येऽष्टाश्रकं कुण्डं प्रधानमिति[1] कीर्तितम् ॥२२॥
[2]स्थण्डिलान्यथवा कुर्यात्सिकताभिश्च तानि वै । [3]अलाभादेकहोमार्थं प्राच्यामेव[4] प्रकल्पयेत् ॥
गोमयेनानु[5]लिप्याथ मण्टपं वेदिसंयुतम् । पुण्याहं वाचयित्वाथ [6]स्तम्भान्वस्त्रेण वेष्टयेत् ॥२४
वितानध्वजसंयुक्तं दर्भमालासमावृतम्[7] । [8]कदलीतोरणैर्युक्तं द्वारकुम्भ[9]समन्वितम्[10] ॥ २५ ॥
[11]मङ्गलाष्टकसंयुक्तं मङ्गलाङ्कुरशोभितम् ।

[ वेदिका, स्थण्डिलं च[12]]

कृत्वा [13]तु वेदिकां मध्ये [14]कारयेत्स्थण्डिलं सुधीः ॥ २६ ॥
अष्टद्रोणैस्तदर्धैर्वा तदर्धैर्वाथ शालिभिः । द्रोणैर्वाथ[15] च तन्मध्ये पद्ममष्टदलं लिखेत् ॥२७॥
तण्डुलैः पूरयेद्रेखा[16] विकीर्य तिललाजकान् ।

---

[1] E : च pour इति

[2] C : स्थण्डिलं नवधा ; E : स्थण्डिलानथवा

[3] A : अलाभे देहहोमार्थं ; F : अलाभादेकभोगार्थं

[4] A : एवं pour एव

[5] C : उप pour अनु

[6] A : स्तम्भानस्त्रेण ; E : स्तम्भान्यस्त्रेण

[7] A : मनन्वितम् pour समावृतम्

[8] C, E, F : तोरणैश्च समायुक्तं

[9] C, E : समायुतम् pour समन्वितम् ; F : समावृतम्

[10] Cf. *Kāraṇāgama*, I, 4, 97-101b :

तस्योत्तरे प्रपां कृत्वा नवहस्तप्रमाणतः । वितानेनोर्ध्वमाच्छाद्य तरङ्गेणावृतं बहिः ॥
दर्भमालां समावृत्य दिग्ध्वजांश्च प्रलम्बयेत् । तन्मध्ये वेदिकां कुर्यात्त्रिहस्तं विस्तृतां शुभाम् ॥
मुष्टिमात्रोन्नतां ऋत्विङ्निम्नोन्नतविवर्जिताम् । तस्याश्चैव चतुर्दिक्षु कुण्डानि करमानतः ॥
चतुरश्रं धनुर्वृत्तमब्जमिन्द्रादितः क्रमात् । लक्षणोक्तानि कुण्डानि कृत्वा गोमयवारिणा ॥
लेपयेत्पञ्चगव्यैश्च हृदा तु प्रोक्षयेत्ततः ।

[11] E : मङ्गलाष्टसमायुक्तं

[12] Cf. *Kāraṇāgama*, I, 4, 116-117a :

वेदिकोपरि कर्तव्यमष्टद्रोणैश्च शालिभिः । तदर्धतण्डुलैर्युक्तं तण्डुलार्धतिलान्वितम् ॥
लिखेदष्टदलं पद्मं कर्णिकाकेसरान्वितम् ।

[13] C : तं pour तु ; E, F : तां

[14] C, E, F : स्थण्डिलं कारयेत्सुधीः

[15] B, C, E, F : अपि pour अथ

[16] B, C, E, F : रेखां pour रेखाः

[ पूर्णायाः प्रतिसरबन्धनम्[1] ]

[2]तत्र मन्त्रितकायस्तु[3] गुरुरर्घ्यकरस्तथा[4]॥ २८ ॥
सोष्णीषः सोत्तरीयश्च बद्धपञ्चाङ्गभूषणः[5] । कर्णिकायां यजेत्पूर्वं गन्धाद्यैस्तु मनोन्मनीम् ॥
वामादि[6]शक्तीः [7]शक्रादिदलेष्वष्टसु पूजयेत् । पश्चात्प्रतिसरं तस्याः [8]पूर्णायाः परिबन्धयेत् ॥३०
कर्णिकायां [9]तु तां पूर्णां [10]पूर्वाग्रां विन्यसेत्सुधीः । [11]तां तां पिधाय तेनैव वस्त्रेण [12]सुसितेन च॥

[ कुम्भपूजा[13] ]

पूर्वभागे[14] न्यसेत्कुम्भं [15]रम्यं बिम्बफलप्रभम् । षोडश[16]प्रस्थसंपूर्णं सितसूत्रविचित्रितम् ॥ ३२
गन्धतोयसमापूर्णं सकूर्चं वस्त्रवेष्टितम् । पञ्चरत्नं जले क्षिप्त्वा [17]पिधानमथ पल्लवम् ॥ ३३ ॥
आधारशक्तिं तस्यां तु ध्यात्वा देवीं ततो न्यसेत् । त्रिणेत्रां चतुर्भुजां शुभ्रां जटामकुटमण्डिताम्॥

---

[1] Cf. *Kāraṇāgama*, I, 4, 112b-115 :

आचार्यः शिल्पशास्त्रज्ञः शिवदीक्षाभियुक्तकः । सर्वलक्षणसंपन्नस्त्वादिशैवो दृढव्रतः ।
सुस्नातस्तु शुचिर्भूत्वा सकलङ्करणान्वितः । नवाम्बरधृतोष्णीषः सोत्तरीयः सुमालिकः ॥
पञ्चाङ्गभूषणैर्युक्तः सशिष्यः परिचारकैः । इष्टकाः पञ्चगव्यैश्च क्षालयेद्वर्मणा गुरुः ॥
हैमक्षौमकसूत्रैर्वा कार्पासैर्वाथ बन्धयेत् ॥

[2] B : यत्र pour तत्र

[3] E : कायस्थ pour कायस्तु

[4] C : ततः pour तथा

[5] D : भूषणैः pour भूषणः

[6] A : शक्तिं pour शक्तीः

[7] C : ईशादि pour शक्रादि

[8] A, C, E : पूर्णायां

[9] C : कृतां pour तु तां

[10] A : पूर्वाग्र्यां ; B, E : पूर्णाग्रां ; D : पूर्वाग्रं

[11] B, E : तदा तां pour तां तां ; F : तदान्तां

[12] A : तु pour सु

[13] Cf. *Suprabhedāgama*, I, 28, 14b-17 :

पाटलीपुष्पसंकाशामिष्टकां संग्रहेत्ततः । सूत्रैर्दर्भैरथाबध्य वस्त्रैरावेष्ट्य यत्नतः ॥
गन्धपुष्पैरलंकृत्य स्थण्डिलोपरि विन्यसेत् । तस्य पूर्वे तु कलशान् सवस्त्रान् सूत्रवेष्टितान् ॥
विद्येश्वरसमायुक्तान् स्थण्डिलोपरि विन्यसेत् । मध्ये तु शिवकुम्भं तु तस्य वामे तु वर्धनीम् ॥
पूजयेद्धृदयेनैव गन्धपुष्पादिभिः क्रमात् ॥

[14] F : पूर्णभागे

[15] D : रम्यबिम्बफलप्रभम् ; E : रम्यं बिम्बफलोपमम्

[16] F : प्रस्तर four प्रस्थ

[17] E : पिधानेनाथ

शुक्लाभरण[1]हृद्याङ्गीं शुक्ल[2]गन्धानुलेपनाम् । [3]दुकूलवसनां रम्यां गन्धाद्यैरर्चयेत्सुधीः ॥ ३५ ॥
दलेष्वष्टसु [4]चान्यांश्च पूर्वादिषु यथाक्रमम् । [5]तदर्धपरिमाणांस्तु कलशांस्तादृशानपि ॥ ३६ ॥
[6]विन्यस्य तेषु दिक्पालान्यथास्थानं[7] समर्चयेत्। दिक्पालानां सशक्तीनां हविः [8]सम्यक्पृथक्पृथक् ॥

[ होमः[9] ]

दत्त्वा होमं समन्विच्छेद्यथास्थानं गुरूत्तमः । होतारः साधकास्ते स्युरभावात्[10] पुत्रकास्तथा ॥३८
सद्यादिभिश्चतुर्दिक्षु यथाभागं तु होमयेत् । ऐशान्यामीशमन्त्रेण समिद्धोमं प्रकल्पयेत् ॥ ३९ ॥
आज्यं [11]तन्मूलमन्त्रेण चरुहोमं हृदा तथा । लाजांश्च शिरसा हुत्वा यवांश्च शिखया ततः ॥४०
सर्वात्मना [12]तिलान्हुत्वा पूर्णां प्रासादतो हुनेत् । [13]द्रव्यान्ते व्याहृतिं हुत्वा प्रतिद्रव्यं तु [14]तां स्पृशेत् ॥ ४१ ॥
[15]तत्तन्मन्त्रैस्तु [16]होतारः स्पृशेयुस्तदनन्तरम् । तत्कालेऽध्ययनं[17] कुर्याच्चतुर्वेदै[18]श्चतुर्दिशि ॥४२
ऐशान्यां प्राङ्मुखासीनो जपेदस्त्रं तु [19]साधकः । एकहोमविधाने तु[20] विशेषोऽयं प्रदृश्यते ॥४३

---

[1] A : भूषाङ्गीं pour हृद्याङ्गीं
[2] E : बद्ध pour गन्ध ; F : बन्ध
[3] A : दुकूलावरणां
[4] A, B, C : चान्याश्च
[5] C : तदर्धं परिमाणं स्यात् ; F : तदर्धं परिमाणांस्तान्
[6] C : विन्यसेदष्टदिक्पालान्
[7] B, E : यथास्थानान् ; C : यथास्थानानि ; F : यथास्नानान्
[8] A : सर्प्या pour सम्यक्
[9] Cf. *Kāraṇāgama*, I, 4, 121-125 :
तन्तुना चित्रितान् कुम्भान् गन्धाम्बुपरिपूरितान् । वितानाक्षतवस्त्राढ्यान् हेमयुक्तान् सकूर्चकान् ॥
पुष्पाम्रपल्लवोपेतानिन्द्राद्यष्टदिशासु वै । लोकपालाधिपानष्ट संस्थाप्याभ्यर्चयेत्सुधीः ॥
ततो होमं प्रकुर्वीत अग्निकार्योक्तमार्गतः । पालाशोदुम्बराश्वत्थन्यग्रोधसमिधः क्रमात् ॥
सद्येन समिधो हुत्वा मूलेनाज्यं हुनेत्ततः । अघोरेण चरुं हुत्वा तिलतण्डुलमिश्रितम् ॥
नेत्रेण होमयेद्धीमान् प्रत्येकं शतसंख्यया । तदर्धं वा तदर्धं वा अथवा दशसंख्यया ॥
[10] B, C, E, F : अभवन् pour अभावात् :D : अभवन्
[11] C : च pour तद् ; D : तु
[12] D : तिलं pour तिलान्
[13] D : द्रव्यान्तेषु हृदि हुत्वा
[14] D : संस्पृशेत् pour तां स्पृशेत्
[15] B, C, E, F : तत्तन्मन्त्रं तु
[16] C : होतारं
[17] F : अर्चनं pour अध्ययनं
[18] C : चतुर्वेदं pour चतुर्वेदैः
[19] C : साधकम्
[20] A : विधानेन pour विधाने तु

समिद्धोमः शिवेन स्यात्संख्याष्टशतमुच्यते । पञ्चहोमे तदर्धं वा [1]पादं वाथ च होमयेत् ॥४४॥

[ इष्टकास्थापनम्[2] ]

एवं रात्रौ सुधीः कृत्वा देशिकः प्रातरुत्थितः । कृत्वा नित्यक्रियाः सर्वाः कृत्वा [3]मन्त्रतनुं निजाम् ॥ ४५ ॥

आधारशक्तिं तस्यां तु पूर्णायां कुम्भतो न्यसेत् । ततोऽवटं समासाद्य देशे तत्स्थापनोचिते[4] ॥

[5]प्रागग्रमुदगग्रं च कृत्वा रेखाचतुष्टयम् । [6]पदे च नवके तत्र परितोऽष्ट[7]पदान्यपि ॥ ४७ ॥

[8]पदानि कुर्याच्चत्वारि [9]तत्क्रमश्चाभिधीयते । [10]ईशानशक्रगे कृत्वा [11]पदमेकं तथा पुनः ॥ ४८

---

[1] C : तदर्धं वाथ होमयेत्

[2] Cf. *Dīptāgama*, 80, 33b-42 :

प्रभाते सुमुहूर्ते तु स्थापयेत्प्रथमेष्टकाम् । अग्रमग्रं तु चैशान्यां पृष्ठं पृष्ठं च नैर्ऋते ॥
पृष्ठाग्रं चाग्निवायव्ये ज्ञात्वा निक्षिप्य मन्त्रतः । पूर्वादिषु चतुर्दिक्षु विन्यसेद्धृदयादिभिः ॥
पूर्वपश्चिममायामं तथा वै दक्षिणोत्तरम् । पश्चात्पश्चिमपूर्वं तु न्यसित्वा दक्षिणोत्तरम् ॥
चतुर्दिक्षु हुतं कुर्याद्धृदयाद्यैरनुक्रमात् । साधकस्तु चरुं लाजान्सर्षपं तिलतण्डुलम् ॥
अष्टोत्तरशतं हुत्वा शिवमन्त्रेण मन्त्रवित् । सुमुहूर्ते सुलग्ने च योगे च करणान्विते ॥
सर्ववाद्यसमायुक्तं सर्वमङ्गलसंयुतम् । स्थापयेत्तु विशेषेण रत्नं मध्ये विनिक्षिपेत् ॥
पूरयेदवटं तत्र पश्चादपि विचक्षणः । कलशाद्भिः समापूर्य शस्ताशस्तं परीक्षयेत् ॥
शुभं वै दक्षिणावर्तं वामावर्तमशोभनम् । वामावर्ते ततः कुर्यादीशानेन शताहुतिः ॥
महाव्याहृतिमन्त्रेण होमयेद्दोषशान्तये । आचार्यं पूजयेत्तत्र वस्त्रहेमाङ्गुलीयकैः ॥
शिल्पिनं पूजयेत्तत्र वस्त्राभरणसंयुतम् ॥

[3] D : मन्त्रमनुर्निजाम्

[4] D : उचितम् pour उचिते

[5] F : प्रागग्रामुदगग्रां च कृत्वा रेखां चतुष्टयम्

[6] A : पादानां नवकं तत्र

[7] B, C, E, F : अष्टौ pour अष्ट

[8] A : पादानि

[9] C : तत्क्रमं च विधीयते

[10] C : ईशानेशकुशौ कृत्वा

[11] A : पाद एकं ; B : पादावेकं ; C : पादवेकं ; E, F : पदावेकं

वह्निकीनाशगे कृत्वा [1]रक्षोवरुणगे अपि । वायुसोमगते तद्वत् स्थापनार्थं विचक्षणः ॥ ४९ ॥
सुमुहूर्ते सुलग्ने [2]तु नक्षत्रकरणान्विते । [3]नन्दाद्याश्च चतस्रश्च यजमानादिभिः क्रमात् ॥ ५० ॥
उद्धारयित्वा मन्त्रज्ञः सर्वातोयसमायुतम्[4] । प्रदक्षिणक्रमेणैवावटे[5] [6]समवतार्य च ॥ ५१ ॥
उपविश्य [7]गुरुः पूर्वे [8]दक्षिणेनोपविश्य च । पश्चिमे [9]प्राङ्मुखस्यात्र शिल्पिनश्च[10] ततस्तदा ॥
हस्ते नन्दां [11]गुरुर्दत्त्वा [12]स्पृशंस्तेन निधापयेत् । उत्तराग्रा भवेत्पूर्वा[13] [14]पूर्वाग्रा [15]दक्षिणा भवेत् ॥
[16]पश्चिमा [17]चोत्तराग्रा स्यात्पूर्वाग्रा [18]चोत्तरा तथा । एवं [19]कृतेऽग्रमग्रं[20] च [21]मूलं मूलं च संयुतम् ॥ ५४ ॥
[22]भवेदीशनिर्ऋत्योश्च मूलाग्रौ वह्निवायुगौ । तासां मध्येऽवटे तोयमावर्त्य[23] कुसुमान्वितम् ॥
तस्यावर्तं [24]समीक्ष्यादौ देशिकः शिल्पिना सह । शुभं वदेत्तदा प्राज्ञ [25]आवर्तमथ सव्यकम् ॥
[26]वामावर्तं [27]विनिन्द्यं स्यात्तद्दोषविनिवृत्तये । पश्चाद्धोमः प्रकर्तव्यः समाप्तौ शान्तिसंज्ञितः ॥
[28]मध्यावटे ततो धीमान्रत्नानि नव विन्यसेत् । [29]ततो लोहानि [30]धातूंश्च बीजानि क्रमशस्तथा ॥

---

1 C : रक्षोवरुणगा अपि
2 B, C, E, F : च pour तु
3 A : नद्याद्याश्चतस्रश्च
4 C, E, F : समन्वितम् pour समायुतम्
5 A : पदे pour अवटे
6 A : समवगाह्य
7 C : गुरुं
8 B, C, E, F : दक्षिणे चोपविश्य च
9 B : प्राङ्मुखश्चात्र ; F : प्राङ्मुखं चात्र
10 B, F : शिल्पिकं च ; E : शिल्पिकश्च
11 B, C, E : गुरोर्दत्त्वा
12 A : स्पर्शं तेन ; B, E : स्पर्शे तु ; C : स्पर्शिते तु ; F : स्पर्शने तु
13 A : पूर्वं pour पूर्वा
14 A : पूर्वा वा pour पूर्वाग्रा
15 B : दक्षिणे
16 E : पश्चिमे
17 A omet च ; C : अपि pour च
18 A : या pour च
19 B, C, E, F : कृत्वा pour कृते
20 A : ग्रानाग्रं pour अग्रमग्रं
21 A : ग्रासमूलं pour मूलं मूलं
22 C : भवेदीशाननिर्ऋतौ
23 B, C, E, F : आवर्त pour आवर्त्य
24 B, C, E, F : समीक्ष्यैव
25 A : आवर्तमपसव्यके
26 C : ग्रामावर्तं
27 F : विनिर्दिश्य pour विनिन्द्यं स्यात्
28 A : मध्यावर्ते
29 E : तथा pour ततो
30 A : यात्रानि ; C, E, F : धातूनि

पूरयेच्चूर्णपिष्टेन [1]मृदा वाप्यवटं ततः । ततः पूर्णां [2]ततोद्धृत्य [3]पञ्चमामधिवासिताम् ॥ ५९

[4]तासामुपरि विन्यस्य [5]तस्या मन्त्रमनुस्मरन् । [6]शक्तिकुम्भं ततस्तत्र समानीय विचक्षणः ॥६०

[7]कूर्चाम्भसा तु [8]संप्रोक्ष्य तथान्यैः कलशैस्तदा[9] । यथास्थानं तदम्भोभिस्तत्तन्मन्त्र-
मनुस्मरन् ॥ ६१ ॥

प्रोक्षयित्वा ततस्तत्र प्रासादं परिकल्पयेत्[10] ॥ ६२ ॥

इत्यजिताख्ये महातन्त्रे [क्रियापादे] [11]आद्येष्टकाविधिर्नाम
दशमः पटलः ॥

---

[1] C : मुदा वाद्य वटं तदा ; E : मृदा वाभ्यवटं तदा

[2] [ततः + उद्धृत्य = तत उद्धृत्य ; अत्र सन्धिरार्षः]

[3] A : पञ्चमा अधिवासिताः

[4] E : तेषाम् pour तासाम्

[5] A : तस्य मानमनुस्मरन् ; C : तासां मन्त्रमनुस्मरन् ; F : तस्यां मन्त्रमनुस्मरन्

[6] C : शक्ति कुम्भं

[7] A : कूर्चं सा तु

[8] C : तत्प्रोक्ष्य

[9] A : तथा pour तदा

[10] Cf. *Suprabhedāgama*, I, 28, 20b-32 :

प्रभाते सुमुहूर्ते तु इष्टकास्थापनं भवेत् । स्थापकं पूजयेत्पूर्वं स्थपतिं तदनन्तरम् ॥
मन्त्रोक्तसर्वकर्माणि स्थापकेन समाचरेत् । मन्त्रहीनं च यत्कर्म सर्वं स्थपतिना कुरु ॥
कृतं चेन्मन्त्रयुक्कर्म त्वभिचाराय तद्भवेत् । तस्मात्सर्वप्रयत्नेन मन्त्रोक्तान्स्थापकेन तु ॥
सुमुहूर्ते न्यसेद्विद्वांश्चतस्रश्चेष्टकाः क्रमात् । द्वारस्य दक्षिणे भागे कर्तव्याः प्रथमेष्टकाः ॥
पूर्वादिषु चतुर्दिक्षु चतुर्भिर्ब्रह्मभिर्न्यसेत् । अग्रमग्रं तथैशान्ये मूलमग्रं च नैर्ऋते ॥
मूलाग्रं चाग्निवायव्यां स्थापयेत्तु विचक्षणः । सद्यादिब्रह्ममन्त्रेण पूर्वादि पुरुषादिके ॥
तेषां मध्ये तदा गर्ते पूरयेदुदकैः शुभैः । कलशान्तस्थतोयैश्च शिवमन्त्रेण पूरयेत् ॥
शुभं स्याद्दक्षिणावर्तं वामावर्तमशोभनम् । तद्दोषशमनार्थं तु ईशानेन शताहुतिः ॥
तत्रैव नवरत्नानि विन्यसेदनुपूर्वशः । वज्रमौक्तिकवैडूर्यशङ्खस्फटिकपुष्यकान् ॥
चन्द्रकान्तं महानीलं माणिक्यं च क्रमान्न्यसेत् । तेषामभावे सौवर्णं विन्यसेत्तु विचक्षणः ॥
गजदन्ते तथा क्षेत्रे वल्मीके कर्कटालये । वृषशृङ्गे ह्रदे नद्यां तीर्थे वै पर्वते तथा ॥
समुद्रे च मृदं ग्राह्य पूरयेदवटं तथा । मृदलाभे तु मतिमान्नदीतीरे मृदं ग्रहेत् ।
अत ऊर्ध्वं प्रकर्तव्यं प्रासादं लक्षणेन तु ॥

[11] A : आद्येष्टकाविधिरेकादशपटलः ; B, F : प्रथमेष्टकाविधिर्दशमः पटलः ; C : प्रथम इष्टकान्यासो नाम दशमः पटलः

## [एकादशः पटलः]

### [उपपीठविधिः][1]

[2]प्रासादमण्टपादीनामुन्नतार्थं विशेषतः । [3]शोभार्थं च समुद्दिष्टमुपपीठमतः[4] शृणु[5] ॥ १ ॥

[उपपीठलक्षणम्]

द्विगुणं[6] तदधिष्ठानात्पादोनद्विगुणं तु वा[7] । [8]पञ्चांशं त्र्यंशकं वाथ भवेदर्धाधिकं[9] तु वा ॥२॥
[10]पादाधिकं समं वाथ त्रिपादं वापि[11] कारयेत्[12] । कृत्वोत्सेधं [13]दशांशं [14]चाप्येकद्वित्रिभिरंशकैः ॥
[15]अधिष्ठानसमं बाह्ये निर्गमं त्रिविधं स्मृतम् । [16]त्रिद्व्येकदण्डमानं वा [17]निर्गमं तत्त्रिधा भवेत्[18] ॥

---

[1] Pour उपपीठविधि, voir *Aṃśumatkāśyapa*, 5, *Kāmikāgama*, I, 52, *Kāraṇāgama*, I, 5, et *Dīptāgama*, 3, etc.

[2] B et D ajoutent हरः

[3] A : सोपानार्थं pour शोभार्थं च ; F : भोगार्थं च

[4] E, F : ततः pour अतः ; C : उपपीठविधि pour उपपीठमतः

[5] Cf. *Dīptāgama*, 3, 1 :
अथातः संप्रवक्ष्यामि उपपीठस्य लक्षणम् । रक्षार्थं शोभनार्थं च उत्सेधार्थं प्रकल्पयेत् ॥

[6] A : द्विगुणे ; C : द्विगुणौ

[7] E : या pour वा

[8] A : पञ्चांशात्र्यंशकं

[9] A : आदिकं pour अधिकं

[10] E : आदिका pour अधिकं

[11] B, E, F : अथ pour अपि

[12] Cf. *Aṃśumatkāśyapa*, 5, 1-3a :
अथ वक्ष्ये विशेषेण उपपीठविधिं परम् । स्वाधिष्ठानसमोच्चं वा त्रिपादं वार्धमेव वा ॥
पञ्चभागाग्निमानं वा सपादं सार्धमेव वा । पादोनद्विगुणं वाथ द्विगुणं वा विशेषतः ॥
एवमष्टविधं ख्यातमुपपीठोदयं द्विज ।

[13] A, B, C, E : तथांशं pour दशांशं

[14] A, B, C, E : तु pour चापि

[15] B, C, E, F : अधिष्ठानस्य बाह्ये तु

[16] C : त्रिद्व्येकदण्डमानेन

[17] A : निर्गमनं तथा भवेत् ; D : निर्गमं तत्र सा भवेत्

[18] Cf. *Aṃśumatkāśyapa*, 5, 8b-6 :
दशधा भज्याधिष्ठानमेकद्वित्रिचतुष्टयम् । पञ्चांशं वाथ निष्क्रान्तमधिष्ठानस्य पादुका ॥
उपपीठस्य नीव्रं तु पञ्चधा परिकीर्तितम् । तन्नीव्रमुपपीठे तु पादबाह्यं प्रकल्पयेत् ॥
अथवाग्रपादसदृशं द्विगुणद्विगुणं तु वा । जगतीनीव्रतुल्यं वाप्युपानसदृशं तु वा ॥
एवं हि पञ्चभेदं स्यादुपपीठस्य लक्षणम् ।

[द्वादशांशोत्सेधकमुपपीठम्[1] ]

[2]उत्सेधे द्वादशांशे तु द्वाभ्यां पादुकमुच्यते । तदूर्ध्वे [3]पद्ममंशेन क्षेपणं चार्धभागतः ॥ ५ ॥
गलं भूतांशकं ज्ञेयं [4]कम्पमर्धांशसंमितम् । अंशेन [5]पद्ममूर्ध्वे स्याद्वाजनं चांशकेन तु ॥ ६ ॥
[6]कम्पमंशेन कर्तव्यमेवमष्टाङ्गसंमितम्[7] ।

[एकविंशोत्सेधकमुपपीठम्[8]]

अथवा [9]तत्समुत्सेधे त्रिसप्तांशसमन्विते[10] ॥ ७ ॥
नेत्रांशं तदुपानं स्याद्गुणांशं पद्ममुच्यते । व्योमांशं [11]कन्धरं प्रोक्तं द्वाभ्यां [12]वाजनमेव हि ॥
एकेन [13]कम्पमष्टांशैः [14]कर्णं तत्र प्रकल्पयेत् । अंशेन कम्पमंशाभ्यां वाजनं कम्पमंशतः ॥९॥

---

[1] Cf. *Aṃśumatkāśyapa*, 5, 9-12a :

तदुच्चे द्वादशांशे तु उपानोच्चं द्विभागधा । पद्ममंशेन कर्तव्यमर्धांशं कम्पमुच्यते ॥
भूतांशं कण्ठतुङ्गं तु कम्पमब्जं तु पूर्ववत् । सार्धांशं वाजनं कुर्यात्कम्पमर्धेन कारयेत् ॥
अष्टाङ्गमेवमाख्यातं षडङ्गं तद्विनाम्बुजम् । कम्पेनाम्बुजमानं तु योज्यं भद्रोपपीठकम् ॥
ऊर्ध्वकम्पं विना वापि पञ्चाङ्गमुपपीठकम् ।

[2] A : उत्सेधो

[3] पादम् pour पद्मम्

[4] A : कम्बं मध्यांशसंमितम्

[5] A : पद्यमूर्ध्वं

[6] A : कम्बम् pour कम्पम्

[7] अंशसंयुतम् pour अङ्गसंमितम्

[8] Cf. *Aṃśumatkāśyapa*, 5, 20-23a:

उपपीठस्य चोत्सेधे एकविंशतिभाजिते । उपानं तु द्विभागेन तत्समं त्वम्बुजोदयम् ॥
कम्पमर्धेन कर्तव्यं पद्मनर्धेन कारयेत् । महापट्टी द्विभागेन पद्मनर्धेन कारयेत् ॥
कम्पमर्धेन कर्तव्यं कर्णोच्चं वसुभागधा । भागेन कम्पमर्धेन पद्मकम्पे कपोतकम् ॥
त्रिभिस्तत्कम्पमर्धेन नाम्ना सौभद्रमुच्यते ॥

[9] A: समगुत्सेधे ; B, C, D, E, F : तत्समोत्सेधं

[10] B, C, D, E, F : समन्वितम् pour समन्विते

[11] C: कन्धरे

[12] A: विचनम् pour वाजनम्

[13] B, C, D, E, F : पद्मम् pour कम्पम्

[14] A: कुण्डं pour कर्णं ; B, C, E: कण्ठं

[षोडशांशोत्सेधकोपपीठम्]

[1]कृत्वा [2]षोडशधोदयं द्वयमितं कुर्यादुपानं तत-
स्तन्मानं कमलं च कम्पमथ तत्रैकेन [3]कर्णं ततः ।
भूतांशैरथ कम्पमेकमुपरि द्वाभ्यां च पद्मं ततो
[4]द्वाभ्यामेव हि [5]पट्टिकां तदुपरि व्योमांशकं कम्पकम् ॥ १० ॥

[एकोनविंशांशोत्सेधकोपपीठम्]

कृत्वा [6]सम्यगथोपपीठ उदयं चैकोनविंशांशकं
द्वाभ्यां पादुकमम्बुज[7]द्वयमितं[8] कम्पं शिवांशं भवेत् ।
[9]वस्वंशं गलमेकभागमथ तत्कम्पं च [10]द्विद्वयंशकं
पद्मं पट्टिकया [11]भवेदुपरितः कम्पं [12]खभागान्वितम्[13] ॥ ११ ॥

---

[1] A : कुर्यात् pour कृत्वा

[2] A, F : षोडशतोदयद्वयमिदं ; B, E : षोडशकोदयद्वयमितं ; D : षोडशोधोदयद्वयमितं

[3] B, C, E : कण्ठं pour कर्णं

[4] C, F : द्वाभ्यां वो हि परिपट्टिकां ; D, E : द्वाभ्यां वोपरिपट्टिकां

[5] A : पट्टिका

[6] A : सम्यगतोपपीठमुदयं ; D : सम्मुखथोपपीठमुदयं ; E : सद्यगतोपपीठमुदयं

[7] F : अम्बुद pour अम्बुज

[8] A : द्वयमिदं pour द्वयमितं ; C : द्वयमतं

[9] F : वस्त्वंशं

[10] A : विद्यांशकं

[11] A : भवेदुपरि तत्कम्पं

[12] B, C, D : क pour ख ; E : कम्पैक pour कम्पं ख

[13] Les *Āgama* donnent d'autres variétés d'*upapīṭha*.

cf. *Dīptāgama*, 3, 13–16a :

उपपीठोच्छ्रयं यावत्सप्तविंशतिभाजितम् । द्व्यंशेनोपानमुत्सेधं पद्मं कुर्याद्द्वयांशतः ॥
अंशेन पट्टिकोत्सेधं पादोच्चं द्वादशांशकम् । एकाङ्क[एकांश]मुत्तरोत्सेधमेकांशं नीव्रपट्टिका ॥
पादोच्चं तु चतुर्भागं त्रिपादे लिङ्गपट्टिका । त्रिपादान्तरितोत्सेधद्व्यंशं प्रत्युच्छ्रयं भवेत् ॥
अर्धेन वाजनं कुर्यात्प्रतिभद्रं सुखावहम् ॥

cf. *ibid.*, 3, 16b-19 :

उपपीठस्य चोत्सेधं तत्र त्रिंशतिभाजितम् । पादाधिकत्रिभागोच्चं जन्मोच्चं त्रिभिरंशकैः ॥
पद्ममंशमथांशेन कर्णमानं प्रकीर्तितम् । महापट्टी द्वयांशेन अर्धांशेनोर्ध्वपट्टिका ॥
उत्सेधे तु द्विरष्टांशमुत्तरार्धकमेव च । एकेन पद्मं पट्टी च कपोतोच्चं द्वयांशनः ॥
त्रिपादेनोर्ध्वपट्टी च सर्वभद्रं प्रकीर्तितम् ।

cf. *Kāraṇāgama*, I, 1b-15a :

आदौ चैव प्रकृत्यूर्ध्वे प्रथमं फलकां कुरु । पादान्तरं तदुत्सेधं तदूर्ध्वमुपपीठकम् ॥
तन्मध्ये तस्य बाह्ये तु तस्योच्चार्धं तु नीव्रकम् । वस्त्वाधारसमायामं समं वा पादहीनकम् ॥
अर्धं वोच्चकमेवं तु उपपीठस्य कीर्तितम् । अङ्घ्रिकाद्विगुणं वापि पादोनद्विगुणं तु वा ॥
द्विगुणार्धं तु वा बाह्ये उपपीठस्य विस्तरम् । उपपीठस्य चोत्सेधं भवेद्विंशतिभागतः ॥
उपानात्पञ्चभागान्तमर्धेनार्धेन वर्धयेत् । तस्योर्ध्वे चोपपीठं तु कारयेल्लक्षणान्वितम् ॥
श्रीकरं ललितं भद्रम् उपपीठं त्रिधा मतम् । कलांशं विभजेदाद्यः पक्षांशं जन्म उच्यते ॥
द्विभागे पद्मकं चैव पट्टिकांशेन कीर्तितम् । कौशिकांशेन कर्णं तु व्योमांशेनोर्ध्वपट्टिका ॥
पक्षांशेनोर्ध्वपद्मं स्यान्महापट्टी तथैव च । तत्कर्णस्यैव वा बाह्ये मसूरं जगतीसमम् ॥
पादताराष्टभागैकहीनं कर्णप्रतारकम् । एवं श्रीकरमाख्यातमायामं पूर्ववद्भवेत् ॥
अश्विन्यंशेन जन्मं तु कम्पमेकेन कारयेत् । अधः पद्मं द्विभागेन कम्पमेकेन कारयेत् ॥
भूतांशं कन्धरं प्रोक्तमेकांशं वेत्रमुच्यते । ऊर्ध्वपद्मद्विभागेन महापट्टी तथैव च ॥
ललितं ख्यातमेवं तु आयामं त्वष्टधा भवेत् । अंशेन पादुकां कुर्यादर्धांशं कम्पमुच्यते ॥
युगांशं गलमित्युक्तमर्धांशं वेत्रमुच्यते । महापट्टी द्विभागेन भद्रमेवं प्रकीर्तितम् ॥
सिंहव्यालगजैर्वापि भूतकैः संयुतानि वै । उपपीठं समाख्यातम् ”

[चतुर्दशांशोत्सेधकमुपपीठम्]

कृत्वा [1]वा मनुभागमम्बुजमिदं तत्पादुकं पङ्कजं
व्योमांशं त्वथ [2]कम्पमर्धमथ षड्भागैर्गलं[3] कम्पकम्[4] ।
अर्धं पुष्करभागमम्बुजमतो द्वाभ्यां भवेत्पट्टिका
कम्पं चोपरि तस्य भागसहितं [5]तत्रोपपीठं भवेत् ॥ १२ ॥
[6]कण्ठे[7] भूत[8]गजव्यालसिंहयुक्तं [9]यथा भवेत् । [10]तथा कुर्वीत मतिमान्पादयुक्तमथापि वा ॥१३॥
[11]उपपीठं समाख्यातं [12]सर्वधाम्नां समासतः ॥ १४ ॥

इत्यजिताख्ये महातन्त्रे [क्रियापादे] [13]उपपीठविधिर्नाम
एकादशः पटलः ॥[14]

---

1 D : मा pour वा : F : या
2 C : कत्मर्धमथि ; D, F : कम्पमध्यमथ
3 A : दलैः pour गलं
4 E : पङ्कजम् pour कम्पकम्
5 C, E : तन्त्र pour तत्र
6 Cf. *Dīptāgama*, 3, 20-21 :
गलपादमनायुक्तं युग्मपादेषु चित्रितम् । पादयोरन्तरं विद्याच्चतुरष्टाङ्गुलान्तकम् ॥
सिंहव्यालमृगैर्भूतैर्नानारूपविचित्रितम् । अर्पिते नार्पिते वापि सर्वत्र परिकल्पयेत् ॥
7 C : कर्णा pour कण्ठे
8 B : कृत pour गज ; C : गल ; D, F : गन
9 B : तथा
10 B, F : यथा
11 F : उपर्पाठे
12 F : मर्वथा मां pour सर्वधाम्नां
13 A : उपपीठविधिः द्वादशः पटलः ; D, E : उपपीठविधिरेकादशः पटलः
14 D ajoute ग्रन्थं १४

[द्वादशः पटलः]

[ प्रासादलक्षणविधिः ][1]

अतः परमिदं वक्ष्ये प्रासादानां तु लक्षणम् । हस्तेन [2]संमितः प्रोक्तः प्रासादः स्याज्जनार्दन ॥१

[ हस्तमानम्, अङ्गुलमानं च ][3]

तस्माद्धस्तप्रमाणोऽयमुच्यतेऽत्र [4]पुरा मया । जालादिविवराविष्टे सति घर्मांशुतेजसि ॥ २ ॥
अणुरूपेण तत्रैव [5]दृश्यते यद्रजो नरैः[6] । [7]तदणुर्नामतः प्रोक्तो रजो नाम तदष्टकम् ॥ ३ ॥
तदष्टकं तु [8]वालाग्रं लीक्षाख्यं तु तदष्टकम् । [9]तदष्टकं तु यूकाख्यं यवो यूकाष्टको भवेत् ॥४॥

---

[1] Pour les détails du प्रासादलक्षण, voir *Aṃśumatkāśyapa*, 26-29 et 31-40, *Kāmikāgama*, I, 16, 50, 55 et 60, *Kāraṇāgama*, I, 7, *Kiraṇāgama*, III, 25, *Dīptāgama*, 6 à 9 et 63, *Suprabhedāgama*, I, 31 et *Svāyambhuvāgama*, 50.

[2] B, C : संमितं प्रोक्तं प्रासादस्य जनार्दन

[3] Cf. *Kāmikāgama*, I, 16, 1-6a :

मानोपकरणं वक्ष्ये सर्वेषां च विशेषतः । परमाणुक्रमाद् वृद्धया मानाङ्गुलमिति स्मृतम् ॥
परमाणुरिति ख्यातो योगिनां दृष्टिगोचरः । रथरेणुश्च वालाग्रं लीक्षा यूको यवस्तथा ॥
क्रमशोऽष्टगुणाः प्रोक्ता यवैः षड्भिश्च सप्तभिः । अष्टाभिश्च क्रमेणैव कन्यसादिविभेदतः ॥
अङ्गुल्यस्त्रिविधाः प्रोक्ता यावत्यः शिवशासने । शालिभिश्च त्रिभिः सार्धैश्चतुर्भिश्च तथायतैः ॥
शाल्युद्भवाः समाख्यातास्त्वङ्गुलास्त्रिविधास्त्विह । सार्धैः षड्भिर्यवैर्वाथ सार्धैः सप्तभिरेव वा ॥
अङ्गुलास्त्रिविधाः प्रोक्ताः सार्धैरष्टाभिरेव वा ।

[4] B, C, D, E, F : मया पुरा ; le mot प्रमाण se trouve au masculin au lieu du neutre dans ce texte; cf. *Rauravāgama*, vol. I, p. 69, note 6.

[5] C : यद्रजो दृश्यते नरैः

[6] B : अरुणैः pour नरैः ; E : नृभिः

[7] A : तदणुर्नाम तत्प्रोक्तं

[8] A : वालाग्रं ईक्षाख्यं तु ; B : वालाग्रे परीक्षां तु ; F : वालाग्रमरीक्षां तु ; F : वालाग्रं रीक्षाख्यं तु

[9] Les *śloka* 4b à 24 manquent dans le ms. D.

[ मानाङ्गुलम्[1] ]

अङ्गुलं चाष्टभिस्तैस्तु तन्मानाङ्गुलमुच्यते। सप्तभिः षड्भिरप्युक्तं[2] यवैरत्रोक्तमङ्गुलम्[3]॥ ५
एवं त्रिविधमुद्दिष्टं मानाङ्गुलमतः परम्। अनेन हस्तमानं च क्रमेण परिपठ्यते॥ ६॥

[ हस्तमानभेदः[4] ]

[5]चतुर्विंशैस्तु तैः प्रोक्तः [6]किष्कुहस्तः [7]सुनिश्चितः। [8]प्राजापत्य इति प्रोक्तः पञ्चविंशाङ्गुलैस्ततः॥
षड्विंशैस्तु[9] धनुर्मुष्टिः सप्तविंशैर्धनुर्ग्रहः[10]। शिबिकासनादिकं सर्वं [11]किष्कुमानेन कारयेत्[12]॥८
प्रासादमण्टपादीनि प्राजापत्येन कारयेत्। राजवेश्मपुरादीनि [13]तटाकदीर्घिकादिकम्॥ ९॥

---

[1] Cf. *Kāraṇāgama*, I, 7, 3-5:
अङ्गुलं त्रिविधं प्रोक्तं पूर्वं मानाङ्गुलं भवेत्। मात्राङ्गुलं द्वितीयं तु देहलब्धं तृतीयकम्॥
जालान्तरगतं रश्मेर्दृश्यादृश्यं तु यद्रजः। परमाणुस्तदाख्यातो रेणुरोमकलीक्षुका:॥
यूकं यवं क्रमेणैव वृद्धिरष्टाङ्गुलैस्तथा। यवोदराष्टविस्तारमङ्गुलं चेति कीर्तितम्॥

[2] B, E, F : इत्युक्तं pour अप्युक्तं [3] F : यवैरत्रोत्तमाङ्गुलम्

[4] Cf. *Kāraṇāgama*, I, 7, 6-7a :
अङ्गुलं द्वादशं तालं किष्कुहस्तं च तद्द्वयम्। प्राजापत्यकरं प्रोक्तं पञ्चाभिर्विंशदङ्गुलम्॥
षड्विंशति धनुर्मुष्टिः सप्तविंशद्धनुर्ग्रहम्।
cf. *Dīptāgama*, 6, 6b-8a :
तच्चतुर्विधमुक्तं च हस्तमानं विशेषतः। चतुर्विंशाङ्गुलं ज्ञेयं किष्कुरित्युच्यते बुधैः॥
पञ्चविंशतिभिश्चैव प्राजापत्यमुदाहृतम्। षड्विंशतिर्धनुर्मुष्टिः सप्तविंशद्धनुर्ग्रहः॥
cf. *Kāmikāgama*, I, 16, 8-11 :
अङ्गुलैः सूर्यसंख्यातैर्वितस्तिरिह कथ्यते। तद्द्वयं हस्तमुद्दिष्टं स किष्कुरिह संमतः॥
पञ्चविंशतिमात्रं तु प्राजापत्य इति स्मृतः। मात्रैस्तु षड्विंशतिभिर्धनुर्मुष्टि प्रकीर्तितः॥
सप्तविंशतिभिर्मात्रैर्धनुर्ग्रह उदाहृतः। मात्राङ्गुलोत्थहस्तास्तु शास्त्रेऽस्मिन्संप्रकीर्तिताः॥

[5] C, F : चतुर्विंशैस्ततः प्रोक्तं [6] B : निष्क pour किष्कु

[7] A : विनिर्गता [8] A : प्राजापत्यमिति प्रोक्तं

[9] C, E, F : स्याद् pour तु [10] A : धनुर्ग्रहम् pour धनुर्ग्रहः ; C : धनुर्ग्रहा

[11] B : निष्क pour किष्कु

[12] *Kāmikāgama*, I, 16, 16 :
प्राकारं किष्कुमानेन यानं च शयनं नयेत्। किष्कुमानेन वै सर्वमासनं तु समाचरेत्॥

[13] A : तटाकादीर्घिकादिकम् ; F : तटाकादीनि दीर्घकम्

[1]धनुर्मुष्टिकरेणैव नद्यध्वादीन्यतः परम् । धनुर्ग्रहकरेणैव [2]करभेदः प्रकीर्तितः[3] ॥ १० ॥

[मात्राङ्गुलम्[4]]

यागोपकरणं [5]सर्वमेव मात्राङ्गुलेन तु । मात्राङ्गुलं [6]च विविधं[7] तस्य लक्षणमुच्यते ॥ ११ ॥

आचार्यदक्षिणे हस्ते [8]मध्यमाङ्गुलिमध्यतः । [9]यत्पर्व तस्य दैर्घ्येण विस्तारेणापि संमितम् ॥१२

[देहलब्धाङ्गुलम्[10]]

प्रतिमायाः [11]समुत्सेधे [12]तालगण्येन भाजिते । यदङ्गुलं भवेत्तत्तु[13] देहलब्धाङ्गुलं भवेत् ॥१३

---

[1] B : धर्म pour धनुर्

[2] A : शारमेद ; B, C, E, F : शारमेदः

[3] Cf. *Kāraṇāgama*, I, 7, 7b-10a :
शयनं चासनं चैव किष्कुमानवशात्कुरु । प्रासादादीन्सभां शालां मौलिकां मण्टपं गृहम् ॥
प्राजापत्यकरेणैव कारयेत्तु विचक्षणः । राजधान्यादिकं राजभवनं च तटाककम् ॥
दुर्गं चैव प्रकर्तव्यं धनुर्मुष्टिकरेण तु । कुर्याद्धनुर्ग्रहेणैव नद्यध्वानं विशेषतः ॥

cf. *Kāmikāgama*, I, 16, 13b-15b :
प्राजापत्यस्य मानेन मण्डपे विग्रहेऽपि च । मालिकायां सभायां च विशालायां च योजयेत् ॥
राजधान्यादिकं राजभवनं च तटाककम् । दुर्गं चैव धनुर्मुष्टिकरणैश्चैव कारयेत् ॥
धनुर्ग्रहेण कुर्यात्तु रथ्याध्वानं विशेषतः ।

[4] Cf. *Kāmikāgama*, I, 16, 6b-7 :
मध्यमाङ्गुलिमध्यस्थपर्वदीर्घं तु यद्भवेत् । श्रेष्ठं मात्राङ्गुलं प्रोक्तं पादहीनं तु मध्यमम् ॥
अर्धोनमधमं प्रोक्तं मात्राङ्गुलिविभेदतः ।

cf. *Suprabhedāgama*, I, 30, 4b-5a :
आचार्यदक्षिणे हस्ते मध्यमाङ्गुलिमध्यमे । पर्व मात्राङ्गुलं ज्ञेयम्"

cf. *Kāraṇāgama*, I, 7, 12a et *Dīptāgama*, 6, 11a :
यागोपकरणं सर्वं कुर्यान्मात्राङ्गुलेन तु

[5] A : सर्वमेवं [6] E : तु pour च [7] B, C, E, F : द्विविधं

[8] A : मध्यमाङ्गुलिमध्यकः ; E : मध्यमाङ्गुलिमध्यगः ; F : मध्यमाङ्गुलिमध्यमः

[9] C : यः पर्वस्तस्य दैर्घ्येण ; E : पर्वतस्तस्य दैर्घ्ये ; F : यं पर्वस्सर्वदैर्घ्येण

[10] Cf. *Suprabhedāgama*, I, 30, 5b-6a:
प्रतिमायास्तथोत्सेधे तालगण्येन भाजिते । तेष्वेकं भागवन्मानं देहलब्धाङ्गुलं स्मृतम् ॥

cf. *ibid.*, 9b:
देहलब्धाङ्गुलेनैव प्रतिमां कारयेद्बुधः ॥

cf. *Dīptāgama*, 6, 14-15a:
यत्कृत्स्नं प्रतिमायामं तालगण्येन भाजयेत् । तल्लब्धोत्सेधमानं तु चतुर्विंशच्छतं कुरु ॥
तेष्वेकभागाङ्गुल्यं देहलब्धमिति स्मृतम् ।

[11] C : समुत्सेधं [12] B, C, F : तालं गण्येन ; E : तालं गुण्येन [13] A : तत्तद् pour तत्तु

[1] तिमायास्तु निर्माणे [2]विनियोगस्तु दृश्यते । [3]एवमङ्गुलभेदश्च करभेदश्च दर्शितः ॥ १४ ॥

[ प्रासादभेदः[4] ]

[5]प्रासादस्त्रिविधः प्रोक्तः कन्यसो मध्यमस्तथा । [6]उत्तमश्चापि तद्भेद इदानीं [7]वक्ष्यते मया ॥१५॥
त्रिकरान्नवहस्तान्तं चतुर्हस्ताद्दशान्तकम् । [8]ओजोयुग्मकरैः [9]कुर्याद् धाम्नामवरमष्टकम् ॥ १६ ॥
रुद्रहस्तं समारभ्य यावदेकोनविंशकम् । रविहस्तं समारभ्य विंशद्धस्तान्तमेव च ॥ १७ ॥
[10]ओजोयुग्मकरैर्धाम्नां[11] दशकं मध्यमं स्मृतम् । एकविंशत्समारभ्य [12]चैकोनत्रिंशकान्तकम् ॥
द्वाविंशत्करमारभ्य ततस्त्रिंशत्करान्तकम् । [13]ओजो[14]युग्मकरैः श्रेष्ठं दशकं परिकीर्तितम् ॥१९॥
त्रिकरात्त्रिंशद्धस्तान्तमोजो[15]युग्मकरैः क्रमात् । [16]देवानामालयः प्रोक्तश्चाष्टाविंशतिसंख्यया ॥

---

[1] F : प्रतिमायां तु

[2] B : विनियोगे स दृश्यते ; E, F : विनियोगोऽस्य दृश्यते

[3] C : एवमङ्गुलभेदे च करभेदे च

[4] Cf. *Suprabhedāgama*, I, 31, 1-3a :
अथातः संप्रवक्ष्यामि प्रासादानां तु लक्षणम् । सप्ताष्टनवहस्तं च अधमत्रितयं भवेत् ॥
दशद्वादशकं हस्तं षोडशं मध्यमत्रयम् । विंशत्त्रिंशच्च पञ्चाशत् त्रीणि चोत्तममिष्यते ॥
एवं नवविधं प्रोक्तं प्रासादानां तु विस्तरम् ।

cf. *Kāraṇāgama*, I, 7, 13b-15 :
कन्यसं मध्यमं श्रेष्ठं त्रिविधं भवनं स्मृतम् । त्रिहस्तं तु समारभ्य षट्तलान्तं क्रमेण तु ॥
एकत्रिंशतिहस्ताच्च द्विद्विहस्तविवर्धनात् । सप्तभूमिं समारभ्य क्रमादर्कतलान्तकम् ॥
उत्तमं त्विति विख्यातं कार्यंलक्षणान्वितम् ।

[5] C : प्रासादं त्रिविधं प्रोक्तं

[6] C : उत्तमं चापि तद्भेदम्

[7] B, C, E, F : उच्यते pour वक्ष्यते

[8] A : ओज pour ओजो ; E : ओजा ; F : आजो

[9] B, C, E, F : कुर्यात्कन्यसं नामसप्तकम्

[10] A : ओज pour ओजो

[11] F : नाम्ना pour धाम्नां

[12] C omet च

[13] A : ओज pour ओजो

[14] C : अर्क pour युग्म

[15] A : ओज pour ओजो

[16] A, C, E : देवानामालयं प्रोक्तं चाष्टाविंशातिसंख्यया

[ गर्भगृहम्[1] ]

[2]तत्तद्विस्तारमानेन गर्भगेहं प्रकल्पयेत् । प्राङ्मुखैः [3]पञ्चभिः सूत्रैस्तथैवोदङ्मुखैरपि ॥ २१ ॥
प्रासादस्य तु [4]विस्तारे विकारांशसमन्विते । मध्ये युगपदं [5]गर्भं शेषं भित्त्यर्थमुच्यते ॥ २२ ॥
षड्भिः षड्भिस्ततः[6] सूत्रैः प्राङ्मुखोदङ्मुखैरपि । पञ्चविंशत्पदं कृत्वा मध्ये गर्भं नवांशकम् ॥

---

[1] Cf. *Suprabhedāgama*, I, 31, 3b-12a :

विस्तारं पञ्चविंशत्तु भागं कृत्वा विचक्षणः । नवांशं गर्भगेहं तु भित्तिमानं तु षोडश ॥
अथवा षोडशांशे तु चतुष्कं गर्भविस्तरम् । द्वादशांशस्तु भित्तेस्तु विस्तरं सर्वतः समम् ॥
एकाशीतिपदं कृत्वा नवांशं गर्भमेव तु । षोडशं भित्तिमानं तु भित्तिरभ्यन्तरं विदुः ॥
तद्बाह्येकं तु सलिलं तद्बाह्येकं तु भित्तिकम् । बाह्यभित्तौ चतुर्द्वारमथवा द्वारमेकतः ॥
अन्यत्सर्वं समं प्रोक्तं स्थूप्यन्तं कारयेद्बुधः । यदुक्तं बाह्यविस्तारं बाह्याभ्यन्तरयोः समम् ॥
बाह्ये वाभ्यन्तरे वापि त्रिविधं भित्तिमानकम् । लिङ्गमानविमानस्य विस्तरं शृणु सांप्रतम् ॥
यावल्लिङ्गस्य विष्कम्भं त्रिगुणं पीठविस्तृतम् । तत्तारं त्रिगुणीकृत्य गर्भगेहं प्रचक्षते ॥
गर्भगेहं त्रिभागैकं भित्तिमानं विधीयते । यदीच्छेत्कर्तृ विस्तारं तद्विस्तारं विधीयते ॥
पूजांशद्विगुणं पीठं त्रिगुणं वा विशेषतः । पीठस्य त्रिगुणं गर्भं तत्त्रिभागैकभित्तिकम् ।

cf. *Kāraṇāgama*, I, 7, 17-22a :

प्रासादस्य तु विस्तारं त्रिभिरंशैर्विभाजयेत् । एकांशं गर्भगेहं तु शेषं भित्तिरिति स्मृतम् ॥
विस्तारं पञ्चधा कृत्वा गुणांशं वाथ गर्भितम् । विस्तरं सप्तधा कृत्वा गर्भं वेदांशकेन वा ॥
विस्तरं दशधा कृत्वा गर्भमृत्वंशमेव वा । लक्षणेनालयं कुर्याल्लिङ्गमानवशादपि ॥
लिङ्गत्रितारकं पीठं गर्भपीठं त्रितारकम् । तद्बाह्ये पीठतारेण भित्तिं कुर्यात्समाहृतम् ॥
अथवा गर्भविस्तारं पीठतारचतुर्गुणम् । पीठताराद्द्विगुणितं गर्भार्धं भित्तिविस्तृतम् ॥

cf. *Kiraṇāgama*, III, 25, 9b-11a :

लिङ्गमानेन पीठं स्याद्गर्भं पीठेऽथ संस्थितम् । लिङ्गेन गर्भमानं स्याद्द्विगुणाः सार्धतः स्थिताः ॥
अन्यथा रुचिराल्लिङ्गाद्द्विगुणो गर्भ उच्यते । गर्भाद्द्विगुणतो बाह्ये तस्मात्तद्द्विगुणोऽर्धतः ॥

[2] F : ततः pour तत्तद्   [3] A : पञ्चसूत्रैः प्राङ्मुखोदङ्मुखैरपि

[4] C : विस्तारविकारांशसमन्विते

[5] Le mot गर्भ se trouve au neutre au lieu du masculin dans ce texte ; le mot पद dans le *śloka* 25 se trouve au masculin au lieu du neutre ; cf. *Rauravāgama*, vol. I, p. 69 note 6.

[6] B, C, E, F : तथा pour ततः

प्राङ्मुखैर्वसुभिः [1]सूत्रैस्तथैवोदङ्मुखैरपि । सप्तसप्तपदं कृत्वा तन्मध्ये तु नवांशकैः ॥ २४ ॥
[2]परितोऽर्धपदाः सप्त [3]गर्भं भित्तिस्तु [4]शेषकैः । यदि [5]पूर्वं स्थितं लिङ्गं [6]तन्मानाद्गर्भमुच्यते ॥२५
त्रिगुणं लिङ्गतारस्य पीठतारं विधीयते । [7]पीठत्रिगुणितं [8]गर्भं भित्तिः पीठसमा भवेत् ॥२६॥
अथवा [9]धामगर्भं तु भवेत्पीठचतुर्गुणम् । गर्भार्धमानतो[10] [11]भित्तिर्भवेद्धाम्नः समन्ततः॥२७॥

[ मण्टपः[12] ]

अग्रतो मण्टपं कुर्यात्प्रासादसममानतः । अथवा [13]तत्प्रमाणे तु विकारांशविभाजिते ॥ २८ ॥
अर्धादेकैकवृद्ध्या तु मण्टपो नवधा भवेत् । मण्टपेषु [14]नवस्वेषु [15]चैकमिष्टं प्रकल्पयेत् ॥२९॥

---

[1] F : सर्वैः pour सूत्रैः

[2] B, C, E : परितोर्ध्वपदाः सप्तैः [3] B, C : गर्भभित्तिस्तु

[4] A : शेषकम् ; C, E : शेषिकम् ; D : शेषिनम् ; F : शोषितम्

[5] A : पूर्वस्थितं [6] E : तन्मानान्मुखमुच्यते ; F : तन्मानाल्लिङ्गमुच्यते

[7] B : पीठस्य गुणितं ; D, E, F : पीठत्रिगुणितं

[8] C : गर्भभित्तिः ; F : लिङ्गं भित्तिः [9] D : अधम pour धाम ; C : वाम

[10] A : मानको pour मानतो

[11] B, F : भित्तिर्भवेद्धामसमन्ततः ; C : भित्तिर्भवेद्धाममसमं ततः ; D : भित्तिर्भवेन्नाममसमन्ततः ; E : भित्तिर्भवेद्धातु समन्ततः

[12] Cf. *Suprabhedāgama*, I, **31**, 94b-99 :

मण्डपानां विधिं शृणु ।
प्रासादार्धं मुखायामं विस्तारं समुच्यते । त्रिपादं वा मुखायामं सार्धं मण्डपमुच्यते ॥
देवतामण्डपं पूर्वं द्वितीयं स्नपनार्थकम् । वृषार्थं मण्डपं पश्चाच्चतुर्थं नृत्तमण्डपम् ॥
देवता प्रतिमारूपा स्थापितं देवमण्डपम् । कलशस्थापनं यत्र प्रोक्तं स्नपनमण्डपम् ॥
वृषभं स्थापितं यत्र वृषभमण्डपं तथा । नृत्तं यत्र कृतं तत्तु नृत्तमण्डपमेव तु ॥
गोपुरेऽथ व्यवायेऽपि व्यवाये विकृतं तथा । एवं चतुर्विधेष्वन्यमण्डपं चाग्रतो बहिः ॥

cf. *Kāraṇāgama*, I, 7, 22b :

समं त्रिपादमर्धं वा हर्म्यस्य वक्त्रमण्डपम् ॥

cf. *Dīptāgama*, 6, 17b-18a :

अग्रतो मण्डपं कुर्यात्प्रासादसमविस्तृतम् । तदर्धं वा त्रिपादं वा मुखमण्डपमिष्यते ॥

[13] B, C, D, E, F : तत्प्रमाणेन pour तत्प्रमाणे तु

[14] F : नवार्धेषु [15] E, F : वा pour च

मण्टपेषु च सर्वेषु चतुस्त्रिद्व्येकदण्डकैः । कारयेदन्तरालं वा मध्ये मण्टपसद्मनोः ॥ ३० ॥
समं स्यादुभयोस्तारं धाममण्टपयोरपि । [1]चतुःपञ्चांशकं वापि धाम्नो मण्टपविस्तरम् ॥३१॥

[ भद्रपीठम्[2] ]

पार्श्वयोः [3]पृष्ठतो वापि प्रासादानां विशेषतः । [4]तत्त्रिभागैकभागेन पञ्चांशद्व्यंशकेन वा ॥
मध्ये भद्रं प्रयुञ्जीत सार्धदण्डप्रमाणतः । दण्डप्रमाणतो वापि भद्रं शोभार्थमुच्यते ॥ ३३ ॥
भद्रं विनापि [5]कर्तव्यः प्रासादो लक्षणान्वितः ।

[ विमानम्[6] ]

[7]अधमानां विमानानामष्टानां [8]च [9]समुन्नतिम् ॥ ३४ ॥
[10]विस्तारद्विगुणं कुर्यान्मध्यानामुन्नतिं ततः । दशानामपि विस्तारे सप्तांशेन विभाजिते॥ ३५ ॥
[11]द्वादशांशेन कुर्वीत ततश्च श्रेष्ठसद्मनाम्[12] । दशानां तु समुत्सेधं विस्तारे मुनिभाजिते ॥३६॥
रुद्रभागेन कुर्वीत ;

---

[1] B : चतुःपादांशहीनं वा ; C, D : चतुःपञ्चांशहीनं वा ; E: चतुःपदांशहीनं वा ; F : चतुःपञ्चाङ्गहीनं वा

[2] Cf. *Kāraṇāgama*, I, 151b-154a :
पूर्ववत्षोडशांशेन पीठोत्सेधं भजेत्ततः । व्योमांशं पादुकोत्सेधं वेदांशं जगती भवेत् ॥
अन्यांशं वृत्तमित्युक्तं भागैकेन तु पट्टिका । गुणांशं वृत्तमित्युक्तं भागैकेन तु पट्टिका ॥
महापट्टिद्वयांशेन घृतवारि तथांशकम् । एवं स्याद्भद्रपीठं तु सर्वलिङ्गेषु योग्यकम् ॥

[3] A : पृष्ठतश्चापि

[4] E : तत्र pour तत्त्रि

[5] A : कर्तव्यं प्रासादं लक्षणान्वितम्

[6] Cf. *Svāyambhuvāgama*, 50, 10-11 :
विस्तारद्विगुणोत्सेधमुत्तमं तु प्रचक्षते । विस्तारं पञ्चधा कृत्वा द्वादशांशं[तु]मध्यमम् ॥
एकादशांशमधमं विस्तारे सप्तधा कृते । आद्वादशतलादेवमुत्सेधं तु विधीयते ॥
cf. *Kāraṇāgama*, I, 7, 16-17a :
विस्तारद्विगुणोत्सेधं कन्यसस्य प्रकीर्तितम् । विस्तारं सप्तधा कृत्वा रव्यंशं मध्यमोच्छ्रयम् ॥
विस्तारं पूर्ववत्कृत्वा रुद्रांशमुत्तमोच्छ्रयम् ।

[7] A : अमानानविमानानां

[8] A : अष्टांशं च pour अष्टानां च ; F : अष्टार्धं च

[9] C : समुन्नतिः

[10] C : विस्तारं द्विगुणं

[11] A : द्वादशांशे प्रकुर्वीत

[12] A : जन्मनाम् pour सद्मनाम्

[ द्वारम्[1] ]

[2]द्वारोत्सेधमथोच्यते । [3]प्रतेरुत्तरसीमान्तं[4] द्वारोत्सेधं विधीयते ॥३७॥
[5]अथवाप्युच्छ्रये पङ्क्तिनन्दवस्वंशभाजिते । एकभागविविक्तं[6] वा तद्विस्तारमथोच्यते ॥ ३८ ॥
उत्सेधार्धेन विस्तीर्णमुत्तमं[7] द्वारमुच्यते । तत्तारे तु [8]दशांशैकहीनं मध्यममुच्यते ॥ ३९ ॥
[9]अधमं द्व्यंशहीनं स्यादथवान्य[10]प्रकारतः । प्रासादगर्भवेदांशाद्[11] द्वारविस्तारमुच्यते ॥ ४० ॥
द्विगुणं चोच्छ्रयं[12] तस्य तच्छाखागतविस्तरम् । [13]द्वारोत्सेधचतुर्भागबाहुल्यं[14] तत्तुरीयतः[15]॥४१
[16]शाखोदुम्बरदेहल्यः समाः सर्वाश्च सर्वशः[17] । [18]विचित्रपत्रवल्लीभिर्युताः [19]स्युस्तदुदुम्बरे ॥४२

---

[1] Cf. *Suprabhedāgama*, I, 31, 33b-37a :

द्वारभेदं ततः श्रृणु । वृतेरूर्ध्वोत्तरान्तं यद्द्वारस्योत्सेधमुच्यते ॥
उत्सेधार्धदशांशोनं त्र्यंशं तु परिहीनकम् । विस्तारमुत्तमं मध्यमधमं तु प्रकीर्तितम् ॥
पूर्वे वा पश्चिमे वापि द्वारं कृत्वा विचक्षणः । पद्मबन्धाद्यधिष्ठाने वृतेरुपरि निर्गमम् ॥
वृतेरधस्तादुच्छेदं मसूरे पादबन्धके । अङ्गच्छेदं तु कर्तव्यमाङ्गं तु न च कारयेत् ॥

cf. *Kiraṇāgama*, III, 25, 37-41 :

प्रासादस्याग्रतो द्वारं विस्ताराद्द्विगुणोच्छ्रितम् । उच्छ्रायस्य तु यत्पादः शाखोदुम्बरविस्तृतः ॥
विस्तारस्य तु यत्पादस्तस्य बाहुल्यतो भवेत् । विचित्रपत्रवल्लीभिः समन्तान्मिथुनान्वितम् ॥
द्वारमेवंविधं कार्यमथाङ्गुलविधानतः । साष्टषष्टिशतं माग्रमङ्गुलानां विगृह्य तु ॥
अष्टह्रासात्क्रमादेवं द्वाराणि दशसंख्यया । भवन्ति पञ्च ज्येष्ठानि त्रीण्येवं मध्यमानि तु ॥
अधमं तद्द्वयं ज्ञेयमेवं द्वाराणि कल्पयेत् । प्रासादस्याग्रतो द्वारं कर्तव्यं तद्यथाशुभम् ॥

[2] Les mots tels que उत्सेध, विस्तर, विस्तार, उच्छ्रय etc., se trouvent au neutre au lieu du masculin dans ce texte ; cf. *Rauravāgama*, vol. I, p. 65, note 6.

[3] C : प्रातः pour प्रतेः

[4] C : सीमान्तो pour सीमान्तं ; D : सीमान्ते

[5] B, F : अथवा व्युच्छ्रये ; C : अथवा स्युः श्रये ; D : अथवाप्युदये

[6] A, C, D, E, F : विहीनं pour विविक्तं

[7] C, D, F : उत्तम pour उत्तमं

[8] A : दशांशैकं हीनं

[9] C, F : अधमं वंशहीनं ; E : अधमाद्यंशहीनं

[10] E, F : अन्यत् pour अन्य

[11] B, C, F : वेदांश pour वेदांशाद् ; E : वेदांशं

[12] D : उच्छ्रयः pour उच्छ्रयं

[13] A : द्वारोत्सेधचतुर्भागं ; C, D, E, F : द्वारोत्सेधं चतुर्भागं

[14] B, E : बाहुलं pour बाहुल्यं

[15] C : तं तुरीयतः ; F : तु तुरीयतः

[16] A : सशाखोदुम्बरं देहल्याः ; D : शाखोदुम्बरदेहस्य

[17] D, E : सर्वतः

[18] B, E : सचित्रचित्र pour विचित्रपत्र ; C, F : विचित्रचित्र ; D : क चित्रचित्र

[19] B, E, F : तत्तदुदुम्बरे

[1]श्रियं सरस्वतीं चैव विघ्नेशं [2]चापि कारयेत् । शाखयोर्निधिपालौ[3] च शङ्खपद्मयुतौ[4] तथा ॥ ४३ ॥
प्रतिच्छेदविधानेन [5]द्वारं चैव प्रकल्पयेत् ।

[ षड्वर्गः ]

आद्यं स्यात्तदधिष्ठानं द्वितीयं पादमुच्यते ॥ ४४ ॥
[6]प्रस्तरं तु तृतीयं स्याच्चतुर्थं ग्रीवमुच्यते । पञ्चमं शिखरं षष्ठं [7]स्तूपिरित्यभिधीयते ॥ ४५ ॥

[ तलभेदः[8] ]

एवं [9]षड्वर्ग उद्दिष्टस्तलभेदमथ[10] शृणु । त्रिचतुःपञ्चषट्सप्त[11]वसुनन्ददशैः[12] करैः ॥ ४६ ॥

---

[1] Les *śloka* 43 à 75, les *paṭala* XIII, XIV et XV et les *śloka* 1 à 36 du *paṭala* XVII manquent dans le ms. D.

[2] B, C, E, F : चैव

[3] B, C, E : निधिवद्द्वौ pour निधिपालौ

[4] B, E, F : युक्तं pour युतौ

[5] A : द्वारो नैव ; B, C, E : द्वारेणैव

[6] A : प्रस्तारं

[7] A : सुपरीत्यभिधीयते ; F : स्थूपिरित्यभिधीयते

[8] Cf. *Svāyambhuvāgama*, 50, 7-11 :
त्रिहस्ता[त्तु] समारभ्य नवहस्तान्तमेव च । अयुग्मैरेव हस्तैस्तु कुर्यादेकतलं बुधः ॥
द्वितलं तु ततः कुर्यात्सत्रयोदशहस्तकैः । सपञ्चदशहस्तैस्तु प्रासादं तु त्रिभूमिकम् ॥
तलं प्रत्यधिकं कुर्यात्षड्हस्तादिविशेषतः । आद्वादशतलादेवं कुर्याद्विस्तारमानतः ॥
विस्तारद्विगुणोत्सेधमुत्तमं तु प्रचक्षते । विस्तारं पञ्चधा कृत्वा द्वादशांशं[तु]मध्यमम् ॥
एकादशांशमधमं विस्तारे सप्तधा कृते । आद्वादशतलादेवमुत्सेधं तु विधीयते ॥
cf. *Kāmikāgama*, I, 50, 1-9a :
अथ वक्ष्ये विशेषेण भूमिलम्बविधिक्रमम । चतुरंशादिसंस्थानं भूमिलम्बमिति स्मृतम् ॥
अथवा क्षयवृद्धिर्वा हस्तानां परिकीर्तितम् । हस्तानां सन्ततिस्तारे शतं तुङ्गं प्रकीर्तितम् ॥
एकोनं वा प्रकर्तव्यं तलं द्वादशसंज्ञकम् । त्रिषष्टिविस्तृतं तत्र नवत्युन्नतमीरितम् ॥
एकादशतलं सप्त पञ्चाशद्विस्तृतं भवेत् । चतुर्हस्तनशीत्युच्चं दशभौमं द्विजोत्तमाः ॥
एकयुक्तं तु पञ्चाशत्करं तारे तु तुङ्गके । पञ्चसप्ततिसंख्यातं नवभौमं प्रकीर्तितम् ॥
पञ्चहस्तसमायुक्तं चत्वारिंशत्करान्वितम् । षष्ट्युन्नतसमायुक्तमष्टभौमं प्रकीर्तितम् ॥
नवत्रिंशत्करोपेतं सप्तपञ्चाशदुन्नतम् । एतत्सप्त इति प्रोक्तमेकविंशतिसंयुतम ॥
* [षट्तलपञ्चतलविषयकश्लोकाः मुद्रितपुस्तके न दृश्यन्ते]
त्रिंशद्धस्तसमुत्सेधश्चतुस्तलमुदाहृतम् । तिथिहस्तविशालं यदेकविंशतितुङ्गकम् ॥
एकत्रितलमाख्यातं शास्त्रेऽस्मिन्कामिकाह्वये ।

[9] A, B, E : षड्वर्गमुद्दिष्टं ; C : षड्विधमुद्दिष्टं

[10] B,C,E,F : ततः pour अथ

[11] A : विंशं pour सप्त

[12] L'instr. pl. du mot दश est दशभिः et non दशैः ; mais on trouve dans ce texte दशैः comme dans एकादशैः, द्वादशैः etc.

विमानं कल्पितं योग्यं भवेदेकतलस्य[1] तु[2] । [3]पञ्चषट्सप्तभिर्हस्तैर्वसुनन्ददशैः[4] करैः ॥ ४७ ॥
कल्पितं धाम योग्यं स्याद् द्वितलस्य जनार्दन[5] । सप्ताष्टनवहस्तैश्च दशैकादशहस्तकैः ॥ ४८ ॥
द्वादशैश्च कृतं धाम त्रितलस्य [6]प्रकीर्तितम्[7] । [8]नन्दांशरुद्रसूर्यैश्च त्रयोदशचतुर्दशैः ॥ ४९ ॥
[9]कृतं [10]चतुस्तले योग्यं[11]; रुद्रसूर्यत्रयोदशैः । [12]मनुपञ्चदशैश्चैव षोडशैर्धामहस्तकैः ॥ ५० ॥

---

[1] A : भवेदेकतरस्य

[2] Cf. *Dīptāgama*, 6, 15b-17a :
अधुना संप्रवक्ष्यामि चैकभूमिप्रमाणकम् । त्रिहस्तं पञ्चहस्तं च सप्तहस्तं नवं तथा ॥
चतुर्विधेन विस्तारं तलमेकस्य कीर्तितम् । विस्तारद्विगुणोत्सेधं सर्वेषां तु विधीयते ॥

[3] A : पञ्चभि: षट्सप्तहस्तै:  [4] Voir note 12, p. 78.

[5] Cf. *Dīptāgama*, 6, 1-2 :
अथातः संप्रवक्ष्यामि द्वितलं पञ्चमानकम् । पञ्चसप्तनवहस्तमेकादशं त्रयोदशम् ॥
हस्तसंख्या भवेत्तत्र द्वितलस्य विशेषतः । विस्तारद्विगुणोत्सेधं सर्वेषां तु विधीयते ॥

[6] E : प्रकीर्तितः

[7] Cf. *Dīptāgama*, 8, 1-4 :
अथातः संप्रवक्ष्यामि पञ्चमानं त्रिभूमिकम् । विस्तारोत्सेधमधुना एकैकं वक्ष्यतेऽधुना ॥
विस्तारं सप्तहस्तं स्यादुच्छ्रायाद् द्विगुणं भवेत् । नवहस्तं स्याद्विस्तारमुत्सेधं द्विगुणं भवेत् ॥
एकादशकरो तारे सप्तादश समुच्छ्रयः । विंशद्धस्तोच्छ्रयं हर्म्यविस्तारं तु त्रयोदशम् ॥
पञ्चादशकरो हर्म्ये उच्छ्रयं चैकविंशतिः । एवं पञ्चविधं प्रोक्तं विस्तारोच्च विशेषतः ॥

[8] A, E, F : नन्दांशा pour नन्दांश ; C : नन्दांशं

[9] B et E omettent les *śloka* 50 et 51a ; le *śloka* 50 se trouve entre 47 et 48 dans le ms. A.

[10] A : बाहुद्वये pour चतुस्तले

[11] Cf. *Dīptāgama*, 9, 1-4a :
अतः परं प्रवक्ष्यामि चतुर्भूमेस्तु लक्षणम् । पञ्चमानप्रमाणेन प्रासादं वक्ष्यतेऽधुना ॥
नवहस्तं समारभ्य सप्तादशकरान्तकम् । पञ्चधा विस्तरं प्रोक्तं प्रासादानां विशेषतः ॥
विस्तारद्विगुणोत्सेधं नवैकादशहस्तकैः । पादोनद्विगुणोत्सेधमात्रकं वा विमानकम् ॥
शेषं चाध्यर्धमुत्सेधं पादुकादिशिखान्तकम् ।

[12] F : मनुपूर्वं दशैश्चैव

कृतं [1]पञ्चतले योग्यं[2] ; त्रयोदशचतुर्दशैः । तिथिषोडशहस्तैश्च तथा सप्तदशैरपि ॥ ५१ ॥
[3]अष्टादशकरैश्चापि धाम स्यात् षट्तले कृतम् । तिथिषोडशहस्तैश्च तथा सप्तदशैरपि ॥ ५२ ॥
अष्टादशकरैस्तद्वत्करैरेकोनविंशकैः । [4]विंशैश्चैव [5]कृतं सप्ततले योग्यं [6]भवेदथ ॥ ५३ ॥
करैः सप्तदशैरष्टादशैरेकोनविंशकैः । विंशकैरेकविंशैश्च द्वाविंशैरष्टभूमिके ॥ ५४ ॥
[7]एकोनविंशकैर्विंशैरेकविंश[8]करैस्तथा । [9]द्वाविंशैश्च त्रयोविंशैश्चतुर्विंशैः कृतं तु यत् ॥ ५५ ॥
योग्यं नवतले [10]धाम्नि ; ततश्चाप्येकविंशकैः । द्वाविंशैश्च त्रयोविंशैश्चतुर्विंशैः करैरपि[11] ॥५६॥
पञ्चविंशैश्च षड्विंशैः कृतं [12]दशतले भवेत् । त्रयोविंशैश्चतुर्विंशैः पञ्चविंशैः करैरपि ॥ ५७ ॥
षड्विंशैः सप्तविंशैश्च तथा चैवाष्टविंशकैः[13] । [14]कृतं धाम [15]भवेद्योग्यमेकादशतलस्य तु ॥५८॥
पञ्चविंशैश्च षड्विंशैः [16]सप्तविंशैः करैस्तथा । [17]अष्टाविंशैस्तथा चैव [18]करैरेकोनत्रिंशकैः ॥५९॥
त्रिंशैश्चापि कृतं धाम योग्यं स्याद् द्वादशे तले । [19]एवं हस्तैः क्रमाद्धामतलं निश्चित्य कारयेत्॥६०

---

[1] A : पञ्चतरे

[2] Cf. *Dīptāgama*. 63, 1-3 :
अतः परं प्रवक्ष्यामि पञ्चभूमेस्तु लक्षणम् । पञ्चसंख्याप्रकारेण प्रासादं कारयेद् बुधः ॥
रुद्रहस्तं समारभ्य यावदेकोनविंशतिः । पञ्चावान्तरमुच्यन्ते प्रासादानां विशेषतः ॥
विस्ताराद्द्विगुणोत्सेधमाद्ययोस्तु द्वयोः स्थितम् । पादोनद्विगुणोत्सेधमन्येषु त्रितयेषु च ॥

[3] A et B omettent le *śloka* 52.

[4] C omet les demi-*śloka* 53b et 54a

[5] A : कृता

[6] E : भवेतथा

[7] E, F : एकोनविंशकं pour एकोनविंशकैर्

[8] B, E, F : एकविंशैः pour एकविंश

[9] F omet les demi-*śloka* 55b et 56a

[10] A : धाम

[11] B : चतुर्विंशत्करैरपि ; C, E, F : चतुर्विंशकरैरपि

[12] B : दशतलं ; F : दशतलैः

[13] La forme grammaticale correcte est अष्टाविंशकैः

[14] B : कृतवाम pour कृतं धाम ; F : कृतं वाम

[15] B : भवेद्यत्तद् pour भवेद्योग्यम् ; E : भवेद्युक्तम्

[16] C, E : सप्तविंशकरैस्तथा

[17] C, F : अष्टविंशास्ततश्चापि ; E : अष्टविंशैस्ततश्चापि

[18] B, C, E : त्रिंशैरेकोनकैरपि ; F : त्रिंशदेकोनकैरपि

[19] C : एवं हस्तकृते धामतलं ; B, E, F : एवं हस्तैः कृतं धामतलं

[ एकतलप्रासादस्य षड्वर्गविधिः[1] ]

एक[2]भूमिविधानस्य[3] त्वधिष्ठानादिरुच्यते । [4]उत्सेधे वसुभागे[5]ऽत्राधिष्ठानं व्योमभागतः ॥६१
नेत्रभागे भवेत्पादं प्रस्तरं चैकभागतः । [6]कण्ठमेकेन कर्तव्यं द्वाभ्यां तु शिखरं भवेत् ॥ ६२ ॥
[7]स्तूपिरेकेन कर्तव्या [8]ह्यथवात्र नवांशके । [9]सार्धभागैकभागेन [10]मसूरं द्विगुणं ततः ॥६३॥
पादतुङ्गं ततश्चापि प्रस्तरं स्यान्मसूरवत् । ग्रीवमेकांशसंयुक्तं शिखरं स्याद् द्वियंशकम्[11] ॥ ६४ ॥

---

[1] Cf. *Kāmikāgama*, I, 60, 4-6a :

एकद्वित्रिचतुष्पञ्चषडंशस्त्वेकभूमिकम् । त्रिचतुःपञ्चमात्रं तु पादविष्कम्भ इष्यते ॥
एकभागमधिष्ठानं पाददैर्घ्यं द्विभागतः । प्रस्तरश्चैकभागः स्यात्कण्ठस्त्वेकेन कीर्तितः ॥
शिखरं स्याद्द्विभागेन स्थूपिरेकेन कीर्तितः ।

cf. *Kāraṇāgama*, I, 7, 23b-25 :

षड्वर्गसहितं कुर्याल्लक्षगेन समन्वितम् । विस्तारयुगभागैकं वस्त्वाधारस्य चोच्छ्रयम् ॥
पादवर्गसमं तस्य द्विगुणं चेति कीर्तितम् । प्रस्तरं चरणार्धं तु तत्समं ग्रीवमुच्यते ।
शिखरं चरणायामं स्थूप्युत्सेधं तदर्धकम् ॥

[2] B : भूम pour भूमि

[3] C : विधानं स्याद् pour विधानस्य

[4] C : उत्सेध pour उत्सेधे

[5] A : च pour अत्र

[6] A : कर्णम् pour कण्ठम्

[7] C : स्थूपि pour स्तूपि ; B : स्तूपिरेका न कर्तव्यो

[8] A : यथात्र नवांशके ; B, C : वामवात्र नवांशकैः ; E : वामवोऽत्र नवांशकैः

[9] B, C, E : सार्धभागेन भागेन

[10] मसूरं signifie अधिष्ठानम्

cf. *Kāmikāgama*, I, 5, 18 :

मसूरकमधिष्ठानं वस्त्वाधारं धृतालकम् । चत्वार्येतानि नामानि पर्यायवचनानि च ॥

[11] La forme grammaticale correcte est द्व्यंशकम् ; mais le mètre ne serait pas respecté ; on trouve l'expression त्रियम्बकम् au lieu de त्र्यम्बकम् ; cf. त्रियम्बकं संयमिनं ददर्श dans le *Kumārasambhava* de Kālidāsa ; le mot द्वियंशकम् est peut-être formé suivant le même usage.

[1]स्तूपिरेकांशकोच्छ्रेया[2] इति [3]षड्वर्गजो विधिः ।

[ प्रासादानां नामभेदः, अलंकारश्च ]

[4]नामभेदमलङ्कारं धाम्नां वक्ष्यामि तच्छृणु ॥ ६५ ॥

प्रासादस्त्रिविधः प्रोक्तस्त्रैविध्यमपि[5] कथ्यते । नागरं [6]द्राविडं चैव [7]वेसरं [8]चेति नामतः[9]॥६६

[ नागरम् ]

[10]भौमादि[11]स्तूपिपर्यन्तं नागरं चतुरश्रकम् ।

[ द्राविडम् ]

[12]कण्ठात्प्रभृति चाष्टाश्रं द्राविडं परिकीर्तितत् ॥ ६७ ॥

[ वेसरम् ]

[13]कण्ठात्प्रभृति वृत्तं यद्वेसरं धाम कथ्यते ।

---

[1] C : स्थूपि pour स्तूपि

[2] B, C, E, F : एकांशतो ज्ञेयम् pour एकांशकोच्छ्रेया

[3] C : षड्वर्गतो

[4] A : नामभेदतलंकारधाम्नां

[5] B : इति pour अपि : C : अथ

[6] C : द्रविडं

[7] C : खेसरं

[8] B, C, E, F : चैव pour चेति

[9] Cf. *Suprabhedāgama*, I, 31, 38-40a :
नागरं द्रविडं चैव वेसरं च त्रिधा मतम् । कण्ठादारभ्य वृत्तं यत्तद्वेसरमिति स्मृतम् ॥
ग्रीवमारभ्य चाष्टाश्रं विमानं द्राविडाख्यकम् । सर्वं वै चतुरश्रं यत्प्रासादं नागरं त्विदम् ॥

cf. *Kāraṇāgama*, I, 7, 116-117 :
नागरं द्राविडं चैव वेसरं च त्रिधा भवेत् । भौमादिस्थूपिपर्यन्तं युगाश्रं नागरं भवेत् ॥
वेदिप्रभृति चाष्टाश्रं द्राविडं चेति कीर्तितम् । कर्णप्रभृति वृत्तं यद्वेसरं परिकल्पयेत् ॥

[10] A : होमादि pour भौमादि ; B, F : हेमादि ; E : धामादि

[11] C, F : स्थूपि pour स्तूपि

[12] C, F : कर्णात् pour कण्ठात्

[13] C, F : कर्णात् pour कण्ठाद्

[ सौभद्रम्[1] ]

सभद्रं[2] [3]सविशालं[4] स्यात्कर्ण[5]कूट[6]समन्वितम् ॥ ६८ ॥
[7]अष्टाश्रवेदिकायुक्तमष्टपञ्जर[8]संयुतम् । [9]सौभद्रं भोगदं प्रोक्तं धाम सर्वसुरोचितम् ॥ ६९ ॥

---

[1] Cf. *Kāmikāgama*, I, 60, 90b-100 :
त्रिचतुष्पञ्चहस्तादिर्द्विद्व्यङ्गुलविवर्धनात् । एकविंशतिहस्तान्तो व्यामतुङ्गस्तु पूर्ववत् ॥
त्रयोदशकरव्यासमष्टधा विभजेत्ततः । एकांशं कूटविस्तारं शालायामो द्विभागतः ॥
भागः पञ्जरविस्तारो भवेदूर्ध्वमथोऽष्टधा । प्राग्वदेव सभाशालापञ्जराणां तु कल्पनम् ॥
ऊर्ध्वे षडंशे भागेन कूटे विस्तार ईरितः । द्विभागः कोष्ठकायामो नीडं भागोर्ध्वमिष्यते ॥
ऊर्ध्वे गुणांशभागेन भद्रदण्डेन मध्यमे । उच्चं तु विभजेद्धाम्नो नवत्रिंशतिसंख्यया ॥
सार्धद्व्यंशमधिष्ठानं पञ्चांशः पाददैर्ध्यकः । तस्यार्धं प्रस्तरोत्सेधः सत्रिपादयुगांशकः ॥
ऊर्ध्वभूम्यङ्घ्रिकोत्सेधः सपादद्व्यंशमंशकम् । जङ्घा च द्विगुणं चोर्ध्वे द्व्यंशेन प्रस्तरोदयः ॥
भागाधिकचतुर्भाग उपरिष्टात्स्वतुङ्गता । स्यात्सत्रिपादभागेन प्रस्तरो वेदिकांशतः ॥
गलोच्चमश्विनीभागः सार्धवेदै शिरो भवेत् । शेषभागैः शिखामानं हर्म्यान्तं चतुरश्रकम् ॥
रविसंख्या भवेत्सौष्ठिकोष्ठं तद्वत्सपञ्जरम् । शिखरे वेदनासाः स्युरल्पनास्यस्तथैव च ॥
सर्वालङ्कारसंयुक्तमेतद्धर्म्यं सुभद्रकम् ।

[2] Pour la définition du भद्रम् voir *Suprabhedāgama*, I, 33, 104-108 :
पूर्ववत्षोडशांशं तु कृत्वोत्सेधं विधानतः । भागेनोपानमेकेन चतुर्भिर्जगती भवेत् ॥
कुमुदं तु त्रिभिर्भागैरेकेनैव तु पट्टिका । कण्ठं कुर्यात्त्रिभिर्भागैरेकांशेन तु पट्टिका ॥
महापट्टिका द्व्यंशा तु एकेन घृतवारिणि । भद्रपीठं समाख्यातम् ”

[3] B : सविनालः

[4] Pour la définition du विशाल voir *Suprabhedāgama*, I, 31, 104a :
स्तम्भानां तु शतैर्युक्तं विशालमिति संज्ञितम्

[5] A : कण्ठ pour कर्ण

[6] Pour la définition du कर्णकूट voir *Kāmikāgama*, I, 55, 124b-122a :
चतुरश्रं तु वस्वश्रं षोडशाश्रं तु वर्तुलम् । अस्तकस्थूपिकोपेतं कर्णकूटमिदं स्मृतम् ॥

[7] F : अष्टाश्रं pour अष्टाश्र

[8] Pour la définition du पञ्जर voir *Kāmikāgama*, I, 55, 127 ;
हंसतुण्डनिभं पृष्ठे शालाकारं मुखे मुखे । पञ्जरं विहितं कूटकोष्ठयोरन्तरं द्विजाः ॥

[9] A : सभद्रं

[ स्वस्तिकबन्धनम्[1] ]

[2]चतुरश्रायतं चैव [3]स्तूपित्रयसमन्वितम् । पञ्जरादिविहीनं [4]यत्स्वस्तिबन्धनमुच्यते ॥ ७० ॥

[सर्वतोमुखम्[5] ]

आयताश्रं विना प्रोक्तं लक्षणेन समन्वितम् । आश्रमाश्रशिरोग्रीवं[6] वृत्तवेदिकया युतम् ॥७१॥
[7]महानासिकया युक्तं [8]सर्वतोमुखमुच्यते ।

[सार्वकामिकम् ]

उक्तालङ्कारसंयुक्तमायतं वृत्तमेव च ॥ ७२ ॥
[9]कर्णकूटविहीनं[10] च वृत्तायतगलं तथा । [11]द्व्यश्रवृत्तमहानास्यामग्रे ललाटसंयुतम् ॥ ७३ ॥

---

[1] Cf. *Kāmikāgama*, I, 60, I5b-17a :
सार्धवेदैः शिरः स्थूपिरध्यर्धेन विनिर्मितः । चतुरश्रमधिष्ठानं तद्वत्कन्धरमस्तकम् ॥
चतुःकूटसमायुक्तं चतुःकोष्ठसमन्वितम् । क्षुद्रनीडमुपर्यष्टौ नाम्नैतत्स्वस्तिकं भवेत् ॥

[2] A : चतुरश्रायतनं चैव

[3] C, F : स्थूपि pour स्तूपि

[4] A omet यत्

[5] Cf. *Kāraṇāgama*, I, 7, 101-107a :
मन्दिरस्य तु विस्तारं षड्भागेन तु भाजयेत् । पक्षांशं मध्यमे चैव कोणेष्वेकांशमेव तु ॥
अध्यर्धदण्डमानेन बाह्ये चैव तु निर्गमम् । कारयेत्कर्णकूटानि प्रस्तरोपरि पूर्ववत् ॥
चतुर्विंशन्नासिकाभिः कपोतं कारयेत्ततः । शिखरोपेतकोष्ठानि चतुर्दिक्षु प्रकल्पयेत् ॥
यदुच्चं तु महानास्याः कोष्ठस्योत्सेधमुच्यते । महानास्याश्च निर्यूहं शमनिर्यूहमुच्यते ॥
शालायां चैव विस्तारं कूटस्य द्विगुणं भवेत् । शालायामं त्रिधा कृत्वा द्विभागं शिखरं भवेत् ॥
शेषं स्थूपिरिति ख्यातं कुक्षिनासिविचित्रितम् । पार्श्वयोः पृष्ठदेशे तु तोरणानि प्रकल्पयेत् ॥
सर्वतोमुखमेवं स्यात्सर्वदेवार्हकं भवेत् ।

[6] B, E, F : ग्रीव pour ग्रीवं

[7] C, E, F : महानामाष्टसंयुक्तं

[8] A : पूर्वतोमुखमुच्यते ; B,C,E,F : पर्वतोमुखमुच्यते

[9] B, C : कण्ठ pour कर्ण

[10] B, C, E, F : विहीने pour विहीनं

[11] B : द्यश्रवृत्तं महानास्यमग्रे ; E, F : द्यश्रवृत्तान् महानाड्यामग्रे

[1]पार्श्वयोः पृष्ठतश्चापि क्षुद्रनासिकया[2] युतम् । [3]हस्तिपृष्ठविधानं[4] यत्सार्व[5]कामिकमुच्यते ॥७४॥

एवं [6]प्रासाद उद्दिष्टः समासेन जनार्दन[7] ॥ ७५ ॥

इत्यजिताख्ये महातन्त्रे [क्रियापादे] [8]प्रासादलक्षणविधिर्नाम

द्वादशः पटलः ॥

---

[1] C : पश्चाधो pour पार्श्वयोः

[2] C : नाडिकया pour नासिकया

[3] B, E, F : हस्त pour हस्ति

[4] Pour la définition du हस्तिपृष्ठ voir *Dīptāgama*, 7, 10b-12a :
द्व्यश्रवृत्तं ततः कुर्यात्प्राङ्मुखा नासिका महत् । पूर्वे ललाटसंयुक्तं गोपुरस्याकृतिर्भवेत् ॥
पार्श्वे पृष्ठं च संयुक्तं शिखरं तु त्रिरेव च । महानासीत्रिभिर्युक्तं हस्तिपृष्ठमिहोच्यते ॥

Voir aussi *Kāmikāgama*, I, 60, 9a:
द्व्यश्रवृत्तशिरोग्रीवं हस्तिपृष्ठमुदाहृतम् ॥

[5] A: सर्व pour सार्व

[6] A : प्रासादमुद्दिष्टं

[7] Le *Suprabhedāgama*, (I, 31, 40-53) donne les noms et les définitions des autres temples suivants: कैलास, मन्दर, मेरु, हिमवत्, निषध, नीलपर्वत, माहेन्द्र, नलीनक, प्रलीनक, नन्द्यावर्त, श्रीप्रद, पर्वताकृति; le *Kāraṇāgama*, (I, 50) donne श्रीकान्त, कैलासकान्त, सर्वतोमुख, पाञ्चाल etc.

[8] A : प्रासादलक्षणपटलस्त्रयोदशः ; B : प्रासादलक्षणविधिर्द्वादशः पटलः ; C : प्रासादलक्षणं नाम द्वादशः पटलः ; F : प्रासादलक्षणं द्वादशपटलः

## [त्रयोदशः पटलः]

## [अधिष्ठानविधिः[1]]

[2]अधिष्ठानमथो[3] वक्ष्ये शृणु तल्लक्षणं [4]हरे । उपाननिर्गमं [5]पादाद् द्विदण्डेन समन्ततः ॥ १ ॥
पादाधिकेन वा कुर्यादथवार्धाधिकेन च[6] ॥

[प्रथमं पादबन्धम्]

अष्टाविंशतिभागिके[7] तदुदये[8] द्वाभ्यामुपानं तथा
[9]पादं क्षुद्रमुपानमेकमुपरिष्टात्षड्भिरेकाम्बुजम् ।
एकं [10]कण्ठमथाब्जमेकमथ च त्र्यंशं भवेत्कैरवं[11]
[12]पद्मं चैकमधोर्ध्वतश्च[13] खमितं [14]कम्पं तु कण्ठं त्रिभिः ॥ २ ॥
तस्योर्ध्वेऽथ[15] च कम्पमेकमथ [16]तत्पद्मं च तद्वद्भवेत्
तस्योर्ध्वेऽपि च पट्टिका त्रिभिरतः कम्पं तु भागान्वितम् ।
[17]एवं यद्रचितं मसूरकमिदं प्रोक्तैस्तु भागैः क्रमाद्
[18]अस्वप्नालययोग्यमित्यभिहितं तत्पादबन्धाह्वयम् ॥ ३ ॥

---

[1] Pour अधिष्ठानविधि, voir *Aṃśumatkāśyapa*, 6, *Kāmikāgama*, I, 52, *Kāraṇāgama*, I, 5, *Dīptāgama*, 2, et *Suprabhedāgama* I, 31.

[2] Les *paṭala* 13 et 14 manquent dans le ms. C

[3] A : अतो pour अथो

[4] B : चरेत् pour हरे

[5] F : पादद्विदण्डेन

[6] Cf. *Kāraṇāgama*, I, 5, 15-18 :

अधिष्ठानमथोच्यते । प्रथमं फलकोर्ध्वे वा उपपीठे ध्वजेऽपि वा ॥
उपानोर्ध्वे त्वधिष्ठानं कल्पयेदुभयेऽपि वा । प्राग्बाह्ये जन्मनिर्यूहं मूले पादद्वयं भवेत् ॥
निर्यूहं त्रिविधं कृत्वा बाह्यैकांशं व्यपोह्य च । पक्षांशेन समायुक्तं कारयेज्जगतीं पुनः ॥

[7] E, F : भाजिते pour भागिके

[8] E : च वितती pour तदुदये ; F: तदुभये

[9] B, E, F omettent पादं

[10] F : कर्णम् pour कण्ठम्

[11] A : पञ्जरं pour कैरवम्

[12] पादं pour पद्मं

[13] B : बकमिदं pour श्च खमितं ; F : श्चकमिदं

[14] F : प्रोक्तं pour कम्पं

[15] B, E : अपि pour अथ

[16] A : तत्पादं pour तत्पद्मं

[17] A : एवं यद्गुपत्रब्रह्मसूत्ररमिदं ; B, E, F : एवं यद्रचितं ममस्थ करदिदं

[18] B, E, F : दुःस्वप्न pour अस्वप्न

[ द्वितीयं पादबन्धम् [1]]

गायत्र्यंशमितेऽष्टभिर्वसुमती [2]सप्तांशकैः कैरवं
[3]कम्पं चैकमथो गलं त्रिभिरथो कम्पं [4]पुनः स्वांशभाक् ।
तस्योर्ध्वे [5]त्रिभिरंशकैः परिमितां कुर्यान्महापट्टिकाम्
एकांशेन ततश्च कम्पमपरं स्यात्पादबन्धाह्वयम् ॥ ४ ॥

[ सुरपथम् ]

अष्टाविंशांशकेऽस्मिन्नयनपरिमितं [6]पादुकं स्याद् द्विरब्जं
क्षुद्रोपानः[7] स्वभागं [8]जगतिवसुमती सप्तभिः कैरवं च ।
अष्टाश्रं [9]तद्वदूर्ध्वे [10]सुरपथमिदमालिङ्गमग्न्यंशमूर्ध्वे
[11]कण्ठं चैकेन [12]कम्पं जलजमपि तथा पट्टिकाग्न्यंशयुक्ता ॥ ५ ॥

---

[1] Cf. *Suprabhedāgama*, I, 31, 23-26a :
अधिष्ठानस्य चोत्सेधे चतुर्विंशतिभाजिते । द्विभागा पट्टिका प्रोक्ता ह्युपानं चैकभागिकम् ॥
षड्भागा जगती प्रोक्ता कुमुदं पञ्चभागिकम् । एकांशा पट्टिका प्रोक्ता ग्रीवा चैव त्रियंशका ॥
एकांशां पट्टिकां विद्धि त्रियंशा चोर्ध्वपट्टिका । महापट्टिका त्रियंशा एकं वाजनमुच्यते ॥
पादबन्धमिति ख्यातं सर्वकार्येषु पूजितम् ।

cf. *Dīptāgama*, 2, 14b-16 :
यदधिष्ठानमानं हि त्रयोविंशतिभाजितम् । अष्टभागैर्जगत्युच्चं सप्तांशं कुमुदोदयः ॥
कुमुदाष्टांशकं कुर्यादेकेनोपरिपट्टिका । कण्ठं तत्त्रिभिरंशैश्चाप्यंशेनोपरिपट्टिका ॥
त्रिभिरंशैर्महापट्टी पादबन्धमिदं स्मृतम् ।

[2] A : सप्तांशकं

[3] B, E, F : कम्पं चैकेन कण्ठं त्रियोगस्त्रिभिरथैः कम्पं

[4] E : पुनश्चांशभाक्

[5] E, F : त्रिभिरंशकैरथ पुनश्चैकां महापट्टिकाम्

[6] B, E, F : पादुकं तद्वदंकं वाब्जं

[7] A : क्षुद्रोपानान् ; B, E : क्षुद्रोपवनः ; F : क्षुद्रोपयानः

[8] B, E : भवति pour जगति

[9] A : तन्नदूर्ध्वे

[10] A : सुरपथमिति मालिङ्गम् ; B : सुरपथमिदमालिङ्ग्यम्

[11] B, E : कण्ठेनैकेन

[12] B : पङ्क

[कपोतबन्धम्][1]

[2]एकत्रिंशांशकेऽस्मिन्द्वितयपरिमितं पादुकं चापि पद्मं
क्षुद्रोपानं तदंशं शरमितमवनिः[3] पद्ममेकं दृगेकम्[4]
पद्मं तद्वत्सुवृत्तं कुमुदमनलभागेन पद्मं [5]तथैकं
व्योमांशं कम्पमूर्ध्वे गलमनलमितं [6]कम्पमेकं च कुर्यात् ॥ ६ ॥

तस्योर्ध्वे [7]पादमेकं त्रिभिरथ [8]च कपोतं तु नासीयुतं तद्
भागेनालिङ्गमूर्ध्वेऽन्तरितमपि तथा व्यालयुक्तं प्रतिश्च ।
द्वाभ्यामेकेन सर्वोपरि भवति ततो वाजनं भागयुक्तं[9]
नाम्ना [10]कापोतबन्धं भवति पुनरिदं [11]देवधाम्नां प्रयोज्यम् ॥ ७ ॥

---

[1] Cf. *Dīptāgama*, 2, 50-53:

अंशेनोपानकं कुर्यात् षड्भागा जगती भवेत् । पञ्चांशं कुमुदोत्सेधमंशं वेत्रं तु कारयेत् ॥
त्र्यंशकेन गलं कुर्यादंशेनोपरिपट्टिका । वृत्तपट्टी तथैवांशं पद्मोच्चं त्रिभिरंशकैः ॥
अंशेनालिङ्गमंशेन कुर्यादन्तरितं बुधः । द्व्यांशं प्रतिरुत्सेधमंशेनोपरि वाजनम् ॥
नासिकाभिर्लताभिश्च शोभितं मकरैः कृतम् । एतत्कपोतबन्धं स्याद्भागषड्विंशतीयुतम् ॥

cf. *Īśānaśivagurudevapaddhati*, vol. IV, p. 309:

एकोनत्रिंशदंशेऽस्मिन्नधिष्ठानोदये भवेत् । तदेव पद्मं कुमुदं प्राग्वत्कम्पं च वाजनम् ॥
ऊर्ध्वाब्जमंशादध्यर्धात्कपोतं चांशतोंऽशतः । अलिङ्गान्तरितं त्र्यंशं प्रत्युन्नतमथांशतः ॥
सार्धेन वाजनं चेति प्रोक्तं कापोतबन्धनम् । द्विचतुर्थवपादार्धत्रिपादांशविवर्धनात् ॥
हान्या प्रत्यङ्गभङ्गं तु शोभां कुर्याद्यथारुचि ।

[2] A : एकत्र्यंशांशके ; B, F : एकस्त्र्यंशांशके
[3] B, E, F : शरमितवमतिः
[4] B, F, F : धृतेकम्
[5] B, E, F : तथैकांशं व्योमांशकं मूर्धा
[6] B, E F : कम्पमेकेन
[7] E, F : पद्मम् pour पादम्
[8] A omet च
[9] A : भागयुक्ते
[10] A : कापोतिबन्धं ; E : मेघान्तबद्धं
[11] E : देवधाम्नि

[प्रथमं प्रतिबन्धम्[1]]

अष्टांशं जगती तथैव कुमुदं [2]स्यादेकविंशांशके
 स्वालिङ्गान्तरितावुभौ निगदितावेकैकभागान्वितौ ।
द्वाभ्यां तु [3]प्रतिरेकभागमथ तत्कम्पं तु नाम्ना भवेद्
 एतद्दै प्रतिबन्धमुक्तमखिले [4]स्वर्गौकसामालये ॥ ८ ॥

[द्वितीयं प्रतिबन्धम्[5]]

निध्यंशेऽथ[6] [7]मसूरके शरमिता [8]धात्री तथा कैरवं
 [9]चालिङ्गं गगनांशमन्तरितकं [10]तद्वद्भवेदूर्ध्वतः ।
द्वाभ्यां [11]स्यात्प्रतिरूर्ध्वतोऽशरचितं तद्वाजनं कल्पयेद्
 एतद्भूसुरदेवभूपतिविशां वासेषु [12]योग्यं भवेत् ॥ ९ ॥

---

[1] Cf. *Dīptāgama*, 2, 16b-19a :
उपोपानं तु भागेन जगती सप्तभागिका । वृत्तं वर्तुलवप्रं च वेत्रं पादाधिकांशकम् ॥
तथैवान्तरितोत्सेधं द्व्यंशार्धं प्रतिरुच्छ्रकम् । प्रतिवाजनमेकांशं भागैर्विंशतिभिर्युतम् ॥
प्रतीमुखं करीभूत्वा नागवक्त्रसमायुतम् । प्रतिबन्धमिदं नाम्ना देवयोग्यमिति स्मृतम् ॥

[2] A : तद्देवविंशांशके ; B, F : स्यादेकविंशांशकैः

[3] A : प्रतिकैकभागमथ

[4] F : स्वर्गौकसारालये

[5] Cf. *Kāraṇāgama*, I, 5, 35-37 :
"प्रतिबन्धमथ शृणु । निध्यंशं विभजेदायं भूतांशं जगती भवेत् ॥
तथा वै कुमुदोत्सेधं कम्पमेकेन कारयेत् । एकेनान्तरितं प्रोक्तं प्रतिमुख्यं तु द्व्यंशकम् ॥
प्रतिमुखं कर्करीभूतं नागवक्त्रमथापि वा । प्रतिवाजनमंशेन एतत्स्यात्प्रतिबन्धकम् ॥

[6] E : तु pour अथ

[7] F : मधूरके

[8] A : धात्रं

[9] A : नालिङ्गं

[10] B, F : द्वन्द्वं pour तद्वत्

[11] A : स्यात्प्रतिरुद्धतो शरचितं

[12] B, E, F : योज्यं

[ तृतीय प्रतिबन्धम् ]

[1]त्रिंशांशेऽथ मसूरके नयनदृग्व्योमांशभूतांशकै[2]-
वेदैकैकगुणाम्बरैः [3]क्रमवशादंशैरधःपादुकम् ।
पद्मं क्षुद्रमुपानकं वसुमतीं [4]कुर्यात्ततः कैरवं
चालिङ्गान्तरितौ [5]प्रतिं तदुपरि प्रोक्तं हि [6]तद्वाजनम् ॥ ७० ॥

[ पद्मबन्धम्[7] ]

अष्टादशांशके तस्मिन्द्वाभ्यां पादुकमुच्यते । पञ्चभिः [8]पद्ममुद्दिष्टं [9]कण्ठमेकेन कारयेत् ॥ ११ ॥
एकभागादधःपद्मं कुमुदं त्रिभिरुच्यते । ऊर्ध्वपद्मं [10]तथैकेनालिङ्ग[11]मेकेन कारयेत् ॥ १२ ॥
एकेनान्तरितं तत्र द्वाभ्यां प्रतिरुदाहृतम् । [12]पद्मं वाजनमेकेन पद्मबन्धमिदं भवेत् ॥ १३ ॥

[ नालम्[13] ]

कैरवान्तं गलान्तं वा पट्टिकान्तं भवेत्स्थलम् । उपपीठेऽथवा कुर्यात्स्थलं तद्दक्षिणोन्नतम् ॥१४॥
[14]जलनिर्गमनच्छिद्रं प्रासादस्योत्तरे भवेत् । ऐशान्यां वा [15]दिशीनान्ये मध्ये वा स्थलसंश्रितम् ॥

---

[1] F : विंशांशेन मधूरकैः

[2] F : विंशांशकैर् pour भूतांशकैर्

[3] A : कुमुदशादंशैरधः ; E : क्रमवशादंशे रधः

[4] B : कुर्यादधः

[5] E : वृतिं

[6] B, E, F : तच्चागनम्

[7] Cf. *Suprabhedāgama*, I, 31, 18-22 :
पद्मबन्धं प्रवक्ष्येऽहं शृणु तत्त्वं गजानन । उत्सेधं सप्तविंशत्तु द्विभागा पट्टिका भवेत् ॥
एकांशं दलमेवोक्तमुपानं चैकभागिकम् । जगती तु षडंशा स्याद् द्विभागार्धदली क्रमात् ॥
अर्धभागं भवेत्स्कन्धं भागमूर्ध्वदलं तथा । त्रिभागं कुमुदं विद्यादधोऽब्जं भागमेव तु ॥
पट्टिका चैकभागं तु ग्रीवा चैव द्विभागिका । तदूर्ध्वमेकभागं तु पद्मबन्धं ततोपरि ॥
द्विभागा पट्टिका या तु एकभागेन योजनम् । तत्प्रत्येकभागं तु पद्मबन्धमिति स्मृतम् ॥

[8] B, E, F : पद्म निर्दिष्टं

[9] E : कर्णम् pour कण्ठम्

[10] B : अथ pour तथा

[11] A, B : लिङ्गम pour आलिङ्गम्

[12] B, E, F : पद्मवाजनमेकेन

[13] Cf. *Kāraṇāgama*, I. 5. 53b-58 et 61b-62a :
अधस्तात्तु महापट्ट्या नालीनिर्गमनं कुरु । हस्तं वाथ त्रिपादं वा वितस्तिर्वा विशेषतः ॥
व्रजेद्बाह्ये विनिष्क्रान्तां नालीं शैवमयीं तथा । गजोष्ठसदृशाकारां सक्रत्रिसमुखोत्तराम् ॥
भूतसिंहोपगूढां वा साधारां वाथ कारयेत् । द्विदण्डं वा त्रिदण्डं वा गर्भगेहे तु वेशनम् ॥
लिङ्गतारत्रिपादं वा द्विगुणं वार्धमेव वा । प्रणालमूलविस्तारं त्रिभागैकाग्रविस्तरम् ॥
व्यासत्रिभागभागोनं बहुलं तत्त्रिभागभाक् । वारिसञ्चारगम्भीरं तारं श्लक्ष्णं च अजरम् ॥
अनिम्नोन्नतमाभिन्नैस्तदन्यग्रात्क्रमोन्नतम् । . . .
लिङ्गप्रासादगर्भस्य यावन्नालस्य चावधि । धारां तु केवलं कुर्याद्भित्तेर्नालस्य सीमनि ॥

[14] A : जलनिर्गमनिच्छिद्रं

[15] A : दिशीनेऽन्ये ; B, E : दिशीशेऽन्ये ; F : दिशीशैन्ये

[1]तदर्धं नासशैलं स्यात्तस्य लक्षणमुच्यते । प्रासादभित्तिविष्कम्भमानोपरि तदायतम् ॥ १६ ॥
पादविष्कम्भमानेन त्रिगुणं [2]पादोनमेव वा । चतुरश्रं समं [3]तत्स्यात्पादविष्कम्भविस्तृतम् ॥१७
तद्विस्तारत्र्यंशकेन[4] मध्ये कृत्वा [5]जलायनम् । तद्वत्खातं[6] क्रमान्मूलात्[7] कृशताष्टांशवर्जनात् ॥
अग्रे गजाधरोष्टांशं किंचिद्विनमितं स्थलात् । भित्त्यन्तं स्थलं प्रतिष्ठाप्य नालमूर्ध्वं तु कारयेत् ॥
एवं कृत्वा मसूरं तदूर्ध्वे चाङ्घ्रिं प्रकल्पयेत् ॥ २० ॥

इत्यजिताख्ये महातन्त्रे [ क्रियापादे ] [8]अधिष्टानविधिर्नाम
त्रयोदशः पटलः[9]

---

[1] B : तदर्थं

[2] B. E : पादमेव न

[3] B. E, F : तस्य pour तत्स्यात्

[4] A : त्रियंशेन pour त्र्यंशकेन

[5] B, E, F : जलायनम

[6] E : घातं pour खातं

[7] Les mss. B, E et F omettent la portion allant de कृशताष्टांशवर्जनात् (*śloka* 18d) à हीनतस्तत्र दण्डेन dans le *paṭala* suivant (*śloka* 40a) et donnent la lecture तद्वत्खातं क्रमान्मूलात् स्कन्धोर्ध्वं चोर्ध्वतोऽम्बुजम

[8] A : अधिष्ठानविधिपटलश्चतुर्दशः

[9] Les listes d'*adhiṣṭhāna* diffèrent dans chaque *āgama*, par le nombre, les subdivisions, les noms et les définitions. Voici les listes de quelques *āgama*, que nous donnons à titre d'exemple :

*Dīptāgama, paṭala 2*

(1) पादबन्धम् (2) प्रतिबालकम् (ou प्रतिबन्धम्) (3) प्रक्रम (ou प्रतिक्रमम) (4) पुष्पपुष्कलम् (5) पद्मबन्धम् (6) कलशबन्धम् (ou कलाबन्धम्) (7) वप्रबन्धम (8) पद्मकेसरम् (9) श्रोणीबन्धम् (10) पद्मबन्धम् (ou कपोतबन्धम्) (11) श्रीकण्ठम् (ou श्रीकान्तम्) (12) श्रीबन्धम् (Total = 12)

*Aṃśumatkāśyapam, paṭala 6*

I पादबन्धम्

(1) पद्मकेसरम (2) पुष्पपुष्कलम् (3) श्रीकान्तम् (4) श्रोणीबन्धम (5) वप्रबन्धम् (6) कलश-बन्धम (7) सुन्दराम्बुजम (8) नलिनकान्तम (9) श्रीसौन्दर्यम (10) अम्बुजकान्तम

## II प्रतिबन्धम्

(I) प्रतिक्रमम् (2) उच्चप्रतिक्रमम् (3) श्रीबन्धम् (4) मञ्चबन्धम् (5) पद्मबन्धम् (6) प्रतिसुन्दरम् (7) श्रीकण्ठम् (8) करीरबन्धम् (9) स्कन्दकान्तम् (10) श्रीकरम् (Total=20)

*Kāmikāgama*, I, 52

(1) पादबन्धम् (ou प्रत्यङ्गम्) (2) प्रतिबन्धम् (ou पट्टिकाङ्गम्)

*Kāraṇāgama*, I, 5

## I पादबन्धम्

(1) पादबन्धम् (2) पद्मबन्धम् (3) पद्मपुष्कलम् (4) पद्मासनम्

## II प्रतिबन्धम्

(1) प्रतिबन्धम् (2) प्रतिक्रमम् (3) प्रकीर्णकम् (4) प्रतिसुन्दरम् (Total=8)

*Suprabhedāgama*, I, 31

(1) पद्मबन्धम् (2) चारुबन्धम् (3) पादबन्धम् (4) प्रतिक्रमम् Total=4)

*Viśvakarmavāstuśāstram*

(1) मञ्चभद्रम् (2) बोधिभद्रम् (3) वाजिभद्रम् (4) कुमुदभद्रम् (5) मञ्चबन्धम् (6) बोधिबन्धम् (7) वाजिबन्धम् (8) कुमुदबन्धम् (Total=8)

*Īśānaśivagurudevapaddhati*, vol. IV, p. 307-309

## I पादबन्धम्

(1) पादबन्धम् (2) वप्रबन्धम् (3) चारुबन्धम् (4) पुष्कलम्

## II प्रतिक्रमम्

(1) प्रतिक्रमम् (2) प्रतिबन्धम् (3) श्रीबन्धम् (4) कपोतबन्धम् (Total=8)

*Ajitāgama, paṭala* 13

(1) प्रथमं पादबन्धम् (2) द्वितीयं पादबन्धम् (3) मुरपथम् (4) कपोतबन्धम् (5) प्रथमं प्रतिबन्धम् (6) द्वितीयं प्रतिबन्धम् (7) तृतीयं प्रतिबन्धम् (8) पद्मबन्धम् (Total=8)

Voir aussi, Tarapada Bhattacharya: *A Study on Vastuvidya*, Table III, pp. 357-358.

## [ चतुर्दशः पटलः ]

### [ पादादिलक्षणम्[1] ]

[2]पादादीनामथाङ्गानां पञ्चानामाकृतिः क्रमात् । आकृत्या नामभेदश्च [3]पादानां वक्ष्यतेऽधुना ॥

[ पादवर्गः [4]]

मसूरोर्ध्वेऽङ्घ्रिमूले तु वेदिकां वा प्रकल्पयेत् । तन्मानं तु द्विदण्डं स्यान्नवभागविभाजिते ॥२॥
पादमूलेंऽशतः कुर्यात्कम्पं वेदांशकैर्गलम् । तदूर्ध्वे पट्टमेकं स्याद् द्व्यंशेनोपरि वेदिका ॥ ३ ॥
तदूर्ध्वे पट्टिकांशा स्यात्तदूर्ध्वेऽङ्घ्रिं प्रकल्पयेत् । चतुरश्रास्तथाष्टाश्रा वृत्तास्ते त्रिविधाः स्मृताः॥

---

[1] Pour le पादादिलक्षण, voir *Aṃśumatkāśyapa*, *paṭala* 8, 10, 18 et 19, *Kāmikāgama*, I, 53 à 58, *Kāraṇāgama*, I, 7, *Dīptāgama*, 5 et *Suprabhedāgama*, I, 31.

[2] [पादादिः=पादः, प्रस्तरः, ग्रीवा, शिखरम्, स्थूपिः, इति पञ्च]

[3] Cf. *Kāraṇāgama*, I, 5, 28b-29a :
स्तम्भः स्थूणं च पादं च स्थाणुर्दारुनलाङ्घ्रयः । जङ्घा च चरणं चैव पर्यायवचनानि च ॥
cf. *Iśānaśivagurudevapaddhati*, vol. IV, p. 309 :
स्तम्भाः स्थूणास्तथा पादा कुम्भाः कम्पाङ्घ्रयोऽपि च । स्तम्भपर्यायशब्दाः स्युः "

[4] Cf. *Kāraṇāgama*, I, 30b-45a :
कृत्वा वेदिं त्रिदण्डेन वस्त्राधारस्य चोपरि । तस्यायामं तु नवधा कृत्वैकांशेन पट्टिका ॥
कन्धरं तु युगांशेन अंशेनाधारपट्टिका । पक्षांशा वेदिका प्रोक्ता व्योमांशा चोर्ध्वपट्टिका ॥
उत्तराधस्त्रिपादेन दण्डत्रयं परिग्रहेत् । तत्स्थाने नाटिकोत्सेधं दण्डार्धं चेति कीर्तितम् ॥
तद्दैर्घ्यं रसधा भज्य एकेन गिरिकाद्वयम् । गिरिकायां तु विस्तारमग्रपादसमं भवेत् ॥
एकेन वृत्तकं कुर्यात्पक्षांशेन सरोरुहम् । द्विभागे नास्यकं तस्य तारमध्यर्धदण्डकम् ॥
तस्योर्ध्वे दण्डमानं तु रसभागेन भाजयेत् । एकांशं गलमित्युक्तं तत्तारं चाग्रपातवत् ॥
कुम्भोच्चं तु युगांशेन द्विदण्डं तस्य विस्तरम् । वृत्तमेकेन कर्तव्यं तत्तारमग्रपातवत् ॥
तस्योर्ध्वे चैव पादेन द्विदण्डं नवधा भवेत् । पद्मं कुर्याद्द्विभागेन व्योमांशं फलकं भवेत् ॥
फलकस्य तु विस्तारं दण्डत्रयमिति स्मृतम् । वीरकाण्डं गुणांशेन तत्तारं चाग्रवद्भवेत् ॥
पोतिकायां गुणांशेन तत्तारं पञ्चदण्डकम् । उत्तमं तारमेवं स्याद्युगदण्डं तु मध्यमम् ॥
त्रिदण्डमधमं प्रोक्तं पोतिकायाः प्रकीर्तितम् । उत्सेधं पोतिकायां तु एकदण्डमिति स्मृतम ॥
पोतिकाबन्धनिर्यूहं दण्डं वा तत्त्रिपादकम् । युगाश्रं वाथ वृत्तं वा वस्वश्रं वा कलाश्रकम ॥
चरणाकृतिरेवं स्याद्भित्तेः पादस्य निर्गमम् । तस्य चैव तु भागैकं चतुरश्रस्य निर्गमम ॥
दण्डत्रिभागभागैकं वृत्तस्याष्टकलाश्रहा । वृत्ताष्टाश्रकलाश्राणां वेद्यूर्ध्वे चाङ्घ्रिमूलके ॥
कर्णविस्तारमानेन चतुरश्रं तु कारयेत् । पादवर्गं समाख्यातम "

[1]सकुम्भाश्च विकुम्भाश्च कुम्भमण्डियुतास्तथा । प्रोक्ताः पादाः समासेन [2]तद्विधानमथोच्यते ॥५
तस्योत्सेधं तु मप्ताष्टनवभागविभाजिते । एकभागं भवेत्तत्र दारुपादस्य विस्तृतम् ॥ ६ ॥
[3]भित्तिपादगतं तारं वक्ष्यामि क्रमशोऽधुना । त्रिहस्तभवनस्तम्भो भवेत्त्र्यङ्गुलविस्तृतः ॥७॥
उपर्युपरि धाम्नां तु पादविस्तारवर्धनम् । अङ्गुलेन भवेद्धाम्नां त्र्यंशं करमितादिह ॥ ८ ॥
उपर्युपरि पादानामाद्वादशतलादपि । मूलपादाद्भवेद्ध्रासो द्व्यङ्गुलद्व्यङ्गुलक्रमात् ॥ ९ ॥
[4]अथवान्यप्रकारेण वक्ष्यते पादविस्तरम् । चतुर्विंशतिभागं तु कृत्वा प्रासादविस्तरम् ॥ १० ॥
पञ्चविंशतिभागं वा षड्विंशांशमथापि वा । तेषु चैकांशमुद्दिष्टं त्रिविधं पादविस्तृतम् ॥ ११ ॥
पादविस्तारमानेऽथ वसुभागविभाजिते । एकभागविहीनं स्यात्तत्पादस्य विस्तरम् ॥ १२ ॥
तद्दण्डमिति निर्दिष्टं तेन भागं प्रकल्पयेत् । विस्तारस्य त्रिभागैकं चतुर्भागैकमेव वा ॥ १३ ॥
स्तम्भानां निर्गमः प्रोक्तः[5] :

---

[1] Cf. *Suprabhedāgama*, I, 31, 54-55a :
चतुरश्रमथाष्टाश्रं षोडशाश्रं तु वृत्तकम् । कुम्भयुक्तास्तथा केचित् केचित्कुम्भविहीनकाः ॥
केचिद्वै कुम्भमण्डिभ्यां युक्ता पादा इति स्मृताः ।

[2] A : द्विविधा न तथोच्यते [3] A : भक्तिपादगतं तारं

[4] Cf. *Suprabhedāgama*, I, 31, 56-65a :
विस्तारस्य चतुर्विंशद्भागैकं पादविस्तरम् । तदेव दण्डमाख्यातं पादालङ्कारकर्मणि ॥
मूलपादस्य विस्तारात् सप्तैकांशोनताग्रतः । द्विदण्डं मण्डिरुत्सेधं दण्डपादं तु विस्तरम् ॥
अष्टांशं कण्ठमुत्सेधं द्विदण्डं कुम्भविस्तरम् । उत्सेधं तु त्रिपादं हि पादोना फलका भवेत् ॥
त्रिदण्डं विस्तरं प्रोक्तं तदर्धं निर्गतं स्मृतम् । वीरकण्ठं तु दण्डेन विस्तारं तत्समं भवेत् ॥
तदूर्ध्वे पोतिकायामं तत्त्रिपादं तदुच्छ्रितम् । त्रिदण्डमधमायामं चतुर्दण्डं तु मध्यमम् ॥
उत्तमं पञ्चदण्डं तु पोतिकायाममुच्यते । चित्रपत्रतरङ्गैश्च भूषयित्वा तु पोतिकाम् ॥
कुम्भपादमिदं प्रोक्तं कुम्भभिन्नं प्रचक्ष्महे । पादं पोतिकया युक्तं शेषं कर्म न कारयेत् ॥
कुम्भहीनास्त्विमे प्रोक्ता लताकुम्भं तदुच्यते । कुम्भाकारं तु तन्मूले तदूर्ध्वे पद्ममेव तु ॥
फलकोर्ध्वे लतां कुर्यात्तच्छेषं कुम्भपादवत् । पादान्तरे तु कर्तव्यमशक्तश्चेत्तु वर्जयेत् ॥
सर्वेषामेव पादानां तत्पादं निर्गमं भवेत् ।

[5] Cf. *Īśānaśivagurudevapaddhati*, vol. IV, p. 310 :
पादमर्धं त्रिपादं वा भित्तिस्तम्भविनिर्गमः । चतुरश्राष्टवृत्तानां विज्ञेयस्तु क्रमाद्भवेत् ॥

[ब्रह्मकान्तः, विष्णुकान्तः, रुद्रकान्तश्च[1]]

[2]पादानां नाम कथ्यते । ब्रह्मकान्तो विष्णुकान्तो रुद्रकान्त इति त्रयः ॥ १४ ॥
पादाः स्युर्नामतस्तेषामाकृतिस्तु निगद्यते । स्तम्भायामः समस्तस्तु चतुरश्रः सलक्षणः ॥१५॥
त्र्यंशाद्धवेदिह स्तम्भो ब्रह्मकान्ताभिधानतः । मूले तत्कण्ठमानेन कृत्वा च चतुरश्रकम् ॥१६॥
पादाधिकं वाप्यध्यर्धं पादोनद्विगुणं तु वा । द्विगुणं वा तदूर्ध्वे तु वृत्तमष्टाश्रमेव वा ॥१७॥
कृत्वोर्ध्वे कुम्भमण्डीभ्यां युक्तः स्याद्विष्णुकान्तकः । पूर्ववच्चतुरश्रं तत्कृत्वोर्ध्वे षोडशाश्रकम् ॥१८
तदूर्ध्वे कुम्भमण्डीभ्यां संयुक्तो रुद्रकान्तकः ।

[[3]सौम्यः, वासन्तिकः, वृत्तकान्तः, पूर्वाग्रस्तम्भश्च[4]]

मूले दण्डप्रमाणेन कृत्वा तु चतुरश्रकम् ॥१९॥
तस्याधः पादतः पादं तस्योर्ध्वे षोडशाश्रकम् । तदूर्ध्वे कुम्भमण्डीभ्यां युक्तः सौम्य उदाहृतः॥
मूलप्रभृति वस्वश्रः केवलं कुम्भसंयुतः । [5]वासन्तिक इति प्रोक्तस्त्वश्राकारः सुवृत्तकः ॥ २१ ॥
केवलं कलशोपेतो वृत्तकान्त इति स्मृतः । [6]मूलेऽस्य वा सवर्णेन चतुरश्रस्ततः परम् ॥ २२ ॥
वृत्तः कलशसंयुक्तः पूर्वाग्रस्तम्भ उच्यते ।

---

[1] Cf. *Dīptāgama*, I. 10b-13a :
स्तम्भायामं समस्तं तु चतुरश्रं सलक्षणम् । सर्वावयवसंयुक्तं ब्रह्मकान्तमिति स्मृतम् ॥
मूले तत्कर्णमानेन चतुरश्रं तदूर्ध्वतः । अष्टाश्रं कुम्भमण्डीभ्यां द्वाभ्यां वै विष्णुकान्तकम् ॥
अश्रमूर्ध्वे तु वृत्तं स्यात्कुम्भमण्डीसमन्वितम् । रुद्रकान्तमिति ज्ञेयम्

[2] Cf. *Suprabhedāgama*, I. 31, 65b-67 :
श्रीकरं चन्द्रकान्तं च सौमुख्यं प्रियदर्शनम् । शुभङ्करी च नामानि कर्तव्यानि विशेषतः ॥
श्रीकरं वृत्तपादानां षोडशाश्रे तु कान्तकम् । सौमुख्यं हि तथाष्टाश्रे तुर्यश्रे प्रियदर्शनम् ॥
चतुरश्राष्टमिश्रे च पादा कार्या शुभंकरी ।

[3] Cf. *ibid*, 13b-14 :
चतुरश्रं तु वृत्ताख्यं पादात्पादविनिर्गमम् । तदुपर्यग्रसोपान्तं षोडशाश्रसमन्वितम् ।
कुम्भमण्डीसमायुक्तं सौम्यमेतत्प्रशस्यते ।

[4] Cf. *Dīptāgama*, 5, 15-17a :
मूलप्रकृतिरष्टाश्रं केवलं स्तम्भसंयुतम् । वासन्तिकमिति ज्ञेयमश्राकारं सवृत्तकम् ॥
केवलं कलशोपेतं वृत्तपादमिति स्मृतम् । मूलं यद्वा सवर्णेन चतुरश्रमतः परम् ॥
कलशेन सुवृत्तं यत्पूर्वाग्रस्तम्भमिष्यते ।

[5] A : वासन्तिकमिति प्रोक्तं वस्वश्राकारसुवृत्तकः        [6] A : मूलस्य व्यासवर्णेन

[ चित्रखण्डः[1], वज्रखण्डः, रम्यखण्डश्च ]

सार्धेन समपादेन दण्डमानेन वाग्रतः ॥ २३ ॥

चतुरश्रस्तथा स्तम्भस्तदधो दण्डमानतः । षोडशाश्रं [2]भवेत्तत्र पद्मं मूलाग्रयोरपि ॥ २४ ॥

पञ्चभागैकभागेन तस्याधश्चतुरश्रकम् । दण्डमानेन कृत्वाथ पूर्ववत्षोडशाश्रकम् ॥ २५ ॥

शेषं वेदाश्रमेवोक्तं एवंभूताकृतिस्तु यः । स्तम्भः स चित्रखण्डाख्यः ; वज्रखण्डं ततः शृणु ॥

स एव [3]मध्यवस्वश्रो वेदाश्रो वज्रखण्डकः[4] । स्तम्भोर्ध्वे तु द्विदण्डेन चतुरश्रीकृते ततः ॥ २७

तन्मानात्तदधः कुर्याद्वेदाश्रं नवधा भवेत् । वेदाश्रं सर्वमायामं रम्यखण्डः स नामतः ॥२८॥

[ चारुखण्डः, स्कन्दकान्तः, सिंहपादश्च ]

स्तम्भायामसमस्ते तु पञ्चभागविभाजिते । तन्मूले चतुरश्रं तु द्विभागेन प्रकल्पयेत् ॥ २९ ॥

[5]शेषांशे कलशोपेतः स्तम्भः स्याच्चारुखण्डकः । मूले द्विदण्डमात्रेण [6]पद्मासनसमन्वितः ॥३०

वृत्तं वा चतुरश्रं वा कुम्भमण्डिसमन्वितः । स्कन्दकान्ताख्यपादः स्याद् ; अष्टाश्रं वृत्तमेव वा ॥३१

पादायामत्रिभागेन मूले सिंहसमायुतः । सिंहपाद इति प्रोक्तः ;[7]

---

[1] Cf. *Aṃśumatkāśyapa*, 8, 22a-25a :

विष्कम्भकर्णमानेन स्तम्भाग्रे चतुरश्रकम । तदधस्तार्धदण्डेन त्वब्जमष्टाश्रसंयुतम ॥

दण्डमानेन तस्याधो वस्वश्रं परिकल्पयेत । तदधः पूर्ववत्पद्मं तस्याधो दण्डमानतः ॥

चतुरश्रसमायुक्तं तस्याधस्तात्तु पूर्ववत । मूले तु शेषं वेदाश्रं चित्रं वाथ तदुच्यते ॥

[2] A : भवेत्तत्र पदमूलाग्रयोरपि

[3] A : मध्यवेदाश्रे वेदाश्रे वज्रकन्दकम्

[4] Cf. *Īśānaśivagurudevapaddhati*, vol. IV, p. 310

मूलान्त्ययोस्तु वेदाश्रो मध्ये अष्टाश्रयलंकृतः । वज्रकान्तः स विज्ञेयो मुक्तास्तम्भः समौक्तिकः ॥

cf. *Dīptāgama*, 5, 18a-20 :

मूले द्विदण्डमात्रेण पद्मं मुदलसंयुतम् । शेषं हि कलशोपेतं वृत्तं वा चतुरश्रकम् ॥

अन्वितं कुम्भमण्डीभ्यां सुन्दरं नामसंयुतम । अष्टाश्रे वाथ वृत्ते वा पादायामत्रिभागत. ॥

केसरीरूपसंयुक्तं सिंहपादमिति स्मृतम् ।

[5] A : शेषांशीकृत्ते सोऽयं स्तम्भः स्याचरुखण्डकः

[6] A : पायासनसमन्वितम्

[7] Cf. sur le tableau les différents noms des *stambha* dans les textes āgamiques; voir aussi Tarapada Bhattacharya: *A study on Vastuvidya*, Table V, pp. 359-360.

[ पादकुम्भलक्षणम् [1]]

कुम्भानां लक्षणं शृणु ॥ ३२ ॥

अध्यर्धमानपादेन पादोनद्विगुणं तु वा । द्विगुणेनाथवा पादकुम्भोत्सेधं विधीयते ॥ ३३ ॥

[2]आप्तोत्सेधे नवांशे तु व्योमांशेन [3]दगुन्नतिम् । कुम्भोन्नतं चतुर्भिः [4]स्यात् कुण्डमेकेन कारयेत् ॥

आस्यमेकेन कर्तव्यं [5]पद्ममेकं ततो भवेत् । अंशेन [6]वृत्तग्रीवा च [7]दक्कर्णौ पादविस्तरौ ॥ ३५ ॥

हीनौ तौ पादमूलेन तुल्यविस्तारतः स्मृतौ । द्विगुणं कुम्भविस्तारमध्यर्धं वक्त्रविस्तरम् ॥३६॥

चतुर्दण्डं त्रिदण्डं वा मण्डिविस्तारमुच्यते । [8]तस्योत्सेधं त्रिपादं स्यात्तत्रियंशैर्विभाजयेत् ॥३७॥

[9]तस्योत्सेधकमंशेन तत्र वेत्रं तदंशकम् । मण्डिकां चांशतः कुर्यान्मूलाधारं तु पादवत् ॥३८॥

---

[1] Cf. *Dīptāgama*, 5, 21-35a :

सर्वं कापोतिकायुक्तं कुम्भालङ्कार उच्यते । अर्धार्धिमध्यपादेन पादहीनद्वयं तथा ॥
द्विगुणं दण्डमानेन कुम्भोत्सेधं विशेषतः । श्रीकरं चन्द्रकान्तं च सौमुख्यं प्रियदर्शनम् ॥
यथाक्रमेण वक्ष्यामि कुम्भोत्सेधं नवांशकम् । तद्वै धृगेकभागः स्याच्चत्वारि कलशोन्नतम् ॥
कण्ठमेकांशमित्याहुरास्यमेकांशमेव च । तत्पद्ममेकभागेन वृत्तभिन्नौ तदंशकम् ॥
दक्कर्णौ पादविस्तारौ हीनेऽधो पादमूलवत् । द्विगुणं कुम्भविस्तारमास्यमंशेन वृत्तकम् ॥
अंशेन मण्डिकां कुर्यात्पाल्याकारं तु पत्रवत् । त्रिधा नागदशाभं वा वीरकाण्डं तदूर्ध्वतः ॥
पादोच्चं तु तदर्धेन सर्वेषां चतुरश्रकम् । हीनोऽधस्तात्तदर्धेन स्कन्धोच्चं चोर्ध्वमम्बुजम् ॥
मालास्थानं तदाधस्ताद् तद्दण्डं चाथ विस्तृतम् । श्रीकरं वृत्तपादानां सर्वेषामपि संमतम् ॥
अष्टाश्रं षोडशाश्रं च चन्द्रकान्तं प्रशस्यते । सौमुख्यं चतुरश्राणामष्टाश्राणां विशेषतः ॥
अतिभारेषु स्तम्भेषु प्रियदर्शनमिष्यते । दण्डोच्चसमविस्तारं पञ्चदण्डायतं भवेत् ॥
पोतिकानामिदं श्रेष्ठं सर्वाङ्गस्तम्भसंयुतम् । चतुर्धायतनं तत्र चोत्सेधं तत्त्रिपादकम् ॥
मध्यमा इति विज्ञेया कुम्भाः स्तम्भेषु योजिताः । त्रिदण्डायतविस्तीर्णं दण्डोच्चार्धं तु कन्यसम् ॥
कुम्भं मण्डीविहीनं तु योजयेत्तु विचक्षणः । सार्धत्रिपाददण्डं वा कण्ठानां कर्णनिर्गमम् ॥
विस्तारस्य चतुर्भागे तरङ्गस्थानमिष्यते । गृहीतोच्चत्रिभागैकं भागोच्चं त्वग्रपट्टकम् ॥
एवमुत्तरपादानाम्"

[2] A : आर्तोत्सेधे

[3] A : धुन्नमति pour दगुन्नतिम्

[4] A : स्युः pour स्यात्

[5] A : पदमेकान्ततो

[6] A : वृत्तश्रीशौ च

[7] A : धुक्कर्णौ

[8] A : तस्योन्सेधत्रिपादं

[9] A : तस्योन्मंधिकमंशेन तत्तवेत्र तदंशकम्

[1]त्रिधा नागदलाभं वा [2]वीरकान्तं तदूर्ध्वतः । [3]चतुरंशं दण्डविस्तीर्णं त्रिपादेनोच्छ्रितं भवेत् ॥
[4]हीने तत्तत्र दण्डेन [5]स्कन्धोर्ध्वं चोर्ध्वतोऽम्बुजम् । मूलस्तम्भस्य चाधस्ताद्दण्डेनायतविस्तरम् ॥

[ श्रीकरम्, चन्द्रकान्तम्, सौमुख्यम्, प्रियदर्शनं च [6]]

श्रीकरं वृत्तपादानां सर्वेषां च विधीयते । षोडशाश्रं [7]तदश्राणां ; [8]चन्द्रकान्तमिति स्मृतम् ॥४१
[9]अष्टाश्रं ; चतुरश्राणां [10]सौमुख्यमिति कीर्तितम् । अतिभारेषु स्तम्भेषु प्रियदर्शनमेव हि ॥४२

[ पोतिका[11] ]

[12]पोतिका दण्डविस्तारा [13]विस्तारसममुच्छ्रिता । पञ्चदण्डायता श्रेष्ठा सर्वाङ्गस्तम्भसंयुता ॥४३

---

[1] A : त्रिधा ना. दलाहं वा

[2] *Suprabheda* : वीरकण्ठं ; *Kāraṇa* et *Īśānaśiva* : वीरकाण्डं

[3] A : चतुरश्रं; [' तुर्यांशं ' इति सुष्ठु पाठः] [4] A : भिरौतस्तत्र दण्डेन

[5] F : स्कन्धोच्चं

[6] Cf. *Īśānaśivagurudevapaddhati*, vol. IV, pp. 311 :
श्रीकरश्चन्द्रकान्तश्च सौमुख्यः प्रियदर्शनः । इति कुम्भाश्चतुर्धा स्युर्वृत्तानां श्रीकरो भवेत् ॥
अष्टाश्राणां चन्द्रकान्तः श्रीकरः स्यात्कलाश्रके । स्तम्भानां चतुरश्राणां सौमुख्यः कुम्भ इष्यते ॥
शेषाणां चातिभाराणां कुम्भः स्यात्प्रियदर्शनः ।

[7] E, F : तदाश्राणां [8] E, F : चन्द्रकान्तं ततः स्थितः

[9] B, F, F : अष्टानां [10] B, E : सौमुखामिति ; F : सौमुख्यामिति

[11] Cf. *Īśānaśivagurudevapaddhati*, vol. IV, pp. 312-313 :
तदूर्ध्वं पोतिका स्थाप्या तस्या लक्षणमुच्यते । सा च स्यात्स्तम्भविस्तारात्त्रिगुणं वा चतुर्गुणम् ॥
दीर्घा पञ्चगुणं वापि नीचमध्योत्तमा स्मृता । नागवृत्ता पत्रचित्रा समुद्रोर्मिश्च पोतिका ॥
त्रिविधा नामभिर्ज्ञेया तासां लक्षणमुच्यते । स्तम्भव्यालसमोत्सेधविस्तारा श्रेष्ठपोतिका ॥
शरांशोना मध्यमा स्यादूनत्र्यंशा कनिष्ठिका । भूतेभमकरव्यालरत्नबन्धविचित्रिता ॥
वल्लीचित्राग्रपट्टा च सा ख्याता चित्रपोतिका । केवलं पत्रवल्लीभिर्विचित्रा पत्रपोतिका ॥
तरङ्गमात्रचित्रा या पोतिका स्यात्तरङ्गिणी । तरङ्गाश्चात्र वेदर्तुवस्वाशादित्यसंख्यया ॥
कार्यास्तूभयतस्तस्याः पट्टिकाच्छन्नमध्यगाः । त्रिभागे पोतिकोत्सेधे सार्धांशेनाग्रपट्टकम् ॥
तदर्धार्धेन तदधः क्षेमच्छायान्वितं भवेत् । तदुच्चार्धात् त्रिभिर्वांशैरंशाभ्यां वात्र कल्पयेत् ॥
स्वव्यासार्धात् त्रिपादाद्वा कुर्यात्तास्वग्रमण्डनम् ॥

[12] A : कपोतिकाण्डविस्तारो

[13] B omet la 2[me] partie du *śloka* 43a et la 1[re] partie du *śloka* 43b et donne la lecture : पोतिका दण्डविस्तारा सर्वाङ्गस्तम्भसंयुता

चतुर्दण्डायता चैव त्रिपादोत्सेधसंयुता । मध्यमेति समुद्दिष्टा कुम्भस्तम्भेषु योजिता ॥ ४४ ॥
[1]त्रिदण्डायतसंयुक्ता [2]दण्डार्धोच्चसमन्विता । कुम्भ[3]मण्डीविहीनेषु योजनीया विशेषतः ॥४५॥
समं [4]त्रिपादमर्धं वा कर्करी[5]कण्ठनिर्गतिः । विस्तारस्य चतुर्भागे तरङ्गं परिकल्पयेत् ॥ ४६ ॥
[6]गृहीतोच्चत्रिभागेन तदूर्ध्वे पट्टिका भवेत् । पादवर्गः समुद्दिष्टः ;

[ प्रस्तरवर्गः[7] ]

प्रस्तरं [8]चाधुनोच्यते ॥ ४७ ॥
[9]प्रस्तरं [10]चोत्तरादि स्यात्तद्विष्कम्भं तु [11]पादवत् । उत्सेधं त्रिविधं प्रोक्तमुत्तमं तु समं भवेत् ॥
त्रिपादं मध्यमं प्रोक्तमधमं [12]चार्धमुच्यते । स्तम्भाग्रस्याग्नि[13]भागैकं [14]वेदभागैकमेव वा[15]॥४९॥

---

[1] F : त्रिदण्डा यत्र संयुक्ता
[2] A : दण्डे चोर्ध्वे समन्विता ; B, E, F : दण्डार्धाच्च समन्विता
[3] E, F : मण्डि pour मण्डी
[4] F : त्रिपादमध्यं वा
[5] B : कप pour कण्ठ ; E : पर ; F : कफ
[6] A : श्रितोच्चत्रिभागे
[7] Cf. *Kāraṇāgama*, I, 7, 45-55a :

ततः प्रस्तरवर्गकम् । मल्लब्धोत्सेधमानं तु भजेद्विंशतिभागतः ॥
उत्तरोच्च गुणांशेन तदुच्चमष्टधा भजेत् । एकांशेनैव निर्यूहं पोतिकायास्तु बाह्यके ॥
एकेन वाजनोच्चं तु तत्समं नीव्रमुच्यते । वसन्तकोच्चं त्र्यंशेन तस्योर्ध्वं नीव्रमुच्यते ॥
तस्योर्ध्वपट्टिकांशेन युगभागैकनीव्रकम् । अध्यंशं तु कपोतोच्चं दण्डार्धं लम्बमानकम् ॥
तन्नीव्रं तु त्रिदण्डं स्यान्मार्जनं तस्य नीव्रकम् । कपोते नासिकायुक्तं कर्णे वल्लीसमायुतम् ॥
नासि तारं द्विदण्डं वा सार्धद्विदण्डमेव वा । उत्सेधं तत्समं ज्ञेयं तद्भूतांशगुणांशकम् ॥
तन्मध्यमेव गाढं तु तद्गुहा दण्डमानतः । वाजिनोर्ध्वसमं प्रोक्तं नासिकायाः शिरस्तथा ॥
एकांशेनोर्ध्वपट्टीं तु पादसूत्रसमं कुरु । एकेनान्तरितं कुर्यात् तत्तारमग्रपादवत् ॥
अग्रपादार्धमानेन तन्नीव्रं परिकीर्तितम् । प्रतिमुखोच्चद्विभागेन तत्तुल्यं कर्णनिर्गमम् ॥
प्रतिवाजनमेकांशं स्थाणुसूत्रसमं तु तत् । सिंहव्यालगजैः पुष्पैः कुर्यादन्तरितं तथा ॥
एवं प्रस्तरवर्गं तु"

[8] F : तु pour च
[9] F : मप्रस्तरं प्रस्तरं
[10] E : चोत्तरादिः स्यात्
[11] A : पातवत्
[12] B, E, F : त्वधुनोच्यते pour चार्धमुच्यते
[13] F : अग्र pour अग्नि
[14] A omet वेदभागैक
[15] A : च pour वा

[1]चतुरश्रं समं चैव वाजनं [2]चोत्तरोपरि । तदूर्ध्वे दण्डमानेन भूतमालां प्रकल्पयेत् ॥ ५० ॥
निर्गमं च तथा प्रोक्तं [3]तदूर्ध्वे पट्टिका भवेत् । [4]तां च वाजनवत्कुर्यात्तस्योर्ध्वे स्यात्कपोतकम् ॥५१
तद् द्विदण्डप्रमाणेन त्रिदण्डेनाथवा भवेत् । [5]तत्समं निर्गमं प्रोक्तं लम्बनं[6] चार्धदण्डतः ॥ ५२
[7]शेषे तु[8] शरभागेन भाजितांशेन पट्टिका । [9]एकेन कण्ठमाख्यातं द्वाभ्यां प्रस्तरमेव हि ॥ ५३
तदूर्ध्वे पट्टिकां कुर्यादेकांशेन विचक्षणः । [10]कपोत[11]नासिकायुक्तं तत्तारस्यार्धदण्डतः ॥५४॥
[12]द्विदण्डे नवकोणेषु [13]पत्रवल्लीसमायुतम् । एवं प्रस्तरमाख्यातं देवधाम्नां विशेषतः ॥५५॥
अथवान्य[14]प्रकारेण [15]प्रस्तरं तेषु कल्पयेत् । [16]उत्सेधे तत्र विंशांशे भवेदग्न्यंशमुत्तरम्[17] ॥५६
[18]व्योमांशं वाजनं प्रोक्तं [19]त्रियंशं स्याद्वसन्तकम् । [20]ऊर्ध्ववाजनमंशेन कपोतं सप्तभिर्भवेत् ॥
आलिङ्गमेकभागेन भवेदन्तरितं तथा । अंशाभ्यां तु [21]प्रतिं कुर्याद्व्योमांशं[22] वाजनं ततः॥५८॥
[23]एवं वा तत्प्रकर्तव्यम् ;

---

1 A : चतुरश्रसमं चैव

2 A : चोत्तरौ परि ; B, E : चोत्तरानपि : F : चोत्तरावपि

3 F : तदूर्ध्वं

4 A : ऊर्ध्वे pour तां च

5 A : मत्समं

6 A : बन्धनं pour लम्बनं

7 B et E omettent les *śloka* 53 et 54

8 A : शेषं तु

9 F : एकोन pour एकेन

10 A, B et E omettent le demi-*śloka* 54b

11 F : नाडिका pour नासिका

12 A omet le *śloka* 55.

13 B : वक्त्र pour पत्र

14 F : अन्यत् pour अन्य

15 A : संस्तरं pour प्रस्तरं : E : प्रस्तरां ; F : प्रस्तरा

16 B, E, F : उत्सेधं

17 B, E, F : उत्तमम् pour उत्तरम्

18 B, E : सोमं वाजनकं प्रोक्तं

19 F : त्र्यंशं स्याद्द्विजसत्तम

20 A : ऊर्ध्वे वाजनमंशेन

21 A : व्रतिं pour प्रति

22 B, E, F : वामांशं pour व्योमांशं

23 B, E, F : एवं वाथ प्रकर्तव्यं

[ तोरणम्[1] ]

तोरणं वक्ष्यतेऽधुना । पार्श्वयोः पृष्ठतश्चापि [2]पङ्क्तिमध्येषु वा ततः ॥५९॥
प्रतेरुत्तर[3]सीमान्तं तोरणोच्छ्रयमुच्यते । तद्विस्तारं तदर्धं स्यादायामे पञ्चभाजिते ॥ ६० ॥
[4]मकरं तु त्रियंशेन शेषं पादं प्रकल्पयेत् । पादान्तरार्धविस्तारं [5]तोरणस्य प्रकल्पयेत् ॥ ६१ ॥
सर्वलक्षणसंयुक्तं सर्वालंकारसंयुतम् । कारयेत्तोरणं धीमांस्तेषु देवान् प्रकल्पयेत् ॥ ६२ ॥
ब्रह्मविष्णुसमायुक्तं पृष्ठे लिङ्गस्थमीश्वरम् । विष्णुं वा तत्र कुर्वीत शुभं वा पश्चिमानने ॥ ६३ ॥
दक्षिणे दक्षिणामूर्तिं ब्रह्माणं च तदुत्तरे । एवं तोरणमुद्दिष्टम् ;

---

[1] Cf. *Suprabhedāgama*, I, 31, 68-72a :

तोरणं वक्ष्यतेऽधुना । पृष्ठे तु पार्श्वयोश्चैव कर्तव्यास्तोरणास्तथा ॥
द्वारस्योत्सेधमानं यत्तोरणस्योच्छ्रयं भवेत् । तदर्धं विस्तरं प्रोक्तमुच्छ्राये षड्विभाजिते ॥
मकरं मु द्वियंशेन शेषं पादमिति स्मृतम् । मूलपादस्य चार्धेन तस्य पादप्रमाणकम् ॥
मकरांशं तदूर्ध्वे तु मध्ये वृत्तं सनिम्नकम् । प्रतेरूर्ध्वे गुहां कृत्वा चतुरायतमेव तु ॥
प्रमाणं तोरणस्योक्तम् "

cf. *Īśānaśivagurudevapaddhati*, vol. IV, pp. 320-322 :

तोरणं त्रिविधं ज्ञेयं मकरं चित्रपत्रके । देवद्विजनृपाणां तु शस्तं मकरतोरणम् ॥
विशां तु चित्रसंज्ञं स्याच्छूद्राणां पत्रतोरणम् । पार्श्वयोः पृष्ठतश्चापि प्रकुर्यात्कुड्यतोरणम् ॥
प्रतेरुत्तरसीमान्तं तोरणोदय ईरितः । तदर्धेनास्य विस्तारस्तद्व्यासेऽथ शरांशके ॥
त्रिभिर्मकरयुग्मं स्यादंशाभ्यां पादयोः स्थितिः । यथाशोभान्तरं तत्र गुहावेशे भवेदपि ॥
अर्धेन्दुसदृशैः पत्रैश्चित्रितं पत्रतोरणम् । नक्रयोर्वदनासक्तमध्यपूरिममण्डितम् ॥
चित्रतोरणमुद्दिष्टं मध्यपूरिमपार्श्वयोः । विगृह्य मकरस्योन्थरत्नमालाधिरोपितैः ॥
भूतविद्याधरव्यालसिंहैश्चारूढबालकैः । विलम्बितं तूभयतो भवेन्मकरतोरणम् ॥
गुहासु तोरणानां तु यथार्हं प्रतिमास्तथा । न्यसेन्नारीनरादींश्च यथाशोभं विचित्रितम् ॥ . . .
नन्दीश्वरमहाकालौ पूर्वद्वाराधिपौ न्यसेत् । दक्षिणे दक्षिणामूर्तिं पश्चिमे लिङ्गसंभवम् ॥
विष्णुं वाप्यथ कौबेरे दुर्गां ब्रह्माणमेव वा । मण्डपे मध्यपत्रे तु दक्षिणे च विनायकम् ॥
उत्तरे नृत्तरूपं तु क्षेत्रेशं चेशगोचरे । रुद्रावतारक्रीडादिकथारूपाणि चैव हि ॥

[2] E, F : वक्ति मध्येऽश्ववानन:

[3] Les mss. B, E, F omettent la portion depuis सीमान्तं तोरणोच्छ्रयमुच्यते (*śloka* 60a) à सिंहव्याल (*śloka* 80b) et donnent la lecture प्रतेरुत्तर गजारूढे भूताद्यैस्तु समन्वितम्

[4] A : मिकं तु त्र्यंशेन

[5] A : तोरणान्न्यां

[ ग्रीवावर्गः[1] ]

गलं स्यात्प्रस्तरोपरि ॥ ६४ ॥

तन्मूले वेदिकां कुर्यात्तस्य लक्षणमुच्यते । त्रिदण्डं वाजनं[2] तु स्यादुत्सेधं स्याद् द्विदण्डतः॥६५

रुद्रभागयुते तत्र [3]गलं स्यात्त्रिभिरंशकैः । एकेन पट्टिकां [4]कुर्यात्पोतिकां च तथैव हि ॥६६॥

ऊर्ध्वे व्योमांशतः कम्पं शरांशे वेदिविस्तरे । वेदांशं ग्रीवविस्तारं दण्डार्धेनोत्तरं ततः ॥६७॥

वाजनं तत्त्रिभागं [5]स्यादुत्सेधं स्याद् द्विदण्डतः । तदर्धं [6]हंसपादी स्यादथवा वेदिविस्तरम् ॥

प्रासादस्याष्टभागैकहीनं वापि प्रकल्पयेत् । वेदितारचतुर्भागं गलविस्तृतमुच्यते ॥ ६९ ॥

वेदितारसांशैकमग्न्यंशैकमथापि वा । गलमूलनासिकापादनिर्गमं च प्रकल्पयेत् ॥ ७० ॥

[7]निर्यूहस्य समं वाथ शरदण्डमथापि वा । [8]सार्धचत्वारि दण्डं वा पादयोर्मध्यमं स्मृतम् ॥७१॥

त्रिदण्डं वा द्विदण्डं वा तद्गुहावेशमुच्यते । तत्पादोत्तुङ्गमानं तु हंसमालावसानकम् ॥ ७२ ॥

---

[1] Cf. *Kāraṇāgama*, I, 7, 55-66 :

ग्रीववर्गमतः परम् । तस्योर्ध्वे वेदिकायामध्यर्धं दण्डमुच्यते ॥
वेशनं वेदिकायां तु द्विदण्डं चेति कीर्तितम् । वेदिकोत्सेधमानं तु सप्तभागेन भाजयेत् ॥
कर्णोत्सेधं गुणांशेन एकांशेनैव पट्टिका । तस्योर्ध्वे निर्गमं तस्याः पक्षांशं वेदिकोच्छ्रयम् ॥
तन्नीव्रं तु तदर्धं स्यादेकांशेनोर्ध्वपट्टिका । अधःपट्टिसमं चैव तत्पट्टीं कुरु बुद्धिमन् ॥
वेदिविस्तारबाणांशं वेदांशं कर्णविस्तरम् । चतुर्दिक्षु विशेषेण नासिकाङ्घ्रिं प्रकल्पयेत् ॥
वेदितारसांशैकं मध्यांशैकमथापि वा । ग्रीवामूलात्मनिर्यूहं नासिकास्थूणकस्य तत् ॥
तन्निर्यूहसमं वापि युगदण्डमथापि वा । अर्धेन वेददण्डं वा उभयोः पादमध्यमम् ॥
त्रिदण्डं वा चतुर्दण्डं गुहावेशं प्रकीर्तितम् । तत्पादस्य समायामं हंसमालावसानकम् ॥
दण्डत्रिभागपक्षांशं तत्स्तम्भस्य तु तारकम् । शेषं तु पूर्ववत्कुर्यादुत्तरं वाजनं तथा ॥
ग्रीवाग्रे वार्धदण्डेन उत्तरं तु प्रकल्पयेत् । तत्समं तु गलान्नीव्रं तत्र भागैकवाजनम् ॥
तत्समं तस्य नीव्रं तु हंसमालार्धदण्डकम् । तस्यार्धं तस्य नीव्रं तु पट्टी वाजनवद्भवेत् ॥
चतुर्भागं तु भागैकं नीव्रं तस्य प्रकीर्तितम् । ग्रीववर्गं समाख्यातम्"

[2] A : वेजनं

[3] A : गुलं

[4] A : कुर्याद् योदिकां च

[5] A : स्यादर्धं समा द्विदण्डतः

[6] A : हंसपादीनि स्यादथवा

[7] A : निर्यूहसरसं वाथ

[8] A : सार्धस्यात्वाय दण्डं वा

दण्डतिर्यंशनेत्रांशं तद्विस्तारं प्रकीर्तितम् । सर्वांशं शोभनायुक्तं पूर्ववत्कारयेत्सुधीः ॥ ७३ ॥
तत्र देवांश्चतुर्दिक्षु ततस्तोरणमध्यगान् । पूर्वे शक्रं गजारूढं स्कन्दं वापि प्रकल्पयेत् ॥ ७४ ॥
ईशानं दक्षिणे कुर्याल्लकुलीश्वरमेव च । पश्चिमे रुद्ररूपं वा नारसिंहमथापि च ॥ ७५ ॥
उत्तरे ब्रह्मरूपं स्याद्रुद्ररूपमथापि वा । एवं ग्रीवं समाख्यातम् ;

[ शिखरवर्गः[1] ]

शिखरं चाधुनोच्यते ॥ ७६ ॥

शिखरस्यापि विस्तारं तद्द्वेदी समुच्यते । वेद्यास्तारं त्रिभागैकं महानास्यास्तु विस्तरम् ॥ ७७ ॥
विस्तारस्य त्रिपादेन तस्योत्सेधं प्रकल्पयेत् । तत्पार्श्वद्वयविस्तारं ग्रीवपादवदिष्यते ॥ ७८ ॥
शेषं स्यादवगाढं तु द्विदण्डं तु गुहा भवेत् । विस्तारार्धसमं तस्य [2]शिरसो मानमिष्यते॥ ७९ ॥
[3]किन्नरीवक्त्रसंयुक्तं नानावल्लीविचित्रितम् । सिंहव्यालगजारूढैर्भूताद्यैस्तु समन्वितम् ॥ ८० ॥
परिधिं कारयेद्धीमान्महानास्या[4] विशेषतः । चतस्रश्च [5]महानास्यश्चतुर्दिक्षु [6]व्यवस्थिताः ॥८१॥
[7]अन्तरालेऽथवा कुर्यादनुनासीचतुष्टयम् । शिखरं तु ततः [8]कुर्यान्नागरादिषु योग्यकम् ॥८२॥

---

[1] Cf. *Kāraṇāgama*, I, 7, 66b-75a :

ऊर्ध्वं शिखरवर्गकम् । शिखरस्य तु विस्तारं वेद्यास्तारसमं भवेत् ॥
वेद्यास्तारं त्रिभागैकं महानास्यास्तु विस्तरम् । विस्तारस्य द्विभागं तु उत्सेधं तस्य कीर्तितम् ॥
तस्याः परिधिविस्तारं ध्रुवपादसमं भवेत् । शेषं स्यादवभागं तु गुहावेशं त्रिदण्डकम् ॥
विस्तारार्धं शिरोमानं किन्नरीवक्त्रवत् कुरु । नानावल्लीसमायुक्तं सिंहव्यालमृगैर्युतम् ॥
भूतरूपैः समायुक्तं परिधिं कारयेत्ततः । शिखरं कारयेद्धीमान् घण्टायामाकृति तथा ॥
वेद्यास्तारस्य पञ्चांशं गुणांशं बलिविस्तरम् । बलितारस्य बाणांशं गुणांशं पद्मविस्तरम् ॥
बलितारगुणांशैकं कुम्भतारमिति स्मृतम् । कुम्भतारशरांशैकं कन्धरस्य तु तारकम् ॥
कुम्भतारं त्रिभागैकं पाल्यतारस्य विस्तरम् । पालितारत्रिभागैकं कर्णतारमिति स्मृतम् ॥
मुकुलस्य तु विस्तारं कर्णतारसमं भवेत् । शिखरोदिततुङ्गेषु रसांशं वक्त्रतुङ्गकम् ॥

[2] A : शिरसो नममिष्यते

[3] A : कन्वरी pour किन्नरी

[4] B : महानस्या pour महानास्या ; E : महानास्यां : F : महानाश्यां

[5] B : महानामाश्चतुर्दिक्षु ; E : महानामां चतुर्दिक्षु

[6] E, F : व्यवस्थितः

[7] A : अन्तराले तु वा

[8] A : कुर्यान् हारादिषु योग्यकम्

[1]आनुपूर्व्यात्कृशं [2]कुर्याद्यावत्स्तूप्यं तथैव च । [3]पालिमग्न्यंशकैः कुर्याद्वेदितारे [4]शरांशके ॥८३
[5]पालितारस्य भूतांशे गुणांशं [6]पद्मविस्तृतम् । [7]पद्मतारात्रियंशैकं कुम्भतारमिति स्मृतम् ॥८४॥
तद्विस्तारशरांशैकं कन्धरस्य तु [8]विस्तरम् । [9]कुम्भतारत्रिभागैकं पाल्यास्तारस्य विस्तृतम् ॥८५॥
तद्विस्तारगुणांशैकं [10]कण्ठतारमिति स्मृतम् । मुकुलस्यापि[11] विस्तारं [12]कण्ठतारवदिष्यते ॥८६॥

[ स्तूपिवर्गः[13] ]

[14]स्तूप्युत्सेधं ततः[15]कुर्याद् द्वात्रिंशांशविभाजितम् । [16]अब्ध्यंशमम्बुजोत्सेधमध्यर्धं[17] स्कन्धमुच्यते[18]
[19]अध्यर्धाधरपट्टी स्यात्सप्तभागं [20]घटोच्छ्रयम् । अध्यर्धं [21]मूलपद्मं स्याद् ग्रीवोत्सेधं षडंशतः ॥८८
अर्धांशं कम्पनीव्रं[22] स्याद्वल्कमेकांशतो भवेत् । षडंशं मुकुलोत्सेधमानुपूर्व्यात्कृशं भवेत् ॥८९॥
सौवर्णं राजतं वापि ताम्रजं त्रपुजं तु वा । प्रासादशिखरे कुम्भे विधानेनैव कारयेत् ॥ ९० ॥
पैत्तलं वाथ सौधं वा मृण्मयं पक्वमेव वा । [23]प्रासाद इति निर्दिष्टः षड्वर्गेण समन्वितः ॥९१॥

---

[1] E : अनुपूर्वात् कृशं
[2] B, E, F : कुर्याद्यावत्स्थूप्यन्तमेव च
[3] B : मल्लीम् pour पालिम् ; E : मल्लिम् ; F : वल्लीम्
[4] A : शतांशके
[5] A : पालितस्य भूतांशे ; E, F : वल्लितारस्य भूतांशे
[6] A : पदविस्तृता:
[7] A : पद्य pour पद्म
[8] A : विस्तृतम्
[9] B, E : कुम्भताराग्निभागैकपालिकारस्य विस्तृतम् ; F : कुम्भताराग्निभागैकं पालिकारस्य विस्तृतम्
[10] F : कर्ण pour कण्ठ
[11] B, E : एव pour अपि ; F : इव
[12] F : कर्ण pour कण्ठ
[13] Cf. *Kāraṇāgama*, I, 7, 75b-79a :
स्थूपिकोत्सेधमानं तु द्वात्रिंशद्भागतो भजेत् । पद्मोत्सेधं नवांशं तु द्विभागं गलमुच्यते ॥
व्योमांशेनोर्ध्वपद्मं तु अर्धांशेन घटं भवेत् । अधःपद्मं तु भागेन अर्धांशेनोर्ध्वकम्पकम् ॥
गलान्ते च द्विभागं तु अर्धांशेनैव पट्टिका । अर्धांशेनोर्ध्वपद्मं तु फलकैकेन कारयेत् ॥
अर्धभागमधःपद्मं मुकुलोच्चं शरांशकम् । स्थूपिरेवं समाख्यातम् ”
[14] F : स्थूप्युत्सेधं
[15] B, E : कुर्याद्वित्र्यंशांशविभाजिते
[16] A : अध्यंशम् pour अब्ध्यंशम्
[17] A : मध्यमं pour अध्यर्धं
[18] A : स्कन्दम् pour स्कन्धम्
[19] B, E, F : अध्यर्धं त्वथ पट्टी स्यात्
[20] A : गलोच्छ्रयम्
[21] A : पदमूर्ध्वं pour मूलपद्मं
[22] E, F : तीव्रं pour नीव्रं
[23] A, B, E : प्रासादमिति निर्दिष्टं षड्वर्गेण समन्वितम्

[ देवधिष्ण्यम् ]

त्रिचतुर्वर्गसंयुक्तं [1]यदन्यद्दैवतागृहम् । देवधिष्ण्यं तदुद्दिष्टं [2]देवप्रासादवद् भवेत् ॥ ९२ ॥

[ सभा ]

सभा [3]नाम तु यद्धाम पञ्चवर्गयुतं भवेत् । विस्तारद्विगुणायामं [4]पादोनद्विगुणं तु वा ॥ ९३ ॥
अर्धाधिकं वा कर्तव्यं पादाधिकमथापि वा । सकलानां तु [5]तत्प्रोक्तमव्यक्त उभयोरपि ॥९४॥

इत्यजिताख्ये महातन्त्रे [क्रियापादे] [6]पादादिलक्षणं नाम
चतुर्दशः पटलः

---

[1] B, E, F : यदन्यद्दैवतं गृहम्

[2] A : देवास्तस्यादसं भवेत् ; B, E, F : देवार्हं स्यादसं भवेत्

[3] B, E, F : नाम्ना

[4] B : पादोऽयं द्विगुणं ; F : पादौ यद्द्विगुणं

[5] A, B, F : तत्प्रोक्तमव्यक्तोरुभयोरपि ; F : तन्प्रोक्तमव्यक्तोरुपयेऽपि हि

[6] A : पादादिलक्षणग्रहणपटलः पञ्चदशः ; B : अधिष्ठानविधिस्त्रयोदशः पटलः ; E : अधिष्ठानविधिर्नाम त्रयोदशः पटलः ; F : पादादिलक्षणः पटलः

## [ पञ्चदशः पटलः ]

## [ मूर्धेष्टकाविधिः[1] ]

[ तत्रेष्टकाशिलयोर्लक्षणम् ]

[2]मूर्धेष्टकाविधिं वक्ष्ये प्रासादानां जनार्दन । [3]मूर्धेष्टकाश्चतस्रस्तु तासां लक्षणमुच्यते ॥ १ ॥
[4]शैलधाम्नि[5] [6]शिला तद्वच्चैष्टके[7] [8]चेष्टका भवेत् । इष्टकैव भवेन्मिश्रे शिला स्यात्षोडशाङ्गुला[9]॥
[10]तदर्धतारसंयुक्ता [11]तस्यार्धघनसंयुता । [12]इष्टकार्काङ्गुलायामा कौशिकाङ्गुलविस्तृता ॥ ३ ॥
तदर्धघनसंयुक्ता द्वयोश्चार्धाङ्गुलक्षयात् । कार्श्यमग्रे प्रयुञ्जीत तेन ज्ञात्वाग्रमूलकम् ॥ ४ ॥
क्षालयित्वाम्भसा सम्यक्प्रोक्षयेदस्त्रमुच्चरन् । [13]स्तूपिदण्डेन संयुक्तमधिवासं तु कारयेत् ॥ ५ ॥

[ स्तूपिदण्डः[14] ]

[15]स्तूपिदण्डोचिता वृक्षाः खदिरासनशिंशपाः[16] । पद्म[17]मधूकवृक्षौ च [18]तिन्त्रिणी च नमेरुकः ॥ ६ ॥

---

[1] Pour मूर्धेष्टिकाविधि, voir *Aṃśumatkāśyapa*, 41, *Kāmikāgama* I, 61, *Kāraṇāgama*, I, 10, *Suprabhedāgama*, I, 32 et *Svāyambhuvāgama*, 51

[2] C, F : मूर्ध्नेष्टकाविधिं ; E : मूर्ध्न्येष्टकाविधिं

[3] B : मूर्धेष्टकाश्चतस्रश्च ; C : मूर्ध्नेष्टकाश्चतस्रः स्यात् ; E : मूर्ध्न्येष्टकाश्चतस्रः स्यात् ; F : मूर्ध्नेष्टकासहस्रस्य

[4] Cf. *Kāraṇāgama*, I, 10, 5-6 :
उपलं शैलके योज्यमिष्टकाधामनीष्टका । आदित्याङ्गुलमायामः षडङ्गुलमुविस्तृता ॥
नीव्रं युगाङ्गुलेनैव शेषं पूर्ववदाचरेत् । एवं मूर्ध्न्येष्टकां कुर्यात् "

[5] B, E : शैले धामनि

[6] E : शैलं च pour शिला तद्वत्

[7] B, F : चेष्टिके pour चैष्टके ; E : चैष्टिके

[8] B, E, F : चेष्टिका pour चेष्टका

[9] C : षोडशाङ्गुलम् ; F : षोडशाङ्गुलाः

[10] C : तदर्ध तारसंयुक्ता ; E, F : तदनन्तरसंयुक्ताः

[11] E : तस्याध्ययनसंयुता

[12] A : इष्टकार्काङ्गुलायामाः कैशिकाङ्गुलविस्तृताः

[13] A, C, F : स्थूपि pour स्तूपि

[14] Cf. *Kāraṇāgama*, I, 10, 6-11 :
स्तूपिदण्डं तु कारयेत् । असनं खदिरं वापि मधूकं पद्मतुण्डकम् ॥
तिलकं त्रिणिसारं च चन्दनं चम्पकं तथा । एतैर्वृक्षैः प्रकर्तव्यं स्तूपिदण्डं विशेषतः ॥
पादायामसमं दीर्घं पादविष्कम्भविस्तृतम् । स्तम्भायामं त्रिधा कृत्वा मूलांशं चतुरश्रकम् ॥
तस्योर्ध्वे वृत्तकं कुर्याद्द्विभागेन विशेषतः । अग्रमङ्गुलविस्तारमानुपूर्वात् कृशं तथा ॥
शिखिपादं ततः कुर्याद्विस्तारं त्रिगुणायतम् । विस्तारसमविस्तारं योजयेत्तद्द्वयं समम् ॥
दण्डमूले शिखीपादं सुस्निग्धं सुदृढं कुरु । ताम्रेण मायसेनाथ वेष्ट्य दण्डाग्रमूलकौ ॥

[15] A, C, F : स्थूपि pour स्तूपि

[16] A, C : शिंशुपाः pour शिंशपाः

[17] A : गण्डक pour मधूक ; B, E : मिन्धुक

[18] B, F : तिन्त्रिणीमारमेत्र च

[1]एतेष्वेकं समादाय कारयेल्लक्षणान्वितम् । [2]प्रासादपादतुल्योच्चं तद्विष्कम्भसमन्वितम् ॥ ७ ॥

[3]तस्य मूले युगाश्रं [4]स्यात्तत्तुङ्गगुणभागतः । तदूर्ध्वेऽशद्वयेनापि वृत्तं कुर्यात्कृशं यथा ॥ ८ ॥

[5]अग्रे व्योमाङ्गुलं नाहमेवं कृत्वाथ दण्डकम् । [6]शिखिपादे प्रयुञ्जीत [7]तन्मूलत्रिगुणायते ॥९॥

[8]त्रिस्तारार्धघनोपेते सुदृढं [9]सुसमं यथा । लोहेन वाथ कुर्वीत [10]स्तूपिदण्डं विशेषतः ॥ १० ॥

[अक्षरन्यासः[11]]

[12]तं प्रक्षाल्येष्टकाभिश्च विन्यसेदक्षराणि [13]च । यकारादिवकारान्तं[14] [15]चतसृष्विष्टकास्वपि॥११

[16]रक्तेन धातुरागेण [17]पिष्टेनैव सितेन वा । हंकारं [18]स्तूपिदण्डे तु विन्यसेत्तु समाहितः॥१२॥

---

[1] B, C, E, F : एष्वप्येकं

[2] A : प्रासादप्रातिकूल्याच्च

[3] B, C, E, F : तन्मूले तु pour तस्य मूले

[4] B, E : स्यात्तत्तुङ्गं गुणभागतः ; F : स्यादुत्तुङ्गगलभागतः

[5] F omet les *śloka* 9 et 10a

[6] A : शिलीपादे ; B : शिखी वामे

[7] C : तन्मूलं त्रिगुणायते

[8] A : विस्तारात्स्वमनोपेते

[9] E : सुयमं यथा

[10] A : स्थूपि pour स्तूपि

[11] Cf. *Suprabhedāgama*, I, 32, 2-4 :

स्थण्डिलं तत्र कुर्वीत तिलतण्डुलशालिभिः । न्यस्त्वा तन्मध्यमे पश्चादिष्टकाः पञ्चकाः क्रमात् ॥

शालिपिष्टमयेनाथ लेखयेदक्षराणि तु । यकारं पूर्वभागे तु रकारं दक्षिणे तथा ॥

लकारं पश्चिमे चैव वकारं चोत्तरे तथा । हकारं मध्यमे न्यस्त्वा पृथग्वस्त्रेण वेष्टयेत् ॥

cf. *Kāraṇāgama*, I, 10, 17-19 :

प्रोक्षयेत्पञ्चगव्येन शिलां चेष्टकयापि वा । प्रोक्षयेद्धृदयेनैव शुद्धतोयेन देशिकः ॥

गैरिकेण लिखेद्धीमानक्षराणि विशेषतः । शकारं पूर्वभागे तु षकारं दक्षिणे लिखेत् ॥

सकारं पश्चिमे लिख्य हकारं चोत्तरे लिखेत् । बिन्दुनादसमायुक्तमादौ प्रणवसंयुतम् ॥

[12] A : प्रातः pour तं

[13] B, C, E, F : तु pour च

[14] F : विकारान्तं pour वकारान्तं

[15] A : चतस्रश्चेष्टका अपि ; B : चतस्र विषकास्वपि ; C : ततः स्पृष्ट्वाष्टकास्वपि

[16] A : रत्नेन pour रक्तेन

[17] F : विषेनैव

[18] A : स्थूपि pour स्तूपि

[कौतुकबन्ध.[1]]

पुण्याहं वाचयित्वा तु बन्धयेत्तेषु [2]कौतुकम् । सौवर्णं [3]राजतं वापि क्षौमं [4]कार्पासकं तु वा ॥१३

[अधिवासार्थं मण्डपकल्पनम्[5]]

[6]मण्डपं चाधिवासार्थं कारयेद्देशिकोत्तमः । प्रासादाग्रेऽथ[7] सौम्ये वा शांकरे [8]वह्निदेशके ॥१४
षोडशस्तम्भसंयुक्तं द्वादशस्तम्भमेव वा । [9]नवहस्तसमोपेतं सप्तहस्तमथापि वा ॥ १५ ॥
पङ्क्तित्रयसमायुक्तं [10]पङ्क्तिमानसमुच्छ्रयम् । कृत्वा नवपदं तत्र तन्मध्ये वेदिका भवेत् ॥१६
[11]तालमात्रसमुत्सेधा दर्पणोदरसंनिभा । वेदिकायाश्चतुर्दिक्षु कुण्डे वा स्थण्डिलेऽपि वा ॥१७॥
होमं कुर्याद्विधानेन [12]प्रोक्तलक्षणसंयुते[13] । चतुरश्राणि कुण्डानि सर्वाणि परिकल्पयेत् ॥१८॥
[14]वितानेनोर्ध्वमाच्छाद्य दर्भमाला[15]समन्वितम् । आशाध्वज[16]समोपेतं [17]चतुस्तोरणभूषितम्[18] ॥१९

---

[1] Cf. *Kāraṇāgama*, I, 10, 20 :
सौवर्णमौर्णसूत्रं वा अथ कार्पासिकं तु वा । कौतुकं बन्धयेद्धीमान् प्रत्येकं वस्त्रवेष्टितम् ॥

[2] B, E : सैकतम् pour कौतुकम्

[3] C : रजतं

[4] F : कार्पासिकं

[5] Cf. *Kāraṇāgama*, I, 10, 11b-16 :
पूर्वे वा चोत्तरे वापि मण्टपं चाष्टहस्तकम् । विकाराङ्घ्रिसमायुक्तं युगद्वारसमायुतम् ॥
मण्टपं तत्त्रिभागैकं मध्यमे वेदिकां कुरु । तालमात्रं तलोत्सेधं दर्पणोदरसन्निभम् ॥
दर्भमालासमायुक्तं वितानध्वजसंयुतम् । मुक्तादाम्ना स्वलंकृत्य तरङ्गैर्णैव वेष्टयेत् ॥
गोमयालेपनं कृत्वा पुण्याहं वाचयेत्ततः । वेदिकायाश्च तन्मध्ये चाष्टद्रोणैश्च शालिभिः ॥
तदर्धैस्तण्डुलैश्चैव तदर्धैश्च तिलैरपि । स्थण्डिलं कारयेद्धीमान् तन्मध्ये नलिनं लिखेत् ॥
लाजपुष्पकुशैश्चैव विकिरेत्तु विशेषतः ।

[6] C omet le demi-*śloka* 14a

[7] A : च pour अथ

[8] C : वाम्निदेशके

[9] C omet le demi-*śloka* 15b

[10] B, C, E, F : पङ्क्तिमानसथोच्छ्रयम्

[11] A, B, E : तालमात्रसमुत्सेधं दर्पणोदरसंनिभम्

[12] Cf. *Suprabhedāgama*, I, 32, 11-12 :
कुर्यादस्त्रं महाशासु कुण्डानि विधिवत्ततः । तुर्याश्राण्यथ वृत्तं तु शाङ्करेऽपि तथैव हि ॥
अथवा वालुकैर्वापि स्थण्डिलं कारयेत्क्रमात् । अग्न्याधानादिकं सर्वं पूर्वोक्तेन विधानतः ॥

[13] A : प्रोक्तलक्षणमुच्यते

[14] A : वितानेनोर्ध्वतश्छन्द pour वितानेनोर्ध्वमाच्छाद्य ; B : वितानो ध्वजमाच्छाद्य ; E : विताने ध्वजमाच्छाद्य

[15] E : समन्विताम् pour समन्वितम्

[16] E : समोपेतां pour समोपेतं

[17] F : तत्तु pour चतुम्

[18] E : भूषिताम pour भूषितम

चतुर्द्वार[1] समायुक्तमष्टमङ्गल [2]संयुतम् । [3]मङ्गलाङ्कुरसंयुक्तं मालापल्लवशोभितम् ॥ २० ॥
गोमयालेपितं[4] कृत्वा मण्डपं तं मनोहरम् । सितपुष्पाक्षतोपेतं पुण्याहं [5]वाचयेत्ततः ॥ २१ ॥

[इष्टकानां स्तूपिदण्डस्य च न्यासः[6]]

वास्तुहोमं च कुर्वीत शास्त्रदृष्टेन कर्मणा । तन्मध्ये स्थण्डिलं कृत्वा [7]शालिभिर्विमलैस्ततः॥२२॥
पद्ममष्टदलं कृत्वा परिस्तीर्य कुशैस्ततः । शक्तिचक्रं[8] समभ्यर्च्य तन्मध्ये [9]नूतनेन तु॥ २३ ॥
[10]वाससासनमास्तीर्य दण्डं तस्योपरि न्यसेत् । दण्डोर्ध्वे कूर्चमाबध्य [11]वेष्टयेत्पुष्पमालया ॥२४॥
वस्त्रेणाच्छादयित्वाथ तत्पार्श्वे [12]चेष्टकाः क्रमात् । [13]ऊर्ध्वाक्षरा यथा सर्वाः प्रागग्रास्ता निवेशयेत्॥ २५ ॥
एवं [14]चतस्रो विन्यस्य देवतास्तासु च क्रमात् । [15]तत्तदक्षरवाच्यास्तु [16]यजेद्गन्धादिभिर्बुधः॥२६॥
इष्टकाश्च ततः सर्वा वस्त्रेणावेष्टयेत्सुधीः[17] । दण्डे [18]चेशं समभ्यर्च्य [19]सान्तं बीजं समुच्चरन्॥२७॥

---

[1] E : समायुक्ताम् pour समायुक्तम्   [2] E : संयुताम् pour संयुतम्

[3] Dans les mss. B, E, F les *śloka* 20b et **21** se trouvent entre les *śloka* 23 et 24

[4] F : आलेपनं pour आलेपितं   [5] F : वाचयन ततः

[6] Cf. *Kāmikāgama*, I, 61, 6-10a :

वास्तुहोमं पुरस्कृत्य स्थण्डिलं कारयेद्बुधः । अष्टद्रोणैस्तदर्धैर्वा शालिभिश्च तदर्धकैः ॥
तण्डुलैश्च तिलैर्लाजैर्दर्भैः पुष्पैर्हृदा गुरुः । शय्यां तु कल्पयित्वा तु पञ्चमृत्पञ्चगव्यकैः ॥
प्रक्षाल्य चेष्टकाः स्तूपिं यजेद्गन्धादिभिर्हृदा । स्वराद्यवेदवर्णं तु पूर्वादिक्रमशो लिखेत् ॥
इष्टकाः सहृदा सर्वा श्वेतचन्दनचर्चिताः । शय्यायां स्थापयित्वा तु तद्वामे स्तूपिकां न्यसेत् ॥
कौतुकं बन्धयित्वा तु वस्त्रैराच्छाद्य देशिकः ।

[7] A : शालिपिष्टमिलैस्ततः   [8] A : शक्रं pour चक्रं

[9] A : नूत्तने तु वा ; E : नतनेन तु : F : नतनेनतु

[10] A : स्वालनं शेकमास्तीर्य ; C : वासमासनवास्तीर्य ; F : वाससासनवाम्थव्य

[11] B : आवेष्टयेत् pour वेष्टयेत्   [12] C : चेष्टिकाक्रमात्

[13] A : ऊर्ध्वेक्षरा ; B, E : ऊर्ध्वाक्षरं : F : ऊर्ध्वाक्षरं यथा सर्वाः

[14] A : चतसृर्विन्यस्य

[15] A : तत्तदक्षरवाचा तु ; B, C, E, F : तत्तदक्षरवाच्यांस्तु

[16] F : यजेद्गन्धादिभिर्बुधः   [17] B, E : बुधः pour सुधीः

[18] A : द्वेशं ; B, E, F : चैशं ; C : वैशं   [19] B, C, E, F : सान्तबीजं

[कुम्भस्थापनम्, होमश्च[1]]

स्थापयेच्च ततः [2]कुम्भान्मध्यादीशान्तकं[3] यथा । [4]प्रधानघटसंयुक्तान्ससूत्रांस्तोयपूरितान् ॥२८॥
सकूर्चान्सापिधानांश्च गन्धचन्दनचर्चितान् । [5]वेष्टितान्नववस्त्रैस्तु रत्नकाञ्चनसंयुतान् ॥ २९ ॥
तेषु मध्ये शिवं [6]चेष्ट्वा दिक्पालान्परितो यजेत् । ततो [7]होमः प्रकर्तव्यो दिक्षु पूर्वादिषु क्रमात् ॥ ३० ॥
अग्निमाधाय[8] सर्वत्र कृत्वा [9]चाग्निमुखं ततः । [10]पुरुषं पूर्वकुण्डे च दक्षिणे घोरमेव च ॥३१॥
[11]सद्यं [12]पश्चिमकुण्डे तु वामदेवं तथोत्तरे । गन्धाद्यैः सर्वमभ्यर्च्य तत्तन्मन्त्रमनुस्मरन् ॥३२॥
समिदाज्यचरूंश्चैव तिलं सर्षपमेव च । लाजांश्च तण्डुलांश्चैव प्रत्येकं तु [13]दशाहुतीः ॥ ३३ ॥
साङ्गेन मूलमन्त्रेण [14]समिदादिक्रमेण तु । [15]हुत्वा स्पर्शाहुतिं कीलं स्पृष्ट्वा स्पृष्ट्वा तु होमयेत्॥३४

---

[1] Cf. *Kāraṇāgama*, I, 10, 24-30 :

तन्तुना वेष्टितान् कुम्भान् गन्धतोयेन पूरितान् । सकूर्चान् सापिधानांश्च सवस्त्रान् हेमसंयुतान् ।
लोकपालाधिपान् स्थाप्य चाष्टौ वै वेदिकोपरि । गन्धपुष्पादिभिः पूज्य पूर्वादिक्रमयोगतः ॥
वालुकाभिश्चतुर्दिक्षु कुर्यात्स्थण्डिलमुत्तमम् । अग्न्याधानादिकं सर्वमग्निकार्योक्तमाचरेत् ॥
सद्येन समिधो हुत्वा आज्यं मूलेन होमयेत् । अघोरेण चरुं हुत्वा लाजं वै हृदयेन तु ॥
तिलं हुत्वा तु शिखया सर्षपं कवचेन तु । बीजमुख्येन माषं तु प्रत्येकं पञ्चविंशतिः ॥
होमं कृत्वा विशेषेण द्रव्यान्ते व्याहृतिं हुनेत् । जयादिरभ्याधानं च राष्ट्रभृच्च क्रमाद्धुनेत् ॥
स्विष्टमग्नेति मन्त्रेण जुहुयात्तदनन्तरम् ।

cf. *Kāmikāgama*, I, 61, 10b-14 :

परितोऽष्टौ घटान्न्यस्त्वा लोकेशाशासु तान् हृदा । संपूज्य गन्धपुष्पाद्यैर्मूर्तिमूर्त्यधिपान्न्यसेत् ॥
नन्दां भद्रां जयां रिक्तां पूर्णां चैवेष्टकासु च । न्यसेत्स्तूप्येकदेशं च होमकर्म समाचरेत् ॥
कृत्वा कुण्डाग्निसंस्कारमग्निकार्योक्तमार्गतः । समिदाज्यान्नलाजैश्च तिलाद्यैश्च क्रमाद्धुनेत् ॥
पलाशोदुम्बराश्वत्थवटाः पूर्वादिदिक्षु च । प्रधानेऽपि पलाशः स्यात्स च सर्वत्र वामतः ॥
शिवब्रह्माङ्गमन्त्रैश्च शतसंख्यं तु होमयेत् ।

[2] E, F : कुम्भं pour कुम्भान्

[3] A : मध्यादीनान्तकं pour मध्यादीशान्तकं

[4] A : प्रधानं pour प्रधान

[5] A : वेष्टयेन्नववस्त्रैस्तु

[6] A : यष्ट्वा pour चेष्ट्वा

[7] A : होमं प्रकर्तव्यं

[8] A : आदाय pour आधाय

[9] A omet च

[10] F : पुरुषः पूर्वकुम्भस्य ; B : पुरुषं पूर्वकुण्डस्थ; C, E : पुरुषं पूर्वकुण्डस्थं

[11] C : सद्यः pour सद्यं

[12] E : च पश्चिमे कुण्डे pour पश्चिमकुण्डे तु

[13] A : दशाहुतिः ; C : शताहुतिम् ; E, F : शताहुतिः

[14] C : समिदाज्यक्रमेण तु

[15] A : हुत्वा मन्त्राहुतितिलं स्पृष्ट्वा स्पृष्ट्वा ; E : हुत्वा स्पृश्येष्टका चैव कीलं स्पृष्ट्वा ; F : हुत्वा स्पर्शाहुतिं हुत्वा स्पृष्ट्वा

[1]आज्येन घोरमन्त्रेण सर्वत्रापि [2]शताहुतीः । [3]दशाहुत्यवसाने तु [4]संस्पर्शश्च प्रकीर्तितः ॥ ३५ ॥
द्रव्यान्ते व्याहृतिं हुत्वा हविर्दद्यात्ततः क्रमात् । तत्र कुम्भस्थितानां तु देवतानां विशेषतः ॥ ३६

[प्रातःकरणीयं स्थापनम्[5]]

एवं कृत्वाधिवासं तु रात्रौ प्रातः समुत्थितः । [6]कृतनित्यो[7] गुरुस्तत्र [8]होतृभिस्तन्त्रवित्तमैः[9] ॥ ३७
पूर्णां[10] सर्वेषु कुण्डेषु वह्निमभ्यर्च्य होमयेत् । सर्वात्मानं समुच्चार्य सोष्णीषः सोत्तरीयकः ॥ ३८ ॥
सुमुहूर्ते सुलग्ने तु सर्वदोषविवर्जिते । पूजितो यजमानेन धनधान्यादिभिः क्रमात् ॥ ३९ ॥
[11]तादृशैर्होतृदैवज्ञशिल्पिभिः सह देशिकः । इष्टका[12]कीलकुम्भांश्च पूजयित्वा यथाक्रमम् ॥ ४० ॥
[13]उत्थाप्याथेष्टकाः सम्यग्यजमानादिभिः[14] सुधीः । शङ्खदुन्दुभिनिर्घोष[15]गीत[16]नृत्तसमन्वितम्
प्रदक्षिणं ततः कृत्वा प्रासादे देशिकोत्तमः । [17]आरुह्योपरि तन्मूर्ध्नि [18]रन्ध्रं नीरन्ध्रकं तथा ॥ ४२

---

[1] B, C, E, F : आद्येनाघोरमन्त्रेण

[2] A : दशाहुतिः ; C : शताहुतिम् ; E, F : शताहुतिः

[3] A : दश इत्यवसाने तु

[4] A : संस्पर्शं च प्रकीर्तितम्

[5] Cf. *Kāraṇāgama* I, 10, 31-39 :

ततः प्रभाते विमले स्नानं कृत्वा तु देशिकः । नववस्त्रो धृतोष्णीषः शुक्लमाल्यैर्विभूषितः ॥
हेमाङ्गुलीयकटकैः कुण्डलाद्यैरलंकृतः । मुहूर्ते समनुप्राप्ते स्थापनं तु समारभेत् ॥
आचार्यं पूजयेत्तत्र वस्त्राङ्गुलीयकादिभिः । सर्वातोद्यसमायुक्तं स्वस्तिमङ्गलवाचकैः ॥
ब्रह्मघोषैः समायुक्तं सर्वालंकारसंयुतम् । अनन्यमानसो भूत्वा स्थापयेत्स्थपतिः सह ॥
सर्वांश्च बन्धयेत्तासामग्रं प्रतिदिशि स्थितः । न्यस्त्वा पूर्वादिपूर्वं तु प्रागग्रविधिना क्रमात् ॥
तन्मध्ये विन्यसेद्रत्नमिन्द्रनीलमथैन्द्रके । मरकतं याम्यदेशे तु स्फटिकं वारुणे तथा ॥
वज्रं सौम्ये तु विन्यस्य पद्मरागं तु पावके । वैडूर्यं नैर्ऋते देशे मुक्तां वायुप्रगोचरे ॥
प्रवालमैशे विन्यस्य माणिक्यं मध्यमे न्यसेत् । ईशानेन तु मन्त्रेण स्तूपीदण्डं ततोपरि ॥
तन्मूले प्रोक्षयेन्मन्त्री कुम्भोदेन विशेषतः । पूजयेद्गन्धपुष्पाद्यैः सुस्निग्धं बन्धयेत्ततः ॥
स्तूपीदण्डं त्रिभागैकं द्विभागेन तु बन्धयेत् ॥

[6] A : गुरुनित्यो गुरुस्तोत्रं भीमसन्त्रवित्तमैः

[7] B, F : कृतकृत्यो

[8] B, F : स्तोतृभिः pour होतृभिः

[9] B, C, F : तन्त्रवित्तमः pour तन्त्रवित्तमैः

[10] E, F : पूर्णं

[11] A : तादृशैः स्तोत्रदैवज्ञैः शिल्पिभिः

[12] F : कीर pour कील

[13] B, C, E, F : उत्थाप्य चेष्टकाः

[14] B, E : अभितः pour आदिभिः

[15] B, C, E : निर्घोषैर् pour निर्घोष

[16] F : घोष pour गीत

[17] B, C, E, F : आरोप्योपरि

[18] A : रन्ध्रं नीरलकं तथा ; C : रन्ध्रनीरन्ध्रकं तथा

[1]इष्टकाः शिल्पिना सार्धं [2]तत्तन्मन्त्रमनुस्मरन् । संस्थाप्योपरि रत्नानि विन्यसेन्मन्त्रवित्तमः ॥ ४३
मध्ये विन्यस्य [3]माणिक्यमिन्द्रनीलं तु पूर्वके । आग्नेय्यां तु प्रवालं च[4] याम्ये मरकतं[5] न्यसेत् ॥४४
वैडूर्यं [6]नैर्ऋते देशे स्फटिकं पश्चिमे तथा । [7]मुक्तां तु वायुदिग्भागे वज्रं सौम्ये च[8] विन्यसेत्॥४५
शांकरे पद्मरागं च [9]ततस्तेषु नवस्वपि । सलोहानि च बीजानि मध्ये सर्वाणि विन्यसेत् ॥४६
मनोन्मनीं [10]तु संपूज्य वामाद्याश्च ततो यजेत् । तदूर्ध्वे कीलकं[11] न्यस्य[12] शिखरार्धप्रमाणतः॥४७
तन्मन्त्रं तु समुच्चार्य ततः कृत्वा तु निश्चलम् ।

[कुम्भाम्भःप्रोक्षणम्[13]]

स्थापितांस्तु ततः कुम्भान्समानीय यथाक्रमम् ॥ ४८ ॥
[14]तत्कीले परितश्चापि प्रोक्षयेत्स्वस्वमन्त्रतः । [15]स्तूप्यंशमूर्ध्वतो [16]हित्वा [17]शेषं तत्र प्रबन्धयेत् ॥४९
एवं यः कुरुते मर्त्यः सर्वान्कामानवाप्नुयात्[18] । देहान्ते गणपो भूत्वा शिवलोके महीयते॥५०

इत्यजिताख्ये महातन्त्रे [क्रियापादे] [19]मूर्धेष्टकाविधिर्नाम

पञ्चदशः [20]पटलः

---

[1] A : इष्टकाः शिल्पिला सार्धं; B, F : इष्टका शिल्पिका सार्धं; C : इष्टका शिल्पिना सार्धं; E : इष्टिकाः शिल्पिका सार्धं

[2] C : तन्त्रमन्त्र pour तत्तन्मन्त्र

[3] B, C, F : माणिक्यम् pour माणिक्यम्

[4] B, C, E, F : तु pour च

[5] B, F : मरतकं pour मरकतं

[6] A : निर्ऋते

[7] B, C, E, F : मौक्तिकं pour मुक्तां तु

[8] B, C, E, F : तु pour च

[9] A : ततः स्तेषु

[10] A : तत्र pour तु ; C : च pour तु

[11] A : नीलकं pour कीलकं ; E : नलकं

[12] A, B, C, E : न्यस्त्वा

[13] Cf. *Kāmikāgama*, I, 61, 15-20 :
प्रभाते तु गुरुः स्नात्वा कृतमन्त्रादिविग्रहः । इष्टेष्टकाभिः स्थूपिं च कुम्भान् कुण्डस्थपावकान् ॥
कृत्वा च निष्कृतिं पूर्णां पूजासन्तुष्टमानसः । पञ्चनिष्कादिसंप्राप्तदक्षिणैर्मूर्तिधारकैः ॥
दैवज्ञाद्यैस्त्रिभिः सार्धं शिल्पिना च गुरूत्तमः । गृहीत्वा चेष्टकाः स्तूपिं कृत्वा धामप्रदक्षिणम् ॥
आरुह्य शिखरं मूर्ध्नि विन्यसेदिष्टकाः क्रमात् । आद्येष्टकोक्तरीत्यैव मध्ये रत्नादि विन्यसेत् ॥
तदूर्ध्वे स्थापयेत्स्थूपिं मूलमन्त्रेण देशिकः । तन्मूलं कुम्भतोयैश्च प्रोक्षयेत्स्वस्वमन्त्रतः ॥
स्तूपिकांशं विहायाथ बन्धयेद्देष्टकादिभिः । एवं यः कुरुते मर्त्यः स पुण्यां गतिमाप्नुयात् ॥

[14] C : कीलोपरि ततश्चापि

[15] A : स्थूपि pour स्तूपि

[16] A : हुत्वा pour हित्वा

[17] A : शेषतन्त्रं

[18] B, C, E : अवाप्य सः pour अवाप्नुयात् ; F : अवाप्स्यति

[19] A : मूर्धेष्टकाविधिपटलः षोडशः ; C : मूर्ध्नेष्टकाविधिर्नाम पञ्चदशः पटलः समाप्तः ; E : मूर्ध्नेष्टकाविधिर्नाम चतुर्दशः पटलः ; F : मूर्ध्नेष्टिका पञ्चदशः पटलः

[20] B omet पटलः

## [षोडशः पटलः]

### [पिण्डिकालक्षणम्[1]]

[2]पिण्डिकालक्षणं वक्ष्ये [3]तच्छृणु त्वं समाहितः । लिङ्गायाममभं तारं [4]पिण्डिकाया वरोत्तमम् ॥१॥
[5]अधमस्याधमं चापि लिङ्गोत्सेधार्धविस्तृतम् । [6]तयोर्मध्येऽष्टभागे तु [7]पीठव्यासा नवोदिताः ॥२॥
[8]विष्कम्भत्रिगुणं [9]तारमथवा तत्र कल्पयेत् । लिङ्गमूलस्थकर्णेन[10] द्विगुणं कन्यसं भवेत् ॥ ३ ॥
[11]पादाधिकं तु मध्यं [12]स्याच्छ्रेष्ठमर्धाधिकं भवेत् । कृत्वा नवपदं गर्भं पीठमेकेन वा भवेत्॥४॥
उत्सेधं वैष्णवांशेन समं [13]पीठस्य कल्पयेत् । [14]बाणलिङ्गादिलिङ्गानां पुराणानामथोच्यते ॥५॥
[15]पूजांशमध्यगं नाहं कृत्वा षोडशभागिकम् । तेषु पञ्चांशकैस्तस्य विष्कम्भं तु प्रकल्पयेत् ॥६॥
तेन कृत्वाथ वेदाश्रं [16]तत्कण्ठं द्विगुणं भवेत् । [17]पीठतारसमुत्सेधं तत्समं परिकीर्तितम् ॥७॥
अथवा द्व्यंशके तस्मिन्नेक[18]भागाधिकोच्छ्रयम् । [19]एवं विस्तारमुद्दिष्टं पीठानामुच्छ्रयं तथा॥८॥

---

[1] Pour पिण्डिकालक्षण, voir *Aṃśumatkāśyapa*, 52, *Kāmikāgama*, II, 35, *Kāraṇāgama*, I, 9, *Kiraṇāgama*, III, 23, *Dīptāgama*, 14, *Vīrāgama*, 70 et *Suprabhedāgama*, 1, 33

[2] Cf. *Suprabhedāgama*, I, 33, 94b-96 :
"पिण्डिकालक्षणं शृणु । त्रिगुणं लिङ्गविस्तारं त्रिगुणार्धं चतुर्गुणम् ॥
त्रिविधस्त्वधमादिस्तु पीठविस्तारमुच्यते । विष्णुभागस्य चोत्सेधं पीठोत्सेधं विधीयते ॥
अथवा ब्रह्मभागस्य चाष्टांशेन समन्वितम् ॥

[3] E : तच्छृणुष्व समाहितः

[4] B, C, E : पिण्डिकायाःपरोत्तरम् ; F : पिण्डिकायामनोत्तरम्

[5] B, C, E, F : अधमादधमं चैव

[6] A : तयोर्मध्याष्टभागे तु ; B, E, F : तयोर्मध्ये विभागे तु

[7] A : पीठव्यासो नवोदितः

[8] B, E, F: विष्कम्भं त्रिगुणं

[9] C : तारमथवात्र प्रकल्पयेत्

[10] B, E, F : कण्ठेन pour कर्णेन

[11] A : पादादिकं

[12] E, F : स्याच्छ्रेष्ठमध्याधिकं भवेत्

[13] C : पीठं च pour पीठस्य

[14] A omet les *śloka* 5b et 6.

[15] B, D, E, F : पूजांशं मध्यगं

[16] A : तत्कर्णं pour तत्कण्ठं

[17] B, C, E, F : पीठतारं तदुत्सेधं

[18] B, C, E, F : पादादिक pour भागाधिक

[19] E : एवमुद्दिष्टपीठानां ; F : एवमुद्दिष्टबीजानां

[पिण्डिकाभेदाः[1]]

चतुरश्राथ[2] वृत्ता च पिण्डिका द्विविधा मता । भद्रा [3]यक्षी च [4]वज्री च श्रीकरा [5]विजयेति च ॥९
चतुरश्रस्य भेदाः स्युर्वृत्तभेदमतः शृणु । पद्मं [6]चक्रं तथा वेदी सौम्या [7]रम्या च पञ्चमी ॥ १०

[ भद्रपीठम्[8] ]

[9]पीठोत्सेधे विकारांशे व्योमांशं पादुकं भवेत् । वेदांशं जगती [10]तस्य कैरवं [11]वह्निभागशः ॥ ११
पट्टिकैकेन कर्तव्या [12]कण्ठं तस्य गुणांशकम् । तदूर्ध्वे कम्पमेकेन तस्योर्ध्वे पट्टिका भवेत् ॥ १२
द्वाभ्यां तदूर्ध्वे चांशेन[13] [14]घृतवारि प्रकल्पयेत् । एवं भद्रं समाख्यातम्; [15]यक्षपीठं ततः शृणु ॥ १३ ॥

---

[1] Cf. *Kiraṇāgama*, III, 23, 18b-21 :
भद्रा यर्ता च वज्री च त्रिकोणा परिमण्डला । वेदी पद्मार्धचन्द्रा च स्थण्डिला विहिताष्टधा ॥
चतुरश्रा भवेद्भद्रा मेखलाद्वयभूषिता । यर्ता त्रिमेखला ज्ञेया वज्री षड्भागिकाश्रया ॥
शृङ्गाटका त्रिकोणा स्यान्मण्डला पूर्णचन्द्रवत् । वेदी ह्येषा च विज्ञेया पद्मा पद्मसमा भवेत् ॥
अर्धचन्द्रा धनुःकल्पा स्थण्डिला स्याद् द्विमेखला ।

[2] C, E, F : च pour अथ
[3] E : धात्री pour यक्षी
[4] A : वज्रा
[5] A : विजये तव
[6] A : चक्रां
[7] B, C : रम्यादि pour रम्या च ; E : रम्येति

[8] Cf. *Kāraṇāgama*, I, 9, 151-154a :
भद्रपीठमथोच्यते । पूर्ववत् षोडशांशेन पीठोन्सेधं भजेत्ततः ॥
व्योमांशं पादुकोन्सेधं वेदांशं जगती भवेत् । अग्न्यंशं वृत्तमित्युक्तं भागेकेन तु पट्टिका ॥
गुणांशं कर्णमित्युक्तं भागेकेन तु पट्टिका । महापट्टी द्व्यंशेन घृतवारि तथांशकम् ॥
एवं स्याद्भद्रपीठं तु सर्वलिङ्गेषु योग्यकम् ।

cf. *Suprabhedāgama*, I, 33, 103b-106 :
भद्रपीठमथ शृणु । पूर्ववत्षोडशांशं तु कृत्वोत्सेधं विधानतः ॥
भागेनोपानमेकेन चतुर्भिर्जगती भवेत् । कुमुदं तु त्रिभिर्भागैरेकेनैव तु पट्टिका ॥
कण्ठं कुर्यात्त्रिभिर्भागैरेकांशेन तु पट्टिका । महापट्टिका द्व्यंशा तु एकेन घृतवारिणी ॥
भद्रपीठं समाख्यातम्

[9] A : पीठोन्सेधं विकारांशे : C : पीठोन्सेधविकारांशे
[10] C : तस्याः
[11] B, C, F : वह्निभागिकम् ; E : वह्निभागकम्
[12] A : कर्णं pour कण्ठं
[13] A : अंगेन pour अंशेन
[14] A : घृतवारं
[15] B, C, F : यक्षिपीठमथ शृणु ; E : यक्षपीठमथ शृणु

[ यक्षपीठम् ]

उत्सेधं पूर्ववत्कृत्वा [1]त्वध्यर्धं [2]पादुकं भवेत् । [3]जगत्यग्न्यंशकैरूर्ध्वे [4]पद्ममर्धाधिकं त्रयम्॥१४॥
[5]तदूर्ध्वे कम्पमेकांशं द्वाभ्यां कैरवमुच्यते । तस्योर्ध्वे कम्पमेकांशमूर्ध्वे [6]पद्मं त्रिभिर्भवेत् ॥१५॥
[7]अर्धांशे पट्टिकाबन्धमर्धांशे [8]घृतवारिणम् । [9]यक्षपीठमिति प्रोक्तम् ; वज्रपीठमथ शृणु॥१६॥

[ वज्रपीठम्[10] ]

पीठोत्सेधं तु विभजेत्पञ्चविंशतिभागतः[11] । एकांशं पादुकं [12]विद्धि [13]पद्ममेकेन कारयेत् ॥ १७॥
[14]तदूर्ध्वैकांशतः कम्पं धरणीमाश्रमांशकैः[15] । [16]अर्धाधिकत्रिभागेन[17] [18]पद्ममूर्ध्वे तु कारयेत्॥१८॥
एकेन कम्पमेकेन [19]पद्ममूर्ध्वे प्रकल्पयेत् । अग्न्यंशं कुमुदं वृत्तं तदूर्ध्वेऽम्बुजमंशतः ॥ १९ ॥
कम्पमेकेन कर्तव्यं कण्ठं द्वाभ्यां प्रकल्पयेत् । एकेन [20]कम्पमूर्ध्वेऽधः [21]पद्ममेकांशतो भवेत्॥२०
द्वाभ्यां चाथ महापट्टी [22]तदूर्ध्वैकांशवाजनम् । अर्धेन [23]घृतवारि [24]स्याद्वज्रपीठं प्रकीर्तितम्॥२१

---

[1] A : अध्यर्धं : F : मध्यार्धं
[2] C, E : पादुका
[3] C : जगत: द्विंशकैरूर्ध्वे
[4] A : पदमर्धाधिकं त्रयम् : C, E : पद्ममर्धाधिकत्रयम्
[5] A : तदूर्ध्वं
[6] A : पद्मं pour पद्मं
[7] B, E : अष्टांशे
[8] E : घृतवारिर्णाम् ; F : घृतवारणम्
[9] A, B, C : यक्षिपीठमिति
[10] Cf. *Īśānaśivagurudevapaddhati*, vol. IV, p. 385 :
पीठोत्तुङ्गं तु मन्वंशे सार्धं जन्मार्धतोऽवटम् । सार्धत्रिभागं पद्मं स्यादर्धाभ्यां पट्टनिम्नके ॥
भागो वज्रं निम्नमर्धं कम्पोऽर्धं त्रिभिरम्बुजम् । निम्नमर्धं ततोऽध्यर्धान्पट्टिकार्धेन चाज्यभृत् ॥
वज्रपद्माह्वयं पीठं सर्वलिङ्गसमं भवेत् ।
[11] A : भागया pour भागत:
[12] C : मध्य pour विद्धि
[13] A : पदम् pour पद्मम्
[14] A : तदूर्ध्वेऽर्धांशत:
[15] B, C, E, F : अंशकम् pour अंशकै:
[16] B, E, F : अर्धाधिकं त्रिभागेन
[17] C : त्रिभागेक pour त्रिभागेन
[18] A : पदम् pour पद्मम्
[19] A : पदमूर्ध्वे प्रकल्पयेत् ; C : पद्ममूर्ध्वेन कारयेत् ; E, F : पद्ममूर्ध्वे प्रकारयेत्
[20] B : कम्पमूर्ध्वाध: ; C : कम्पमूर्ध्वे य: ; E : कम्पमूर्ध्वा य:
[21] A : पदम् pour पद्मम्
[22] C : पद्ममेकांशवाजनम्
[23] A : घृतवारी pour घृतवारि
[24] A : स्यात् श्रीकरं कीर्त्यतेऽधुना

[श्रीकरपीठम्[1]]

[2]त्रिसप्तांशे तदुत्सेधे खभागं पादुकं भवेत् । जगतीदलं[3] चतुर्भिः स्यात्कण्ठमेकेन कारयेत् ॥ २२
तदूर्ध्वे [4]कम्पमेकेन [5]कुम्भमग्न्यंशकैस्तथा । [6]पद्ममेकं तदूर्ध्वे तु कम्पमेकं तदूर्ध्वतः ॥ २३ ॥
गलं तु नेत्रभागं स्यात्कम्पमेकांशमुच्यते । [7]पद्ममेकेन कर्तव्यं [8]महापट्टी तु द्व्यंशका ॥ २४ ॥
पद्ममेकांशमुद्दिष्टं [9]तदूर्ध्वे पट्टिकांशतः । [10]घृतवारि तथांशेन [11]कुर्याच्छ्रीकरमुच्यते ॥२५॥

[विजयपीठम्[12]]

उत्सेधे षोडशांशे तु [13]तत्रैकांशेन पादुकम् । तदूर्ध्वे [14]पद्ममर्धेन कम्पमर्धेन कारयेत् ॥२६॥

---

[1] Cf. *Kāmikāgama*, II, 35, 39-43 :
एकविंशतिभागेऽग्निभागैः पादुकमूर्ध्वतः । पञ्चभिः पङ्कजं कम्पस्त्वेकेनोर्ध्वं त्रिभागतः ॥
कर्णस्त्वेकेन कम्पः स्याद् भूतांशैरूर्ध्वपङ्कजम् । द्वाभ्यां पङ्क्ती भवेदूर्ध्वे घृतवार्येकभागतः ॥
षोडशांशे तदुत्सेधे पादुकं सार्धभागयुक् । जगती बन्धभागेन गुणार्धं पद्मतुङ्गकम् ॥
व्योमांशमूर्ध्वकम्पं तु द्वाभ्यां कुमुद उच्यते । वृत्ताकारस्तदूर्ध्वे तु पट्टिका भागमानतः ॥
द्वाभ्यां कर्णस्तु पद्मं स्यादर्धेनांशेन पट्टिका । शेषेण घृतवारी तु श्रीकरं पीठमीरितम् ॥

[2] A : त्रिस्सप्तांशे तदुत्सेधं
[3] B, C, E, F : गलं pour दलं
[4] B, C, E, F : पद्मम् pour कम्पम्
[5] B, C, E, F : कुम्भमग्न्यंशकं तथा
[6] A : पदम् pour पद्मम्
[7] A : पदम् pour पद्मम्
[8] B, C : महापट्टि द्वियंशकम् ; E : महापट्टी द्व्यांशकम् ; F : महापट्टी च त्र्यंशकम्
[9] B, C, E, F : तदूर्ध्वं पट्टिकैकतः
[10] A : घृतवारीं
[11] A : कुर्याद्विजयमुच्यते
[12] Cf. *Kāmikāgama*, II, 35, 48b-51 :
एकविंशतिभागं तु पीठोत्तुङ्गं विभज्य च । भागेन पादुकं वेदभागेन जगती मता ।
एकेन कर्णस्त्वेकेन पद्मं स्याद्गुणभागतः । कुमुदं पद्ममंशेन वाजनं त्वेकभागतः ॥
कर्णो द्विभागो भागेन वाजनं पद्ममंशतः । द्विभागा तु महापट्टी पद्ममंशेन भागतः ॥
कम्पः स्याद्घृतवार्यूर्ध्वे विजयाख्यमिदं भवेत् ।
cf. *Kāraṇāgama*, I, 9, 154b-158 :
एकविंशतिभागेन पीठोत्सेधं विभाजयेत् । अंशेन पादुकां कुर्याच्चतुर्भिर्जगतीं कुरु ॥
कर्णमेकेन कर्तव्यं पद्ममेकांशमेव च । तत्कुम्भं त्रिभिरंशैश्च पद्ममेकांशमेव च ॥
कुर्यादेकेन कम्पं तु पक्षांशेनैव कर्णकम् । कम्पमेकेन कर्तव्यं पद्ममेकेन कारयेत् ॥
महापट्टिं द्विभागाभ्यां पद्ममेकांशकेन तु । तस्योर्ध्वे पट्टिकैकेन घृतवारि तथांशकम् ॥
विजयं नाम पीठं तु सर्वशान्तिकरं परम् ।
[13] A : कृतं त्वेकांशतो भवेत्
[14] A : पद्ममर्ध्येन ; F : पद्ममेकेन

[1]त्रियंशाज्जगतीं कुर्यात्पद्मं भागद्वयेन तु । [2]कण्ठमर्धेन कर्तव्यं [3]पद्ममर्धांशतो भवेत् ॥ २७ ॥
कुम्भं कुर्याद् द्विभागेन [4]पद्ममर्धांशतो भवेत् । [5]कम्पमर्धेन कर्तव्यमध्यर्धं [6]कण्ठमुच्यते ॥ २८ ॥
अर्धेन पट्टिकां [7]कुर्यादर्धांशं पद्ममेव च । [8]अध्यर्धेन महापट्टीमंशेन घृतवारिणम् ॥ २९ ॥
एवं [9]विजयमाख्यातं पश्चमं [10]चतुरश्रके ।

[ पद्मपीठम्[11]]

पद्मपीठमथो वक्ष्ये वृत्तस्य प्रथमं तु यत् ॥ ३० ॥
[12]तदुत्सेधे विकारांशे [13]द्वाभ्यां मूले तु [14]पट्टिका । तदूर्ध्वे पञ्चभिः पद्मं वृत्तमंशद्वयेन तु ॥ ३१ ॥
[15]ऊर्ध्वे पद्मं [16]चतुर्भागैर्द्वाभ्यामूर्ध्वे तु पट्टिका । तदूर्ध्वे [17]घृतवारी च [18]भागेनैकेन कारयेत् ॥ ३२ ॥

---

[1] E : त्रयंशाज्जगतीं
[2] A : कर्णम् pour कण्ठम्
[3] F : पद्मनध्यांशतो
[4] A : पद्मनर्धन्निततो
[5] A : पद्ममध्येन ; F : कम्पमध्येन
[6] F : कर्णम् pour कण्ठम्
[7] A : कुर्यादिर्धांशे पद्मेत्र च
[8] B, E : अध्यर्धपट्टिमंशेन ; A : अध्यर्धेन महापट्टमंशेन
[9] F : विजयं त्वाख्यातं
[10] C : चतुरश्रकम्
[11] Cf. *Suprabhedāgama*, I, 33, 98-103 :
कृत्वा षोडश चोत्सेधं द्व्यंशेन च तु पट्टिका । पञ्चभागं तदूर्ध्वाब्जं दलैः षोडशभिर्युतम् ॥
दलमध्याङ्गुलोत्सेधं पद्मतुण्डमिहोच्यते । द्विभागं मध्यवृद्धं तु समन्तान्मदृढं दृढम् ॥
चतुर्भिरूर्ध्वपद्मं तु द्विभागेनोर्ध्वपट्टिका । तदूर्ध्वं तु ततः कुर्यादेकांशं घृतवारिणी ॥
पीठतारत्रिभागैकं नालं कुर्यात्तथोत्तरे । तत्तारस्य चतुर्थांशं तदर्धार्धमथादिकम ॥
द्विगुणं त्रिगुणं मूलं तदग्रं चार्धनाशनम् । विस्तारस्य चतुर्थांशादर्धादर्धमथापि वा ॥
जलमार्गं त्रिभागैकं कुर्यात्तत्र विशेषतः । एवं तु पद्मपीठं हि "
cf. *Kāraṇāgama*, I, 9, 147-151a :
पीठोत्सेधं तु यन्मानं विकारांशेन भाजयेत् । पक्षांशं पट्टिका प्रोक्ता बाणांशं पद्मपिण्डकम ॥
अंशद्वयेन वृत्तं स्याद्वेदांशमूर्ध्वपद्मकम् । तस्योर्ध्वे पट्टिका द्वाभ्यामंशेन घृतवारिणी ॥
पीठतारं त्रिभागैकं नालनिर्गममुच्यते । तत्समं मूलविस्तारं तत्त्रिभागैकमग्रतः ॥
उत्तरे जलमार्गं स्यात्सोमस्याभिमुखं भवेत् । मध्ये खातं त्रिभागैकं क्रमेण कृशता भवेत् ॥
एवं हि पद्मपीठं स्यात् "
[12] C, E : तदुत्सेधविकारांशे
[13] A : द्वाभ्यामूर्ध्वे तु
[14] F : पट्टिकम्
[15] E : ऊर्ध्वपद्मं
[16] A : चतुर्भागे pour चतुर्भागैर्
[17] B, C, E, F : घृतवारिं च
[18] C : भागैकैकेन

[ चक्रपीठम् ]

एवं पद्मं समाख्यातम् ; चक्रपीठमतः[1] शृणु । अष्टादशांशके तस्मिन्द्वाभ्यां मूले तु पट्टिका ॥३३॥
[2]त्रिभिरूर्ध्वेऽम्बुजं कुर्यात्कम्पमेकांशतो भवेत् । षड्भिरूर्ध्वे गलं कुर्यात्तदूर्ध्वे कम्पमेकतः ॥३४॥
ऊर्ध्वे पद्मं त्रिभिश्चैव सार्धेनैकेन पट्टिका । अर्धेन [3]घृतवारी स्याद् ; [4]वेदिपीठं ततः शृणुः ॥ ३५॥

[ वेदिपीठम्[5] ]

[6]उत्सेधे तु त्रिकारांशे [7]भागेनोपानमुच्यते । [8]पद्मतुण्डं द्विभागेन कम्पमेकेन कारयेत् ॥ ३६ ॥
[9]सप्तांशं [10]कण्ठमुद्दिष्टं तदूर्ध्वे कम्पमंशतः । [11]पद्ममूर्ध्वेऽशतः प्रोक्तमध्यर्धेन तु पट्टिका ॥ ३७॥
[12]तदूर्ध्वेऽर्धांशतः [13]पद्मं कम्पमर्धेन कारयेत् । अर्धेन [14]घृतवारी स्यात् ; [15]सौम्यपीठमथ शृणु ॥३८॥

[ सौम्यपीठम् ]

[16]उत्सेधे मनुभागे तु [17]द्वाभ्यां मूले तु पट्टिका । कम्पमेकेन कर्तव्यं [18]तदूर्ध्वे [19]कण्ठमष्टभिः॥३९॥
तदूर्ध्वे [20]कम्पमर्धेन सार्धेनैकेन पट्टिका । [21]तदूर्ध्वे [22]घृतवारी च भागेनैकेन कल्पयेत् ॥ ४० ॥

---

[1] B : इति pour अतः ; C, E, F : अथ
[2] A : त्रिभिरूर्ध्वाम्बुजं : B, E : त्रिभिरूर्ध्वेऽम्बुजे
[3] B, C, F : घृतवारि स्याद्
[4] B, C, E, F : वेदिपीठमथ
[5] Cf. *Suprabhedāgama*, I, 33, 106b-108 :

वेदिपीठमथोच्यते ॥
पीठोत्सेधे नवांशे तु द्व्यंशेन तु पट्टिका । चतुर्भिः कण्ठतुङ्गं तु द्व्यंशेनैवोर्ध्वपट्टिका ॥
घृतवार्येकभागं तु समन्ताच्चतुरश्रकम् । वेदीपीठं समाख्यातम् "

[6] B, C, F : उत्सेधं तु
[7] A : भागेनोपादानमुच्यते
[8] A : पदमूर्ध्वे
[9] F : शब्दांशं
[10] A, F : कर्णम् pour कण्ठम्
[11] A : पदमूर्ध्वेऽग्रतः; C: कम्पमूर्ध्वांशतः; F : कम्पमूर्ध्वेऽशतः
[12] B omet le demi-*śloka* 38a
[13] A : पद्मं pour पद्मं
[14] B, C, D, F : घृतवारि
[15] A : सौम्यपीठमतः ; D : सौम्यं पीठमथ
[16] A : उत्सेधं मनुभागे तु ; C : उत्सेधमनुभागे तु ; F : उत्सेधमनुभागेन
[17] A : द्वाभ्यामूर्ध्वे तु
[18] C, F : तदर्धे
[19] F : कर्णम् pour कण्ठम्
[20] A : कम्पमंशेन; B : कम्पमेकेन
[21] F omet les *śloka* 40b, 41 et 42
[22] B, C, D, E : घृतवारिं च

[ रम्यपीठम् ]

रम्यपीठमथो वक्ष्ये षोडशांशे [1]तदुन्नते । एकेन [2]पादुकं कुर्यात् [3]पद्मतुण्डं [4]द्वियंशतः ॥ ४१ ॥
कम्पमंशेन कर्तव्यं कण्ठं तस्य [5]द्विभागतः । अर्धेन कम्पमर्धेन [6]पद्मं वृत्तं तदूर्ध्वतः ॥ ४२ ॥
कुमुदं स्याद् द्विभागेन [7]पद्ममर्धांशतस्ततः । पट्टिकार्धेन [8]कर्तव्या द्वाभ्यां च गलमेव हि[9] ॥ ४३ ॥
[10]एकांशं कम्पपद्मे तु [11]ह्यध्यर्धं प्रस्तरं तथा । [12]आलिङ्गान्तरितावंशाद् घृतवार्यर्धमेव च ॥४४॥
एवं [13]रम्यं समाख्यातं लिङ्गस्य सकलं विना । सर्वेषामपि पीठानां सामान्यं लक्षणं शृणु ॥४५

[ पीठसामान्यलक्षणम्[14] ]

[15]मूलादग्रेऽष्टभागैकताराहीनं प्रकल्पयेत् । [16]उक्तेष्वेतेषु [17]पीठेषु दशस्वपि जनार्दन ॥ ४६ ॥
अङ्गानां कल्पितानां तु [18]प्रवेशं निर्गमं तथा । [19]तत्तदंशे तु तुर्यांशैरर्धैर्वाथ[20] त्रियंशकैः ॥४७॥

---

[1] C : तदुन्नतम्

[2] D, C, E : पादुकां

[3] A : पदतुण्डं ; E : पत्रतुण्डं

[4] E : द्वयंशकम्

[5] E : विभागतः

[6] A : पदवृत्तं ; C : पद्मवृत्तं

[7] A : पदमंशोर्ध्वतस्ततः ; D : पद्ममर्धांशतः स्मृतः ; F : पद्ममर्धांशतः स्मृतः

[8] B, D, E : कर्तव्यं

[9] A : च pour हि

[10] A : एकांशं कम्पपद्ये तु ; E : एकांशं कम्पपद्मौ तौ ; F : एकांशौ कम्पपद्मौ तौ

[11] Les mss. omettent हि

[12] E : आलिङ्गान्तरितं द्व्यंशं घृत० ; D, F : आलिङ्गान्तरितावंशा घृत०

[13] C, D, F : सौम्यं pour रम्यं

[14] Cf. *Kiraṇāgama*, III, 23, 11b-18a :

पीठानां लक्षणं शृणु ।
यावद्दैर्घ्यं भवेल्लिङ्गं तावत्पीठस्य विस्तरम् । उत्सेधस्य त्रिभागेन तच्च षोडशधा कुरु ॥
एकं भूमिगतं कृत्वा जगतीं चतुरङ्गिकाम् । भागत्रयेण वृत्तं स्यादेकांशे वृत्तपट्टिका ॥
कुर्यात्कण्ठं त्रिभिर्भागैः कार्यांशैरूर्ध्वपट्टिका । द्वाभ्यां तदूर्ध्वपट्टिः स्याद्धर्वेदंशेन पट्टिका ॥
भागं भागं त्यजेत्तावज्जगत्यंशात्कलाधिकम् । कण्ठस्थानाच्च निष्क्रामः कार्यो यावत्तदन्तिकम् ॥
स्याज्जलाश्रयबाहुल्यं लिङ्गस्यार्धात्त्रिभागतः । मेखला तत्त्रिभागा स्यात्खातं तद्व्यंशहीनकम् ॥
त्रिधा पीठे कृते मध्ये नालः स्यादुत्तरायतः । जलमार्गं त्रिभागेन ह्रासः कार्यस्त्रिभागतः ॥
सामान्यलक्षणं प्रोक्तम्”

[15] C, E : मूलादष्टेऽग्रभागैकं

[16] A : उक्तेषु तेषु

[17] E : सर्वेषु

[18] D : प्रवेशे

[19] A : तत्तदंशं तु तुर्यांशे

[20] D : अन्यैर्वाथ

[1]समैर्वा कल्पयेत्तेषां [2]कल्पयेन्नालमुत्तरे । विस्तारस्य [3]त्रिभागैकं नालमूलस्य विस्तरम् ॥ ४८॥
तत्समं [4]तस्य [5]दैर्घ्यं स्यात्क्रमेण कृशता भवेत् । मूलादग्रस्य विस्तारं [6]तत्त्रिभागेन कल्पयेत् ॥४९॥
तन्मध्ये [7]जलमार्गः स्यात्तद्विस्तारत्रिभागतः । [8]घृतवारिसमं खातं निर्गमे किञ्चिदानतम् ॥ ५० ॥
एवं लक्षणमुद्दिष्टं समं शैलेष्टकादिषु । एकया शिलया कर्तुं [9]पीठिका चेन्न शक्यते ॥ ५१ ॥
द्वाभ्यां त्रिभिश्चतुर्भिर्वा शिलारूपैः प्रकल्पयेत् । [10]ऊर्ध्वभागेन कर्तव्यः सन्धिस्तत्र कथंचन ॥५२॥

[भद्रादिपीठफलम्[11]]

भद्रादीनां तु सर्वेषां फलभेदमथ[12] शृणु । भद्रा योगप्रदा ज्ञेया यक्षी क्षेमंकरी तथा ॥ ५३ ॥
[13]वज्री पुष्टिप्रदा ज्ञेया [14]श्रीकरा श्रीप्रदा भवेत् । [15]जयदा विजया चैव [16]पद्मं [17]चाभीष्टसिद्धिदम् ॥
[18]चक्रा शान्तिकरी सा स्याद्वेदी[19] पुत्रसमृद्धिदा । आयुःप्रदा [20]तथा सौम्या [21]रम्यारोग्यप्रदा स्मृता ॥
एवं फलविशेषेण कुर्यात्पीठं यथेच्छया ॥ ५६ ॥

[22]इत्यजिताख्ये महातन्त्रे [23]क्रियापादे [24]पिण्डिकालक्षणं नाम
षोडशः पटलः[25] ॥

---

[1] B, E : सर्वेषां; F : सर्वैर्वा
[2] A : कल्पयेत्तालमुत्तरे
[3] E : त्रिभागैकनालं मूलस्य
[4] B : वास्य
[5] B, C, E : दीर्घं
[6] D : त्रिभागेन प्रकल्पयेत्
[7] C : गलमार्गः स्यात् तद्वि० ; D : जलमार्गस्य तद्वि०
[8] A : घृतवारीसमं घातं ; B, E : घृतवारि समाख्यातं
[9] A : पीठिकायां तु शक्यते
[10] E : ऊर्ध्वे भागेन
[11] Cf. *Kiraṇāgama*, III, 23, 22-23 :
भद्रा योगप्रदा प्रोक्ता यती गोमहिषीप्रदा । आयुःप्रदा स्मृता वज्री पद्मा सौभाग्यदायिनी ॥
धनधान्यप्रदा पूर्णा खण्डचन्द्रा तु पुत्रदा । त्रिकोणा शत्रुनाशाय स्थण्डिला सर्वकामदा ॥
[12] A : अतः pour अथ
[13] A : वज्रं पुष्टिप्रदं ; C : वस्त्रपुष्पप्रदा
[14] C : श्रीकरं श्रीपदं भवेत्
[15] A : जयदो विजयश्चैव
[16] A : पदं pour पद्मं
[17] A : चाभीष्टपुष्टिदा ; C, E : चाभीष्टसिद्धिदा
[18] B : शक्रा pour चक्रा
[19] C : छेदी pour वेदी
[20] A : तदा pour तथा
[21] B : आरोग्यफलदा स्मृता ; C : रम्या रोगप्रदा स्मृता
[22] E : इत्यजिते pour इत्यजिताख्ये महातन्त्रे
[23] A, B, C et E omettent क्रियापादे
[24] A : पिण्डिकालक्षणपटलः सप्तदशः ; B : पिण्डिकाविधिपटलः ; C : पिण्डिकालक्षणं नाम चतुर्दशः पटलः ; F : पिण्डिकालक्षणः पटलः षोडशः
[25] Voir sur le tableau ci-contre les différents noms des *piṇḍikā* (ou *pīṭha*) dans les textes āgamiques.

# LES NOMS DES PIṆḌIKĀ DANS LES TEXTES ĀGAMIQUES

| *Ajita* | *Dīpta* | *Aṃśumat-kāśyapa* | *Kāmika* | *Kāraṇa* | *Kiraṇa* | *Suprabheda* | *Mayamata* | *Īśānaśiva-gurudeva-paddhati* |
|---|---|---|---|---|---|---|---|---|
| भद्रा | भद्रम् | भद्रम् | भद्रम् | भद्रम् | भद्रा | भद्रम् | भद्रम् | सर्वाङ्गभद्रम् |
| यक्षी | — | — | — | — | यक्षी | — | — | — |
| वज्री | वज्रम् | — | — | — | वज्री | — | वज्रम् | — |
| श्रीकरा | श्रीकरम् | — | श्रीकरम् | — | — | — | श्रीकरम् | श्रीकरम् |
| विजया | विजयम् | — | विजयम् | विजयम् | — | — | — | — |
| पद्मम् | पद्मम् | — | पद्मम् | पद्मम् | पद्मा | पद्मम् | पद्मम् | पद्मभद्रम् |
| चक्रम् | — | — | — | — | — | — | — | — |
| वेदी | — | वेदिका | — | — | वेदी ( त्रिकोणा ) | वेदिका | — | — |
| सौम्या | — | — | — | — | — | — | सौम्यम् | सर्वसौम्यम् |
| रम्या | — | — | — | — | — | — | — | — |
| — | पूर्णचन्द्रम् | परिमण्डलम् | पूर्णचन्द्रम् | — | परिमण्डला | परिमण्डलम् | — | सोमकान्तम् |
| — | स्थण्डिलम् | — | स्थण्डिलम् | स्थण्डिलम् | स्थण्डिला | — | — | — |
| — | स्वायंभुवम | — | स्वायंभुवम् | स्वायंभुवम | — | — | — | — |
| — | रुद्रम् | — | शाम्भवम् | — | — | — | महाम्बुजम् | मेरुसुन्दरम् |
| — | — | — | मुद्रा | — | अर्धचन्द्रा | — | पीठपद्मम् | वर्धमानम् |
| — | संपदम | — | सम्पत्करम् | — | — | — | श्रीकाम्यम | लक्ष्मीसुन्दरम् |
| — | — | — | नन्दिकावर्तम् | — | — | — | महावज्रम | विष्णुसंमिलनम् |
| — | स्वस्तिकम् | — | स्वस्तिकम् | — | — | — | — | रुद्रकान्तम् |
| — | निश्वासम | — | — | — | — | — | — | पृथ्विवर्धनम् |
| — | अमलम् | — | — | — | — | — | — | समाङ्गभद्रम् |

## [सप्तदशः पटलः]

## [गर्भन्यासः[1]]

### [तत्र गर्भन्यासोचितस्थानानि[2]]

[3]अथ वक्ष्यामि ते सम्यग्गर्भन्यासविधिक्रमम् । प्रासादे मण्टपे वाथ गोपुरे वा सभादिषु ॥१॥
विन्यसेत्संपदे गर्भभाजनं विधिवत्सुधीः । [4]सर्वत्राद्येष्टकोर्ध्वे तु गर्भस्थानमुदाहृतम् ॥ २ ॥
प्रासादे पादुकोर्ध्वे तु पट्टिकोपरि विन्यसेत् । द्वारस्य दक्षिणे पार्श्वे स्तम्भमूलेऽथवा पुनः ॥३॥
मण्टपेषु च सर्वेषु [5]दक्षिणे स्तम्भमूलके । गोपुरे द्वारपार्श्वे तु दक्षिणे भित्तिमूलके[6] ॥ ४ ॥
सभायामपि [7]तत्पादमूले तु [8]परियोजयेत् । [9]यद्यद्गर्भसमायुक्तं तत्तत्संपत्करं नृणाम्[10] ॥ ५ ॥

---

[1] Pour गर्भन्यास, voir *Aṃśumatkāśyapa*, 25, *Kāmikāgama*, I, 31, *Kāraṇāgama*, I, 6, *Dīptāgama*, 4 et *Suprabhedāgama*, I, 29.

[2] Cf. *Suprabhedāgama*, I, 29, 31-36a :

आलये मण्टपे चैव निर्गमस्य प्रदक्षिणे । गोपुराणां च सर्वेषां प्रवेशस्य प्रदक्षिणे ॥
प्रासादमूलतः कुर्यादुपाने वा वृतौ तथा । भूमिष्ठं शूद्रजातीनामुपाने नृपवैश्ययोः ॥
नैर्ऋते पथि विप्राणां गर्भस्थानं विधीयते । सर्वेषां तु वृतौ शस्तं भूगतं वापि कारयेत् ॥
प्राग्द्वारं चेत्प्रकर्तव्यमैन्द्रपावकमध्यमे । यदीच्छेत्पश्चिमद्वारे दक्षिणे भित्तिके न्यसेत् ॥
कवाटार्गलयोगे वा न्यस्तव्यं गर्भभाजनम् । मण्टपे स्तम्भमूले तु प्रथमावरणे बुधः ॥
गोपुराणां तु कर्तव्यं दक्षिणे विनिवेशयेत् ।

cf. *Dīptāgama*, 4, 3b-7 :

प्रासादस्य तु मूले तु कर्तव्यं प्रथमेष्टके । पादबन्धविमाने तु तद्धोमे परिविन्यसेत् ॥
प्रतिबन्धे तु यद्गर्भं वृतेरुपरि विन्यसेत् । सर्वेषां भूगतं कार्यं सर्वसिद्धिकरं परम् ॥
प्रासादमण्टपे चैव प्राकारे गोपुरेऽथवा । महानसे पुष्पशालायां शय्यास्थानेषु विन्यसेत् ॥
प्रासादस्य तु यद्गर्भस्थापनं वक्ष्यतेऽधुना । द्वारदक्षिणपार्श्वस्थस्तम्भमूले तु विन्यसेत् ॥
कवाटार्गलयोगे वा विन्यसेत्तु विशेषतः ।

[3] F : अथ वक्ष्ये विशेषेण

[4] B : सर्वत्राद्येष्टिकोर्ध्वे तु

[5] E : दक्षिणस्तम्भमूलके

[6] E : कूलके pour मूलके ; F : शूलके

[7] D : तत्पादं मूले

[8] C, E, F : परितो यजेत्

[9] A : यद्वा pour यद्यद् ; D, E : सम्यग्

[10] Cf. *Suprabhedāgama*, I, 29, 1b-2 :

यत्प्रासादं सगर्भं तु सर्वसंपत्करं नृणाम् । अगर्भं यद्विमानं तु अभिचाराय तद्भवेत् ॥
तस्मादादौ प्रकर्तव्यं गर्भन्यासं समृद्धिदम् ।

[गर्भभाजनम्[1]]

तदर्थं [2]भाजनं कुर्यात्सर्वलक्षणसंयुतम् । सौवर्णं [3]राजतं वापि ताम्रजं कांस्यजं तु वा ॥ ६ ॥
[4]पादमूलसमं तारं [5]भाजनस्य प्रकल्पयेत् । षट्[6]सप्ताष्टाङ्गुलैर्वापि[7] [8]हीनमध्योत्तमानि तु ॥७॥

---

[1] Cf. *Kāmikāgama*, I, 31, 7-15a :
हेमाकारेण ताम्रेण फेलां वा कारयेद्बुधः । चतुरङ्गुलमारभ्य चैकाङ्गुलविवर्धनात ॥
चतुर्विंशतिकायामविस्तारः परिकीर्तितः । तदर्धं स्यात्समुत्सेधं त्रिपादं वाथ तत्समम ॥
फेलोत्सेधत्रिपादं स्यात्पिधानस्य समुच्छ्रयः । सभागं वा द्विभागं वा बाणभागं द्विभागकम ॥
यवमेकं समारभ्य यवार्धेन तु वर्धयेत् । घनं पञ्चयवार्धं तु भित्तीनां परिकल्पयेत ॥
कोष्ठवृद्धिस्तदर्धं स्यात्त्र्यंशकं सर्वमेव वा । पादा अष्टांशका वापि चोच्छ्रायेण घनेन च ॥
फेला पञ्चाङ्गुला प्रोक्ता गृहाणां नाधिका भवेत् । सपञ्चपञ्चकोष्ठं वा नवकोष्ठयुतं तु वा ॥
वृत्तं वा चतुरश्रं वा कल्पयेद्देशिकोत्तमः । शिलामयं तु वा पात्रं यवार्धेनाङ्गुलानि च ॥
घनार्धं कल्पयेद्धीमान् शङ्खं वाथ करण्डके । रत्नानि धातुकादीनि स्वल्पविस्तारभाजने ॥
तद्देवस्थानभावज्ञस्तानि तानि निवेशयेत् ।
cf. *Dīptāgama*, 4, 8-12a :
सौवर्णे राजते वापि ताम्रे वा कांस्यकेऽपि वा । अथवा संभवद्द्रव्यैः कारयेद्गर्भभाजनम् ॥
भाजनस्य तु विस्तारं पञ्चधा परिकीर्तितम् । हस्तं वापि वितस्तिं वा द्वादशाष्टाङ्गुलं तु वा ॥
स्तम्भविस्तारमानं वा उत्सेधं तावदेव तु । वृत्तं वा चतुरश्रं वा गर्भफेलां तु कारयेत् ॥
फेलोत्सेधं त्रिधा कृत्वा द्विभागं भाजनं भवेत् । भागं पिधानमेवं स्याद्यवमानं त्रिविस्तृतम ॥
पञ्चविंशतिकोष्ठानि फेलामध्ये प्रकल्पयेत् ।
cf. *Kāraṇāgama*, I, 6, 7b-12 :
हेमराजतकांस्यं वा ताम्रेण फेलकां कुरु । कौशिकाम्भोधिरन्ध्रार्कगायत्र्यङ्गुलकैस्तु वा ॥
फेलायां चैव विस्तार उत्सेधं तत्समं भवेत् । गृहीतोच्चगुणांशे तु पक्षांशं भाजनोन्नतम् ॥
एकांशं तत्पिधानोच्चं कोष्ठभित्त्युच्छ्रयं तथा । यवत्रयघना वापि द्वियवेन घनान्विता ॥
फेलायास्तु घनार्धं तु कोष्ठभित्तेर्घनं भवेत् । त्र्यंशैकेनोर्ध्वभित्तेस्तु घनार्धं ह्रासयेद्बहिः ॥
पिधानाभ्यन्तरे तद्वत्संयोगार्थं तु कारयेत् । वृत्तं वा चतुरश्रं वा गर्भफेलाकृतिः स्मृता ॥
पञ्चविंशतिकोष्ठानि फेलामध्ये प्रकल्पयेत् ।
cf. *Suprabhedāgama*, I, 29, 3-9 :
भाजनं पूर्वमारभ्य सुवर्णाद्यैर्यथाक्रमम् । सौवर्णं राजतं वापि ताम्रं कांस्यमयं तथा ।
शङ्खं वा शुक्तिकं वापि संप्रोक्तं गर्भभाजनम् । लोहैरेव प्रकर्तव्या फेला चोक्तप्रमाणतः ॥
शङ्खं च शुक्तिकं चैव स्वप्रमाणैः परिग्रहेत् । अद्रव्येण पिधानं स्यात्सुस्निग्धं सुदृढं समम ॥
पादविष्कम्भविस्तारा पञ्चत्रिंशत्पदान्विता । तद्विस्तारसमोत्सेधा नवकोष्ठान्वितापि वा ॥
घनं वै षोडशांशैश्च तदर्धैः कोष्ठभित्तयः । उत्तमं तु समाख्यातं विस्तारोत्सेधतः समा ॥
विस्तारस्य त्रिपादं वा ह्यर्धं वा भाजनोच्छ्रयम् । समं त्रिपादमर्धं वा कोष्ठभित्त्युच्छ्रयं भवेत् ॥
पिधानं किंचिदाधिक्यं कृत्वा तदनुसारतः । खण्डितं शोषितं वर्ज्यमेवं भाजनमुच्यते ॥

[2] B, E : पातनं ; D, F : पादनं
[3] C : रजतं
[4] B, F : पादमूले समं
[5] B, C, D, E, F : भाजनं च pour भाजनस्य
[6] A : सप्तक pour सप्ताष्ट
[7] C : स्याद् pour अपि
[8] E, F : हीनमस्योत्तमानि तु

चतुरश्रसमं [1]कुर्याद्विस्तारेण [2]समोच्छ्रयम् । चतुर्भागैकहीनं वा त्रिभागैकविहीनकम् ॥ ८ ॥
[3]तत्तदग्न्यंशमानेन[4] [5]पिधानं तस्य कल्पयेत् । यवमात्रं तु [6]विस्तारं तयोर्भित्तिगतं भवेत् ॥९॥
पञ्चविंशतिभिः [7]कोष्ठैर्नवभिर्वा [8]समन्वितम् । कोष्ठभित्तिसमुत्सेधं बाह्यात्पादविहीनकम् ॥१०
[9]तद्विस्तारं तदर्धं स्यात्सर्वदोषविवर्जितम् ।

[मण्डपे गर्भफेलाधिवासः[10]]

कृत्वा प्रक्षाल्य तत्पश्चादभ्युक्ष्य च कुशाम्भसा[11] ॥ ११ ॥
प्रासादाग्रेऽथवा [12]पार्श्वद्वयोः कृत्वा तु मण्टपम् । पञ्चषट्सप्तहस्तैस्तु[13] कन्यसादिक्रमेण तु॥१२॥
तन्मध्ये वेदिकां [14]कृत्वा रत्निमात्रसमुच्छ्रिताम् । चतुर्दिक्षु च कुण्डानि चतुरश्राणि कल्पयेत्॥१३
एकं वा प्राचि कर्तव्यं रत्निमात्रप्रमाणतः । स्थण्डिलं वापि सर्वत्र होमार्थं परिकल्पयेत् ॥१४॥
गोमयेनोपलिप्याथ मण्डपं वेदिकुण्डयुक्[15] । दर्भमालादिभिः [16]सर्वैरलंकृत्य यथाविधि॥१५॥

---

[1] F : कृत्वा pour कुर्याद्
[2] F : समाश्रयः
[3] A omet les *śloka* 9 et 10
[4] F : तदन्येनांशमानेन
[5] B : विधानस्य तु pour पिधानं तस्य
[6] B : अस्थोरं pour विस्तारं ; E, F : तुस्थोरं
[7] C : काष्ठैः pour कोष्ठैः ; F : कोणैः
[8] F : समाहितम्
[9] A : तद्द्विधारं pour तद्विस्तारं
[10] Cf. *Kāmikāgama*, I, 31, 16-27 :
घृष्ट्वा बहिर्मलं शोध्य प्रक्षाल्याम्लेन वारिणा । पञ्चगव्येन संप्रोक्ष्य पुण्याहं वाचयेत्ततः ॥
मङ्गलाङ्कुरकार्यं तु विधिना कारयेद्बुधः । गर्भस्थाने गृहे वापि ग्रामे गर्भाधिवासनम् ॥
विमानस्योत्तरे चैन्द्रे चान्येषामधिवासनम् । दशरन्त्राब्धिहस्तैर्वा विस्तृतं मण्डपं नयेत् ॥
तन्मध्ये वेदिकां कुर्यात्त्रिभागैकभागतः । तालमात्रसमुत्सेधां तस्यां दिक्षु चतसृषु ॥
चतुरश्राणि कुण्डानि प्रत्येकं हास्तिकानि तु । सयोन्यश्राणि कुण्डानि चैकं वा पूर्वतः स्थितम् ॥
वितानध्वजसंयुक्तं दर्भमालाभिरावृतम् । पुष्पमालासमायुक्तं द्वारतोरणसंयुतम् ॥
मङ्गलाङ्कुरसंयुक्तं यत्नेन महता वृतम् । मण्डपं भूषयित्वैवं पुनः पुण्याहमाचरेत् ॥
ब्राह्मणान्भोजयेत्तत्र तद्दिनात्प्राग् दिनत्रयम् । शालिभिश्च दशद्रोणैः स्थण्डिलं तण्डुलैस्तिलैः ॥
कृत्वालिख्याष्टदिक्पत्रं कर्णिकाकेसरैर्युतम् । दर्भैरपि परिस्तीर्य स्थण्डिलं पूजयेद्गुरुः ॥
वेद्याः पश्चिमभागे तु गोमयालेपिते शुभे । चित्रिते शालिपिष्टैश्च चतुरश्रां समन्ततः ॥
सप्तद्वीपसमायुक्तां सप्ताम्भोधिसमन्विताम् । भूधरैर्दिग्गजैर्युक्तां धात्रीं नागफणास्थिताम् ॥
आलिख्य सितफेनैश्च भुवनाध्वक्रमान्विताम् । फेलां प्रक्षाल्य गव्यैश्च स्थाप्य चित्रे तु मण्डले ॥
[11] A : कलशाम्भसा pour च कुशाम्भसा
[12] A : पार्श्वे द्वयोः ; B, C, E, F : पार्श्वे तयोः ; D : पश्चाद् द्वयोः
[13] A : तत् pour तु
[14] A : कुर्याद् pour कृत्वा
[15] C : वत pour युक्
[16] A : बेरम् pour सर्वैर्

पुण्याहं वाचयित्वाथ कल्पयेद्वेदिकोपरि । शालिभिर्विमलैस्तत्र [1]स्थण्डिलं तु यथाविधि ॥१६॥
तत्र पद्मं समालिख्य साष्टपत्रं सकर्णिकम् । तन्मध्ये [2]गर्भफेलां च विन्यसेद्धृदयेन तु ॥ १७॥

[गर्भफेलाकोष्ठेषु अक्षर-प्रतिमा-रत्नादि-न्यासः[3]]

तेषु कोष्ठेषु सर्वेषु [4]मध्ये कूटाक्षरं [5]न्यसेत्[6] । यकारादिहकारान्तं परितोऽष्टसु विन्यसेत् ॥१८॥
तद्बाह्ये पूर्वतश्चापि [7]स्वरान्षोडश विन्यसेत् । तत्तदक्षरमभ्यर्च्य प्रणवादिनमोऽन्तकैः[8] ॥१९॥

---

[1] A : मण्डलं pour स्थण्डिलं [2] B, E : गर्भपेलां; C. F : गर्भवेलां

[3] Cf. *Kāmikāgama*, I, 31, 28-62a:

देशिकः समलंकृत्य वस्त्रैः पञ्चाङ्गभूषणैः । सकलीकृतदेहस्तु गन्धैः पुष्पैर्विभूषितः ॥

[अक्षरन्यासः]

प्राङ्मुखः प्रयतो भूत्वा विन्यसेदक्षराणि तु । मध्यकोष्ठे न्यसेत्कूटं बिन्दुनादसमन्वितम् ॥
पूर्वाद्यष्टसु कोणेषु यादिहान्तांश्च विन्यसेत् । अकारादिविसर्गान्तान्बाह्यकोणेषु विन्यसेत् ॥
त्रिलोचनं चतुर्बाहुं वरदाभयपाणिनम् । शूलटङ्कधरं सौम्यं जटाचन्द्रविभूषितम् ॥
एवं तु भाजनं ध्यात्वा पश्चाद्द्रव्याणि विन्यसेत् ।

[मृन्न्यासः]

प्राङ्मुखोदङ्मुखो भूत्वा मृदादीनि तु विन्यसेत् ॥
अन्तरावरणे प्राच्यां सामुद्रीं विन्यसेन्मृदम् । नादेयीमथ ताटाकीं दर्भमूलगतामपि ॥
कुलीरावृतकां चापि वल्मीकवृषशृङ्गजाम् । गजदन्तगतां चापि क्रमादेता मृदो न्यसेत् ॥
पूर्वादिक्रमयोगेन चाष्टौ चाष्टदिशासु च । संयोज्य ता मृदश्चाष्टौ सर्वा ब्राह्मपदे न्यसेत् ॥
अथ पञ्चमृदो वापि विन्यसेदनुपूर्वशः । वृषशृङ्गे हस्तिदन्ते दर्भमूले जलान्तरे ॥
नद्यास्तीरे च पञ्चैता मध्ये दिक्षु मृदो न्यसेत् ।

[कन्दन्यासः]

पङ्कजोत्पलकल्हारकन्दांश्च कुमुदस्य वै ॥
रक्तोत्पलस्य श्वेतस्य पद्मस्य च कशेरुणः । तथा कुवलयस्यापि तत्रैवावरणे पुनः ॥
सर्वांश्च मध्यमे कन्दान् सर्वलोकेशमण्डले ।

[अष्टमङ्गलन्यासः]

विन्यसेदानुपूर्वेण तद्बाह्ये चाष्टमङ्गलम् ॥
श्रीवत्सं पूर्णकुम्भं च भेरीं दर्पणमेव च । मत्स्ययुग्माङ्कुशौ चैव शङ्खकमरिणौ तथा ॥
इन्द्रादिषु क्रमेणैव न्यसेदिन्द्रादिमन्त्रकैः ।

[रत्नन्यासः]

वज्रप्रवालनीलेन्द्रनीलमौक्तिकपुष्यकान् ॥
प्रोक्ताब्जरागवैडूर्यं दीप्तशक्ति स्मरन्न्यसेत् । अथवा पञ्चरत्नानि विन्यसेदानुपूर्वशः ॥
माणिक्यं चेन्द्रनीलं च वैडूर्यं च प्रवालकम् । मुक्तां मध्ये चतुर्दिक्षु पञ्चब्रह्माण्यनुस्मरन् ॥

[धातुन्यासः]

हरितालशिलाकाङ्क्षिनालमृतानि गैरिकान् । धातून् सुगन्धशृङ्गाख्यान्धृतिवीर्यात्मिकान्न्यसेत् ॥

[पन्नगन्यासः]

हेमारुणानमेयाङ्काह्लादनारर्ध्वनिपन्नगान् । प्रोक्ते मध्येऽखिलानेव देहशक्तिं स्मरन्न्यसेत् ॥

[धान्यन्यासः]

बाह्ये त्वावरणे दिक्षु चान्तराले तु षोडश । बीजानि व्रीहिगोधूमतिलमाषान् प्रदक्षिणम् ॥

मुद्गं च यवनीवारश्यामाकानन्तरेऽखिलान् । न्यसेत्तृप्त्यात्मकानेतान्मन्त्रैर्लोकेशवाचकैः ॥

[लोहनिर्मितधान्यन्यासः]

सौवर्णशालिकं रौप्यव्रीहिं चापि सकोद्रवम् । त्रपुणा कङ्कुमासेन मांसपुष्पायमात्तिलाः ॥

मुद्गं चायोमयं ताम्रं निर्मितं च कुलुत्थकम् ।

[औषधिन्यासः]

विष्णुक्रान्तिं त्रिशूलीं श्रीमहापूर्वां च भृङ्गकम् ॥

अपामार्गकपत्राब्जमोषधीः प्राक् क्रमान्न्यसेत् ।

[गन्धद्रव्यन्यासः]

चन्दनागरुकर्पूरलवङ्गैलालताफलम् ॥

तक्कोलेनाष्टगन्धांस्तु न्यसेत्पूर्वादिषु क्रमात् ।

[प्रतिमान्यासः]

सर्वेषामपि सामान्यं तत्तच्चिह्नंस्तु वक्ष्यते ॥

कपालशूलखट्वाङ्गान् परशुं वृषभं तथा । पिनाकं हरिणं पाशं हैमं शैवे तु विन्यसेत् ॥

यस्य देवस्य यच्चास्त्रं तदस्त्रं मध्यमे न्यसेत् । भूसुराणां हितार्थाय यज्ञसूत्रं कमण्डलुम् ॥

स्रुवं च प्रणवाकारं सौवर्णं मध्यमे न्यसेत् । रथं गजं हयं चैव शार्दूलं चापमेव च ॥

क्षुरिकां च सुवर्णेन विन्यसेन्नृपदेशके । तुलां च मानपात्रं च महिषं गोवृषद्वयम् ॥

सौवर्णं मध्यमे कोष्ठे विन्यसेद्वैश्यभागके । वृषं हलयुगं चैव युगमन्त्यं तु शालिकम् ॥

सौवर्णं मध्यमे देशे शूद्रस्थाने प्रकल्पयेत् । स्थालीं तदुपधानं च दर्वीकं तण्डुलं घटम् ॥

गलाख्यं दण्डकाष्ठं च कृष्णलोहं महानसे । दक्षिणे भवने कुम्भं मुशाल्युदकपूरितम् ॥

धनसद्मनि गर्भस्तु सार्गला कुञ्चिका भवेत् । पर्यङ्कं दीपशयने गर्भं विद्यात्सुखालये ॥

माषमानं समारभ्य पलान्तं द्रव्यमानकम् । चतुष्पदश्च देवाश्च संस्थाप्यास्त्यन्तगानताः ॥

पादाङ्गुलं समारभ्य पादाङ्गुलविवर्धनात् । अष्टाङ्गुलप्रमाणेन बिम्बोत्सेधाः प्रकीर्तिताः ॥

तदर्धा वाहनोत्सेधास्त्वासीना वा स्थितास्तु वा ॥

[4] D : मध्यकूटाक्षरं [5] B : लिखेत pour न्यसेत्

[6] Ms. A ajoute : कूटक.—वेशेर्दक्षेऽभ्यन्तरे योगमूले गर्भं कुर्यात्संपदामास्पदं स्यात् ।
अन्यैर्गर्भैः स्थापितं कर्तृनाशं राष्ट्रग्रामा वास्तुनाशा भवन्ति ॥ क्षरं न्यसेत् ।

[7] B, D, E, F : स्वरं षोडशकं न्यसेत् [8] E : नमोन्तकम pour नमोऽन्तकैः

[1]मन्त्रैर्मध्यादि सर्वत्र गन्धपुष्पादिभिः क्रमात् । मध्ये [2]फणीन्द्रं हैमं तु विन्यसेदथ दिक्षु[3] च ॥२०
वज्रादिशूलपर्यन्तमस्त्रजालं च विन्यसेत्[4] । [5]माणिक्यमथ तन्मध्ये पूर्वे [6]मरकतं न्यसेत् ॥२१
इन्द्रनीलं तु याम्ये तु[7] स्फटिकं पश्चिमे तथा । वज्रं तु[8] [9]सौम्यदिग्भागे वैडूर्यं वह्निगोचरे॥२२
[10]मुक्तां निर्ऋतिदिग्भागे [11]पुष्यरागं तु मारुते । [12]न्यसेत्प्रवालमैशान्यां पुनस्तेष्वपि च क्रमात्॥२३

[धातुन्यासः[13], लोहन्यासश्च[14]]

पारदं धातुरागं च गैरिकं च मनःशिलाम् । अञ्जनं हरितालं च [15]माक्षिकं [16]चाभ्रकं तथा॥२४॥
सौराष्ट्रं च क्रमान्न्यस्य[17] पूर्ववद्देशिकोत्तमः । [18]काञ्चनं रजतं ताम्रमारकूटं तथा त्रपुम् ॥२५॥
कांस्यं सीसमयश्चैव पित्तलं च तथा न्यसेत् । एवं नवसु विन्यस्य [19]कोष्ठेष्वथ च तद्बहिः॥२६॥

---

[1] A : मन्त्रैर्मन्त्रादि : E : मन्त्रैर्मन्त्रं तु . F : मन्त्रैर्मध्याश्च

[2] A : फणीन्द्रहेमं तु : E : मणीन्द्रं हैमं तु

[3] B : दश दिक्षु pour अथ दिक्षु : E : अधिदिक्षु

[4] B : सुजातं वाहिनी न्यसेत pour अस्त्रजालं च विन्यसेत ; C, E : सुजातं बहिर्विन्यसेत . D : मन्त्रजातं बहिर्न्यसेत

[5] B, D, E, F : माणिक्मथ मध्ये तु : C : माणिक्यकमथो मध्ये

[6] B, D, F : मरनकं

[7] A : च pour तु

[8] A : च pour तु

[9] B, C, D, E, F : सोम pour सौम्य

[10] F : रत्नि pour मुक्तां

[11] C, F : पुष्परागं

[12] A omet न्यसेत

[13] Cf. *Suprabhedāgama*, I. 29, 20b-21 :
तालं तथाञ्जनं श्यामं विमलं च मनःशिला । तुरुष्कगन्धपक्षाणां रोचना गैरिकं तथा ॥
जयन्तादिषु कोष्ठेषु न्यसेत्तदनुपूर्वशः ।

[14] Cf. *ibid.*, I. 28. 23b-24a :
सुवर्णं रजतं ताम्रमायसं त्रपुकं तथा । मध्यमे च चतुर्दिक्षु विन्यसेत्पञ्चलोहकम् ॥

[15] F : माक्षीकां

[16] C : चाभ्रकं : D : चामुकं

[17] A : न्यस्त्वा pour न्यस्य

[18] C, D, F : काञ्चनं राजतं चैव ताम्रमारकूटत्रपु . E : काञ्चनं राजतं चैव ताम्रमारकूटकम्

[19] B, E : कोष्ठेषु हि च तद्बहि : C : कोष्ठेष्वेवच तद्बहिः

[धान्यन्यासः[1], कन्दमूलन्यासश्च[2]]

शालिनीवार[3]वरकप्रियङ्गुतिलसर्षपान्[4] । [5]यववेणु[6]कुलत्थांश्च निष्पावं [7]तुवरीं तथा ॥ २७ ॥
गोधूममाषमुद्गांश्च[8] श्यामाकं षष्टिकं तथा । पूर्वादिषु क्रमान्न्यस्य[9] पद्ममुत्पलमेव च ॥ २८ ॥
[10]विदारीं मुसलीं चैव मुस्तह्रीबेरमेव च । उशीरं च कुशेशं च दिक्षु पूर्वादितो न्यसेत् ॥२९॥

[ओषधिन्यासः]

[11]विष्णुक्रान्ति सहादेवीं गोक्षुरं बिल्वमेव च । [12]शमीपत्रमपामार्गमिन्द्रवल्लीं विदिक्षु च ॥३०

[मृन्न्यासः[13]]

पर्वते च[14] नदीतीरे [15]वल्मीके कर्कटायने । [16]वृषभृङ्गक्षते चैव गजदन्तक्षते तथा[17] ॥ ३१ ॥
[18]सस्यक्षेत्रे[19] तटाके वा मृदं [20]संगृह्य च स्थले । [21]प्रागादिष्वथ बाह्येषु दिक्षु कोष्ठेषु विन्यसेत् ॥

---

[1] Cf. *Suprabhedāgama*, I, 29, 19b-20a :
शालिनीवारगोधूमश्यामकमाषकुलुत्थकान् । तिलनिष्पावसिद्धार्थान बाह्यवृन्तेऽष्टदिक्षु वै ॥

[2] *ibid.*, 24b-25a :
उत्पलस्य च पद्मस्य नीललोहितकस्य च । कुमुदस्य च मूलानि विन्यसेदनुपूर्वशः ॥

[3] A omet वरक et lit शालिनीवारं प्रियङ्गुं तिल०

[4] B : सर्षपम् pour सर्षपान्

[5] E omet les *śloka* 27b à 29

[6] A कुलस्थश्च pour कुलत्थांश्च

[7] A : तुवरी pour तुवरीं

[8] A : मुद्गाश्च pour मुद्गांश्च

[9] A : न्यस्त्वा pour न्यस्य

[10] A : विदारी मुसली चैव

[11] A : विष्णुक्रान्तिः सहादेवी ; E : महादेवं क्षुरा बिल्वं विष्णुक्रान्तिः कृताञ्जली

[12] Huit *mūla* (ou *kanda*) étant à placer dans les *koṣṭha* des directions principales et huit *oṣadhi* dans ceux des directions intermédiaires, l'on doit avoir ici une énumération de huit et pour cela il faut comprendre le terme *apāmārga* comme désignant deux de ses variétés. E. donne une autre lecture comportant un *oṣadhi* supplémentaire, *kṛtāñjali* ; mais elle n'est adoptée par aucun autre ms. et il y a lieu de croire qu'elle est le fait d'un copiste qui, ignorant que l'*apāmārga* pouvait compter pour deux, a cru bon d'ajouter un huitième terme à la liste.

[13] Cf. *Suprabhedāgama*, I, 29, 22-23a :
पर्वते च तथा तीर्थे नद्यास्तीरे ह्रदे मृदम् । कुलीरावासवल्मीके शङ्ख वै गजदन्तके ॥
सलिलेन च संयुक्तमष्टदिक्षु च विन्यसेत् ।

[14] F : वा pour च

[15] B, F : कर्कटायतनेऽपि वा ; D, C, E : कर्कटायतनेऽपि च

[16] C, D, E : वृषशृङ्गगते चैव ; F : वृषशृङ्ग गते चैव

[17] D : अथवा pour तथा

[18] D : सम्यक् pour सस्य

[19] C : क्षेत्र pour क्षेत्रे

[20] A, C : ग्राह्य भुवः स्थले ; D, F : गृह्य भुवः स्थले

[21] E : पृथिव्यांष्वथ

[1]एवं विन्यस्य संपूज्य [2]कोष्ठोक्तैस्तत्तदक्षरैः । [3]पिधाय च [4]विधानेन फणीन्द्रं शेषमर्चयेत् ॥३३

[होमः[5]]

ततो होमं प्रकुर्वीत ततः [6]प्रस्थापितस्य तु । देवस्य मूलमन्त्रेण समिद्धोमं [7]प्रकल्पयेत् ॥ ३४ ॥

[8]आज्यं चरुं तथा लाजं [9]तिलं सर्षपमेव च । [10]यवांश्च तत्तदङ्गैश्च हृदयाद्यैरनुक्रमात् ॥ ३५ ॥

होमयेच्छतमर्धं वा तदर्धं वापि[11] मन्त्रवित् । सर्वद्रव्यावसाने तु तत्तन्मन्त्रेण संस्पृशेत् ॥३६॥

गर्भभाण्डं ततश्चैव फणीन्द्राय निवेदयेत् । हविः [12]सर्वोपदंशाढ्यं [13]पूर्णां मूलेन होमयेत्॥३७॥

[गर्भभाजनस्थापनम्[14]]

सुमुहूर्ते सुलग्ने तु[15] देशिकः शान्तमानसः । सर्वातोद्यसमायुक्तं [16]नृत्तगेयसमायुतम्॥ ३८ ॥

---

[1] E : एवं संपूज्य विन्यस्य

[2] C : कोष्ठोन्थैः pour कोष्ठोक्तैः

[3] A : विधाय

[4] D, C, E : पिधानेन

[5] Cf. *Kāraṇāgama*, I, 6, 51b-59a :

आचार्यो मूर्तिपैः सार्धं होमकर्म समाचरेत् । . . . . विधिनाग्निमुखं कृत्वा मूलेन समिधो हुनेत् ॥
पलाशोदुम्बराश्वत्थन्यग्रोधसमिधः क्रमात् । सर्पिषं हृदयेनैव शिखया तु चरुं हुनेत् ॥
लाजं कवचमन्त्रेण सिद्धार्थं नेत्रमन्त्रतः । यवं चास्त्रेण हुत्वा तु प्रत्येकं शतसंख्यया ॥
मूलब्रह्मषडङ्गैश्च क्षुरिकाबीजमुख्यकैः । सर्पिषा होमयेद्धीमान्प्रत्येकं पञ्चविंशतिः ॥
वास्तुदेवं स्वबीजैश्च प्रत्येकं वसुसंख्यया । आज्येन जुहुयाद्धीमान्कुण्डं प्रत्येकमाचरेत् ॥
आत्मेन्द्वर्कवियद्वायुतेजोऽप्पृथ्वीस्वबीजकैः । पृथगष्टाहुतिं हुत्वा व्याहृतिं जुहुयात्ततः ॥
स्रुवा पूर्णाहुतिं कुर्याच्छिरोमन्त्रेण देशिकः । घृताहुत्यास्तु मन्त्रान्ते संपाताहुतिमार्गतः ॥
हुत्वाज्यं तु समानीय फेलायां चोपरि स्रवेत् ।

[6] A : प्रासादस्यापि तस्य तु

[7] A : तु कल्पयेत्

[8] A : आज्यं चैव चरुं लाजं ; B : आज्यं चरुं तथा लाजं ; E : आज्यं हविस्तथा लाजं

[9] A : तिलसर्षपमेव च

[10] A : यवांश्चैव तदाङ्गैस्तु

[11] A : अथ pour अपि

[12] A : सर्वोपदंशाभ्यां

[13] A : पूर्णामूलेन ; B : पूर्णं मूलेन ; D, F : पूर्णमूलेन

[14] Cf. *Suprabhedāgama*, I, 29, 36b-40a :

गर्भस्थानं तु संप्रोक्ष्य गव्यैर्मृद्भिर्हृदा बुधः । फेलामादाय सद्येन वाममन्त्राभिमन्त्रिताम् ॥
अघोरेणावकुण्ठ्याथ दत्त्वा ह्यर्घ्यं मुखेन तु । अखण्डर्क्षे तु तद्रात्रौ स्थिरराश्युदये शुभे ॥
स्थापयेच्छिवमन्त्रेण निश्चलं सुदृढं बुधः । स्थपतिर्दृढकर्माणि कृत्वा तत्र प्रसन्नधीः ॥
स्थापकं पूजयेत्पूर्वं स्थपतिं तदनन्तरम् । सुवर्णभूषिता धेनुर्दक्षिणा स्थापकस्य तु ॥

[15] F : च pour तु

[16] B, C, D, E, F : सर्वालंकारसंयुतम्

गर्भभाजनमुत्थाप्य [1]प्रोक्तदेशे च [2]गह्वरे । [3]विन्यसेन्मूलमन्त्रेण [4]तस्य संवरणादिकम्[5] ॥३९॥
[6]शिल्पिना कारयेत्कर्म यथा [7]दृढतरं भवेत् । अलाभे [8]गर्भफेलायाः शङ्खे वा मौक्तिके शुभे॥४०
दण्डे वा [9]भाजने सर्वं वस्तु निक्षिप्य चैकतः । अन्यत्सर्वं [10]यथापूर्वं कृत्वा तद्विन्यसेत्सुधीः ॥
दक्षिणां गुरवे [11]दद्याच्छिल्पिने च स्वशक्तितः । एवं विन्यस्य तद्गर्भं सर्वसिद्धिमवाप्नुयात्॥४२

इत्यजिताख्ये [12]महातन्त्रे [क्रियापादे] [13]गर्भन्यासविधिर्नाम

सप्तदशः पटलः ॥

---

[1] E : प्रान्त pour प्रोक्त

[2] A : मह्वरे

[3] C, D : विन्यस्य मूलमन्त्रेण

[4] A : तस्य संवत्सरात्मना ; C, D : तस्य संवरणोदकम्

[5] Le ms. C omet les *śloka* 40 à 42, le *paṭala* 18 et les *śloka* 1 à 7 du *paṭala* 19 ; le ms. D omet les *śloka* 40 à 42 de ce *paṭala* et les *śloka* 1 à 17 du *paṭala* suivant.

[6] B : शिल्पिनं

[7] A : वृद्धिकरं

[8] A : गर्भफेलायां ; B, E, F : गर्भपेलायां

[9] B, E, F : भाजनं

[10] B, E : यथा कुर्वन् कृत्वा

[11] B, E, F : दद्याच्छिल्पिनश्च

[12] E omet महातन्त्रे

[13] A : गर्भन्यासः अष्टादशः पटलः ; B : गर्भन्यासविधिपटलः ; E : गर्भन्यासविधिर्नाम षोडशः पटलः ; F : गर्भन्यासं सप्तदशः पटलः

[ अष्टादशः पटलः ]

[ लिङ्गप्रतिष्ठाविधिः[1] ]

[ शिवार्चनामहिमा[2] ]

लिङ्गप्रतिष्ठां वक्ष्यामि भोगमोक्षप्रदां[3] नृणाम् । [4]आदिमध्यान्तनिर्मुक्तः[5] स्वभावविमलः प्रभुः ॥१
सर्वज्ञः परिपूर्णश्च शिवो ज्ञेयः शिवागमे । दिक्कालाद्यनवच्छिन्नो वाङ्मनोऽतीतगोचरः ॥ २ ॥
[6]निष्कलोऽनिष्कलश्चैव [7]सर्वगः सर्वदृक्सदा । तज्ज्ञानादेव मुक्तिः [8]स्याद्भक्तानां च जनार्दन[9] ॥३
तत्पूजापि ददात्येव फलमिन्द्रपदादिकम् । पूजितो देवदेवेशो भक्तिं ज्ञानं प्रयच्छति ॥ ४ ॥
[10]ज्ञानेन भक्तियोगेन विनान्यैः कर्मकोटिभिः । प्राप्यते न क्वचिन्मुक्तिस्तस्माल्लिङ्गार्चनं [11]परम् ॥
लिङ्गार्चनसमो नास्ति धर्मोऽत्र भुवनत्रये । पूजा च त्रिषु लिङ्गेषु [12]व्यक्ताव्यक्तोभयात्मसु ॥६

---

[1] Pour लिङ्गप्रतिष्ठाविधि voir *Kāmikāgama*, I, 64 et II, 37 et 42, *Kāraṇāgama*, I, 59, *Kiraṇāgama*, III, 26, *Cintyāgama*, 20, *Dīptāgama*, 20, *Makuṭāgama*, 10 *Mataṅgapārameśvarāgama*, kriyāpāda, 39, *Suprabhedāgama*, I, 36, et *Vīrāgama*, 61

[2] Cf. *Śivadharmottara*, 3, 39b-49a :

सर्वो लिङ्गभवो लोकः सर्वं लिङ्गे प्रतिष्ठितम् । तस्मात्संपूजयेल्लिङ्गं यदीच्छेत्सिद्धिमात्मनः ॥
लिङ्गे देवो महादेवः साक्षादेव व्यवस्थितः । अनुग्रहाय लोकानां तस्माल्लिङ्गं प्रपूजयेत् ॥
यो न पूजयते मोहाल्लिङ्गं त्रिभुवनेशितुः । व्यर्थं तज्जन्म विज्ञेयं तस्य वंशो निरर्थकः ॥
न स स्वर्गस्य मोक्षस्य न स राज्यस्य भाजनम् । यस्तु पूजयते लिङ्गं नित्यं त्रिभुवनेश्वरम् ॥
स स्वर्गमोक्षराज्यस्य क्षिप्रं भवति भाजनम् । तस्मादेकमना भूत्वा यावज्जीवं प्रतिज्ञया ॥
अर्चयेत महादेवमापन्नोऽपि सदा बुधः । उद्धृत्यासप्तमं वंशं शिवेन सह लीयते ॥
वरं प्राणपरित्यागश्छेदनं शिरसोऽपि वा । न त्वनभ्यर्च्य भुञ्जीयाद्भगवन्तं त्रिलोचनम् ॥
एवं निर्वहते यस्तु यावज्जीवं प्रतिज्ञया । मानुष्यचर्मणा बद्धः स रुद्रो नात्र संशयः ॥
नास्ति लिङ्गार्चनात्पुण्यं पुण्यमप्यधिकं क्वचित् । इति विज्ञाय यत्नेन पूजनीयः सदाशिवः ॥
संसारसागरं तर्तुं नास्त्युपायोऽन्यथा नृणाम् । जननाम्बुधिमग्नानां प्लवोऽयं लिङ्गपूजनम् ॥

[3] B, E : भोगमोक्षकरीं

[4] Cf. *infra* 2, 26-27 et *Vātulaśuddhākhya*, 9, 94-95 (éd. Bangalore.)

[5] B : ॰निर्मुक्तस्वभाव॰

[6] B, E : निष्कलो निष्क्रियश्चैव ; le formule courante dans les āgama est सकलो निष्कलश्चैव

[7] B, E : सर्वदृक् सर्वगः सदा

[8] B, E : स्यानद्भक्त्या वा जनार्दन

[9] Cf. *Suprabhedāgama*, IV, 1, 2-5a :

ज्ञानं प्रवर्तते वत्स भ्रान्तिनिर्नाशनाय च । अध्वश्रेणिविनाशाय शिवव्यक्तिकराय च ॥
अन्धकारवदज्ञानं ज्ञानं दीपवदुच्यते । ज्ञेयं भास्करवत्प्रोक्तं पश्चाज्ज्ञानं विनश्यति ॥
पाशजालानि विच्छेद्य दीक्षादि ज्ञानमुच्यते । पशुपाशपतित्वं च ज्ञानेनाश्रयते बुधः ॥
ज्ञानेनैव तु कैवल्यप्राप्तिस्तत्र न संशयः ।

[10] E : ज्ञानं च pour ज्ञानेन

[11] B : वरम् pour परम्

[12] E : व्यक्ताव्यक्तोभयेषु च ; [व्यक्तं = प्रतिमा ; अव्यक्तम = अनभिव्यक्ताङ्गम् ; उभयात्मकम् = व्यक्ताव्यक्तं मुखलिङ्गमित्यर्थः *Mṛgendrāgama*, App. I, p. 251]

[ स्थापनम् , प्रतिष्ठा च[1] ]

स्थापितेषु भवेत्सम्यक्; स्थापनं द्विविधं भवेत् । स्थापनं च प्रतिष्ठा च स्थापनं शिल्पिसंयुतम् ॥७
[2]प्रतिष्ठा तद्विहीना स्यान्मन्त्रेणैव हि सा भवेत्[3] । [4]मन्त्ररूपी महादेवः शिवः परमकारणम् ॥८॥
मन्त्रं स्यात्परमं ज्ञानं मन्त्रवाच्यः सदाशिवः । वाच्यवाचकसंबन्धो[5] मन्त्रस्यास्य च दृश्यते ॥९॥
वाच्यस्य देवदेवस्य लोकानुग्राहकस्य च । [6]लिङ्गं चिह्नं शरीरं च [7]कथ्यतेऽत्र जनार्दन ॥ १० ॥

---

[1] Le texte ne donne pas de subdivisions et de détails pour la *pratiṣṭhā*. Nous donnons ci-dessous un passage de la *Vāruṇapaddhati* cité dans le *Śivāgamaśekhara*, vol. II, pp. 16-17 et qui en fait une description détaillée.

" वरुणशिवेन—ज्ञानशक्त्यात्मके लिङ्गे क्रियाशक्तेः समर्पणम् । पीठस्य विधिना योगः प्रतिष्ठा सा च पञ्चधा ॥
प्रतिष्ठा, स्थापनं, स्थितस्थापनम्, आस्थापनम्, उत्थापनमिति ॥

ज्ञानशक्तिस्वरूपे लिङ्गे क्रियाशक्तिस्वरूपस्य पीठस्य विधिना योगः प्रतिष्ठा स्यात् । बाणलिङ्गादौ पीठे यथायोगनिवेशनं स्थापनम् । अभिन्नपीठस्य लिङ्गस्य संस्कारः स्थितस्थापनम् । पूर्वं पीठमास्थाप्य तस्मिन्व्यक्तलिङ्गस्य निवेशनमास्थापनम् । जीर्णोद्धृतिरुत्थापनम् । एवं पञ्चविधा प्रतिष्ठा सलक्षणे मण्डपे अधिवासनपूर्वकं क्रियते ।

प्रतिष्ठा स्थापनं तद्वत्स्थितस्थापनमेव च । आस्थापनं च उक्तं तत्प्रोक्तमुत्थापनं ततः ॥
प्रतिष्ठा पञ्चधा ह्येवं प्रोच्यते तद्विनिर्णयः । यत्र ब्रह्मशिलामध्ये लिङ्गमादौ विधाय च ॥
अव्यक्तं मुखलिङ्गं वा पीठबन्धं विधाय च । शुद्धलग्नं समासाद्य योगः पिण्डिकया सह ॥
क्रियते सा प्रतिष्ठा स्यात् . . . . . . . . . . । धातुरत्नमयं लिङ्गं बाणं वा लोहसंभवम् ॥
लिङ्गं तत्पञ्चधा कृत्वा त्रयावासं विभज्य च । भागद्वयमथैकं वा ज्ञात्वा लिङ्गबलाबलम् ॥
स्थापितं पिण्डिकामध्ये स्थापनं तदुदाहृतम् ॥

शिवयुते पीठे स्थितस्थापनम् ।

चतुर्हस्तादिकं लिङ्गं व्यक्तलिङ्गमथापि वा । पीठपिण्डिकया युक्तं कृत्वा प्रासादमध्यगम् ॥
संस्कारः क्रियते यत्र तदास्थापनमीरितम् । व्यग्रादिदोषदुष्टं यल्लिङ्गमुद्धृत्य यत्नतः ॥
अनु यत्स्थापनं यत्र तदुत्थापनमुच्यते । एवं पञ्चविधं प्रोक्तं शिवलिङ्गस्य सूरिभिः ॥ "

[2] B, E : प्रतिष्ठां तद्विहीनस्य मन्त्रेणैव सदा भवेत्

[3] Cf. *Somaśambhupaddhati*, III, 1 :
कथ्यतेऽथ प्रतिष्ठापि संक्षेपेण क्रमेण च । पीठं शक्तिः शिवो लिङ्गं तद्योगश्च शिवाणुभिः ॥

[4] E : मन्त्ररूपं महादेवं शिवं

[5] E : संबन्धे pour संबन्धो

[6] E : लिङ्गचिह्नं

[7] B, E : लिख्यतेऽत्र

शरीरं [1]मन्त्रमेवं स्याच्छब्दब्रह्मेति [2]संज्ञितम् । शरीरं प्रथमं कृत्वा व्यक्ताव्यक्तोभयात्मकम् ॥
[3]त्रिविधं तत्सुरश्रेष्ठ पूजार्थं तस्य नित्यशः । [4]प्रतिलिङ्गस्थितं [5]मन्त्रं प्रतिष्ठेति [6]प्रकीर्तितम् ॥१२
[7]तामिमामधुना सम्यङ् मत्तो [8]निगदितां शृणु । प्रतिष्ठाविधिकालोऽयमुच्यते सांप्रतं मया ॥

[ प्रतिष्ठाकालः[9] ]

उत्तरायणकाले तु माघमासविवर्जिते । शुक्लपक्षे द्वितीया च तृतीया पञ्चमी तथा ॥ १४ ॥
षष्ठी च सप्तमी [10]चैव दशमी च त्रयोदशी । तिथयः शुभदाः प्रोक्ता [11]दिने पूर्वार्धमिष्यते ॥

---

[1] B, E : मन्त्र एव
[2] E : संज्ञितः
[3] B, E : द्विविधं
[4] E : प्रतिलिङ्गं हितं
[5] A : मात्रं : B, E : मन्त्री
[6] E : प्रकीर्तितः
[7] B : वदामि मधुना : E : वदामि अधुना
[8] B : निगदितं
[9] Cf. *Dīptāgama*, 20, 1b-16 :

अयने पक्षनक्षत्रे तिथिवारांशराशयः । मुहूर्तं तत्र संवीक्ष्य स्थापनं च समारभेत् ॥
पुष्यमासादि षाण्मासं देवानां तु दिवा स्मृतम् । तत्राषाढादिषाण्मासं देवानां तु निशा स्मृता ॥
दिवाकाले प्रकर्तव्यं लिङ्गस्थापनमुत्तमम् । सितपक्षे द्वितीया च तृतीया पञ्चमी तथा ॥
षष्ठी च सप्तमी चैव दशमी च त्रयोदशी । एकादशी च तिथयः प्रतिपत्पौर्णमास्यपि ॥
प्राजापत्यं च सौम्यं च शैवमादित्यसंज्ञके । पौष्णं बार्हस्पतं चैव मैत्रं वैष्णवनैर्ऋते ॥
वायव्यं चाश्वयुक् त्वाष्ट्रं पैतृकं चोत्तरत्रयम् । एषु नक्षत्रयोगेषु प्रतिष्ठां च समाचरेत् ॥
मेषकर्कटकं तौल्यं मकरं च विवर्जयेत् । शेषेषु स्थापयेल्लिङ्गं धनूराशिं च वर्जयेत् ॥
गुरुभार्गवसौम्यानां वारः सोमस्य शोभनम् । एषां द्रेक्काणहोराश्च अंशका दर्शनं शुभम् ॥
एषामेवोदयः शस्तो वर्ज्यः सोमोदयः सदा । भानुनन्दारसोमाश्च त्रिषष्ठायगताः शुभाः ॥
सर्वे ग्रहा विवर्ज्याः स्युरष्टमस्था विशेषतः । षट्सप्तदशमं हित्वा शुक्रश्चान्ये च शोभनाः ॥
उत्तराषाढसंयुक्तसोमवारस्तु शोभनः । हस्तं चाश्वयुजं वह्नि बुधवारेण वर्जयेत् ॥
मृगशीर्षोत्तराश्चेह अन्यवारेण वर्जयेत् । वैष्णवं चैव तिष्यं च शुक्रवारेण वर्जयेत् ॥
बुधयुक्ता द्वितीया च षष्ठीयुक्तो बृहस्पतिः । चन्द्र एकादशीयुक्तः प्राणहानिं च कारयेत् ॥
सप्तमी पौष्णसंयुक्ता वह्निवद्दहते प्रजाम् । अन्धं षण्डं च नक्षत्रं वर्ज्यं स्थापनकर्मणि ॥
पांसुलोहितवर्षेषु मेघानां स्तनितेषु च । उल्कापाते दिशादाहे ग्रहणे चन्द्रसूर्ययोः ॥
षडशीतिमुखे चैव स्थापनं न समाचरेत् ।

[10] B, E : चापि
[11] A : दिनं : B : दिन०

श्रेष्ठा वारा गुरुज्ञेन्दुशुक्राणां[1] परिकीर्तिताः । [2]पक्षच्छिद्राश्च [3]पर्वेण [4]रिक्ताश्चापि विवर्जयेत् ॥
[5]कोणाङ्गारदिनेशानां [6]वारांश्चैव विवर्जयेत् । [7]प्राजापत्यैन्दवे [8]तिष्यो मघस्वाती पुनर्वसू ॥१७
[9]अश्विनी रेवतीहस्तौ[10] चोत्तरत्रितयं तथा । मैत्रं वैष्णवसंयुक्तं नक्षत्रं शुभदं स्मृतम् ॥ १८ ॥
[11]अन्धं काणं च वर्ज्यं स्यात्कण्टकं स्थूणमेव च । पापयुक्तं [12]तथा [13]दृष्टं [14]विद्धं काङ्क्षितमेव च ॥
[15]सव्यतीपातकं चैव [16]वर्जनीयं प्रयत्नतः । चराणि वर्जयेद्भानि धनुषा शुभमन्यभम्[17]॥ २० ॥
द्रेकाणांशकहोराश्च दर्शनं शुभदं [18]सताम् । हित्वा [19]सोमोदयं तेषु देवस्थापनकर्मणि ॥ २१ ॥
[20]त्रिषडायगताः [21]पापाः शं [22]विदध्युस्त एव च । [23]लग्नगाः प्राणसन्देहं यजमानस्य कुर्वते॥२२॥
[24]पापास्त्वष्टमराशिस्थाः [25]शुभाश्चापि विनिन्दिताः । षट्सप्तदशमस्थोऽपि शुक्रो वर्ज्य उदाहृतः॥
[26]द्वितीयं पञ्चमं हित्वा चन्द्रः शेषेषु शोभनः । सप्तद्विपञ्चनवमं हित्वाऽन्यत्र तथा गुरुः॥२४
सोऽपि लग्नगतः कुर्याच्छक्रस्य[27] [28]सुखसंपदम् । सूर्यः शुभकरो युक्तः [29]पौष्णहस्तत्रिरुत्तरैः ॥

---

[1] B, E : शुक्राश्च pour शुक्राणां
[2] E : पक्षच्छिद्रांश्च
[3] Une forme पर्व est ici utilisée pour पर्वन्
[4] E : रिक्तांश्चपि
[5] E : काण pour कोण
[6] B, D, E : वारांश्च परिवर्जयेत्
[7] E : प्राजापत्येन्दुवै
[8] B, E : तिष्ये आर्द्रा स्वाती
[9] D : अश्विनं रेवतिं हस्तं
[10] B, E : हस्ता pour हस्तौ
[11] A : अन्धकारांश्च pour अन्धं काणं च
[12] A : यथा pour तथा
[13] B : दुष्टं pour दृष्टं
[14] A : वित्तं pour विद्धं ; B, E : सिद्धं
[15] A : वस्यार्दीपादहं ; D : मव्यतीपादभं
[16] A : वर्ज्योऽयं च
[17] B, E : अन्यतः pour अन्यभम्
[18] B, D, E : मदा pour सताम्
[19] A : सोमोदयान्तेषु
[20] B, D, E : षडशीतिमुखाः
[21] D : पापं
[22] A : विदध्यात्त एव च
[23] A : लग्नकाः
[24] B, E : पापास्सप्तमराशिस्थाः
[25] A : शुभस्थापि
[26] B, D : द्वितीयपञ्चमौ हित्वा
[27] E : शुक्रश्च pour शक्रस्य
[28] B : असुख pour सुख ; D : शुक
[29] D : पौर्ण pour पौष्ण

मन्दश्च शुभदः प्रोक्तः [1]प्राजापत्यानिलर्क्षयुक् । [2]अश्विनीहस्तसंयुक्तो [3]बुधवारस्त्वशोभनः ॥
[4]अर्यम्णश्चार्द्रभं चापि गुरुवारेण वर्जयेत् । [5]वैष्णवं पुष्यभं चैव शुक्रवारेण वर्जयेत् ॥ २७ ॥
[6]वैश्वदेवयुतः सोमो द्वितीया [7]बुधसंयुता । गुरुवारयुता षष्ठी चन्द्रश्चैकादशीयुतः[8] ॥ २८ ॥
सप्तमी पौष्णयुक्ता च वर्जनीयाः प्रयत्नतः । [9]उत्पाते दुर्दिने [10]वापि [11]निर्घाते तापसे [12]मृते ॥
निन्दितं [13]दिवसं प्रोक्तं मृते जनपदेश्वरे । एवमादिषु सर्वेषु न कुर्याल्लिङ्ग[14]संस्थितिम् ॥३०॥
एवं परीक्ष्य निश्चित्य प्रतिष्ठाकालमुत्तमम् । सावकाशे विमाने तु द्वारबन्धविधेः [15]पुरा ॥३१॥
[16]मूर्धेष्टकाविधेर्वापि स्थापनं स्यान्निजेच्छया । बाणलिङ्गं [17]तथोद्भूतमन्यद्रत्नादिकं तु यत्॥३२॥
तत्सर्वं [18]धाम्नि निष्पन्ने स्थापनीयं [19]विचक्षणैः[20]।अङ्कुरानर्पयेद्धीजैर्यथाविधिपुरःसरम्[21]॥३३॥

---

[1] A : प्राजापत्यानुलक्षयुक् — [2] A : अश्वनी pour अश्विनी

[3] B, D, E : बुधवारो हि शोभनः — [4] A : अर्यमा चातृभश्चार्द्रा

[5] B et E omettent le demi-*śloka* 27b

[6] B, E : वैश्वसोमसुतः सोमो ; D : वैश्वसोमयुतः सोमो

[7] A : बुद्धि pour बुध — [8] E : युता pour युतः

[9] A : उत्पादे — [10] B, D, E : च pour वा

[11] E : निर्वाते — [12] D : वृते pour मृते

[13] A : नव संप्रोक्तं pour दिवसं प्रोक्तं — [14] D : संस्थितम् pour संस्थितिम्

[15] A : पुरः pour पुरा — [16] E : मूर्ध्नेष्टका pour मूर्धेष्टका

[17] A : तथा भूतमन्यदुक्तादिकं तु यत् ; D : तथोद्भूतमन्यत्रात्मादिकं तु यत्

[18] D : धामनिष्पन्नेः ; E : धाम्नि निष्पन्नेः — [19] D : विचक्षणम्

[20] Cf. *Suprabhedāgama*, I, 36, 3-4a :
धामाधिष्ठानपर्यन्ते द्वारबन्धस्य पूर्वके । मूर्धेष्टकायाः पूर्वं वा तलान्तेष्वथवा पुनः ॥
धामाङ्गानां समाप्तौ वा लिङ्गं संस्थापयेत्सुधीः ॥

[21] Cf. *Dīptāgama*, 20, 17 :
प्रतिष्ठादिवसात्पूर्वं नवमे सप्तमेऽपि वा । अङ्कुराण्यर्पयेद्धीमाञ्छास्त्रदृष्टेन कर्मणा ॥

cf. *Suprabhedāgama*, I, 36, 4b-5 :
सुनक्षत्रे तिथौ वारे सुयोगे सुमुहूर्तके । तत्पूर्वे वाङ्कुरं कृत्वा पञ्चसप्तनवाहके ॥
अङ्कुरादिप्रतिष्ठान्तमादिशैवेन कारयेत् ।

[अधिवासार्थं मण्टपकल्पनम्[1]]

ततोऽधिवासकर्मार्थं मण्टपं कारयेत्सुधीः । त्रयाणां ज्येष्ठलिङ्गानां द्वात्रिंशद्धस्तसंमितम्[2] ॥३४॥
[3]चतुष्षष्ट्यङ्घ्रिभिर्युक्तं [4]तिथितालसमुच्छ्रयम्[5] । मध्ये हित्वा चतुष्पादं तत्र [6]वेदीं प्रकल्पयेत् ॥
युक्तां नवपदे रम्यां हस्तमात्रसमुच्छ्रयाम्[7] । [8]वेदाश्रयोनि[9]खण्डेन्दुत्र्यश्रवृत्तषडश्रकैः ॥ ३६ ॥
[10]पद्मवस्वश्रसंयुक्तैरष्टदिक्ष्वष्टकुण्डकैः । शक्र[11]शांकरयोर्मध्ये वृत्तेन च समन्वितम् ॥ ३७ ॥
[12]वेदाश्रकुण्डैः परितश्चतुर्विंशैः समन्वितम् । मध्यमत्रयलिङ्गानां[13] मण्टपं तिथिहस्तकम् ३८ ॥
षट्त्रिंशत्स्तम्भसंयुक्तं [14]नवतालसमुच्छ्रितम् । कृत्वा मध्ये तु तत्रापि हित्वा स्तम्भचतुष्टयम् ॥३९

---

[1] Cf. *Dīptāgama*, 20, 33-42a :

यागार्थमण्डपं कुर्यात्प्रामादस्याग्रतोऽन्तिके । सूत्रेण संमितं कृत्वा भूमिशल्यं विवर्जयेत् ॥
द्वात्रिंशद्धस्तविस्तारं मण्डपं चोत्तमं स्मृतम् । चतुष्षष्टिस्तम्भयुक्तं द्वादशं तालमुच्छ्रयम् ॥
चत्वारि मध्यस्तम्भानि त्यजेद्वै देशिकोत्तमः । हस्तैर्द्वादशभिर्युक्तं मण्डपं चाधमं भवेत् ॥
अधमत्रयलिङ्गस्य मण्डपं चाधमं भवेत् । मण्डपस्य त्रिभागैका मध्यमे वेदिका भवेत् ॥
अरत्निमात्रमुत्सेधं दर्पणोदरसंनिभा । वेद्यधश्चोपवेदीं च कल्पयेत्तु समन्ततः ॥
विस्तारमष्टमाङ्गुल्यमुत्सेधं स्यात्तदर्धकम् । द्व्यङ्गुलद्व्यङ्गुलहीनं मध्यमस्याधमस्य तु ॥
कुण्डवेदिकयोर्मध्ये त्यक्त्वा हस्तद्वयं पुनः । चतुरश्रं धनुर्वृत्तं पद्मं पूर्वादिदिक्षु च ॥
योनित्रिकोणपद्माश्रमष्टाश्रं स्याद्विदिक्षु वै । उत्तमत्रयलिङ्गस्य द्वात्रिंशत्कुण्डमाचरेत् ॥
मध्यमत्रयलिङ्गस्य चतुर्विंशत्कुण्डमुच्यते । अधमत्रयलिङ्गस्य कुण्डान्यष्टौ प्रकल्पयेत ॥
इन्द्रईशानयोर्मध्ये कुण्डं प्राधानिकं कुरु ।

[2] B, E : संमितः pour संमितम्

[3] A : चतुष्पाण्यङ्घ्रिभिर्युक्तं

[4] B : भित्ति pour तिथि

[5] B, E : समुच्छ्रितैः pour समुच्छ्रयम् ; D : समुच्छ्रयैः

[6] A : वेदिं pour वेदीं

[7] A : समुच्छ्रयम् pour समुच्छ्रयाम् ; D : समुच्छ्रितम्

[8] Ce demi-*śloka* manque dans le ms. B ; dans le ms. A l'ordre des *śloka* est le suivant : 36a, 77a-85a, 36b, 37-77a, 85b, puis 86 etc.

[9] A : कुण्डेषु त्र्यश्रं pour खण्डेन्दुत्र्यश्रः

[10] D : पद्मैः स्वश्रसंयुक्तैरष्टमास्वष्टकुण्डकैः

[11] A : शंकर pour शांकर

[12] B omet ce demi-*śloka*

[13] A : लिङ्गस्य pour लिङ्गानां

[14] D : रवि pour नव

तत्र नन्दपदैर्वेदी[1] भवेत्ताल[2]त्रयोच्छ्रिता । तस्यास्तु परितः कुण्डमष्टदिक्षु च पूर्ववत् ॥ ४० ॥

[3]विदिक्ष्वष्ट च कुण्डानि वृत्तानि परिकल्पयेत् । अधमत्रयलिङ्गानां पङ्क्तिहस्तप्रविस्तरम् ॥ ४१ ॥

पङ्क्तितालसमुत्सेधं षोडशस्तम्भसंयुतम् । [4]मध्ये वेदिकया युक्तमुत्सेधेन [5]द्वितालता ॥ ४२ ॥

कुण्डैरावृतया[6] चैव नवभिः पूर्ववासितैः । एवं मण्टपकॢप्तिस्तु [7]लिङ्गे [8]हस्तमिते भवेत् ॥ ४३ ॥

मानेन निश्चिते लिङ्गे प्रागुदग्द्वारगर्भयोः । [9]तन्मानद्विगुणं वापि त्रिगुणं वा चतुर्गुणम् ॥ ४४ ॥

हीनमध्योत्तमं कुर्याच्छेषं पूर्ववदाचरेत् । मण्टपानां तु सर्वेषां [10]तालमात्रस्थलोच्छ्रयम्[11] ॥ ४५ ॥

वेद्यां तु परितः कुर्याच्चतुस्त्रिद्व्यङ्गुलैः क्रमात् । श्रेष्ठादीनामुपानं[12] च [13]सर्वं पक्वेष्टकामयम् ॥ ४६ ॥

अपक्वैर्वापि कुर्वीत दर्पणोदरसंनिभम् । वेदिकोपरि [14]कुम्भं तु मण्टपस्य प्रकल्पयेत् ॥ ४७ ॥

असंभवेषु सर्वेषु नवकुण्डेषु होमयेत् । चतुर्द्वारसमायुक्तं प्रतिद्वारं [15]सुतोरणम्[16] ॥ ४८ ॥

---

1 A : वेष्टि pour वेदी

2 द्वय pour त्रय

3 D : विदिक्षौ चक्रकुण्डानि ; E : विदिक्ष्वष्टौ च कुण्डानि

4 A : तन्मध्ये वेदिकायुक्तम्

5 B, E : द्वितालकम्

6 D : आयतया pour आवृतया

7 A : पिङ्गे pour लिङ्गे ; B : लिङ्गं

8 B : हस्तमितो

9 A : तन्मानाद्द्विगुणं

10 D, E : तालमात्रं स्थलोच्छ्रयम्

11 Cf. *Kāraṇāgama*, I, 59, 23b-25 :
वेदिका मध्यभागे त्वरत्निमात्रसमुच्छ्रिता । तदधश्चोपवेदिं तु कल्पयेत्तु समावृताम् ॥
युगाङ्गुलप्रविस्तारमुत्सेधस्योक्तवर्धनम् । द्व्यङ्गुलत्र्यङ्गुलाधिक्यं मध्यमस्योत्तमस्य तु ॥
दर्पणोदरसङ्काशां मृदा चेष्टकया कुरु ॥

12 D : अपानं pour उपानं

13 D : सर्वपक्वेष्टकानयम्

14 B : कृत्वं तु ; D : कूटं च ; E : कृत्वा तु

15 D, E : सतोरणम्

16 Cf. *Kāmikāgama*, I, 64, 20-21 :
चतुर्द्वारसमायुक्तश्चतुस्तोरणभूषितः । मङ्गलाष्टकसंयुक्तो मङ्गलाङ्कुरशोभितः ॥
नवध्वजसमायुक्तो दर्भमालादिभूषितः । अयं तु मण्डपो लिङ्गे प्रतिमायां विशेषतः ॥

[लक्षणोद्धारमण्टपः[1]]

**कृत्वा मध्योत्तरे भागे [2]लक्षणोद्धारमण्टपम् । [3]तत्त्रिभागैकभागेन कुर्यादर्धेन[4] वा पुनः॥४९॥**
**तन्मध्ये वेदिकां कुर्यात्तालावटसमन्वितम् ।**

[ लक्षणोद्धारणाय लिङ्गानयनम्[5] ]

**[6]सूत्रवर्तनपूव तु [7]कृतशाणाभिघर्षणम्[8] ॥ ५० ॥**

---

[1] Cf. *Dīptāgama*, 20, 60b-63 :
मण्डपस्योत्तरे पार्श्वे लक्षणोद्धारणाय च । मण्डपं कारयेद्धीमान्पूर्वोक्तार्थमनुस्मरन् ॥
तन्मध्ये वेदिकां कुर्याल्लिङ्गायामप्रमाणतः । तालमात्रसमुत्सेधां दर्पणोदरसंनिभाम् ॥
तस्यास्तु पश्चिमे स्थाने स्नानश्वभ्रं प्रकल्पयेत् । लिङ्गानुरूपमं तस्य दारुपीठसमन्वितम् ॥
उत्तरे जलमार्गः स्यादवटेन समन्वितम् ॥

cf. *Kāraṇāgama*, I, 59, 40b-43 :
तस्यैव सौम्यदिग्भागे लक्षणोद्धारणाय च । मण्टपं कारयेद्धीमान्मण्टपार्धसुविस्तृतम् ॥
तन्मध्ये वेदिकां कुर्याल्लिङ्गायामप्रमाणतः । रव्यङ्गुलसमुत्सेधां दर्पणोदरसंनिभाम् ॥
तस्याः पश्चिमभागे तु स्नानश्वभ्रं प्रकल्पयेत् । लिङ्गानुरूपं कर्तव्यं दारुपीठं सलक्षणम् ।
सौम्ये तु जलमार्गः स्यादवटेन समन्वितम् ।

[2] A : लक्षणोत्तरमण्टपम्

[3] D : तत्र भागैकभागेन

[4] A अन्तेन pour अर्धेन

[5] *Dīptāgama*, 20, 64-75a :
आचार्यं पूजयेत्तत्र वस्त्रहेमाङ्गुलीयकैः । शिल्पिनं पूजयेत्तत्र वस्त्रहेमाङ्गुलीयकैः ॥
संयतः शिल्पिभिः सार्धं गच्छेत्कर्मकुटीं बुधः । लिङ्गं प्रक्षालयेद्धीमानष्टमृत्सलिलेन तु ॥
पञ्चगव्यैः कषायैश्च स्नापयेद्गन्धतोयकैः । रक्तवस्त्रेण संवेष्ट्य दर्भैः पुष्पैर्विचक्षणः ॥
पिण्डिकां स्थापयेत्तत्र ह्युमाबीजमनुस्मरन् । रथं संपूज्य गन्धाद्यैरलंकृत्य विशेषतः ॥
तस्मिन्नारोपयेल्लिङ्गं सर्वातोद्यसमन्वितम् । लक्षणोद्धारणार्थाय नयेदुत्तरमण्डपे ॥
स्थण्डिलं कारयेद्विद्वाञ्शालिभिस्तण्डुलैः सह । तिलदर्भैः परिस्तीर्य लिङ्गं तत्रैव शाययेत् ॥
प्राक्शिरस्कं शयित्वा तु परितोऽष्ट घटान्न्यसेत् । सकूर्चान्सापिधानांश्च सवस्त्रान्वारिपूरितान् ॥
लोकपालाधिदैवत्यान्पूजयेत्स्वस्वनामतः । लिङ्गमूले न्यसेत्पीठं पीतवस्त्रेण वेष्टयेत् ॥
वेदिकायास्तु पूर्वायां स्थण्डिले होममाचरेत् । आपो राजानमन्त्रेण इदं विष्णुरिति मन्त्रतः ॥
ब्रह्मजज्ञानमन्त्रेण व्रतेनाष्टशतं हुनेत् । पृथगष्टशतं हुत्वा स्विष्टं तं हि समाचरेत् ॥
अधिवासे देवरात्रौ लिङ्गे कौतुकमाचरेत् । पूजाभागे तदा बध्वा कौतुकं शिल्पिने ददेत् ॥
प्रभाते सुमुहूर्ते तु लक्षणोद्धारणं कुरु ।

[6] A : सूत्रवर्तनं पूर्वगे ; B : सूत्रवर्तनपूर्वे तु ; D : सूत्रवर्तनपूर्वं हि ; le sens est ' सूत्रवर्तनात् पूर्वम् '

[7] A : कृतशोषणघर्षणम्

[8] Cf. *Kāraṇāgama*, I, 59, 45 :
शाणाभिघर्षणं कृत्वा लिङ्गं च पिण्डिकां ततः । अष्टमृत्सलिलेनैव स्नापयेद्गन्धतोयकैः ॥

क्षालितं बहुशोऽम्भोभिः सुगन्धैरतिशीतलैः । स्थण्डिले [1]चैव शालायां [2]शालिभिर्निहिते शुभे॥
[3]स्थाप्य लिङ्गं कुशास्तीर्णे लिङ्गे बध्वा तु कौतुकम् ।

[लिङ्गस्याधिवासनम्]

सौवर्णं राजतं वापि समाच्छाद्य [4]तु वाससा ॥ ५२ ॥
नवेन शाययेल्लिङ्गं प्राक्शिरश्चोर्ध्ववक्त्रकम् । लोकपालघटानष्ट[5] ससूत्रान्वारिपूरितान् ॥ ५३ ॥
सवस्त्रान्सापिधानांश्च सकूर्चान्स्थाप्य पूजयेत् । हित्वा रात्रिं तथा लिङ्गं प्रभाते सुमुहूर्तके ॥५४॥
उत्थाप्य शयनात्तस्मात्[6] संप्रोक्ष्य कलशाम्भसा । [7]पूर्वोक्तमण्टपे रम्ये [8]गोमयेनोपलेपिते॥५५॥
[9]सवितानध्वजे[10] [11]तस्मिन्दर्भमालासमायुते । गीतनृत्तसमायुक्ते[12] सर्वातोद्यसमन्विते ॥ ५६ ॥
तन्मध्ये वेदिकायां तु विन्यसेत्फलकां दृढाम् । तत्र लिङ्गं समानीय सुदृढेन रथादिना ॥५७॥
स्थापयेच्छिल्पिनाचार्यः [13]प्राङ्मुखं मूलमन्त्रतः । व्यपोह्य वस्त्रं [14]तद्बद्धं कौतुकं च क्रमेण तु ॥

[सूत्रवर्तनम्[15]]

दत्त्वा पुष्पं च शिरसि सूत्रवर्तनमारभेत् । त्रयीमयं त्रिलोकेशं[16] त्रिगुणं तत्र दैवतम् ॥ ५९ ॥
लिङ्गं [17]सदाशिवस्यैतत् [18]त्रिप्रकारकृतान्यपि । [19]सूत्रीयन्ते ह्यनेनेति सूत्रमित्यभिधीयते॥६०॥

---

[1] B, D, E : कर्म pour चैव

[2] D : मौलिभिर्निर्मिते शुभे ; E : शालिभिर्विहिते शुभे

[3] A : स्थाप्यं

[4] D : च pour तु

[5] D, E : अष्टौ pour अष्ट

[6] A : तत्र pour तस्मात्

[7] D : पूर्वोक्ते पण्डपे

[8] A : गोमयेनोपलेपयेत् ; D : गोमयेनोपलिप्यते

[9] D : सविताने ध्वजे

[10] B, E : ध्वजैः pour ध्वजे

[11] A, B, E : तस्माद् pour तस्मिन्

[12] A : समायुक्त pour समायुक्ते

[13] A : प्राङ्मुखो

[14] A : तद्बन्धं

[15] Cf. *Kāraṇāgama*, I, 59, 57-62a :
मस्तके मध्यमं ज्ञात्वा हेमसूचिं तु विन्यसेत् । भ्रामयेन्मस्तकान्तं तु तस्यैव शिरसि क्रमात् ॥
मस्तके च महाशासु गैरिकेणाङ्कयेत्क्रमात् । अजभागस्य तारस्य मध्यमं त्वङ्कयेत्तथा ॥
तन्मस्तकं समारभ्य मस्तके मध्यमान्तकम् । गैरिकाक्तेन सूत्रेण स्फालयेन्मध्यमं दृढम् ॥
वस्त्रश्रं मध्यमं ज्ञात्वा गैरिकाक्तेन तन्तुना । सूत्रमास्फालयेद्धीमानष्टादशाङ्गुलान्तकम् ॥
ज्ञात्वा पतनपार्श्वं तु नालं तन्मध्यमे कुरु । गुणाङ्गुलं तु तत्तारं नालस्यैव द्विपार्श्वयोः ॥
तस्य सीमावधेश्चैव ध्रुवसूत्रं समालिखेत् ।

[16] D : त्रिलोकेशत्रिगुणं

[17] E : सदाशिवं सैतत्

[18] E : प्रतिकारकृतान्यपि

[19] A : सूत्रायते त्यनेनेति

सूत्रं च [1]वर्तयेद्धनाद्व्यक्तये मुखपृष्ठयोः । यत्र सूत्रं [2]मुखं तत्र [3]पृष्ठं चान्यत्र कल्पितम् ॥ ६१ ॥
लिङ्गमस्तकमध्येऽङ्कं[4] [5]कृत्वाष्टाश्रेऽत्र मध्यमे । लिङ्गस्य मूलविष्कम्भमध्ये [6]चाङ्कं तु धातुना ॥
कृत्वा तु [7]धातुरागाक्तसूक्ष्मतन्तुप्रकल्पितम् । [8]त्रिवृत्सूत्रं [9]शिरस्यङ्कान्मूलाङ्कान्तं क्रमेण च॥६३॥
[10]आलोच्यास्फालयेद्वक्त्रे मध्यसूत्रं तदुच्यते । ततो नालस्य विस्तारं ज्ञात्वा सम्यक् [11]तदूर्ध्वतः ॥
पार्श्वयोर्मध्यसूत्रं स्यात्स्फालयेद्वैष्णवांशतः । शिरोऽन्तमथ सूत्रे द्वे पक्षसूत्रे ततः क्रमात् ॥६५॥
पार्श्वयोर्बन्धनं ज्ञात्वा यावत्पृष्ठान्तगोचरम् । वर्तयित्वाथ तीक्ष्णेन [12]हेमेनैव तु सूचिना[13] ॥६६॥
काञ्चनार्चनरूपेण शिल्पिवर्येण धीमता । धृतपञ्चाङ्गभूषेण नवाम्बरधरेण च ॥ ६७ ॥
नवाम्बरोत्तरीयेण प्रोक्षितेन कुशाम्भसा । [14]प्रदक्षिणक्रमेणैव कारयेत्सूत्रवर्तनम् ॥ ६८ ॥

[सूत्रलक्षणम्[15]]

सूत्रलक्षणमप्यद्य वक्ष्येऽहं ते जनार्दन । पूजाभागोच्छ्रये सर्वे[16] षण्णवत्यंशभाजिते ॥ ६९ ॥

---

[1] B : वर्तयेच्चैव वृत्तये
[2] A : मुखे
[3] B, E : पश्चान्यत्र प्रकल्पितम्
[4] D : मध्ये कं pour मध्येऽङ्कं
[5] A, D : कृत्वाष्टा श्रोत्रमध्यमे
[6] A : चाङ्गं
[7] A : धातुरागात्तु pour धातुरागाक्त ; D : धातुरागाक्तं
[8] D : त्रिवृत्सूत्र pour त्रिवृत्सूत्रं
[9] A : शिरस्यङ्गात्तन्मूलं तां ; B : शिरस्याङ्गान्मूलान्तांश्च ; E : शिरस्यङ्गान्मूलान्तांश्च
[10] E : आलोच्य स्फालयेद्वक्त्रे ; D : आलोच्य स्थालयेद्वक्त्रे
[11] B, D, E : तदर्धतः
[12] A : हेमेनैव सूचिना ; D : हेमयेनैव सूचिना
[13] Le mot सूचि se trouve ici au neutre au lieu du féminin normal.
[14] D : दक्षिणादिक्रमेणैव ; E : दक्षिणां च क्रमेणैव
[15] Cf. *Dīptāgama*, 20, 85-87 :
पूजाभागोच्छ्रयं सर्वं भज्य षण्णवतिक्रमात् । एकभागं यवं विद्यात्तन्मानं सूत्रविस्तृतम् ॥
अस्मादन्यप्रकारेण वक्ष्यते विधिनाधुना । उत्तमोत्तमलिङ्गस्य सूत्र च यवकं भवेत् ॥
शेषाणां चैव लिङ्गानां यवार्धं प्रतिवर्धयेत् । सूत्रविस्तारमेवं स्यात्ख्यातं तन्मानमेव च ॥
cf. *Kāraṇāgama*, I, 59, 54-56 :
रुद्रभागसमायामं षण्णवत्यंशकं भजेत् । अङ्गुलं तेषु भागैकमुत्तमोत्तमकस्य तु ॥
सूत्रकस्य तु विस्तारं पञ्चाङ्गुलमिति स्मृतम् । ह्रासयेदर्धमर्धं तु अङ्गुलान्तं क्रमेण तु ॥
अष्टानां चैव लिङ्गानां सूत्रविस्तारमुच्यते । तन्मानं कारयेद्धीमान्यासं सूत्रस्य चावधि ॥
cf. *Kāmikāgama*, I, 64, 29-30 :
रुद्रभागसमायामं चतुष्षष्ट्यंशकं भजेत् । एकांशः सूत्रविस्तारस्तथा गम्भीर इष्यते ॥
तदर्धेनाधमो ज्ञेयस्तत्तारेऽष्टांशके कृते । नवधा सूत्रविस्तारः सर्वलिङ्गेषु कीर्तितः ॥
[16] La forme grammaticale correcte est सर्वस्मिन्

[1]एकांशार्धं यवं विद्यात्तत्समं सूत्रविस्तरम् । अथवान्यप्रकारेण सूत्रविस्तारमुच्यते ॥ ७० ॥
उत्तमोत्तमलिङ्गस्य यवत्रितयमुच्यते । हस्तस्य सूत्रविस्तारमितरेषां क्रमेण तु ॥ ७१ ॥
[2]अर्धार्धह्रासः कर्तव्यो हस्तलिङ्गान्तमेव हि । तारादष्टांशकं [3]खातं पादाखात[4]मथापि वा ॥७२॥

[तत्र प्रथमलक्षणम्[5]]

पूजाभागोच्छ्रयं सर्वं विकारांशेन [6]भाजयेत् । [7]तत्रोर्ध्वचतुरंशं तु द्व्यंशकं चाप्यधस्त्यजेत् ॥७३॥
एकेन [8]कुड्मलं कृत्वा नवांशैर्नालमालिखेत् । तन्नालस्य तु विस्तारमुक्तांशेऽग्न्यंशभाजिते॥७४॥
नेत्रांशेन भवेत्तस्मिन्मुकुले मूलतः क्रमात् । कृशतां कल्पयेत्पश्चात् [9]पक्षसूत्रद्वयं लिखेत् ॥७५॥
तयोर्भागद्वयं [10]हित्वा पृष्ठे [11]संगम इष्यते । प्रथमं लक्षणं प्रोक्तं द्वितीयं लक्षणं शृणु॥ ७६ ॥

---

[1] D : एकांशार्धयवं ; E : एकांशार्धो यवं

[2] D : अर्धार्धं ह्रासकर्तव्यो

[3] D : घातं pour खातं

[4] A : आघात pour आखात

[5] Cf. *Dīptāgama*, 20, 88b-93a :

पूजाभागं त्रिधा कृत्वा द्विभागे लक्षणं भवेत् । द्विभागं दशधा कृत्वा मुकुलं चैकभागिकम् ॥
विस्तारं तत्प्रमाणं स्यादधिकं स्याद्यवस्थितम् । क्रमेण कृशतां कृत्वा मुकुलाग्रं तु संधयेत् ॥
तयोरेव दृढं सूत्रमष्टांशं नालदैर्घ्यकम् । मुकुलस्य मूलादारभ्य यावद्बिन्दुविलक्षितम् ॥
तयोः संगमनं कुर्यादुभयोः पार्श्वयोरपि । बिन्दोरेतद्गतं सूत्रं यावत्पृष्ठान्तगोचरम् ॥
दृढसूत्रमिति ज्ञेयं मणिरेखे इमे स्मृते । प्रथमं लक्षणं प्रोक्तम् "

cf. *Kāraṇāgama*, I, 59, 62b-66a :

रुद्रांशोच्चं त्रिधा कृत्वा ऊर्ध्वभागेऽशकं त्यजेत् । पक्षांशं दशधा भज्य व्योमांशं मुकुलं भवेत् ॥
विस्तारं तत्समं ज्ञेयमङ्गुलद्वयसंयुतम् । क्रमेण कृशमार्गेण तस्याग्रेणैव बन्धयेत् ॥
नालायामं तु वस्वंश्रं मुकुलस्य तु मूलतः । तन्मानेनैव मानेन मणिरेखां तु वर्तयेत् ।
तयोः संगमनं पृष्ठे कारयेत्तु क्रमात् तु । प्रथमं लक्षणं प्रोक्तम् "

[6] A : योजयेत्

[7] A : ...ततो तुरङ्गं तु; B, E : तत्रो तुरङ्गं मध्यं तु

[8] D : मुकुलं pour कुड्मलं

[9] A : कल्पसूत्र pour पक्षसूत्र

[10] B, D, E : त्यक्त्वा

[11] A : संगममिष्यते

[द्वितीयलक्षणम्[1]]

षोडशांशे पुनस्तस्मिंस्त्यजेदूर्ध्वे[2] चतुष्टयम् । अधश्चैकं परित्यज्य मध्ये [3]नालं दशांशकम्॥७७॥
[4]व्योमांशेन तदूर्ध्वे तु [5]मुकुलं चापि कल्पयेत् । पक्षसूत्रद्वयं चापि [6]नालतारं च पूर्ववत् ॥७८॥

[तृतीयलक्षणम्[7]]

द्वितीयं लक्षणं प्रोक्तं तृतीयं लक्षणं शृणु । द्वादशांशेऽथ[8] पूजांशे [9]त्यक्त्वोर्ध्वेंऽशद्वयं ततः॥७९
अधश्चैकं परित्यज्य नालं वस्वंशमुच्यते । व्योमांशं मुकुलं तत्र [10]पक्षसूत्रं च पूर्ववत् ॥ ८० ॥

---

[1] Cf. *Dīptāgama*, 20, 93-95a :

" द्वितीयं लक्षणं शृणु । पूजाभागसमस्तं तु भज्य षोडशधा पुनः ॥
अधोभागद्वयं त्यक्त्वा चोर्ध्वे चत्वारि संत्यजेत् । मुकुलं चैकभागं स्यान्नवकं नालमेव च ॥
सव्यापसव्यसूत्रं तु पूर्ववल्लेखयेद्बुधः ।

cf. *Kāraṇāgama*, I, **59**, 66-67 :

" द्वितीयं लक्षण शृणु । रुद्रांशं भज्य रव्यंशमूर्ध्वे गुणांशकं त्यजेत् ॥
एकभागेन मुकुलं मध्यांशं नालमुच्यते । पार्श्वसूत्रद्वयौ कार्यौ प्रागुक्तविधिना कुरु ॥

[2] E : ऊर्ध्वं pour ऊर्ध्वे

[3] A : नालदशांशकम्

[4] B, D : तस्योर्ध्वेकांशकेनैव

[5] A : कुकलं pour मुकुलं ; B, E : कल्पयेत्कल्पवित्तमः pour मुकुलं चापि कल्पयेत्

[6] A : नालं तारं च

[7] Cf. *Dīptāgama*, **20**, **95**b-97 :

पूजाभागसमस्तं तु भज्य द्वादशधा पुनः । ऊर्ध्वे भागत्रयं त्यक्त्वा भागमेकमधस्त्यजेत् ॥
मुकुलं चैकभागं स्यान्नालं सप्तांशमेव तु । मणिरेखाद्वये कार्ये पूर्वोक्तविधिना सह ॥
तृतीयं लक्षणं प्रोक्तम् "

cf. *Kāraṇāgama*, I, **59**, 68-69 :

" तृतीयं लक्षणं शृणु । रुद्रांशं नवधा भज्य ऊर्ध्वे भागद्वयं त्यजेत् ॥
अंशमेकमधस्त्यक्त्वा मुकुलं चैव भागतः । पञ्चांशेनैव नालं तु शेषं पूर्वोक्तवद्भवेत् ॥

[8] E : तु pour अथ

[9] A : त्यक्त pour त्यक्त्वा

[10] A : पञ्च pour पक्ष

[तुरीयलक्षणम्[1]]

तृतीयं लक्षणं प्रोक्तं तुरीयं लक्षणं शृणु । षोडशांशे शिवांशे तु पुनश्चैतत्त्रिधा भवेत् ॥ ८१ ॥
त्र्यंशैकमूर्ध्वतस्त्यक्त्वा षोडशांशेष्वधो द्वयम् । त्यक्त्वा मध्ये तु नालं स्यान्मुकुलेन विवर्जितम् ॥
पक्षसूत्रद्वयं चापि पूर्ववत्परिकल्पयेत् । तत्राधो [2]भूतवेदाग्नि[3]नेत्रभागावधिर्यथा ॥ ८३ ॥

[ब्रह्मरेखादिकरणम्, तत्तर्पणं च[4]]

[5]ब्राह्मादिक्रमतः कुर्याल्लम्बनं पक्षसूत्रयोः । [6]विशेषान्नालसूत्राभ्यां क्रमात्कुर्यात्तयोरपि ॥ ८४ ॥

---

[1] *Dīptāgama*, 20, 97b-99a :

चतुर्थं लक्षणं शृणु । पूजाभागं त्रिधा कृत्वा एकैकं तु त्रिधा भवेत् ॥
ऊर्ध्वभागद्वयं कृत्वा भागमेकमधस्त्यजेत् । शेषं तु पूर्ववत्कुर्यात्सर्वं शास्त्रविशारदैः ॥

cf. *Kāraṇāgama*, I, 59, 70-71 :

चतुर्थं लक्षणं शृणु । कलांशं भज्य रुद्रांशमूर्ध्वे वेदांशकं त्यजेत् ॥
पक्षभागमधस्त्यक्त्वा मुकुलं चैकभागतः । रन्ध्रांशं नालमित्युक्तं शेषं पूर्वोक्तवद्भवेत् ॥

[2] A : वृत pour भूत

[3] A : नेत्रभागविधिर्यथा ; B, E : नेत्रभागाद्विधीयतः ; D : नेत्रभागावधार्यतः

[4] Cf. *Dīptāgama*, 20, 99b-106a :

पद्माभं मुकुलाभं वा खड्गाकारं त्रिकोणकम् । करिनेत्रोपमं कार्यं करपुटाकृतिं तु वा ॥
छत्राकारं त्रिशूलाभं लिङ्गाकारमथापि वा । दृढसूत्रं समालिख्य धातुसूत्रं प्रमार्जयेत् ॥
नालं वै रुद्रदैवत्यं वामरेखा तु वैष्णवी । दक्षिणे ब्रह्मरेखा स्यात्त्रिसूत्रस्याधिदेवताः ॥
हेमसूच्या लिखेद्विद्वांस्तत्तन्मन्त्रमुदाहरन् । आपो राजेति मन्त्रेण नालसूत्रद्वयं लिखेत् ॥
इदं विष्णिवतिमन्त्रेण विष्णुरेखां समालिखेत् । ब्रह्मजज्ञानमन्त्रेण ब्रह्मरेखां समालिखेत् ॥
न कृशा न च विस्तीर्णा न वक्रा न च खण्डिता । न निम्ना न समा ऋज्वी सहजा इव संस्थिता ॥
मधुना तर्पयेद्धीमान्मधुवातेति मन्त्रतः । घृतमिक्षेतिमन्त्रेण तर्पयेद्व घृतेन तु ॥

cf. *Kāraṇāgama*, I, 59, 72-76 :

मुकुलं वा गजाक्षं वा लिङ्गाकारमथापि वा । पद्माभं वापि कर्तव्यं शूलाकारमथापि वा ॥
अन्याकाराणि सर्वाणि मुकुलस्योक्तमार्गतः । नालं सदाशिवं ज्ञेयं सव्यसूत्रमजाधिपम् ॥
वैष्णवं वामसूत्रं तु त्रिसूत्राणां तु देवताः । त्रियम्बकेन मन्त्रेण नालसूत्रद्वयं लिखेत् ॥
ब्रह्मजज्ञानमन्त्रेण ब्रह्मसूत्रं तु लेखयेत् । विष्णुसूत्रमिदं विष्णुरिति मन्त्रेण लेखयेत् ॥
मधुवाता ऋतायेति मधुना तर्पयेत्ततः । घृतं मिमिक्षुमन्त्रेण तर्पयेत्तु घृतेन तु ॥

[5] A : ब्रह्मणादिक्रमात् ; B : ब्राह्मणां च क्रमात् ; D : ब्राह्मणादिक्रमात् ; E : ब्राह्मणानां क्रमात्

[6] A : विशेषं नालसूत्राभ्यां

शिलिपना कारयित्वैवं [1]सूत्रं लक्षणसंयुतम् । पात्रेषु प्रस्थपूर्णेषु त्रिषु ताम्रमयेषु च ॥ ८५ ॥
मधु सर्पिः पयश्चैव पूरयेत्पुरुषेण तु । [2]अर्घ्याम्भसा तु संप्रोक्ष्य [3]न्यस्य पुष्पं च काञ्चनम्॥८६॥
सोष्णीषः [4]सोत्तरीयश्चाप्युदगास्यः प्रसन्नधीः । [5]मध्ये रेखाद्वयं पश्चान्मधुना रुद्रदैवतम् ॥८७॥
[6]सुवर्णमय्या सूच्या च सर्वात्मानमुदाहरन् । [7]तर्पयेद्दक्षिणां रेखां सर्पिषा [8]ब्रह्मदैवताम् ॥ ८८ ॥
पिङ्गलेन तु मन्त्रेण ततो [9]विष्ण्वधिदैवताम् । [10]वामरेखां तु पयसा ततो घोरास्त्रमन्त्रतः॥८९॥

[लिङ्गपीठयोः शुद्धिः[11]]

तर्पयित्वा ततो मन्त्री पञ्चमृत्पञ्चगव्यकैः । लिङ्गशुद्धिं [12]तु बहुशः पञ्चब्रह्मशिवैः क्रमात्॥९०॥
कृत्वा शुद्धेन [13]तोयेनाप्यभिषिच्यास्त्रमुच्चरन् । पुष्पं शिरसि चार्घ्येण दत्त्वा प्रणवमुच्चरन् ॥९१॥
पुण्याहं वाचयित्वाथ प्रोक्षयेत्पुरुषेण तु । लिङ्गस्योत्तरभागेऽथ[14] पीठं[15] न्यस्य[16] च पूर्ववत् ॥९२

---

[1] B : सूत्रलक्षणसंयुतम्

[2] A, B : अम्भसा तथ pour अर्घ्याम्भसा तु

[3] A : न्यस्त्वा pour न्यस्य

[4] D, E : सोत्तरीयश्च दद्यात्कांस्यं प्रसन्नधीः

[5] B, D : मणिरेखाद्वयं ; E : मध्यरेखाद्वयं

[6] B : सुवर्णमध्यसूच्या तु ; E : सुवर्णमध्या सूच्या तु

[7] A omet les *śloka* 88b et 89

[8] B : ब्रह्मदैवतम्

[9] B, D, E : विष्ण्वधिदैवतम्

[10] B : वामरेखा तु

[11] Cf. *Dīptāgama*, 20, 109b-115a :

ततः शय्यां शलाकां च हेमसूचीमथान्यकम् । तत्सर्वं शिल्पिने दत्त्वा ततः स्नानं समारभेत् ॥
स्नानश्वभ्रे न्यसेत्पीठं यथाविभवशक्तितः । हैमं वा रजतं ताम्रं कौशेयं दारुजं तथा ॥
तस्मिँल्लिङ्गं समारोप्य आचार्यो मूर्तिपैः सह । नृत्तगेयसमायुक्तं सर्वतोयसमन्वितम् ॥
अर्घ्यं दत्त्वा तु शिरसि स्नाप्य गन्धोदकेन तु । सकलीकृत्य मतिमान्पञ्चगव्यकुशोदकैः ॥
पञ्चब्रह्म समुच्चार्य स्नाप्य लिङ्गं कषायकैः । भस्मना चाष्टपुष्पैश्च उदकैः शकृता पुनः ॥
एतान्विन्द्रेति मन्त्रेण शुद्धतोयेन सेचयेत् । यवगोधूमचूर्णैश्च हरिद्रातिलचूर्णकैः ॥
पत्रतोयेन संस्नाप्य पवमानमुदीरयन् । पायसाचमनं चार्घ्यं वक्त्रमन्त्रेण दापयेत् ॥
चन्दनागरुगन्धैश्च विलिप्य शिवमादरात् । पुष्पं दत्त्वा हृदा मन्त्री दद्यान्नानाविधूपकम् ॥
प्रच्छाद्य वस्त्रयुग्मेन हृदयेन तु मन्त्रतः । पिण्डिकां स्नापयेदेवमावेष्ट्याहतवस्त्रकैः ॥

[12] E : च pour तु

[13] A : तोयेन अभिषिच्यास्त्रमुच्चरन् ; D : तोयेनाभिषिच्यास्त्रमुच्चरन्

[14] A : च pour अथ

[15] B, E : पीठे pour पीठं ; D : पठेद्

[16] A, B, E : न्यस्त्वा pour न्यस्य

शुद्धिं कृत्वा [1]तु कूर्चेन पूजाभागसमेन तु । सह लिङ्गं तु मालाभिरावेष्टयाथ [2]च देशिकः ॥९३॥
नवेन [3]वासोयुग्मेन लिङ्गपीठमनुक्रमात् । आवेष्टय वर्मणाभ्युक्ष्य [4]हेतिनादौ शिवाम्भसा ॥९४॥

[लिङ्गपीठयोर्जलेऽधिवासः[5]]

रथादिषु समारोप्य [6]नद्यादीनामदूरतः । [7]जलाशयमनुप्राप्य [8]स्तनदघ्ने जले ततः ॥ ९५ ॥
आनीय [9]स्थाप्य यत्नेन [10]सह चैव रथादिना । तन्मूले दक्षिणे पार्श्वे पीठं चापि निवेशयेत् ॥९६॥
परितो लोकपालांश्च [11]स्वस्वदिक्पान्समर्चयेत् । लिङ्गोपरि प्रपां कुर्याद्वितानध्वजशोभिताम् ॥
दर्भमालायुतां तत्र तीरे [12]दीपांश्च विन्यसेत् । त्रिरात्रमेकरात्रं वा दिनं वाथ[13] दिनार्धकम् ॥९८॥

---

[1] A, B, D, E : अथ pour तु
[2] B, E : त्वथ pour अथ च
[3] E : वासयुग्मेन
[4] E : हेतिना च
[5] Cf. *Dīptāgama*, 20, 115b-118 :

आरोप्य मूर्तिपैः सार्धं रथे लिङ्गं तु देशिकः । पिण्डिकां तु समारोप्य प्रवेश्याथ जलाशयम् ॥
जलमध्ये प्रपां कृत्वा वितानध्वजभूषिताम् । दर्भमालासमायुक्तां पुष्पदामप्रलम्बिताम् ॥
चतुर्गात्रस्य मध्ये तु प्राक्शिरस्कं तु शाययेत् । नृत्तगेयसुवाद्यं च सदाकालं समाचरेत् ॥
एकरात्रं द्विरात्रं वा त्रिरात्रं वा जलोषितम् ।

cf. *Cintyāgama*, 20, 70-78 :

रथे वा शिबिके वापि रत्नसिंहासनेऽपि वा । रज्जुना शिबिके वापि कृत्वा ग्रामप्रदक्षिणम् ॥
हर्म्यप्रदक्षिणं वाथ जलतीरं प्रवेशयेत् । . . . जलतीरे प्रपां कृत्वा शालिभिः स्थण्डिलं क्षिपेत् ॥
तन्मध्ये नलिनं कल्प्य दर्भैः पुष्पैः परिस्तरेत् । स्थापयेच्छिवकुम्भं तु तन्मध्ये सप्ततीर्थकम् ॥
गङ्गां च नर्मदां सिन्धुं गोदावरीं सरस्वतीम् । यमुनां चैव कावेरीं तन्मध्ये स्थापयेत्सुधीः ॥
वर्धनीं स्थापयेद्धीमानावृते लोकपालकान् । तैलं शिरोऽर्पणं कुर्याद्वारिमध्ये विशेषतः ॥
यथास्थाने तु संस्थाप्य तत्तद्दिक्पालपात्रकान् । अथवा चार्चयेद्धीमान्मोक्षस्नानं विसर्जनात् ॥
तन्मध्ये दारुपीठे तु लिङ्गपीठे विशेषतः । प्राक्शिरश्चोर्ध्ववक्त्रं च शाययेद्वारिमध्यमे ॥
बिम्बयोश्च शिरोभागे तीर्थकुम्भौ च विन्यसेत् । त्रिरात्रं वा द्विरात्रं वा एकरात्रमथापि वा ॥
अथवा एकयामं वा वेरौ तोयेऽधिवासयेत् ॥

[6] A : नद्यादीनां तु दूरतः ; E : नद्यादींश्चादूरतः
[7] D : जलांशयम् pour जलाशयम
[8] A : स्तनदघ्नेन जलोन्नमम्
[9] A: स्थापयेत्तेन
[10] D : सहसैव
[11] B : शास्तॄन् सर्वान् pour स्वस्वदिक्पान ; D, E : सास्त्रान् सर्वान्
[12] E : दीपाणि pour दीपांश्च
[13] A : अर्ध pour अथ

[स्नानमण्टपे सस्नापनम्[1]]

अधिवास्य जले पश्चात्स्नानमण्टपमानयेत् । तत्रानीय च तल्लिङ्गं स्थाप्य तद्वेदिकोपरि ॥ ९९ ॥
वस्त्रकूर्चादिकं सर्वमपनीय शिवाम्भसा । [2]संस्नाप्य [3]लिङ्गं पीठं च ततः पुण्याहमाचरेत् ॥
पञ्चगव्याभिषेकं [4]च शिवमन्त्रेण कारयेत् । [5]सर्वात्मानं जपन्पश्चाच्छुद्धतोयेन सेचयेत्॥१०१॥
पीठं च शुद्धतोयेन [6]देवीगायत्रिमन्त्रतः । अभिषिच्य ततो दद्याल्लिङ्गमूर्ध्न्यर्घ्यमुत्तमम्॥१०२॥
पुष्पं च साक्षतं दत्त्वा प्रणवेन समाहितः[7] । ततो मण्टपसंस्कारं कुर्यात्तद्विधिरुच्यते ॥ १०३ ॥

[मण्टपसंस्कारः[8]]

प्रविश्य मण्टपं सम्यक्कृत[9]ब्राह्मणभोजनम् । नवेन परिशुद्धेन गोमयेनोपलेपयेत् ॥ १०४ ॥

---

[1] Cf. *Dīptāgama*, 20, 119-121a :
आरोप्यामादिने पश्चात्स्नानवेद्युपरि न्यसेत् । कृत्वा तु पूर्ववच्छुद्धिं पिण्डिकामहितं बुधः ॥
रक्तवस्त्रेण संवेष्ट्य लिङ्गमामस्तकान्तकम् । पीठं च वेष्टयित्वा तु स्यन्दने स्थाप्य देशिकः ॥
आलयं तु परिभ्राम्य नयेन्मण्डपमध्यतः ।

[2] A : संस्थाप्य

[3] A : लिङ्गपीठं च

[4] A : तु pour च

[5] B : सर्वात्मना जपेत्पश्चाद् ; E : सर्वात्मनां जपं पश्चाद्

[6] A : देव pour देवी

[7] D : समाहितम्

[8] Cf. *Cintyāgama*, 20, 79-81a :
यागस्थानं प्रविश्याथ देशिको मूर्तिपैः सह । वास्तुहोमं समाश्रित्य पर्यग्निकरणं कुरु ॥
भूसुरान्भोजनं कृत्वा उच्छिष्टं तु विसर्जयेत् । गोमयालेपनं कृत्वा पुण्याहं वाचयेत्ततः ॥
प्रागुक्तविधिनानेन पूजयेद्यागमण्डपम् ।

cf. *Kāraṇāgama*, 59, 84-87a:
भूसुरान् भोजयेत्तत्र मण्टपे तु विशेषतः । मण्टपं मार्जनं कृत्वा कारयेत्तु क्रमेण तु ॥
सभरीयपदे चैव प्रागुक्तविधिना सह । प्रासादे मण्टपे चैव वास्तुहोमं तु कारयेत् ॥
आषाढपत्रदर्भैश्च पर्यग्निं तेन वह्निना । मण्टपं च विमानं च कारयेत्तु क्रमेण तु ॥
गन्धतोयेन संप्रोक्ष्य पुण्याहं वाचयेत्ततः ।

cf. *Dīptāgama*, 20, 121b : पर्यग्निकरणं कृत्वा पुण्याहं तत्र कारयेत् ।

cf. *Suprabhedāgama*, I, 36, 35-38 :
प्रासादे मण्डपे चैव ब्राह्मणान् भोजयेत्क्रमात् । शिवव्रतधराञ्छुद्धाञ्शिवभक्तिसमन्वितान् ॥
ब्राह्मणोच्छिष्टमुद्वास्य गोमयालेपने कृते । पुण्याहं वाचयित्वा तु ब्रह्मघोषसमावृतम् ॥
प्रासादे वास्तुहोमं तु पूर्वोक्तविधिना बुधः । दर्भैः पलाशपत्रैश्च शमीपिप्पलबिल्वकैः ॥
पर्यग्निकरणं कृत्वा प्रासादं मण्डपं क्रमात् । संप्रोक्ष्य शिवमन्त्रेण पञ्चगव्यकुशोदकैः ॥

[9] D, E : कृत्वा pour कृत

पुण्याहं वाचयित्वा [1]तु [2]सितपुष्पाक्षतांस्ततः । [3]समास्तीर्यास्त्रमन्त्रेण प्राङ्मुखो वाप्युदङ्मुखः॥

[मण्टपालंकार:[4]]

[5]अभ्युक्ष्य परितो धीमान्मण्टपं दर्भमालया । वितानेनोर्ध्वमाच्छाद्य स्तम्भान्सर्वान्नवैः [6]सितैः॥

वस्त्रैरावेष्ट्य परितो लोकपालध्वजान्क्रमात् । बध्वा तद्वर्णसंयुक्तांस्तत्तदस्त्रेण लाञ्छितान्॥१०७॥

[7]वेदीप्रान्ते तु सर्वत्र कुर्यान्मालावलम्बनम् । मुक्तादामानि [8]कोणेषु सपताकं विलम्बयेत् ॥

[9]नालिकेरफलं पुष्पं चतुष्कोणेषु [10]लम्बयेत् । [11]द्वारपार्श्वेषु सर्वत्र [12]सितसूत्रविचित्रितान्॥१०९॥

गन्धोदपूरितान्कुम्भान्पल्लवास्यांश्च[13] विन्यसेत् । अष्टमङ्गलरूपाणि वेदिकाबाह्यतो न्यसेत् ॥

[14]वेदिकोपरि बाह्ये [15]वा [16]दीपमालां प्रयोजयेत् । पालिकादींश्च विन्यस्य ततः पुण्याहमाचरेत् ॥

---

[1] B, D, E : अथ pour तु

[2] A : सितपुष्पाक्षतं ततः ; E : सितपुष्पाक्षतास्थितम्

[3] A : समाकीर्य pour समास्तीर्य

[4] Cf. *Dīptāgama*, 20, 50b-60a :

अष्टदिक्षु ध्वजानष्टौ लम्बयेत्तु प्रदक्षिणम् । नीलवर्णं तु पूर्वायामाग्नेय्यां रक्तवर्णकम् ॥
कृष्णवर्णं तु याम्यायां धूम्रवर्णं तु नैर्ऋते । शङ्खाकृतिनिभाकारं वारुण्यां दिशि लम्बयेत् ॥
वायव्यां शाबलं ज्ञेयं शातकुम्भाभमुत्तरे । ऐशान्यां पीतवर्णं तु तेषां लक्षणमुच्यते ॥
विंशत्यङ्गुलविस्तारं त्रिदशाङ्गुलमायतम् । विस्तारेण समं पुच्छं तदर्धं शिखरं भवेत् ॥
ध्वजमध्ये लिखेद्धीमान्दिग्गजांश्च विशेषतः । ऐरावतं पुण्डरीकं पुष्पदन्तं तु कौमुदम् ॥
अञ्जनं वामनं चैव सुप्रदीपं च सर्वकम् । दर्भमालाभिरावृत्य समन्तान्मण्डपं ततः ॥
पञ्चदर्भैस्तु संयोज्य हस्तमात्रं प्रलम्बकम् । पर्वे पर्वे तु संयोज्य रज्जुं कुर्यान्मनोरमम् ॥
मङ्गलाष्टकरूपाणि उपवेद्युपरि न्यसेत् । द्वादशाङ्गुलमायामं विस्तारं स्यात्तदर्धकम् ॥
अधस्तात्पद्मपीठं स्याच्चतुरङ्गुलमानतः । तन्मध्यमे लिखेद्धीमान्दर्पणं पूर्णकुम्भकम् ॥
वृषभं भेरिमत्स्यं च श्रीवत्सं वज्रदीपकम् । सुसूत्रपट्टदेवाङ्गैर्मुक्तादामैर्विभूषयेत् ॥

[5] B, D, E : आवेष्ट्य pour अभ्युक्ष्य

[6] A : स्थितैः pour सितैः

[7] B, D : वेदि pour वेदी

[8] A : कोणे तु

[9] E : नालिकेरं फलं

[10] B : बन्धयेत्

[11] D, E : द्वारपार्श्वे तु

[12] E : चित्र pour सित

[13] D, E : पल्लवाढ्यांश्च pour पल्लवास्यांश्च

[14] D : वेदिकां परि

[15] E : च pour वा

[16] B, E : उपमालां

[1]दीपवर्ज्याणि शेषाणि स्थण्डिलोपरि विन्यसेत् । ततश्च शिवमन्त्रेण प्रोक्षयेच्छुद्धवारिणा ॥ ११२ ॥
वास्तुहोमं ततः [2]कृत्वा वेद्याश्चाग्नेयगोचरे । स्थण्डिले सैकते होमं समाप्याग्निं विसृज्य च ॥

[स्थण्डिलं कृत्वा तत्र शयनकल्पनम्[3]]

वेदिकायां ततः कुर्यात्स्थण्डिलं विधिवत्सुधीः । दशद्रोणैर्यवादीनां स्थण्डिलं श्रेष्ठमुच्यते ॥
मध्यमं स्यात्तदर्धेन तदर्धेनाधमं भवेत् । [4]तदर्धैस्तण्डुलैश्चैव तदर्धैश्च तिलैरपि ॥ ११५ ॥
[5]बाह्यरेखात्रयं कृत्वा मध्ये पद्मं [6]सकर्णिकम् । साष्टपत्रं लिखित्वा तु विकिरेत्पुष्पलाजकान् ॥
[7]कुशेन संपरिस्तीर्य शयनं तत्र कल्पयेत् । दारुजं चर्मजं [8]चैव रोमजं [9]तूलजं तथा ॥ ११७ ॥
[10]उपर्यास्तरणोपेतं भवेच्छयनपञ्चकम् । दारुजं [11]फलकं ज्ञेयं क्षीरवृक्षसमुद्भवम् ॥ ११८ ॥
चर्मजं च वरं चर्म [12]व्याघ्रत्वग्गेणमेव वा । रोमजं शयनं रोमकम्बलं पक्षिपक्षजम् ॥ ११९ ॥
चतुर्थं शाल्मलीतूलसंभवं वा प्रकल्पयेत् । उपर्यास्तरणं चापि केवलं सूक्ष्मवाससा ॥ १२० ॥

---

[1] A : दीपनाद्यविशेषाणि : D : दीपवर्ज्यग्निशेषाणि [2] E : कुर्याद् pour कृत्वा

[3] Cf. *Suprabhedāgama*, I, 36, 39-45a :

शयनं कल्पयेद्विद्वाञ्शुद्धशालियवैः सह । अष्टद्रोणमयं शालि तदर्धं तण्डुलं तथा ॥
तण्डुलार्धं तिलं प्रोक्तमब्जमालिख्य चार्चयेत् । दर्भैरुपरि संस्तीर्य पुष्पैर्लाजसमायुतम् ॥
सदशाहतवस्त्रैश्च अण्डजादीनि कल्पयेत् । अण्डजं मुण्डजं चैव रोमजं वामजं तथा ॥
चर्मजं शयनं पञ्च कल्पयेत्कल्पवित्तमः । अण्डजं चेति जानीयात्पक्षीणां पिञ्छसंभवम् ॥
कार्पासादिकृतं यत्तु मुण्डजं चेति तत्स्मृतम् । आविकादिमृगाणां तु रोमजं रोमजं भवेत् ॥
कौशेयं वामजं प्रोक्तं सिंहव्याघ्रैणचर्मजम् । चर्मजं तु विजानीयादलाभे सति बुद्धिमान् ॥
पञ्चवस्त्रेण संभाव्य स्थण्डिलोपरि यत्नतः ।

cf. *Dīptāgama*, 20, 122-125 :

स्थण्डिलं कारयेद्वेद्यामष्टद्रोणैश्च शालिभिः । तदर्धैस्तण्डुलैर्भूय्य तदर्धैश्च तिलैरपि ॥
मध्यमे पद्ममालिख्य दलाष्टकसमन्वितम् । नवशक्तीस्तु तत्रैव पूज्य गन्धादिना पुनः ॥
दर्भैश्च तं परिस्तीर्य तिललाजसमन्वितम् । पूर्वाग्रमुत्तराग्रं च स्थण्डिलोपरि विन्यसेत् ॥
चर्मजं रोमजं चैव मुण्डजं चाण्डजं क्रमात् । उपर्युपरि विन्यस्य यथा च परिपूरणम् ॥

[4] B, E : तदर्धैस्तण्डुलैश्चापि ; D : तदर्धैः स्थण्डिलश्चापि

[5] B, D : बाह्य रेखाद्वयं कृत्वा ; E : बाह्या रेखाद्वयं कृत्वा

[6] A : सकर्णकम् [7] D : क्रोधेन pour कुशेन

[8] D : चापि ; E : वापि [9] A : कुलजं

[10] D et E omettent les *śloka* 118, 119. et 120a

[11] A : सफला pour फलकं [12] A : व्याघ्रत्वग्येणमेव वा

एवं शयनमुद्दिष्ट[1]मलाभे[2] पञ्चवस्त्रकैः । [3]पृथिव्यादीनि तत्त्वानि [4]शयनेषु यजेत्क्रमात्[5]॥१२१॥

[अग्निकुण्डेषु यजनम्[6]]

वेदिकायां [7]सुमेरुं च स्वनामपदमन्त्रकैः । [8]अन्तःस्थेष्वष्टकुण्डेषु[9] भवादीन्परितो यजेत्॥१२२॥
प्रधाने शिवमभ्यर्च्य तद्बाह्ये परितो यजेत् । [10]दिक्पतीन्स्वस्वदिक्स्थेषु कुण्डेष्वन्येषु च क्रमात् ॥
विघ्नेशांश्च वसूंश्चैव यजेद्देशिकसत्तमः । मध्यमण्टपकुण्डेषु षोडशेषु यथाक्रमम् ॥ १२४ ॥
भवादीन्दिक्षु संपूज्य प्रधाने शिवमर्चयेत् । [11]भूरादिलोकान् शेषेषु सप्तकुण्डेषु पूजयेत्॥१२५॥
[12]कन्यसे मण्टपे [13]वापि नवकुण्डेषु [14]पूजयेत् । विताने चन्द्रमभ्यर्च्य [15]दिग्ध्वजेषु तदीश्वरान् ॥
[16]वासुकिं दर्भमालायां पुरुषार्थचतुष्टयम् । मुक्तादामसु संपूज्य तत्तत्स्तम्भेषु पूजयेत् ॥ १२७ ॥
उत्तमे मध्यमे वापि यजेद्वैकर्तनादिकान् । [17]आदित्यान्द्वादशैवाथ मण्टपे [18]त्वधमेऽपि च॥१२८॥

---

[1] D : आदिष्टम् pour उद्दिष्टम्
[2] A, D : अलाभात् pour अलाभे
[3] D : पृथिव्यादिनिमित्तानि
[4] E : तत्त्वेशांश्च pour शयनेषु
[5] Cf. *Dīptāgama*, 20, 126 : उमागायत्रिमन्त्रेण शयनं पूजयेद्बुधः ।
[6] Cf. *Dīptāgama*, 20, 196-201a :
शिवाग्नौ शिवमावाह्य पञ्चावरणसंयुतम् । भवश्च पूर्वदिग्भागे आग्नेय्यामुग्र एव च ॥
शर्वश्च दक्षिणे कुण्डे वामस्तु नैर्ऋते ततः । रुद्रश्च पश्चिमे भागे भीमो वै वायुगोचरे ॥
पशुपतिश्चोत्तरे कुण्डे ऐशान्यामीश एव च । त्रिणेत्राश्चतुर्भुजाश्चैव जटामकुटधारिणः ॥
कुण्डमध्ये न्यसेदेतांस्तद्बाह्ये च व्यवस्थिताः । तद्बाह्ये[वसवो?] मरुतश्चैव लोकपालाश्च तद्बहिः ॥
लोकपालविहीनः स्यान्मध्यमे होमकर्मणि । मरुतो वसवो हीनाः कन्यसे होमकर्मणि ॥
कुण्डाधिदेवताः सर्वा विन्यसेत्कुण्डमध्यमे ।
cf. *Kāraṇāgama*, I, 59, 133b-138a :
भवश्चोग्रश्च शर्वश्च महादेवश्च रुद्रकः । भीमः पशुपतिश्चैव ईशानश्चाष्टमूर्तयः ॥
इन्द्रादीशानपर्यन्तं स्वस्वमन्त्रैर्विशेषतः । संयजेयुः क्रमाद् मूर्तीन् कुण्डानां चैव दक्षिणे ॥
सदाशिवं प्रधाने तु यजेत्कुण्डस्य दक्षिणे । इन्द्रादिलोकपालांश्च बाह्ये तत्तद्दिशासु च ॥
कोणपार्श्वद्वयोश्चैव वसून् प्रागादि विन्यसेत् । मरुतश्चैव शक्रादिदिशेष्वायतनेषु च ॥
मरुतश्च विना कुर्यान्मध्यमे होमकर्मणि । वसूंश्चैव च दिक्पालान् कन्यसे होमकर्मणि ॥
[7] D : स्वमेरुं
[8] B : अन्तस्तेषु pour अन्तःस्थेषु
[9] A : कुम्भेषु pour कुण्डेषु
[10] A : दिक्पति pour दिक्पतीन
[11] D : भूतादि pour भूरादि
[12] A : कन्यपे कुण्डपे
[13] A : चापि
[14] A: पूर्ववत्
[15] A : दिक्ष्वष्टसु
[16] A : वासुकीं
[17] A : आदित्यद्वादशान्वोऽथ ; B, D : आदित्या द्वादशैवाथ ; E : आदित्यद्वादशां चैव
[18] A : स्तम्भमर्चयेत् pour त्वधमेऽपि च

[1]धर्मादीन्परितो [2]यष्ट्वा तोरणेष्वथ [3]पूर्वतः । भद्रं च विजयं चैव [4]विजृम्भं लोहितं तथा ॥
[5]धूपयेच्चागरुं यद्वा घृताक्तं [6]तत्र गुग्गुलुम् । एवं मण्टपसंस्कारं कृत्वा देशिकसत्तमः ॥१३०॥

[लिङ्गपीठयोः शयने निवेशनम्[7]]

होतृभिर्मूर्तिपैः[8] सार्धं गच्छेल्लिङ्गान्तिकं गुरुः । होतारः साधकाः प्रोक्ता [9]अभावे पुत्रकाश्च ते ॥
सर्वातोद्यसमायुक्तं स्वस्तिसूक्तादिमङ्गलैः[10] । बलवद्भिस्तदा लिङ्गमारोप्य [11]च रथादिषु॥१३२॥
द्वारेण पश्चिमेनैव मण्टपं तु निवेशयेत् । प्राक्शिरश्चोर्ध्ववक्त्रं तु शाययेच्छयनोपरि ॥ १३३ ॥
पीठं [12]च विन्यसेत्पश्चाल्लिङ्गमूले तु[13] दक्षिणे । सौवर्णं कौतुकं तत्र [14]लिङ्गे पीठे च बन्धयेत्॥
[15]तत्र त्रिषु विभागेषु दत्त्वार्घ्यं पुष्पसंयुतम् । [16]पीठं [17]वापि ततो लिङ्गं छादयेद्रक्तवाससा ॥

---

[1] D : यत्रादीन् ; E : धर्मांश्च

[2] La forme grammaticale correcte est इष्ट्वा

[3] A : पूर्ववत् — [4] A : वज्रंभं

[5] A : धूपयेच्चागरुमयं द्वाघृतं तत्र — [6] D : यत्र

[7] Cf. *Suprabhedāgama*, I, 36, 55-58a :

बध्वा प्रतिसरं पश्चात्स्वस्तिपुण्याहघोषणैः । सौवर्णं राजतं वापि क्षौमं कार्पासजं तु वा ॥
लिङ्गमध्ये तु तं बध्वा पूजांशेन शिवेन वै । शयने शाययेल्लिङ्गं प्राक्शिरश्चोर्ध्ववक्त्रकम् ॥
उत्तराच्छादनं वस्त्रैर्दर्भैश्चैव परिस्तरेत् । हृदा सुगन्धपुष्पाद्यैः पूजयित्वा समाहितः ॥
पिण्डिकामधिवास्यैव लिङ्गवल्लिङ्गमूलतः ।

cf. *Dīptāgama*, 20, 126b-134a :

लिङ्गं तु प्राङ्मुखं कृत्वा ब्रह्माङ्गानि कला न्यसेत् । त्रितत्त्वं विन्यसेत्पश्चात् त्रितत्त्वं हृदयैरपि ॥
मूर्तिवक्त्राणि नेत्राणि विद्याङ्गानि च विन्यसेत् । प्राक्शिरस्कमधःसूत्रं शयने शाययेच्छिवम् ॥
सद्योमन्त्रेण चावाह्य स्थापयेद्वाममन्त्रतः । स्वागतं वामदेवेन पाद्यार्घ्यं हृदयेन तु ॥
अघोरेण तु सांनिध्यं सुमुखं पुरुषेण तु । पाद्यं दत्त्वा हृदा मन्त्री शिरसाचमनं ददेत् ॥
पुरुषेण ददेदर्घ्यं पुष्पमीशानमन्त्रतः । शीतारिधूपमादद्यात्कवचचेन विचक्षणः ॥
हविर्निवेदयेत्पश्चाद्धृदयेन तु मन्त्रतः । ताम्बूलं दापयेद्विद्वान् पुरुषेण तु मन्त्रतः ॥
कौतुकं बन्धयेल्लिङ्गे शिरःस्थाने हृदा बुधः । हैमैर्वा राजतैर्वापि सूत्रैः कार्पासकैरपि ॥
मुकुलं पद्ममुद्रां च दर्शयेत्पञ्चवक्त्रिकाम् । पिण्डिकामधिवसेन्मूले शयनस्योपरि क्रमात् ॥

[8] B, D : मूर्तिभिः pour मूर्तिपैः — [9] A : अभावात् ; D : व्यभावात् ; E : अभावाः

[10] A : मन्त्रकैः pour मङ्गलैः — [11] E : वरदादिषु

[12] A : तु pour च — [13] A : मूलस्य pour मूले तु

[14] B, E : लिङ्गे नाले च ; D : लिङ्गपीठे च — [15] A : तद्दिक्षु पूर्वभागेषु

[16] A : पीठे — [17] A : चैव pour वापि

[1]पिण्डिकां च सितेनैव वाससा सर्वमन्त्रतः । अर्घ्येण गन्धपुष्पाभ्यां[2] धूपदीपद्वयेन च॥१३६॥
रुद्रविष्णुविरिञ्चांश्च[3] वृत्तेऽष्टाश्रयुगाश्रयोः । [4]तत्तन्मन्त्रेण संपूज्य यजेत्पीठे मनोन्मनीम्॥१३७॥

[कुम्भस्थापनम्[5]]

एवं कृत्वा [6]ततो धीमान्कलशान्स्थापयेत्क्रमात् । सौवर्णं राजतं ताम्रं मृत्तिकाकलशान्दृढान् ॥
[7]अकलङ्कान्सुपक्कांश्च पक्वबिम्बफलद्युतीन् । [8]द्रोणार्धपूर्णानच्छिद्रानभिन्नांश्चाप्युपाददेत्[9]॥१३९॥
[10]वर्धनी तत्प्रमाणा स्याच्छिवकुम्भः प्रमाणतः[11] । [12]द्विगुणस्तान्समस्तांश्च क्षालयेदस्त्रमन्त्रतः ॥

---

[1] D : पिण्डिका त्वसितेनैव ; E : पिण्डिकां चलितेनैव

[2] B, E : पुष्पाद्यैर् pour पुष्पाभ्यां [3] E : विरिञ्चींश्च

[4] Le ms. A omet le passage qui va de संपूज्य यजेत्पीठे मनोन्मनीम् (*śloka* 137b) à अकलङ्कान् सुपक्कांश्च (*śloka* 139a) et donne la lecture तत्तन्मन्त्रेण संयुक्तान् पक्वबिम्बफलद्युतीन्

[5] Cf. *Kāraṇāgama*, I, 59, 104,-108, 111-124a

द्रोणतोयेन संपूर्णान्निष्कलङ्कान् घनस्वनान् । सुपक्वान् दोषरहितान् पक्वबिम्बफलप्रभान् ॥
संप्रक्षाल्याथ कुम्भांश्च त्रिसूत्रेणैव वेष्टयेत् । पिधानानीह सर्वाणि चित्राकारादिवस्त्रयुक् ॥
पूरितं स्याच्चतुर्विंशत्प्रस्थैरपि सुगन्धकैः । शिवकुम्भमिति प्रोक्तं द्रोणोदैः परिपूरितम् ॥
वर्धनी तत्र विख्याता सर्वलक्षणसंयुता । वस्त्रपूतेन तोयेन सर्वगन्धान्वितेन तु ॥
संपूर्य वस्त्रयुग्मेन समावेष्ट्य पृथक् पृथक् । लिङ्गस्यैव शिरोभागे कल्पयेदासनं ततः ॥ . . . ।
गन्धादिभिः समभ्यर्च्य शिवकुम्भं तु विन्यसेत् । पञ्चरत्नं क्षिपेत्तत्र न्यसेदुत्तमकूर्चकम् ॥
शिवकुम्भस्य मध्ये तु शिवमन्त्रं तु विन्यसेत् । ध्यात्वा सादाशिवं रूपं पूर्वोक्तविधिना सह ॥
सद्यमन्त्रेण चावाह्य स्वागतं हृदयेन तु । स्थापयेद्वामदेवेन अघोरेण निरोधनम् ॥
ईशानेन तु सान्निध्यं पुरुषेण तु संमुखम् । पाद्यमाचमनं चार्घ्यं शिरोमन्त्रेण दापयेत् ॥
गन्धं पुष्पं च धूपं च दीपं नैवेद्यमेव च । हृदयेनैव दत्त्वा तु ताम्बूलं दापयेत्ततः ॥
दर्शयेद्दशमुद्रां च लिङ्गमुद्रां तथैव च । पञ्चवक्त्रीं प्रदर्श्याथ पिधानेन पिधाय च ॥
अस्त्रेणैव तु मन्त्रेण दिग्बन्धनं ततः कुरु । तस्यैव वामभागे तु वर्धनीं चैव विन्यसेत् ॥
वर्धनीमध्यमे न्यस्त्वा हाटकेन सरोरुहम् । निक्षिप्य मध्यमं कूर्चं मनोन्मन्यास्तु मन्त्रकम् ॥
वर्धनीमध्यमे न्यस्त्वा ध्यात्वा तद्रूपकं व्रजेत् । अब्जमुद्रां प्रदर्श्याथ सुरभीं तालमुद्रिकाम् ॥
पिधाय च पिधानेन दिग्बन्धनं चरेत्ततः । अभितस्तु घटानष्टौ स्थापयेदष्टदिक्षु च ॥
इन्द्रादीशानपर्यन्तमष्टविद्येश्वरान्न्यसेत् । निक्षिपेत्कन्यसं कूर्चं तेषां चैवायुधानि च ॥
शातकुम्भेन कृत्वा तु कुम्भमध्ये विनिक्षिपेत् । तत्तद्बीजानि न्यस्त्वा तु ध्यात्वा पूर्वोक्तवत्सुधीः ॥
गन्धादिभिर्यजेत्पश्चान्नैवेद्यान्तं क्रमाद्बुधः । अष्टविद्येश्वरान् सर्वाञ्छिवकुम्भं च वर्धनीम् ॥
तल्लिङ्गाभिमुखांश्चैव स्थापयेत्स्थापकोत्तमः ।

[6] E : ततो वेद्यां कलशान् [7] B : अलंकारान् pour अकलङ्कान्

[8] A : द्रोणार्धपूरान्निश्छिद्रान् [9] E : ०श्चापि चाददेत्

[10] A वर्धनी तत्प्रमाणं स्यात् ; D : वन्यं तत्तत्प्रमाणस्य ; E : वन्यं तत्तत्प्रमाणं स्यात्

[11] A : द्वे कुम्भप्रमाणतः ; D, E : शिवकुम्भप्रमाणतः [12] A : द्विगुणान्तान् समन्तांश्च

ततः सर्वात्मनावेष्ट्य सूत्रेण [1]सुसितेन च । [2]यवमात्रान्तरं तांश्च [3]गन्धोदकेन पूरयेत्॥१४१॥
सकूर्चान्सापिधानांश्च [4]पल्लवास्यान्मनोरमान् । [5]चन्दनक्षोदसिक्ताङ्गान्साक्षतान्वस्त्रवेदितान् ॥
संसाध्य सर्वांस्तान्कुम्भांस्तेषु [6]चैकं प्रगृह्य च । लिङ्गस्य दक्षिणे पार्श्वे शिरोदेशे तु विन्यसेत् ॥
तस्योत्तरे तु विन्यस्य शक्तिकुम्भं मनोरमम् । विद्येश्वरात्मकान्कुम्भानष्टावष्टसु दिक्ष्वपि ॥१४४
विन्यस्य तेषु [7]शैवेषु [8]विन्यसेद्रत्नपञ्चकम् । [9]शेषेष्वपि च सर्वेषु विन्यसेत्काञ्चनं ततः ॥१४५
पुण्याहं वाचयित्वाथ संप्रोक्ष्य च शिवाम्भसा । शिवे सदाशिवं तत्र यजेत्कुम्भे मनोन्मनीम् ॥
[10]तत्कुम्भे चापि संपूज्य [11]विद्येशान्दिक्षु पूजयेत् । गन्धपुष्पादिभिर्मन्त्री[12] ततो होमं समारभेत् ॥

[ होमः ]

ततो दिक्षु ऋगाद्यैस्तु वेदैरध्ययनं भवेत् । [13]नैर्ऋत्यां तु जपेदस्त्रमैशान्यां तु शिवं यजेत्[14] ॥
[15]कुण्डाग्न्याज्यस्रुवादीनां कृत्वा संस्कारमुत्तमम् । प्रतिकुण्डं ततः [16]कुर्याद्धोमं यद्वा स देशिकः[17]॥

---

[1] A : स्वस्थितेन च ; B : सुस्थितेन च ; E : संयुतेन च

[2] A : यवमात्रं तु रन्ध्रांश्च ; E : यवमात्रान्तरान्तांश्च

[3] D : गन्धोदेन प्रपूरयेत्

[4] B, D, E : पल्लवाढ्यान् pour पल्लवास्यान्

[5] A : चन्दनक्षोभ pour चन्दनक्षोद

[6] D : चैवं प्रगृह्य ते

[7] A : शैलेषु ; D : शैवे तु

[8] D : विन्यसेत्त्रिकपञ्चकम्

[9] B, E : शेषेष्वथ च ; D : शेषेष्ववयव

[10] D : तत्तत्कुम्भे च संपूज्य ; E : तत्तत्कुम्भेषु संपूज्य

[11] E : विद्येशानष्टदिक्षु च

[12] A : मन्त्रैः pour मन्त्री ; D : मन्त्रं

[13] D : नैर्ऋते तु ; E : नैर्ऋते च

[14] Cf. *Dīptāgama*, 20, 166-168a :
कुर्यादध्ययनं दिक्षु जपेन्मन्त्रं विदिक्षु वै । ऋग्वेदं दिशि पूर्वायां यजुर्वेदं तु दक्षिणे ॥
सामवेदमुत्तरे देशे पश्चिमेऽथर्वमेव च । प्रासादमीशकोणे तु अघोरं वह्निगोचरे ॥
नैर्ऋत्यां मृत्युबीजं तु उमाबीजं तु वायवे ।
cf. *Kāraṇāgama*, I, 59, 139b-141a :
ऋग्वेदाध्ययनं पूर्वे यजुर्वेदं तु याम्यके । पश्चिमे सामवेदं तु अथर्वं चोत्तरे तथा ॥ . . . .
कोणे मन्त्रजपं कुर्यान्मूलमन्त्राद्विशेषतः ।

[15] A : कुण्डान्याज्य pour कुण्डाग्न्याज्य ; D : अण्डान्याज्य

[16] A : कुर्यात्सोमं यद्वा स देशिकः ; E : कुर्याद्धोमयेद्वाथ देशिकः ; B : कुर्याद्धोमयेद्वा स देशिकः

[17] Cf. *Kāraṇāgama*, I, 59, 138b-139a :
अग्न्याधानादिकं सर्वमाज्यभागान्तकं पृथक् । होमं प्रति विशेषेण अग्निकार्यमाचरेत् ॥

[1]प्रधानकुण्डे संस्कारमग्नेः कृत्वा परेषु च । प्रक्षिप्य [2]मूर्तिपैर्होमं सर्वकुण्डेषु कारयेत्[3] ॥
होमारम्भे तु[4] सर्वत्र जातवेदसमर्चयेत् । गन्धपुष्पादिभिर्वह्निबीजमन्त्रं[5] समुच्चरन् ॥ १५१ ॥
पश्चात्कुण्डाधिपांश्चापि [6]शिवमन्त्रं [7]समुच्चरन् । ततः सर्वत्र हुत्वा तु सर्पिषाग्निमुखं ततः ॥

[होमद्रव्याणि[8]]

समिदाज्यचरूँल्लाजान्सर्षपांश्च यवांस्तिलान् । [9]मुद्गमाषकुलत्थांश्च वेणुनीवारकानपि[10] ॥१५३॥
एतानि होमद्रव्याणि मूलब्रह्माङ्गकैः क्रमात् । शतं [11]वाथ तदर्धं वा प्रतिकुण्डं तु[12] होमयेत् ॥
[13]पालाशी तु प्रधानस्य [14]समित्सर्वत्र कीर्तिता । [15]प्लक्षोदुम्बरकाश्वत्थवटजाः पूर्वतः क्रमात् ॥

---

[1] A : प्रधानकुण्डसंस्कारमग्ने कृत्वा ; B : प्रधानकुण्डसंस्कारमग्नौ कृत्वा ; E : प्रधानकुण्डे संस्कारमग्निं कृत्वा

[2] A : मूलैर्होमं तु ; B, E : मूर्तिहोमं च ; D : मूर्तिभिर्होमं

[3] Cf. *Kāraṇāgama*, I, 59, 132 :
आचार्यो मूर्तिपैः सार्धं पश्चाद्धोमं समाचरेत् । प्रधाने देशिकः प्रोक्तस्त्वन्यकुण्डेषु मूर्तिपाः ॥

[4] B, D, E : आरम्भेषु pour आरम्भे तु

[5] A : वह्नि बीजमन्त्रं pour वह्निबीजमन्त्रं ; E : वह्नि बीजमन्त्रं

[6] D : शिवमूर्तीन् pour शिवमन्त्रं ; E : शिवमूर्ति

[7] A : समुच्चरेत् ; D : समर्चयेत् ; E : प्रकल्पयेत्

[8] Cf. *Kāraṇāgama*, I, 59, 141b-150 :
समिदाज्यचरुल्लाजान् माषमुद्गयवांस्तिलान् । शालिगोधूमनीवारान् सक्तून् सिद्धार्थकं दधि ॥
क्षीरं क्रमेण विधिवज्जुहुयुर्वै पृथक् पृथक् । पलाशश्चैव शुक्रार्कश्चाश्वत्थोदुम्बरौ तथा ॥
प्लक्षखादिरबिल्वाश्च शमी वै प्रथमावृतौ । इन्द्रादीशानपर्यन्तं क्रमशः समिधः स्मृताः ॥
प्रधानाग्नौ पलाशस्तु आषाढो वाप्युदुम्बरः । सर्वेषां बाह्यकुण्डानां समिधः संप्रकीर्तिताः ॥
सद्येन समिधो हुत्वा मूलेनाज्यं तु होमयेत । अघोरेण चरुं हुत्वा लाजं तत्पुरुषेण तु ॥
मुद्गं हृदयमन्त्रेण माषं तु शिरसा हुनेत् । यवं नेत्रेण हुत्वा तु तिलं वामेन होमयेत् ॥
शालिमीशानमन्त्रेण गोधूमं चाष्टमं स्मृतम् । शिखामन्त्रेण नीवारं कवचेनैव सक्तुकम् ॥
पाशुपतेन सिद्धार्थं बीजमुख्ये हुनेद्दधि । दशाक्षरेण मन्त्रेण दुग्धं तु जुहुयात्ततः ॥
अष्टाधित्रिशतं द्रव्यमुत्तमं च क्रमाद्धुनेत् । द्विशताष्टाहुतिर्मध्यमष्टोत्तरशताधमम ॥
व्याहृत्याहुतिकं कार्यं प्रतिद्रव्यं पुनः पुनः ।

[9] A : मुद्गमाषाढकं चैव

[10] E : नीवारकाणि च

[11] E : चाथ pour वाथ

[12] A : कुण्डान्तं pour कुण्डं तु

[13] B : पलाशं तु ; D, E : पालाशं तु

[14] E : समिधस्तु प्रकीर्तिताः

[15] A : प्लक्षोदुम्बरजाश्वत्थ pour प्लक्षोदुम्बरकाश्वत्थ

आग्नेयादिषु [1]शम्यर्कमायूरखदिरोद्भवाः । शेषेषु समिदन्येषु बाह्यस्थेषु जनार्दन ॥ १५६ ॥
सर्वेष्वौदुम्बरी ग्राह्या प्रतिद्रव्यावसानके ।

[स्पर्शाहुतिः[2]]

सर्पिषा व्याहृतिं हुत्वा [3]सर्वत्रैव समं कुरु ॥ १५७ ॥
[4]व्याहृत्यन्तेन मन्त्रेण तेनैव सह मूर्तिपैः । [5]कूर्चहस्तः स्पृशेल्लिङ्गं प्रतिकुण्डं तु होमयेत्॥१५८॥
[6]मूर्तिपाः सर्पिषा तेषां प्रत्येकं तु [7]दशाहुतीः । ततः प्रधानकुण्डे तु[8] सर्पिषा मूलमन्त्रतः॥१५९॥
हुत्वा [9]दशाहुतीः पश्चात्प्रत्येकं ब्रह्मभिः क्रमात् । हुत्वा च पूर्ववत्पश्चात्तस्मिन्नेव जनार्दन॥१६०॥
[10]शक्तिहोमं च कुर्वीत तत्रावाह्य मनोन्मनीम् । [11]गन्धपुष्पादिनाभ्यर्च्य तन्मन्त्रेणापि होमयेत् ॥
आज्येनैकेन [12]साङ्गेन [13]मूलाख्येन [14]दशाहुतीः । प्रत्येकं [15]तु ततश्चापि तैर्मन्त्रैः पिण्डिकां स्पृशेत्॥
विद्येशानां गणेशानां दिक्पालानां तथैव च । दशानामपि [16]शस्त्राणां प्रत्येकं सर्पिषाहुतिम्[17]॥१६३॥
[18]पञ्चाहुत्या समाप्याथ होममभ्यर्च्य पावकम् । परिषिच्य तुषाद्यैस्तु वह्निं तेष्वपि रक्षयेत् ॥१६४॥
[19]पूजयित्वैवमग्निष्ठं दद्यात्कुम्भे हविः क्रमात् । देवानामपि सर्वेषां ततो [20]रात्रिं तु जागरात्॥१६५॥

---

[1] A : सर्वत्र पलाशमायूरखदिरोद्भवा

[2] Cf. *Kāraṇāgama*, I, 59, 151-156 :
ततः स्पर्शाहुतिं कुर्याल्लिङ्गद्रव्यं प्रति प्रति । स्पृष्ट्वा स्पृष्ट्वा तु तन्मन्त्रैर्देशिको मूर्तिपैः सह ॥
ब्रह्मजज्ञानमन्त्रेण हुत्वा ब्रह्मशिलां स्पृशेत् । मनोन्मन्यास्तु मन्त्रेण हुत्वा तां पिण्डिकां स्पृशेत् ॥
प्रत्येकं षोडशं हुत्वा व्याहृतिं जुहुयात्ततः । होमारम्भस्य पश्चात्तु पूर्णाहुत्यास्तु पूर्वतः ॥
आसने स्थापने क्रोधे क्षुधे निष्ठीवनेऽक्रमे । वायुचारे भयोत्पन्ने भाषणे चाप्यदीक्षितैः ॥
श्लेष्मोद्गारे च संतापे क्रियाविस्मृतिसंभवे । मन्त्रोक्ते मन्त्रकार्ये तु व्याहृत्याहुतिमाचरेत् ॥
नृत्तगेयसमायुक्तं रात्रिशेषं व्यपोह्य च । एकरात्रं द्विरात्रं वा त्रिरात्रं वाधिवासयेत् ॥

[3] A : सर्वद्रव्यसमं
[4] A : व्याहृत्यान्तेऽथ ; D : व्याहृतिन्तेन
[5] A : कूर्चहस्तं ; B : कूर्चहस्ते ; D : कूर्चहस्तैः
[6] B, D : मूर्तिना ; E : मूर्तीनां
[7] A : दशाहुतिः ; B : शताहुतिः
[8] A : कुण्डेषु pour कुण्डे तु
[9] A, D : दशाहुतिः ; B : शताहुतिः
[10] E : शान्तिहोमं
[11] A : गन्धपुष्पाक्षताभ्यर्च्य
[12] B, E : चाङ्गेन ; D : चांशेन
[13] E : मूलाद्येन
[14] B : दशाहुतिः ; D : दशाहुतिम्
[15] B, D, E : च pour तु
[16] B : शास्तॄणां ; D : सास्त्राणां
[17] A : आहुतिः pour आहुतिम्
[18] B : पञ्च हुत्वा समाख्याथ ; E : पञ्च हुत्वा समामाप्य
[19] A : पूजयित्वाथमग्निष्ठं ; E : पूजयित्वेममग्निष्ठं
[20] D : रात्रं तु जागरात् ; E : रात्रौ तु जागरम्

[पूर्णाहुतिः[1]]

[2]नीत्वा प्रातः समुत्थाय कृतनित्यः स देशिकः । मूर्तिपैर्मण्टपं [3]गत्वा समाराध्य घटस्थितान् ॥
[4]देवाँल्लिङ्गे च पीठांशे पूर्ववत्पूजयेत्सुधीः । [5]तत्र पश्चात्सुलग्ने तु [6]वह्निं कुण्डेषु दीपयेत्॥ १६७॥
[7]सर्वमूर्तीन् सुसंपूज्य हुत्वा व्याहृतिभिस्ततः । हुत्वा स्विष्टकृतं चापि [8]पूजयित्वाथ पावकम् ॥
[9]स्रुचा पूर्णाहुतिं दद्यात्सर्वात्महृदयेन तु । सर्वत्र मूर्तिपैः सार्धमथवात्र स्वयं गुरुः ॥ १६९ ॥
पूर्णाहुतिं [10]च सर्वत्र जुहुयात्पूर्वतः क्रमात्[11] ।

[ब्रह्मशिलामध्ये लिङ्गस्थापनम्[12]]

ततो गर्भगृहं प्राप्य शिल्पिना सह देशिकः ॥ १७० ॥

---

[1] Cf. *Kāraṇāgama*, I, 59, 157-159a :
ततः प्रभाते विमले आचार्यो मूर्तिपैः सह । कृत्वा स्नानत्रयं पश्चात्सकलीकरणं करेत् ॥
लिङ्गं तु शयने पूज्य कुम्भस्थान्मूर्तिकान्न्यसेत् । कुम्भस्थदेवतानां तु नैवेद्यं दापयेत्ततः ॥
कुण्डं प्रति विशेषेण गन्धपुष्पादिभिर्यजेत् ।
cf. *Dīptāgama*, 20, 257-259a :
ततो देवान्तिकं गत्वा पूजयित्वा यथाविधि । अग्निं प्रज्वालयेत्पश्चाद् ब्रह्माङ्गैर्जुहुयात्ततः ॥
जयादिरभ्याधानं च राष्ट्रभृज्जुहुयात्क्रमात् । हव्यवाहमनुस्मृत्य स्विष्टमन्ते होमयेत् ॥
हृदा पूर्णाहुतिं दद्याद्यदस्येति च मन्त्रत. ।

[2] B, D : हित्वा ; E : कृत्वा

[3] A : कृत्वा स्वस्थानाराध्य संस्थितान्

[4] B, E : देवान्पीठे च लिङ्गे च पूर्ववत्

[5] E : ततः pour तत्र

[6] A : वह्निकुण्डेषु

[7] B : स मूर्तीन्सर्व संपूज्य

[8] A : सूचयित्वा च

[9] A, B : स्रुवा pour स्रुचा

[10] B, D, E : तु pour च

[11] E : पूर्ववत्क्रमात्

[12] Cf. *Kāraṇāgama*, I, 59, 159b-172a :
आचार्यः शिल्पिना सार्धं प्रविशेद्गर्भगेहकम् । पूर्वपश्चिममार्गेण मत्स्यसूत्रं तु पादयो. ॥
दक्षिणोत्तरमार्गेण सूत्रं कुर्यात्तु मध्यमे । पूर्वपश्चिममार्गेण पुरस्तात्परपूर्वकम् ॥
याम्यं सौम्यं तथा चैव द्वात्रिंशत्सतथा भजेत् । मध्यभागं त्रिधा भज्य पक्षांशं दक्षिणं त्यजेत् ॥
एकांशमुत्तरे त्यक्त्वा मध्यसूत्रं तु पातयेत् । शिवसूत्रं तथा ख्यातं तन्मध्ये स्थापयेच्छिवम् ॥
अन्यथा स्थापयेल्लिङ्गं स्थाननाशो धनक्षयः । तन्मध्ये स्थापितं लिङ्गं सर्वदोषापहारकम् ॥
शालिपिष्टाक्तसूत्रेण गैरिकाक्तेन वा पुनः । सूत्रमास्फालयेद्धीमान् स्थले भित्तौ क्रमेण तु ॥
भित्त्यभावे महाशासु यष्टिं तु स्थापयेत्ततः । शिवसूत्रं महाशासु तन्तुनोर्ध्वं प्रकल्पयेत् ॥
पिण्डिकायास्तु ताराधं शिवसूत्रस्य मध्यमात् । अङ्कयेत्तु महाशासु सूत्रपातं तु कारयेत् ॥
यदुक्तं कूर्मशैलस्य प्रवेशानां तु भागकम् । तत्समं कारयेद्गर्तं विस्तारं पीठविस्तरम् ॥
गर्तं समतलं कृत्वा घर्नीकृत्वाष्टपादकः । आयाभिः समतां कृत्वा वस्त्रैरेव तु शोधयेत् ॥
गर्तं शम्बद्धशैलं तु शक्तिबीजेन विन्यसेत् । मध्यमं शिवसूत्रात्तु लम्बयित्वा विदुः क्रमात् ।
कारयेत्प्रतिलिङ्गं तु याज्ञिकैर्वृक्षकैस्तथा । उपपीठं तथा कृत्वा श्वभ्रमध्ये तु विन्यसेत् ॥
प्रतिलिङ्गं तु संस्थाप्य सुस्थितं दुस्थितं विदुः । पिण्डिकां प्रतिलिङ्गं च यष्टिसूत्राणि संत्यजेत् ॥

तत्र ब्रह्मशिलामध्ये स्थापयेल्लक्षणान्वितम् । ततस्तल्लक्षणं चैव [1]स्थानं तत्स्थापनोचितम्॥१७१॥

[ब्रह्मशिलालक्षणम्[2]]

क्रमेण [3]गदतो मत्तः शृणु सर्वं जनार्दन । उत्तमा लिङ्गविष्कम्भद्विगुणेन तु विस्तृता ॥१७२॥
[4]पादोनद्विगुणा मध्या भवेदर्धाधिकाधमा । [5]विस्तारेण [6]समोत्सेधा श्रेष्ठा मध्या तदर्धतः ॥
तत्पादेन कृतोत्सेधा [7]कन्यसी [8]सा शिला स्मृता । तन्मध्ये लिङ्गविष्कम्भमानेनैव [9]सुसंस्थितम् ॥
[10]चतुरश्रं समं कुर्याद्गर्तं[11] तत्खातमुच्यते । ब्रह्मांशोत्सेध[12]वस्वंशे व्योमांशार्धं तु [13]तद्भवेत् ॥
अथवाङ्गुलमानेन कल्पयेत्कल्पवित्तमः । [14]पञ्चाङ्गुलं स्यात्तन्निम्नं लिङ्गे [15]वै चोत्तमोत्तमे[16]॥१७६॥
[17]हस्तेष्वन्येषु सर्वेषु स्यादर्धार्धाङ्गुलक्षयः[18]।[19]नवावटानि तन्मध्ये [20]सूत्रेण [21]सुमिते सुधीः॥१७७॥

---

[1] B, E : स्थानकृत् pour स्थानं तत्

[2] Cf. *Mataṅgapārameśvara, kriyāpāda*, pp. 180-187 :
अधोभागसमा भद्रा मध्यरेखासमन्विता । बहिरङ्गुलि निष्क्रम्य चतुरश्रा समन्ततः ॥
कार्या ब्रह्मशिला भद्रा सर्वदोषविवर्जिता ।

cf. *Īśānaśivagurudevapaddhati, kriyāpāda*, 39, 88-92a :
लिङ्गायामसमव्यामा श्रेष्ठा ब्रह्मशिला स्मृता । पूजांशद्विगुणा नीचा तयोर्मध्येऽष्टभागिके ॥
प्रागवन्नवप्रकाराः स्युः क्रमाद्ब्रह्मशिलाः शुभाः । स्वव्यासार्धोन्नता मुख्या नीचा वेदांशतो घनाः ॥
तयोर्मध्येऽष्टधा भक्ते घनाद् ब्रह्मशिला नव । अथवा लिङ्गविष्कम्भाच्छ्रेष्ठा स्याद् द्विगुणा घनात् ॥
विस्ताराध्यर्धतो नीचा भवेद्ब्रह्मशिला क्वचित् । खातं ब्रह्मशिलामध्ये ब्रह्मभागोपमं भवेत् ॥
प्रविशेद्ब्रह्मभागस्तु नीरन्ध्रं च यथा भवेत् ।

[3] B, E : गदितो मन्त्रः pour गदतो मत्तः

[4] B, E : पदेन द्विगुणा : D : पादोनद्विगुणो

[5] E : विस्तरेण

[6] A : समोत्सेधम्

[7] A : कन्यसा

[8] E : या pour सा

[9] B : तु संमतम् : D, E : तु संमितम्

[10] A : चतुरश्रं समं pour चतुरश्रगमं

[11] A : शतं pour गर्तं ; B, D, E : गर्भं

[12] D : ०वस्त्वंशव्योमांशार्धं pour ०वस्वंशे ०व्योमांशार्धं

[13] B, E : तत्समम्

[14] D : पञ्चाङ्गुली

[15] D : चैवोत्तमोत्तमम् ; E : चैवोत्तमोत्तम

[16] A : उत्तमैः pour उत्तमे

[17] D : हस्तेऽन्येष्वेव ; E : हस्तेऽन्येष्वपि

[18] D, E : क्षयात् pour क्षयः

[19] A : नवावटादितन्मध्ये

[20] D : सूत्रेणाखमितो सुधीः

[21] A : समिधे pour सुमिते

पदमध्यगतान्येवं[1] कुर्यात् [2]तत्तत्त्रियङ्गुलम् । [3]तदर्धं मध्यमं प्रोक्तं तदर्धमधमं भवेत् ॥१७८॥
विस्तारसमनिम्नानि तानि सर्वाणि कल्पयेत् । एवं तल्लक्षणं प्रोक्तं तत्स्थानं तु निगद्यते॥१७९॥

[ब्रह्मशिलास्थानम्[4]]

द्वारमध्यं विनिश्चित्य तस्मात्सूत्रेण [5]मध्यमम् । गर्भस्योपरि निश्चित्य [6]तन्मध्ये कं [7]विधाय च ॥
[8]द्वारविस्तारमानं [9]यदन्तर्गर्भगृहे स्थितम् । [10]चतुरश्रं समं कृत्वा गर्भगेहस्य मध्यमे ॥१८१॥
द्वात्रिंशैः प्राग्गतैः [11]सूत्रैस्तत्संख्यैरुदगायतैः । एकत्र [12]पिण्डितं तत्र चत्वारिंशच्चतुःशतम्॥१८२॥
सैकं च जायते [13]व्यूहं पदानां तेषु मध्यमे । [14]पदे नवपदं कुर्यात्सूत्रेण [15]सुमितं ततः ॥१८३॥
आग्नेयपदमारभ्य [16]वायोः पञ्चपदं त्यजेत् । [17]ब्रह्मसोमेशशक्राणां पदानां तु चतुष्टये ॥१८४॥
[18]मध्यसंधिस्थसूत्रे ये [19]प्रागुदक्प्रवणे कृते । आगर्भं सम्यगास्फाल्य[20] गैरिकाक्तेन रज्जुना ॥

---

[1] B, D, E : एव pour एवं

[2] D : तत्र त्र्यङ्गुलम् ; E : तत्र त्रयङ्गुलम

[3] A : तदर्धे मध्यमं ; D : तदर्धमध्यमं

[4] Cf. *Kāmikāgama*, I, 64, 141-143 :
एकविंशतिभागे तु द्वारतारे तु मध्यमे । भागे षोडाकृते ब्रह्मसूत्रं मध्यमसूत्रकम् ॥
ब्रह्मवामैकभागार्धं शिवसूत्रमिति स्मृतम् । शिवस्य ब्रह्मणो मध्ये हरेरिन्द्रस्य मध्यमम ॥
शिवसूत्रप्रमाणं तु सौम्यसूत्रस्य पूर्वतः । न्यस्त्वा तत्सन्धिमध्ये तु विन्यसेत् कशिलां गुरुः ॥
cf. *Suprabhedāgama*, I, 36, 84b-88a :
एकविंशतिभिर्भागैर्द्वारतारं विभज्य वै । मध्यमांशं षडंशं तु संविभज्य द्विभागिकम् ॥
वामे व्यपोह्य यत्सूत्रं ब्रह्मसूत्रमिति स्मृतम् । तन्मध्ये स्थापयेल्लिङ्गं तन्मध्ये स्थापयेच्छिवम् ॥
अन्यथा स्थापिते लिङ्गे नृपराष्ट्राहितावहम् । आदौ कूर्मशिलां न्यस्त्वा ब्रह्मभागान्वितां दृढाम् ॥
न्यसेद्ब्रह्मशिलामूर्ध्नि नन्द्यावर्तशिलान्विताम् । स्थलं सम्यक् प्रकुर्वीत स्नेहद्रव्यान्वितं दृढम ॥

[5] D : मध्यकम् ; E : मध्यगम्

[6] A : तन्मध्यैकं pour तन्मध्ये कं : E : तन्मध्यकं

[7] E : विहाय

[8] E : द्वारविस्तारतामानं

[9] A ajoute तद् après यद् : E : यदन्तर्गर्भगेहकम्

[10] E : चतुरश्राणि कृत्वा तु

[11] A : सूत्रैस्तत्संख्यैरुदगायते

[12] A : पण्डितं

[13] Le mot व्यूह se trouve ici au neutre au lieu du masculin

[14] A : पादे

[15] B : संमितं ; E : सुमिता

[16] A : ययोः pour वायोः

[17] A : ब्रह्मसोमे च शस्त्राणां

[18] A: मध्यस्थसंधिसूत्रौ यौ

[19] A : प्रागुदक्प्रवणौ कृतौ ; E : प्रागुदक्प्रणवेन तु

[20] A : आच्छाद्य pour आस्फाल्य : D : आस्थाल्य

[1]सूत्रसंधिं स्फुटं ज्ञात्वा शिवसूत्रं तयोरपि । प्रागायतं [2]भवेदन्यत्सोमसूत्रमिति स्मृतम् ॥१८६॥
[3]ब्रह्मस्थानमिति ख्यातं तत्स्थाने स्थापयेच्छिलाम् । [4]यद्वद्ब्रह्मशिलामध्ये [5]सूत्रसन्धिस्थितिर्भवेत् ॥
तद्वद्ब्रह्मशिला गर्भे स्थापनीया विचक्षणैः[6] । [7]स्थापितायां ततस्तस्यां [8]शिलायां परिपालयेत् ॥

[ब्रह्मशिलावटे रत्नादिन्यासः[9]]

[10]ततो मध्यावटे हैमं कूर्मं तत्र विनिक्षिपेत् । समं दृढतरं [11]वृत्तं [12]द्वारस्याभिमुखं [13]यथा ॥१८९॥
ततो रत्नानि [14]धातूनि बीजानि च ततः परम् । [15]गन्धं लोहं च वल्लीं च विन्यसेदवटेषु च ॥

---

[1] D : सूत्रं संधिं  [2] A : भवे न्यक्त्वा pour भवेदन्यत्

[3] B, D et E omettent ce demi-*śloka*

[4] A : तद्वद् pour यद्वद्

[5] Le ms. E omet le passage qui va de सूत्रसन्धिस्थितिर्भवेत् (187b) à तद्वद्ब्रह्मशिलागर्भे (188a) et donne la lecture यद्वद्ब्रह्मशिलामध्ये स्थापनीया विचक्षणैः

[6] Les *śloka* 188b à 292 de ce *paṭala*, le *paṭala* 19 et les *śloka* 1 à 126 du *paṭala* 20 manquent dans le ms. D.

[7] A : स्थापितायां तु तस्यां तत्  [8] B, E : पायसं परिकल्पयेत्

[9] Cf. *Kāmikāgama*, I, 64, 146 :
न्यसेद्रत्नौषधीलोहधातुबीजानि पूर्ववत् । कूर्मं वा वृषभं वाथ हैमं तत्र विनिक्षिपेत् ॥
cf. *Dīptāgama*, 20, 241b-250 :
वज्रमैन्द्रे तु विन्यस्य वैडूर्यं वह्निगोचरे । इन्द्रनीलं तु याम्यायां मुक्तां नैर्ऋतगोचरे ॥
वारुणे स्फटिकं न्यस्त्वा पुष्परागं तथानिले । पद्मरागं तु सौम्यायां नीलमीशानगोचरे ॥
माणिक्यं मध्यमे स्थाप्य ततो धातूंश्च विन्यसेत् । हरितालमञ्जनं सीसं माक्षिकं गैरिकाद्रकम् ॥
सिन्दूरं गन्धकं चैव न्यसेत्पूर्वादितः क्रमात् । गोधूमं यवनीवारं तिलसर्षपमाषकम् ॥
व्रीहिमुद्गौ क्रमेणैव न्यसेत्पीठक्रमेण तु । चन्दनं चागरुं चैव रक्तचन्दनमेव च ॥
लोहं पूर्वादितः प्रोक्तमाग्नेय्यामोषधीर्न्यसेत् । उशीरविष्णुक्रान्तं च सहां लक्ष्मीं च विन्यसेत् ॥
रत्नानामप्यलाभे तु वज्रं सर्वत्र विन्यसेत् । धातूनामप्यलाभे तु हरितालं तु विन्यसेत् ॥
बीजानामप्यलाभे तु यवं सर्वत्र विन्यसेत् । गन्धानामप्यलाभे तु चन्दनं तत्र विन्यसेत् ॥
ओषधीनामलाभे तु सहदेवीं तु विन्यसेत् । पृथिवीमेरुपद्मं च वृषभं हैमिकामयम् ॥
यथापीठक्रमान्न्यस्त्वा मध्ये ब्रह्मशिलावटे ।

[10] A : ततो मध्यवटे हामं कृत्वा तत्र  [11] B : व्यक्तं pour वृत्तं

[12] A : द्वारस्यापि मुखं  [13] E : तथा pour यथा

[14] A : यात्राणि pour धातूनि  [15] E : गन्धांल्लोहांश्च वल्लीश्च

[1]माणिक्यं मध्यमे [2]न्यस्य शक्रे मरकतं न्यसेत् । इन्द्रनीलं तु याम्यायां स्फटिकं वारुणे ततः॥
वज्रं तु सौम्यदिग्भागे वैडूर्यं वह्निगोचरे । मुक्तां निर्ऋतिदिग्भागे पद्मरागं तु मारुते॥१९२॥
प्रवालमीशदेशे तु[3] मध्ये पारदमेव च । ततो [4]धातुमयं चापि [5]गैरिकं च मनश्शिलाम्॥१९३॥
[6]हरितालाञ्जने चैव [7]माक्षिकाभ्रकमेव च । सिन्दूरं च क्रमेणैव [8]प्रागादिषु विनिक्षिपेत् ॥१९४॥
अथ मध्येऽवटे [9]शालीन्यवमुद्ग[10]कुलत्थकान् । निष्पावं च क्रमेणैव महाशासु विनिक्षिपेत्॥१९५॥
प्रियङ्गुतिलनीवारसर्षपांश्च[11] विदिक्षु च । ततश्चन्दनं मध्ये [12]तु कुष्ठलोहलवङ्गकान् ॥ १९६ ॥
कक्कोलं च तथाशासु [13]जातितक्कोलकौ तथा । काश्मीरं [14]रोचनां चैव विदिक्ष्वपि च विन्यसेत्॥
ततः काञ्चनरौप्ये[15] च [16]ताम्रं चैवारकूटकम् । त्रपुसीसायःकांस्यानि[17] पित्तलं च क्रमान्न्यसेत् ॥
[18]विष्णुक्रान्तिं [19]सहादेवीं मुसलीं श्रियमेव च । भद्रामिन्द्रलतां [20]दूर्वां [21]गिरिकर्णीं च विन्यसेत्॥

[आधारशक्तिन्यासः[22]]

ततस्तस्यां प्रसन्नात्मा ब्रह्माख्यायां तु मध्यमे । आधारशक्तिं विन्यस्य गन्धाद्यैरर्चयेद्गुरुः ॥

---

[1] E: माणिक्कं
[2] A : न्यस्त्वा
[3] B, E : अथ pour तु
[4] A : धातुमयश्चापि
[5] B : गैरिकीं
[6] A : हरितालाञ्जनौ चैव ; B : हरितालाञ्जनोधौ च ; E : हरितालाञ्जनावेण॰
[7] B : माक्षिकाभ्रकमेव च
[8] A : तान् प्रागादिषु निक्षिपेत्
[9] A : शालि pour शालीन्
[10] A : कुलस्थ pour कुलत्थ
[11] A : सर्षपाणि pour सर्षपांश्च
[12] A : च pour तु
[13] B : जाती pour जाति
[14] B : लोचनं pour रोचनां ; E : रोचनं
[15] B : रूपौ pour रौप्ये
[16] A, B : ताम्रनारकुटं तथा
[17] B : कांस्यांश्च pout कांस्यानि
[18] A : विष्णुक्रान्तं
[19] E : सहदेवीं
[20] E : पूर्वं pour दूर्वां
[21] A : गिरिकर्णं
[22] Cf. *Dīptāgama*, 20, 253b-256a :
आधारशक्तिं संकल्प्य ततोऽनन्तासनं न्यसेत् । कल्पोक्तविधिना कल्प्य ततः पद्मासनं न्यसेत् ।
तथैव विधिना न्यस्त्वा नवशक्तिसमन्वितम् । ततो योगासनं न्यस्त्वा मण्डलादि क्रमान्न्यसेत् ॥
गुणत्रयेण संछाद्य तत्तन्मन्त्रमनुस्मरन् । कालाग्निरुद्रपर्यन्तमासनोपरि कल्पयेत् ॥

cf. *ibid*, 236-237a :
अवटं पूजयित्वा तु गन्धपुष्पादिभिः शुभैः । त्वमेव परमा शक्तिस्त्वमेवासनधारिके ॥
आसनाधारभूतासि तिष्ठ त्वं शिवधर्मिणि ।

cf. *Kāmikāgama*, I, 64, 144-145 :
प्रणवं प्रणतिं चोक्त्वा व्यापिनीति स्थिरेति च । अचलेति ध्रुवेत्युच्चैर्नयागर्भ धराम्यहम् ॥
स्वाहेत्यन्तं पदं चोक्त्वा स्थैर्यं सर्वगतं स्मरन् । पद्मासनं तदारूढं सावष्टम्भं निरुध्य च ॥

ततो मन्त्रमिमं[1] चापि जपेद्व्यक्तं कृताञ्जलिः । [2]त्वमेव परमा शक्तिस्त्वमेवासनधारिका॥२०१॥
शिवाज्ञया त्वया [3]देवि स्थातव्यमिह सर्वदा । विज्ञाप्यैवं ततो लिङ्गं मूर्तिपैः सह देशिकः ॥
[4]अन्यैश्च बलवद्भिस्तु [5]समुत्थाप्याहृतं ततः । अपनीय शिरस्यर्घ्यं [6]तदा मूलेन दापयेत्॥२०३॥

[लिङ्गस्थापनम्[7]]

ततो रथे समारोप्य शङ्खदुन्दुभिनिस्वनैः । गीतनृत्तसमायुक्तं कृत्वा धाम्नः [8]प्रदक्षिणम् ॥
प्रविश्य [9]गर्भगेहान्तमर्घ्यं शिरसि विन्यसेत् । ततोऽवतारयित्वा तु [10]रथाल्लिङ्गं गतत्वरैः ॥
बलवद्भिर्नरैः [11]पश्चाद्द्वारस्याभिमुखं तथा । न्यस्य ब्रह्मशिलापार्श्वे ततो लग्ने [12]गुणान्विते॥२०६॥
पुत्रमित्रादिभिः सार्धं कर्त्रा च फलकाङ्क्षिणा । लिङ्गस्यानुप्रविष्टेन [13]स्थितेनाग्रे प्रणम्य च ॥
प्रार्थ्यमानः प्रतिष्ठार्थं शिल्पिना सह देशिकः । सोष्णीषः सोत्तरीयश्च बद्धपञ्चाङ्गभूषणः॥२०८॥
[14]स्थापयेदुदगास्यः सन्मन्त्रमीशानमुच्चरन् । निःशब्दं निश्चलं चापि सुस्थितं सुदृढं [15]यथा ॥
[16]ऐशानीं दिशमाक्रम्य [17]स्थितं स्वर्गापवर्गदम् । लोकपुष्टिकरं[18] चैव धनधान्य[19]सुखावहम् ॥

---

[1] A : इदं pour इमं
[2] B, E : ओं त्वमेव परा शक्तिस्
[3] A : देवी ; B : देव
[4] A : अन्यैर्वा
[5] A : समुत्थाप्यांशुकं ; E : समुत्थाप्यान्तिकं
[6] E : ततो pour तदा
[7] Cf. *Suprabhedāgama*. I, 36, **94-95**a, **97-101**a :
शयनाल्लिङ्गमुत्थाप्य त्यक्त्वा पर्युषितानि च । अर्घ्यं दत्त्वा यथान्यायं हृदयेन सपुष्पकम् ॥
पश्चिमाभिमुखं कृत्वा लिङ्गं वै तु हृदा बुधः । . . . रथोपरिस्थितं लिङ्गं प्रासादं तु प्रदक्षिणम् ॥
आचार्योऽग्रं तु संस्पृष्ट्वा मूर्तिपास्तु स्वकां दिशम् । कर्ता मूलं तु संस्पृष्ट्वा चाग्रे वर्धनिधारया ॥
कृत्वा प्रदक्षिणं देवं स्थित्वा द्वारसमीपके । गन्धपुष्पादिनाभ्यर्च्य अर्घ्यं दत्त्वा हृदा बुधः ॥
ततः प्रवेशयेल्लिङ्गं गर्भगर्ते सुखं यथा । सुमुहूर्ते सुलग्ने च नक्षत्रकरणान्विते ॥
ध्यात्वा सदाशिवं देवं मूलमन्त्रमनुस्मरन् । लिङ्गं संस्थापयेत्तत्र किञ्चिदीशानमाश्रितम् ॥
[8] B : धामप्रदक्षिणम : E : ग्रामप्रदक्षिणम्
[9] A : गर्भगेहं तु अर्घ्यं ; E : गर्भगेहं नमर्घ्यं
[10] A : ततो लिङ्गं कृतत्वरैः
[11] A : पश्चाद् द्वारस्यापि मुखं तथा ; B, E : पश्चाद् यथा द्वारमुखं तथा
[12] B : गुणांशके
[13] E : स्थितेराग्रे
[14] E : स्थापयेदुदगास्यस्थः मन्त्र०
[15] A : तथा
[16] A : ऐशान्यां
[17] B : स्थितः स्वर्गापवर्गदः
[18] B : करः pour करं
[19] B : सुखावहः pour सुखावहम्

तस्मात्सर्वप्रयत्नेन स्थापयेदीशदिग्गतम्[1] । ऐन्द्रीं वैवस्वतीमाशां वारुणीमुत्तरामपि ॥ २११ ॥
आक्रम्य [2]सुस्थितं लिङ्गं [3]ब्राह्मणादिसुखावहम् ।

[ पिण्डिकास्थापनम् [4]]

ततश्च पिण्डिकां [5]तस्मान्मण्टपाद्वस्त्रवेष्टिताम् ॥ २१२ ॥
उत्थाप्य शक्तिमन्त्रेण रथे चारोप्य देशिकः । आनयेल्लिङ्गवद्गर्भे रथादप्यवतार्य च ॥ २१३ ॥
लिङ्गाग्रे विन्यसेत्पीठं ततः [6]पार्श्वशिला न्यसेत् । [7]चतस्रस्ताः समुद्दिष्टाश्चतुरश्रसमोच्छ्रयाः[8]॥२१४॥
[9]पिण्डिकां लक्षणोपेतां नन्द्यावर्तशिलोपरि । [10]उदङ्नालं यथा स्थाप्य [11]विश्लेषं लिङ्गपीठयोः[12]॥

---

[1] A : दिग्गतः pour दिग्गतम् [2] E : संस्थितं

[3] A : ब्रह्मणादि pour ब्राह्मणादि

[4] Cf. *Kāraṇāgama*, I, 59, 205-208 :

नन्द्यावर्तशिलां योज्य पूर्वोक्तविधिना सह । वालुकाभिः समापूर्य सुस्निग्धं सुदृढं क्रमात् ॥
मनोमन्यास्तु मन्त्रेण पिण्डिकां च समुद्धरेत् । उक्तालंकारसंयुक्तां कृत्वा धामप्रदक्षिणम् ॥
द्वारदेशं समानीय दत्त्वार्घ्यं शिरसा पुनः । शनैर्लिङ्गे समायोज्य शक्तिबीजं समुच्चरन् ॥
पिण्डिकां चैव लिङ्गोर्ध्वं वेशयेत्तु शनैः शनैः । सुसमं सुदृढं कृत्वा वालुकाभिः सुपूरयेत् ॥

cf. *Kāmikāgama*, I, 64, 152b-154 :

नन्द्यावर्तशिलाः पश्चाच्चतस्रो वह्निकोणतः । धर्मादिमन्त्रैः संकोच्य देवीमुत्सेधयेत्क्रियाम् ॥
आदौ प्रणवमुच्चार्य ह्रींकारस्तदनन्तरम् । क्रियाशक्तिपदं पश्चाच्चतुर्थ्यन्तं मनोन्मनी ॥
पिण्डिकां च समायोज्य बन्धयेदष्टबन्धनैः ।

[5] A : तस्मात् मण्टपां तत्र वेष्टिताम् [6] A : पार्श्वशिलां ; E : पार्श्वे शिलां

[7] A : चतस्रश्च समुद्दिष्टाः [8] B : समुच्छ्रयाः pour समोच्छ्रयाः

[9] A : पिण्डिका लक्षणोपेता

[10] A : इदं नालं [11] B : विश्लेषे ; E : विशेषे

[12] Pour les détails de la नन्द्यावर्तशिला, voir *Suprabhedāgama*, I, 33, 113-114a :

नन्द्यावर्तशिलां वक्ष्ये पीठाधस्ताच्चतुःशिलाः । परितस्तालमात्रं वा षडङ्गुलमथापि वा ॥
पीठविस्तारतोऽधिक्यं नन्द्यावर्तशिलाः शुभाः ।

[अष्टबन्धनम्[1]]

जतुगैरिकसिक्थैस्तु[2] सर्जगुग्गुलुसंयुतैः । [3]गुलतैलसमायुक्तैः शर्कराचूर्णमिश्रितैः ॥ २१६ ॥
पाकेन [4]सान्द्रतां नीतैर्नीरन्ध्रं[5] तैः प्रकल्पयेत् । [6]यद्वा [7]सर्जरसचूर्णं शर्कराचूर्णसंयुतम्॥२१७॥
माहिषं नवनीतं च [8]सममभ्युक्ष्य देशिकः । [9]तेन चावर्तयेद्विद्वान्संगतिं[10] लिङ्गपीठयोः॥२१८॥
धनधान्यांशुकाद्यैस्तु [11]कर्त्रा तत्रापि तोषितम् । [12]ततः शिल्पिनमुद्वास्य कृतकृत्यस्तदा[13] गुरुः॥

[लिङ्गपीठशुद्धिः[14]]

मूर्तिपैः सहितः [15]स्नातः [16]शिवव्रततनुस्तदा । लिङ्गपीठस्थितानां च शुद्धिं कृत्वा क्रमेण तु ॥

---

[1] Cf. *Suprabhedāgama*, I, 36, 103-106a :
अष्टबन्धं ततः कृत्वा जतुगुग्गुलुसिद्धि[क्थ ?]युक् । सर्जं च स्फटिकं चैव शर्कराः कुरुविन्दकम् ॥
तैलं वै चाष्टसंमिश्रं दग्ध्वा चिक्कणवद्बुधः । लिङ्गपीठान्तरे क्षिप्त्वा सुदृढं च समन्ततः ॥
पूजांशषोडशांशैकविस्तारेण समन्ततः । तत्पादमुच्छ्रयं प्रोक्तमष्टबन्धमिदं मतम् ॥
लिङ्गपीठान्तरं स्निग्धं वज्रबन्धेन वा पुनः ।
cf. *Kāmikāgama*, I, 64, **155-159**a :
लाक्षागुलमधूच्छिष्टगुग्गुलूनां समांशतः । एतेषामपि सर्वेषां संग्राह्यं सर्जरं समम् ॥
इष्टकाघनचूर्णं तु समभागसमन्वितम् । सर्वेषां पादतस्तैलं पाकश्चिक्कणवद्भवेत् ॥
सिकताभिः समापूर्य चान्तरं लिङ्गपीठयोः । तदूर्ध्वे विन्यसेद्बन्धं विष्णुभागावसानकम् ॥
शर्करासर्जरांशं तु समं कृत्वा तु चूर्णयेत् । माहिषं नवनीतं च मर्दयेद्देशिकोत्तमः ॥
वज्रबन्धमिति श्लाघ्यं विवरे तं प्रयोजयेत् ।

[2] A : सिद्धैस्तु pour सिक्थैस्तु ; B : शीलैस्तु ; E : शिलैस्तु

[3] E : गुलं तैलसमायुक्तं

[4] E : सहृदार्नातैः pour सान्द्रतां नीतैः

[5] B : नीरन्ध्रां pour नीरन्ध्रं

[6] E : यथा pour यद्वा

[7] E : सर्जरसं पूर्णं

[8] E : समभ्युक्ष्य तु देशिकः

[9] E : तेनैवावर्तयेद्

[10] B, E : संगतं pour संगतिं

[11] A : कर्तृतत्राभिधे द्विधम्

[12] B, E : तत्र

[13] A : तथा pour तदा

[14] Cf *Suprabhedāgama*, I, 36, 106b-107 :
आचार्यस्तु पुनः स्नात्वा मन्त्रसन्नद्धविग्रहः । पुण्याहं वाचयित्वा तु स्नापयेत्पञ्चगव्यकैः ॥
गन्धपुष्पादिना पूज्य "
cf. *Kāraṇāgama*, I, **59**, 209b-210a :
शुद्धिं कृत्वा यथान्यायं पवमानमुदीरयन् । गन्धपुष्पादिभिश्चैव लिङ्गं संपूजयेद्बुधः ॥
cf. *Kāmikāgama*, I, 64, 161b :
पुण्याहं वाचयित्वा तु लिङ्गपीठे तु शोधयेत् ।

[15] B : स्थाप्य ; E : स्नाप्य

[16] B : शुचिर्भूता pour शिवव्रत ; E : शुचिर्भूत०

पुण्याहं वाचयित्वान्तर्गेहं[1] संप्रोक्ष्य सर्वतः । लिङ्गं [2]तदम्भसा प्रोक्ष्य सर्वात्मानं समुच्चरन् ॥
गौरीगायत्रिमन्त्रेण पीठं संप्रोक्ष्य मन्त्रवित् । पाद्यमाचमनं चार्घ्यं पञ्चगव्यं यथाविधि ॥२२२॥
संसाध्य वाग्यमी तत्र दत्त्वार्घ्यं लिङ्गमस्तके ।

[कुम्भतोयाभिषेकः[3]]

ततो मण्टपमासाद्य सोष्णीषः सोत्तरीयकः ॥ २२३ ॥
पञ्चाङ्गभूषणेनापि भूषितः शान्तमानसः । [4]शिवशक्त्योस्तथा पूजां कृत्वा [5]कुम्भस्थयोस्ततः ॥
विद्येश्वराणामभ्यर्च्य शास्त्रोक्तं सम्यगाचरेत् । शङ्खदुन्दुभिनिर्घोषैर्गीतनृत्तैश्च मङ्गलैः ॥२२५॥
[6]शैवं स्वयं समुद्धृत्य देशिकः सोऽधिरोप्य च । [7]वामे दक्षिणहस्तेन कुम्भवक्त्रं विगृह्य च ॥
मूर्तिपैः [8]शक्तिकुम्भादीन्वहद्भिस्तद्वदेव[9] सः । [10]अनुयातो गुरुः [11]कर्त्रा पुत्रबन्धुयुतेन च ॥२२७॥
प्रदक्षिणमुपावृत्य[12] प्रासादं प्रविशेत्ततः । अग्रे क्रमेण [13]संस्थाप्य स्थण्डिलोपरि तान्घटान् ॥२२८॥
उत्तराभिमुखो भूत्वा कृत्वा मन्त्रात्मिकां तनुम् । उत्थाय पञ्चगव्येन सर्वात्मानं समुच्चरन् ॥
अभिषिच्य च तल्लिङ्गं पुनर्गन्धोदकेन च । ततश्चासनमप्यत्र लिङ्गमूले [14]प्रयोजयेत् ॥२३०॥

---

[1] B, E : गृहं pour गेहं [2] B, E : शिवाम्भसा

[3] Cf. *Kāraṇāgama*, I, 59, 216-227a :
प्रधानकुम्भमाचार्यो मूर्तिपास्त्वन्यकुम्भकान् । उद्धृत्य शिरसा धृत्वा कृत्वा धामप्रदक्षिणम् ॥
सर्वालंकारसंयुक्तं सर्वतोद्यसमायुतम् । स्थण्डिलोपरि लिङ्गाग्रे स्थापयेयुः क्रमाद्घटान् ॥
ध्यात्वा सदाशिवं रूपं सर्वज्ञं कारणेश्वरम् । संस्थाप्य वामदेवेन अघोरेण निरोधयेत् ॥
पुरुषेणैव सान्निध्यमीशानेन तु संमुखम् । ध्यात्वा मनोन्मनीं देवीं पिण्डिकायां विशेषतः ॥
सुमुहूर्ते सुलग्ने तु मन्त्रन्यासं समारभेत् । आचार्यः सुप्रसन्नात्मा लिङ्गस्य दक्षिणे स्थितः ॥
प्राणप्रकृतियोगं तु ज्ञात्वा स्थापनमारभेत् । प्राणो मन्त्र इति प्रोक्तः प्रकृतिः स्थाप्य उच्यते ॥
कुम्भाद्बीजं समादाय कूर्चेनाभियुतं सुधीः । दक्षिणेनैव हस्तेन अस्त्रावब्बिन्दुकेन तु ॥
ध्यानेनैव समायुक्तः सदा मन्त्रमनुस्मरम् । लिङ्गस्यैव तु मध्ये तु विन्यसेत्तु विशेषतः ॥
मस्तके चैव तन्मूलं न्यस्त्वा संपूजयेत्ततः । कुम्भाद्भिस्तु विशेषेण स्नापयेत्परमेश्वरम् ॥
वर्धन्याश्च मनोन्मन्या बीजमादाय पूर्ववत् । लिङ्गस्य वामभागे तु पिण्डिकायां च विन्यसेत् ॥
वर्धनीतोयकैश्चैव पिण्डिकामभिषेचयेत् । विद्येशबीजं विन्यस्य इन्द्राद्यैशानकं क्रमात् ॥
तत्तत्कुम्भजलैश्चैव तत्तत्स्थानेऽभिषेचयेत् ।

[4] A : शिवशक्तेस्तथा [5] A : कुम्भस्थयोन्ततः ; E : कुम्भे तयोस्ततः
[6] A : शैवः pour शैवं [7] Les mss. B et E omettent ce demi-*śloka*
[8] A : शान्ति pour शक्ति [9] E : तत्तदेव pour तद्वदेव
[10] E : अनुयागो [11] E : कर्ता
[12] A : उपासीन pour उपावृत्य [13] A : संकल्प्य [14] E : प्रदापयेत्

तत्र मूर्तिं समावाह्य लिङ्गे [1]सादाशिवं [2]तथा । विद्यादेहं च संकल्प्य ततः कुम्भेषु देवताः ॥
यथाक्रमेण संपूज्य [3]चार्घ्यगन्धादिभिस्तथा । मूलमन्त्रं समुच्चार्य शिवकुम्भस्थितं शिवम् ॥२३२॥
तस्मात्कुम्भात्समादाय मन्त्रमूर्तिं तदम्भसा । [4]कूर्चाग्रनिःसृतेनैव न्यसेल्लिङ्गस्य मूर्धनि ॥२३३॥
[5]ततः कुम्भस्थतोयेन [6]शनैः कालात्मनाणुना । अभिषिच्य ततश्चापि शक्तिमाधाररूपिणीम् ॥
तन्मन्त्रेणैव [7]तत्कुम्भं तथा पीठे च विन्यसेत् । [8]तस्या [9]गायत्रीमुच्चार्य तेन कुम्भेन [10]पिण्डिकाम् ॥
अभिषिच्य ततोऽष्टौ च [11]चक्रवर्तिक्रमेण [12]वै । पीठे [13]शक्रादि संयोज्य स्वनामपदमन्त्रकैः [14] ॥
[15]अभिषिच्य ततः पश्चात्कुर्याद्गन्धाम्बुना सुधीः । [16]अभिषेकं ततो [17]दत्त्वा मूर्धस्वर्घ्यं च पञ्चसु [18] ॥

---

[1] A : सदाशिवं
[2] B : तदा
[3] E : तु pour च
[4] B : कूर्चाग्रं निमृतेनैव ; E : कूर्चाग्राम्निमृतेनैव
[5] B, E : तत्तत्कुम्भस्थतोयेन
[6] A : ततः pour शनैः ; E : शनोः
[7] A : तं कुम्भं ; B, E : तत्कुम्भान्
[8] A : तस्य pour तस्याः
[9] B, E : गायत्रिम् pour गायत्रीम्
[10] A : पीठिकाम्
[11] A : चक्रवर्तीन् क्रमेण
[12] B : च pour वै
[13] B, E : शकादि pour शक्रादि
[14] B et E ajoutent : अभिषिच्य ततश्चापि शक्तिमाधाररूपिणीम्
[15] B, E : तन्मन्त्रेणैव तत्कुर्यात्तेन गन्धाम्बुना सुधीः
[16] E : अभिषिच्य
[17] E : देवा pour दत्त्वा
[18] Cf. *Suprabhedāgama*, I, 36, 115-123a :

कुम्भस्थदेवदेवेशं विज्ञाप्य विधिपूर्वकम् । आचार्यः कुम्भमुत्थाप्य शिष्येनोत्थाप्य वर्धनीम् ॥
मूर्तिपैस्त्वथ कुम्भानि प्रासादं तु प्रदक्षिणम् । विश्राम्य द्वारदेशे तु दद्यादर्घ्यं हृदा गुरुः ॥
ततः प्रविश्य तल्लिङ्गमुत्तराभिमुखः स्थितः । त्रिपादिकायामुपरि विन्यस्त्वा शिवकुम्भकम् ॥
षडध्वासनं तु संकल्प्य लिङ्गमुद्रां प्रदर्शयेत् । पुष्पे गन्धस्तिले तैलं यद्वत्तद्वत् स्थितः प्रभुः ॥
कुम्भस्थदेवदेवेशं लिङ्गमध्ये तु योजयेत् । शिवमन्त्रं समुच्चार्य शिवमात्मानि भावयेत् ॥
तज्जलेनाभिषेकं यत्तल्लिङ्गे प्राण उच्यते । तच्छक्तिव्यापकं स्मृत्वा तद्वच्छक्तिं तु पीठके ॥
सर्वावरणदेवांश्च पूर्ववत्संप्रकल्प्य वै । कलशस्थानथावाह्य तज्जलेनाभिषेचयेत् ॥
गन्धं पुष्पं च धूपं च दीपं दत्त्वा यथाक्रमम् । द्वारपालादिपीठान्तं परिवाराण्यशेषतः ॥
तत्तत्कुम्भगतान्देवांस्तत्तत्स्थाने निवेशयेत् ।

[मन्त्रन्यासः, मुद्राप्रयोगश्च[1]]

[2]तत्तन्मुखाणुभिर्मन्त्री ततो मन्त्रान्क्रमान्न्यसेत् । प्रणवं प्रथमं मूर्ध्नि कालात्मानं ततो न्यसेत्॥
[3]तदङ्गभूतान्मन्त्रांश्च तत्तदङ्गेषु विन्यसेत् । ईशानाद्यथ सद्यान्तं पञ्चब्रह्माण्यनुक्रमात् ॥२३९॥
मध्ये पूर्वे [4]ततो याम्य उत्तरे पश्चिमेऽपि च। स्वस्वमुद्राप्रयोगेण विन्यसेच्च कलास्ततः ॥२४०॥
शक्तिभिः सह लिङ्गस्य [5]स्थानेषूक्तेषु विन्यसेत् । [6]तथा [7]तत्रोच्छ्रिताङ्गुष्ठं मुष्टिं बध्वा तु विन्यसेत्॥
लिङ्गाग्रे पीठिकायां तु शक्तिगायत्रिमभ्यसेत् । [8]ततोऽङ्गुष्ठं शिवे कृत्वा शिवगायत्रिमभ्यसेत् ॥
एवं स्यान्मुक्तिकामस्य [9]शिवशक्त्योस्तु संगतिः । विपरीतविधानेन भुक्तिकामस्य सा भवेत् ॥

[प्रतिष्ठाशब्दार्थः[10]]

पिण्डिका तु भवेच्छक्तिर्लिङ्गं तु परमेश्वरः । [11]तयोर्यः क्रियते योगः सा प्रतिष्ठेति कीर्तिता॥

---

[1] Cf. *Kāraṇāgama*, I, **59**, 210b-213 :
आचार्यो दक्षिणं हस्तं लिङ्गमूर्ध्नि निधाय च । दशाक्षरं जपित्वा तु पञ्चविंशतिसंख्यया ॥
अष्टत्रिंशत्कलान्यासं मकुटादिकतान्न्यसेत् । शिवाङ्गानि ततो न्यस्त्वा दिग्बन्धं चास्त्रमन्त्रतः ॥
कृत्वा तु पद्ममुद्रां च लिङ्गाख्यं पद्ममुद्रिकाम् । शोधनीं सुरभीमुद्रां दर्शयेद्धृदयेन तु ॥
षडध्वनो न्यसेत्पीठे पद्ममुद्रां प्रदर्शयेत् ।

[2] E : तत्तन्मुखाम्बुभिर्मन्त्री [3] B : तदन्यभूतान् [4] B, E : तथा pour ततो
[5] A : स्थाने नृक्तेषु ; B, E : स्थाने मूर्तेषु [6] B, E : अथ
[7] B, E : तन्त्र pour तत्र [8] ततोऽङ्गुष्टशिवं कृत्वा [9] A : शिवशक्तेस्तु संगतिम्

[10] Cf. *Kāmikāgama*, II, 35, 96-96a :
" स्थापनं चाधुनोच्यते । पिण्डिकायामुमा देवी लिङ्गे स्याच्च सदाशिवः ॥
तयोर्यः क्रियते योगः सा प्रतिष्ठेति गद्यते । योगश्च द्विविधो ज्ञेयस्त्वाद्यः पश्चाद्भवस्त्विति ॥
cf. *Dīptāgama*, 21, 2-6 :
पिण्डिकायामुमा देवी लिङ्गे स्यात् परमेश्वरः । तयोर्योगक्रिया या तु सा प्रतिष्ठा महानल ॥ . . .
त्रिविधं स्थापनं प्रोक्तं पिण्डिकायां विशेषतः । पौर्वं च पौनःपुन्यं च सहितं च त्रिधा मतम् ॥
उपलिङ्गवशात्पीठं पूर्वमेव प्रकल्पितम् । तत्पौर्वकमिति ज्ञेयं पश्चाल्लिङ्गस्य कल्पितम् ॥
लिङ्गेन सहितं स्थाप्यं सहितं चेति कीर्तितम् । स्थापितस्यैव लिङ्गस्य पश्चात्पीठं सुयोजितम् ॥
पौनःपुन्यमिति ज्ञेयं सर्वकामार्थसाधनम् ।
cf. *Somaśambhupaddhāti* (ou *Karmakāṇḍakramāvali*) (éd. Kaśmir) *śloka* 1214-1218 :
कथ्यतेऽथ प्रतिष्ठापि संक्षेपेण क्रमेण च । पीठं शक्तिः शिवो लिङ्गं तद्योगः सा शिवाणुभिः ॥
प्रतिष्ठाया: प्रतिष्ठाद्याः पञ्च भेदाः शिवागमे । प्रसिद्धलक्षणं तेषां स्वरूपं च वदाम्यहम् ॥
यत्र ब्रह्मशिलायोगः सा प्रतिष्ठा विशेषतः । स्थापनं तु यथायोगं पीठ एव निवेशनम् ॥
प्रतिष्ठा भिन्नपीठस्य स्थिरस्थापनमुच्यते । उत्थापनं तु सा प्रोक्ता लिङ्गोद्धारपुरःसरा ॥
यस्यां तु लिङ्गमारोप्य संस्कारः क्रियते बुधैः । आस्थापनं तदुद्दिष्टम् "

[11] A : तयोर्यैः क्रियते योगः ; E : तयोः शक्तिपतेर्योगं

[1]एवं संस्थापिते लिङ्गे लिङ्गमुद्रां तु दर्शयेत् । ततो [2]नमस्कृतिं बध्वा ततो लिङ्गं समर्चयेत् ॥

[अर्चना[3]]

पाद्यमाचमनं चार्घ्यं पादवक्त्रशिरस्सु च । दापयेद्धृदयेनार्घ्यं [4]शेषे च ब्रह्मपञ्चकैः ॥ २४६ ॥
नमःस्वाहानमोऽन्तैस्तु क्रमेणैवं[5] जनार्दन । गन्धादिभिस्ततो[6] मन्त्री शिवलिङ्गस्य मूर्धनि ॥
प्रणवेनाथ मूलेन ब्रह्मभिश्च [7]सुनिर्गतैः । [8]कालात्मानं [9]तदङ्गैस्तु पूजयेदनुपूर्वशः ॥ २४८ ॥
कर्पूरागरुमिश्रेण [10]चन्दनेन [11]सपीठकम् । लिङ्गं पर्याप्तमालिप्य [12]सदीपेन च धूपयेत्॥२४९॥
[13]सुगन्धमाल्यवस्त्राद्यैर्हेमपट्टादिभिस्ततः[14] । अलंकृत्य ततो धीमान्हविः [15]साज्यं निवेदयेत् ॥
शुद्धान्नं पायसं गौलं मुद्गान्नं [16]कृसरान्नकम् । सर्वोपदंशसंयुक्तं गुलखण्डाज्यसंयुतम् ॥२५१॥
दधिस्वादुफलोपेतं पञ्चवक्त्रेषु दापयेत् । केवलं पायसं वापि शुद्धान्नं च यथाविधि ॥ २५२ ॥
पञ्चवक्त्रेषु दत्त्वाथ विना चण्डं व्यपोह्य च । मुखवाससमायुक्तं ताम्बूलं च निवेदयेत्॥२५३॥
ततो विद्येश्वरांश्चैव पूर्वादिक्रमतो[17] यजेत् । अथोमादीन्गणेशांश्च[18] [19]सौम्यादीन्न्यस्य पूजयेत्॥
तद्बाह्ये लोकपालांश्च पूर्वादारभ्य पूजयेत् । ईशानशक्रयोर्मध्ये ब्रह्माणं न्यस्य पूजयेत् ॥ २५५ ॥

---

[1] E : एवं मे स्थापिते
[2] E : नमस्तुतिं
[3] Cf. *Kāraṇāgama*, I, 59, 227b-230 :
पूजयित्वा यथान्यायं पञ्चमावरणान्वितम् । क्रमेण पञ्चवक्त्रेषु हविषं पञ्चवर्णकम् ॥
देवस्य त्वेति मन्त्रेण हृदयेनैव दापयेत् । वक्त्रेणाचमनं दत्त्वा निर्माल्यं तु विसर्जयेत् ॥
ताम्बूलं दापयेत्पश्चान्मुखवाससमन्वितम् । नानापक्वफलद्रव्यं देवदेवाय दापयेत् ॥
चण्डेशं पूजयित्वा तु निर्माल्यं तु निवेदयेत् ।
[4] A : शेषौ च ; B : शेषैश्च ; E : शेषां च
[5] A : एव pour एवं
[6] E : स्तुतो pour ततो
[7] E : स्वनिर्गतैः
[8] E : कालात्मना
[9] E : मदंशैश्च
[10] B : चासनेन
[11] B, E : सपीठिकम्
[12] B, E : सधूपेन
[13] A : सुवर्णमाला pour सुगन्धमाल्य
[14] E : तदा pour ततः
[15] A : प्राज्यं
[16] B, E : कृसरं तथा
[17] B, E : क्रमशो pour क्रमतो
[18] B : गणान्तांश्च pour गणेशांश्च
[19] A : सोमादीन् pour सौम्यादीन्

[1]रक्षोवारुणयोर्मध्ये विष्णुं विन्यस्य पूजयेत् । तद्बाह्येऽथ[2] तदस्त्राणि वज्रादीनि च पूजयेत् ॥
[3]पश्चिमद्वारहर्म्ये तु किञ्चिद्भेदोऽत्र[4] दृश्यते । [5]पश्चिमां दिशमारभ्य विद्येशानभितो यजेत्॥२५७॥
गणेश्वरानुमादींश्च [6]सौम्यादारभ्य पूजयेत् । उपचाराणि सर्वाणि सद्योजाते प्रकल्पयेत्॥२५८॥
सद्योजातादिवक्त्राणां पञ्चानां च जनार्दन । पश्चिमोत्तरयाम्येषु [7]पूर्वे चोर्ध्वेऽप्यनुक्रमात् ॥
[8]संस्थितिर्नियता तस्मादालये तु प्रतिष्ठिते । लिङ्गे तु हस्तपादानां [9]कल्पना द्वारसंमुखात्॥२६०॥
तस्मात्सदाशिवे मूर्तिरेवं स्यादर्चनादिषु । एवं संपूज्य चार्घ्याद्यैर्दीपान्तं[10] तु यथाक्रमम्[11]॥२६१
[12]स्वैः स्वैश्च नामभिर्मन्त्रैः कृत्वा चैवं प्रदक्षिणम् । सव्यापसव्यमार्गेण दत्त्वा पुष्पाञ्जलिं शिवे ॥
मूर्ध्ना प्रणम्य देवेशं भू[13]पृष्ठपतितेन तु[14] ।

[सान्निध्यप्रार्थना]

[15]प्रार्थयेन्मूर्तिपैरेवं स्तुत्वा नत्वा स्वदिक्स्थितैः ॥ २६३ ॥
सर्वमन्त्रादिरूप त्वं[16] लोकानुग्रहकाम्यया । अत्र लिङ्गे महादेव संनिधिं कुरु सर्वदा ॥२६४॥
[17]यावच्चन्द्रश्च सूर्यश्च यावत्तिष्ठति मेदिनी । तावत्त्वयात्र देवेश स्थातव्यं स्वेच्छया विभो॥२६५॥
ज्ञानतोऽज्ञानतो वापि [18]शास्त्रोक्तं च कृतं हि यत् । तत्सर्वं पूर्णमेवास्तु त्वत्प्रसादान्महेश्वर ॥
इति विज्ञाप्य देवेशं संनिधीकृत्य मुद्रया । [19]संनिधाप्य ततो लिङ्गे [20]शिवं निष्ठुरया क्रमात् ॥
निरोधयेत्तदा[21] मन्त्री संनिधिं [22]हृदयाणुना । [23]निरोधनमघोरेण कुर्याद्वै [24]शास्त्रचिन्तकः॥२६८

---

[1] B, E : वरुण pour वारुण
[2] A : तु pour अथ
[3] A : पश्चिमे pour पश्चिम
[4] A : अस्ति pour अत्र
[5] A : पश्चिमादीशमारभ्य
[6] B, E : सौम्यमारभ्य
[7] E : पूर्वादिदिक्ष्वनुक्रमात्
[8] E : संस्थितिं नियमात्तस्मादालयेषु प्रतिष्ठितः
[9] A : कल्पनाद् द्वारसंमुखा ; B : कल्पनाद्द्वारसंमुखात्
[10] A : दीपान्ते pour दीपान्तं
[11] E : यथाक्रमात्
[12] B, E : स्वस्वनामादिभिर्मन्त्रैः
[13] B : पुष्प pour पृष्ठ
[14] E : च pour तु
[15] E : प्रार्थयेन्मूर्तिपैश्चैव
[16] B : रूपस्थं pour रूपत्वं
[17] Cf. *Kāmikāgama*, I, 64, 181b-182a :
यावच्चन्द्रश्च सूर्यश्च यावत्तिष्ठति मेदिनी । तावदत्र त्वया देव स्थातव्यमिह सन्निधौ ॥
[18] B : शास्त्रोक्तेन pour शास्त्रोक्तं च
[19] B, E : संनिधानं pour संनिधाप्य
[20] A : शिवे pour शिवं
[21] E : ततो pour तदा
[22] B : विधिनाणुना
[23] A : निरोधयेदघोरेण
[24] E : शास्त्रवित्तमः

[यजमानेन गुरोः प्रार्थना, दक्षिणादिदानं च[1]]

**यजमानः फलापेक्षी शिवाग्रे संस्थितस्तदा[2] । [3]ससुतभ्रातृबन्धुश्च नत्वा देवं च [4]देशिकम्॥२६९॥**
**भूयो भूयः प्रसन्नात्मा प्रार्थयेच्च ततो गुरुम्[5] । त्वत्प्रसादादहं लोके [6]जातोऽस्मिन्हि नरोत्तमः ॥**
**यत्त्वयाद्य कृतं कर्म लिङ्गसंस्थापनं प्रति । श्रेयसां परमं श्रेयो ममास्तु फलसाधनम् ॥२७१॥**
**अनुगृह्य प्रसीदेति नत्वा नत्वाभिधाय च[7] । प्रभूतां संपदं[8] दद्याद्वित्तशाठ्य[9]विवर्जिताम् ॥२७२**
**गोभूहिरण्यवस्त्राद्यैर्हस्त्यश्वशयनासनैः । दासीदासगृहारामैरतिविस्तीर्णलक्षणाम् ॥ २७३ ॥**
**[10]दक्षिणां गुरवे दद्यात् [11]साधका यदि मूर्तिपाः । यदि वा पुत्रकास्तेषां पादं पादार्धमेव हि ॥**
**[12]देशिकाद्दक्षिणा प्रोक्ता [13]दैवज्ञवेदजापिनाम् । पादं चापि तदर्धं च तदर्धं च [14]क्रमाद्भवेत्[15]॥**

---

[1] Cf. *Kāraṇāgama*, I, 59, 189-195a :
संपूज्य देशिकादीनां दक्षिणां दापयेत्ततः । उत्तमा स्याच्चतुष्षष्टिर्निष्का देशिकदक्षिणा ॥
पञ्चाशन्मध्यमा ज्ञेया त्रिंशन्निष्कं तु कन्यसम् । भृत्यगोभूमिधान्यानि गृहोपकरणानि च ॥
आचार्याय प्रदातव्यं श्रद्धाभक्तिसमन्वितः । यजमानो गुरुं तोष्य वित्तशाठ्यविवर्जितः ॥
देशिकस्य मनस्तुष्टिर्देवतानां तु संनिधिः । देशिकं तोषयेत्तस्मात्संनिधिकरणाय च ॥
होतॄणां मन्त्रजप्तॄणामध्येतॄणां च दक्षिणा । उत्तमं नवनिष्कं च सर्वेषां तु विधीयते ॥
निष्काष्टमं मध्यमं स्यान्निष्कषष्टं तु कन्यसम् । एतेषु दक्षिणैका स्यादेतद्द्विगुणदक्षिणा ॥
वास्तुहोमककर्तुश्च दैवज्ञस्य तथैव हि ।

[2] A : सदा pour तदा
[3] E : समुतो pour ससुत
[4] E : देशिकः
[5] E : गुरुः
[6] E : जातोऽस्मि हि नरोत्तमः
[7] E : मुहुर्मुहुः pour अभिधाय च
[8] A : विमलं pour संपदं
[9] B, E : विवर्जिनाम् pour विवर्जितम्
[10] B : दक्षिणास्तु रसे पश्चात्
[11] B, E : साधकांश्चापि मूर्तिपान्
[12] B : देशिकान्दक्षिणां प्रोक्ता
[13] B : दैवज्ञं वेदजापिनम्
[14] E : भवेत्क्रमात्
[15] Cf. *Kāmikāgama*, I, 64, 185b-190 :
आचार्यो मूर्तिपैः सार्धं निसृत्य भवनात्प्रभोः । यजमानेन संकल्प्तां गृह्णीयाद्दक्षिणां गुरुः ॥
सा स्याच्चतुर्विधा शास्त्रे श्रेष्ठमध्यमधोऽपरम् । षष्टिनिष्कं समारभ्य पञ्चनिकाः क्रमेण तु ॥
काञ्चनस्य गुरोः पञ्चनिष्कान्ता दक्षिणा मताः । गोभूहिरण्यसद्वेश्मवाहनाच्छादनादिकम् ॥
दासीदासादिकाः सर्वं गुरवे संनिवेदयेत् । लम्बस्थानोक्तमार्गेण चान्येषां दक्षिणा भवेत् ॥
गृहीतदक्षिणस्तुष्टः प्रतिष्ठापुण्यमर्थिने । यजमानाय संदद्यात्सोदकं पुष्पसंयुतम् ॥
चन्दनाक्षतसंयुक्तं सकुशं दक्षिणे करे ।

[देशिकादिभोजनम्]

[1]ततस्तान्देशिकादींस्तु[2] [3]यजमानः स भोजयेत् । मृष्टान्नमथ ताम्बूलं दत्त्वा तेषां क्रमेण तु[4] ॥

[चतुर्थदिवसे होमः[5]]

स्वयं भुञ्जीत ः पश्चात्तु चतुर्थेऽहनि देशिकः । शिवाग्रे स्थण्डिलं कृत्वा विधिनानेन[6] होमयेत् ॥
प्रणवेनाथ मूलेन ततः संवत्सरात्मना । समिदाज्यचरूणां तु प्रत्येकं शतसंख्यया ॥ २७८ ॥
[7]हुत्वाहुतीस्ततश्चापि केवलाज्येन देशिकः[8] । [9]तदङ्गैर्ब्रह्मभिश्चापि कलामन्त्रैश्च होमयेत्॥२७९॥
प्रत्येकं शतमर्धं वा ततः [10]शक्तेस्तु मूलतः । तदङ्गैश्चापि कुर्वीत होमं पूर्वोक्तसंख्यया॥२८०॥

[चतुर्थदिने स्नपनादिकर्तव्यान्तराणि[11]]

एवं [12]चतुर्थहोमं तु कृत्वा तस्मिन्दिने सुधीः । लिङ्गेऽथ [13]स्नपनं कृत्वा सहस्रादिषु [14]संभवम्
॥ २८१ ॥

---

[1] A : ततस्तं pour ततस्तान्  [2] E : च pour तु
[3] E : यजमानेन भोजयेत्  [4] B : च pour तु
[5] Cf. *Kāmikāgama*, I, 64, 161-165a :
तेजोबिम्बनिभं ध्यात्वा कर्तुर्दक्षकरे गुरुः । एककालं द्विकालं वा त्रिकालं त्रिदिनं गुरुः ॥
दिनद्वयमथैकं वा जुहुयान्मूर्तिपैः सह । केवलो वा गुरुः कुर्याच्छिववत्ब्रह्माङ्गसम्वरैः ॥
शतं सहस्रमर्धं वा तथा स्याच्छक्तिमात्रतः । संसाध्य स्नापयेत्तेन चतुर्थे दिवसे पुनः ॥
संस्नाप्य देवं देवीं च स्नपनोक्तक्रमेण तु । प्रभूतहविषं दत्त्वा नानासूपादिसंयुतम् ॥
समिदाज्यान्नसंयुक्तं पूर्ववद्धोममाचरेत् ।
[6] B, E : नेन pour अनेन  [7] B, E : हुत्वाहुतिं ततश्चापि
[8] A ajoute प्रणवेन च मूलेन ततः संवत्सरात्मना
[9] E : सदङ्गैः pour तदङ्गैः  [10] B, E : शक्त्यास्तु
[11] Cf. *Dīptāgama*, 20, 292-299 :
स्नपनं कारयेदन्ते पूर्वोक्तविधिना सह । पाद्यमाचमनं चार्घ्यं हृन्मन्त्रेण प्रदापयेत् ॥
दद्याद्वस्त्रं हृदा मन्त्री यज्ञसूत्रं हृदा तथा । लेपनं चाञ्जनं पट्टं कुण्डलं पादुकां तथा ॥
हारं च कटिसूत्रं च कटकं चाङ्गुलीयकम् । केयूरमकुटं छत्रं हृदयेन प्रदापयेत् ॥
द्वारपालवृषादींश्च यक्षरक्षःपिशाचकान् । दिक्पालान्बलिदानेन तोषयेत्सन्त्रदैवतान् ॥
देवस्याचमनं दद्यान्निर्माल्यं तु विसर्जयेत् । तच्छेषं चण्डसूर्तेस्तु दद्यादाचमनीयकम् ॥
चण्डस्याचमनं दत्त्वा निर्माल्यं तु विसर्जयेत् । मुखवासं च कर्पूरं शिवस्य परिकल्पयेत् ॥
हरिद्रां सर्षपं लोध्रमञ्जनं तु मनःशिलाम् । घृतं गोरोचनं चैव समाङ्गं लेपयेत्क्रमात् ॥
प्रतिष्ठोत्सवं तु कर्तव्यं यावत्सप्तदिनान्तकम् । पूर्वोक्तविधिना कुर्याच्चण्डयागमतः परम् ॥
[12] A : चतुर्थिहोमं
[13] B : स्नापनं  [14] A : समासवम्

चण्डेशं चण्डयागेन शांकरे स्थापयेदथ[1] । अलाभे [2]प्रतिमायास्तु पीठे वा चण्डनायकम्॥२८२॥
प्रभूतं तु हविर्दत्त्वा देवायास्मै प्रदापयेत् । [3]तस्मिन्नेवाहनीशस्य परितो धाम्नि कल्पयेत्॥२८३॥
[4]परिवारस्थितिं तत्र विधिवद्देशिकोत्तमः ।

[उत्सवः]

सप्ताहमपि पञ्चाहं त्र्यहमेकाहमेव वा ॥ २८४ ॥
विधानेनोत्सवं कुर्यादथवा [5]यन्त्रलिङ्गतः । उत्सवं बलिदानेन [6]विना तत्र प्रकल्पयेत्॥२८५॥
[7]चतुर्थाहात्समारभ्य कुर्यादस्त्रोत्सवं क्रमात्[8] । प्रतिष्ठादिनमारभ्य देशिकादींस्तु दीक्षितान् ॥
भोजनाच्छादनाद्यैस्तु तत्र माहेश्वरानपि । तदा दिनेषु सर्वेषु यजमानस्तु तोषयेत् ॥ २८७ ॥
कुर्यादवभृथस्नानं सर्वपापप्रणाशनम् ।

[लिङ्गपीठप्रतिष्ठाफलम्[9]]

[10]इति यः कारयेन्मर्त्यः प्रतिष्ठां लिङ्गपीठयोः ॥ २८८ ॥

---

[1] B : तथा pour अथ ; E : तदा [2] A : प्रतिमायां वा

[3] A : भस्म चैवाहरीशस्य

[4] A : परिवारस्थितिस्तत्र : B, E : परिवारस्थितं तत्र

[5] B : तत्र लिङ्गतः ; E : यत्र लिङ्गकम् [6] B, E : विधानं तत्र कल्पयेत्

[7] A : चतुर्थेऽह्नि समारभ्य

[8] A ajoute प्रतिष्ठादिनमारभ्य कुर्यादस्त्रोत्सवं क्रमात्

[9] Cf. *Dīptāgama*, 20, 300-302 :
यस्मिन्राष्ट्रे कृतं त्वेवं राजा विजयमाप्नुयात् । पुत्रपौत्राश्च वर्धन्ते तद्राष्ट्रमभिवर्धयेत् ॥
सुभिक्षं क्षेममारोग्यं वर्धन्ते च सदा भुवि । एवं यः कुरुते मर्त्यस्त्रिसप्तकुलसंयुतः ॥
शिवलोकमवाप्नोति न पुनः परिवर्तते । शिवसायुज्यमाप्नोति क्रीडते कालमक्षयम् ॥
cf. *Kāraṇāgama*, I, **59**, 234b-236a :
तल्लिङ्गे पूजिते राष्ट्रे सुभिक्षं रोगनाशनम् । आयुरारोग्यवद्राजा सार्वभौमत्वमाप्नुयात् ॥
एवं यः कुरुते मर्त्यः सर्वपापात्प्रमुच्यते । मोक्षार्थी लभते मोक्षं पुत्रार्थी लभते सुतम् ॥
अर्थार्थी चार्थमाप्नोति ज्ञानार्थी ज्ञानमाप्नुयात् । इहैव पुत्रवाञ्श्रीमान् सोऽन्ते सायुज्यमाप्नुयात् ॥
cf. *Kāmikāgama*, I, 64, 166b-167a :
एवं यः कारयेन्मर्त्यः कुरुते वा नरोत्तमः । भुक्त्वा तु विपुलान्भोगान्देहान्ते मोक्षमाप्नुयात् ॥
cf. *Suprabhedāgama*, I, 36, 1b-2 :
सर्वसिद्धिकरं पुण्यं सर्वयज्ञफलप्रदम् । लिङ्गसंस्थापनादन्यत्फलपाकं न विद्यते ॥
तस्मात्सर्वप्रयत्नेन लिङ्गसंस्थापने यतेत् ।

[10] B : इति यत्कारयेद्भक्त्या ; E : इति यः कारयेद्भक्त्या

[1]तेनव स्थापितं मर्वं जगन्स्थावरजङ्गमम् । सर्वदेवाश्च देव्यश्च तेन मम्यक् प्रतिष्ठिताः ॥२८९॥
[2]सर्वे यज्ञाः कृतास्तेन समग्रवरदक्षिणाः । तेन [3]सर्वतपोदानतीर्थान्याचरितानि च ॥ २९० ॥
[4]एकविंशत्कुलोपेतः परत्र च शिवे पुरे । कल्पकोटिसहस्राणि कल्पकोटिशतानि च ॥२९१॥
भुक्त्वा तु विपुलान्भोगान् शिवसायुज्यमाप्नुयात् ॥ २९२ ॥

[5]इत्यजिताख्ये [6]महातन्त्रे [क्रियापादे] [7]लिङ्गप्रतिष्ठाविधिर्नाम

[अष्टादशः] पटलः

---

[1] E : ततोऽपि pour तेनैव

[2] A : मर्वयज्ञाः

[3] A : मर्वतपोदानं तीर्थानि मरितानि च

[4] A : एकविंशत्कुलोपेतं

[5] E : इत्यजिने pour इत्यजिताख्ये

[6] E omet महातन्त्रे

[7] A : लिङ्गप्रतिष्ठाविधिरेकोनविंशः पटल. : B : लिङ्गप्रतिष्ठाविधिपटलः ; E : शिवलिङ्गप्रतिष्ठाविधिपटलः

## [एकोनविंशः पटलः]

### स्नानविधिः[1]

[तत्र षड्विधस्नानानि[2]]

ततः परमिदं वक्ष्ये स्नानं पापहरं परम् । तच्च षड्विधमुद्दिष्टं सर्वेषां कायशुद्धिदम् ॥ १ ॥
चतुर्विधानां शैवानां पूजनं च विशेषतः । वारुणं प्रथमं प्रोक्तमाग्नेयं तु द्वितीयकम् ॥ २ ॥
माहेन्द्रं तु तृतीयं स्याद्वायव्यं स्याच्चतुर्थकम् । मान्त्रं तु पञ्चमं प्रोक्तं षष्ठं मानसमुच्यते ॥ ३ ॥

[वारुणस्नानोचितस्थानानि[3]]

तानि संक्षेपतो वक्ष्ये क्रमेणात्र जनार्दन । नदीनदतटाकेषु [4]पल्वलप्लवनेषु च ॥ ४ ॥
दीक्षितस्योत्तमं स्नानं पुष्करिण्यां तु मध्यमम् । कन्यसं दीर्घिकाद्यासु गृहेऽश्रेष्ठमुदाहृतम्[5]॥५॥

---

[1] Pour स्नानविधि voir *Kāmika* I, 3, *Kāraṇa* I, 29, *Kālottara*, *paṭala* 3 et 4, *Kiraṇa* II, 1, *Cintya*, *paṭala* 3-5, *Dīpta*, *paṭala* **55** et **56**, *Makuṭa*, *paṭala* 2, *Mataṅgapārameśvara*, *kriyāpāda* 28, *Mṛgendra*, *kriyāpāda* 2, *Yogaja*, *paṭala* 2-5, *Vīra*, *paṭala* **35** et 36, *Raurava*, *kriyāpāda* 5-8, *Suprabheda*, I, 4-6, *Svāyambhuva*, *paṭala* **5** et **6** et *Acintyaviśvasādākhya*, *paṭala* 10.

[2] L'*Ajitāgama* comme les *Kāmika*, *Acintyaviśvasāda* et *Svāyambhuva* donne les six variétés de bain appelées वारुण, आग्नेय (ou भस्म), माहेन्द्र (ou दिव्य), वायव्य (ou मारुत), मान्त्र et मानस. Les *āgama Kāraṇa*, *Kiraṇa*, *Yogaja* et *Kālottara* omettent मानस, les *āgama Dīpta*, *Makuṭa*, *Vīra* et *Suprabheda* omettent मान्त्र, et donnent ainsi cinq variétés seulement. Le *Mataṅga* omet मान्त्र, वायव्य et माहेन्द्र mais ajoute une variété, ब्राह्म, et ainsi il donne quatre variétés. Le *Cintya* donne trois variétés वारुण, आग्नेय et मानस. Le *Mṛgendra* donne sept variétés : il omet मान्त्र et ajoute भौम et गौरव. Le *Raurava* donne deux variétés seulement वारुण et आग्नेय. Pour les détails de ces variétés voir les citations ci-dessous.

cf. *Kāmikāgama*, I, 3, **1**-2 :

अथ स्नानविधिं वक्ष्ये परमेशप्रकाशितम् । सर्वदोषहरं पुण्यं मनःप्रीतिकरं परम् ॥
वारुणं च तथाग्नेयं मान्त्रं मानसमेव च । वायव्यं च महेन्द्राख्यं स्नानं षड्विधमीरितम् ॥

cf. *Kāraṇāgama*, I, **29**, **96**b-97a :

वारुणं भस्म माहेन्द्रं मारुतं मन्त्रसंज्ञकम् । एवं पञ्चविधं स्नानं सर्वकार्येषु पूजितम् ॥

cf. *Kiraṇāgama*, II, **1**, 2-3a :

प्रथमं वारुणं स्नानं द्वितीयं भस्मसंज्ञितम् । माहेन्द्रं च तृतीयं स्याच्चतुर्थं मारुतं भवेत् ॥
पञ्चमं मान्त्रमुद्दिष्टमिदानीमुच्यते क्रमात् ।

cf. *Cintyāgama*, 4, 1b-2a :
स्नानं तु त्रिविधं प्रोक्तं सर्वपापविनाशनम् । वारुणं च तथाग्नेयं मानसेति त्रिधा भवेत् ॥
cf. *Dīptāgama*, 55, 5 :
पञ्चस्नानानि विप्राणां विहितानि विशुद्धये । स्नानं वारुणमाग्नेयदिव्यवायव्यमानसम् ॥
cf. *Makuṭāgama*, 2, 16b-17a :
स्नानानि पञ्च प्रोक्तानि दीक्षितानां विशुद्धये । वारुणं तैजसं दिव्यं वायव्यं मानसं तथा ॥
cf. *Yogajāgama*, 5, 14 :
वारुणं भस्म माहेन्द्रं मारुतं मन्त्रसंज्ञकम् । एवं पञ्चविधं स्नानं सर्वकार्येषु योग्यता ॥
cf. *Vīrāgama*, 35, 36 :
स्नानं पञ्चविधं ज्ञेयं वारुणं स्नानमेव च । आग्नेयं दिव्यमेवं तु वायव्यं मानसं स्मृतम् ॥
cf. *Suprabhedāgama*, I, 5, 1b-2a :
पञ्च स्नानानि विप्राणां हीनानां शुद्धये ततः । स्नानं वारुणमाग्नेयं दिव्यं वायव्यमानसे ॥
cf. *Mataṅgapārameśvara, kriyāpāda*, ms. p. 40 :
अभावात्तोयभस्मभ्यां ब्राह्ममुक्तं सुरेश्वर । सर्वाभावात्तु मनसा स्नानमन्यद्वदस्व मे ॥
cf. *Kālottarāgama*, 3, 31 :
आग्नेयं वारुणं चैव वायव्यं मान्त्रमेव च । शैवं पञ्चविधं स्नानं प्रवदन्ति मनीषिणः ॥
cf. *Mṛgendrāgama*, II, 2, 1b-2 :
स्नानं निगद्यते सप्तविधमीशोदितैः पदैः । वारुणं तैजसं भौममानिलं दिव्यगौरवे ॥
मानसं चेति संक्षेपाद् "

[3] Cf. *Kāmikāgama*, I, 3, 23-24 :
नद्यः समुद्रगाश्चैव तटाकाश्च नदास्तथा । पल्वलाः स्रवनाश्चैव संगमाः पुण्यतीर्थकाः ॥
श्रेष्ठास्तु दीक्षितस्येह पुष्करिण्यां तु मध्यमम् । अधमं दीर्घिकायाम् कूपे चैवाधमाधमम् ॥
cf. *Dīptāgama*, 55, 2b-4 :
नद्यां वाप्यां तटाके वा कूपे वापि चतुर्विधम् । कूपाद्दशगुणं वापि वापीस्नानं विधीयते ॥
वाप्याश्चतुर्गुणं ज्ञेयं तटाकं तु यथाक्रमम् । तटाकात्सहस्रगुणितं नद्यां स्नानं तदुत्तमम् ॥
कोटिकोटिगुणं प्रोक्तं समुद्रसंगमे भवेत् ।
cf. *Kālottarāgama*, 3, 2b-4a :
प्रयत्नेन पुमान् स्नायान्न च गृह्योदकेन तु । समुद्रगा विशेषेण तदलाभे बृहत्सरः ॥
तदलाभे तटाकं स्यात्तदलाभे तु पुष्करः । प्रभूते सति नाल्पे तु स्नानाय स्यात्कदाचन ॥
cf. *Mataṅgapārameśvara, kriyāpāda*, ms. p. 32 :
नदीनदप्रवाहेषु पर्वतेषु सरस्सु वा । तटाके दीर्घिकायां वा देवमात्रेऽपि वा शुभे ॥
पुष्करिण्यां विविक्तायां गृहे वा साधकोत्तमः । स्नायात्कर्मप्रसिद्ध्यर्थम् "
cf. *Cintyāgama*, 4, 3b-5a :
वारुणं तु चतुर्भेदं नद्यां स्नानं तथोत्तमम् । नद्या बहिर्गते तोये स्नानं तु मध्यमं भवेत् ॥
तटाकमधमं विद्यात्कूपस्नानमधमाधमम् । कूपावगाहकं स्नानं चरेत्तटाकतुल्यकम् ॥

[4] A, B : पर्वतेषु वनेषु च

[5] Cf. *Somaśambhupaddhati*, I, 1, 19 : "गृहे स्नानमनुत्तमम् "

[प्रातर्ध्यानम्[1]]

प्रत्यूषे तु समुत्थाय शयनात्पूजयेत्सुधीः । आत्मन्यालोकयेज्ज्योतिः परं तच्छिवरूपिणः[2]॥६॥
नमः शिवाय शर्वाय देवाय परमात्मने । सदैकरूपरूपाय विकल्परहिताय ते ॥ ७ ॥

[शौचविधिः[3]]

संजप्यैवं बहिः कुर्यान्निजधाम्नः[4] सहायवान् । निर्जनं देशमासाद्य [5]कण्टकेन विवर्जितम्॥८॥
[6]छन्नमूर्धोपवीतं तु कृत्वा कर्णेऽथ दक्षिणे । उत्तराभिमुखः स्वस्थो रात्रौ चेद्दक्षिणामुखः[7]॥९॥
उपविश्याथ तत्रैव [8]विण्मूत्रं तु विसर्जयेत् । [9]तृणाद्यन्तरिते देशे वाग्यमी न निरीक्षयेत्॥१०॥

---

[1] Cf. *Kāmikāgama*, I, 3, 3-5 :
ब्राह्मे मुहूर्ते चोत्थाय हृत्पङ्कजगतं शिवम । निष्कम्पदीपिकाकारं प्रणवात्मकमव्ययम् ॥
ध्यायन्प्रभाते विमले दण्डपाणिः सहायवान । गत्वा निकेतनाद्बाह्ये विजनं स जलाशयम् ॥
स्नानमावश्यकं तत्र कुर्याद्धि साधकोत्तमः । मूत्रकण्टककीटास्थिविष्टादिप्रावृतं त्यजेत् ॥

cf. *Makuṭāgama*, 2, 10 :
प्रातःकाले शिवं ध्यात्वा सर्वकर्म शिवाय च । ग्रामस्यैशान्यदिग्देशे मलादीनि विसर्जयेत् ॥

[2] A : रूपिणम् pour रूपिणः

[3] Cf. *Kāmikāgama*, I, 3, 8-10 :
दिवा वा सन्ध्ययोः सौम्यवक्त्रः कर्णस्थसूत्रकः । शिरोऽवकुण्ठनं कृत्वा त्यजेत्तदुभयं नरः ॥
रात्रौ दक्षिणवक्त्रस्तु तृणाद्यन्तरिते भुवि । मौनी गुल्मादिसंछन्नो नासाग्राहितलोचनः ॥
विष्टावियत्प्रजननदिक्षु दृष्टिं न च क्षिपेत् । नासापीडननिष्ठीवहृस्वोद्गारादिकं त्यजेत् ॥

cf. *Suprabhedāgama*, I, 4, 4-5 :
रविं दक्षिणतः कृत्वा विण्मूत्रं तु विसर्जयेत् । दक्षिणाभिमुखो रात्रौ तृणमाधाय भूतले ॥
करे वा कर्णमूले वा उपवीतं न्यसेद्बुधः । वेष्टयित्वा शिरस्तत्र ऋजुकायो न पाचयन् ॥

cf. *Kālottarāgama*, 3, 5b-6 :
रविं दक्षिणतः कृत्वा दिवा विण्मूत्रमर्जनम् । शिरोऽवकुण्ठनं कृत्वा मौनेन तु विसर्जयेत् ॥

cf. *Kāraṇāgama*, I, 29, 6b-9 :
उत्थाय च वहिर्ग्रामाच्छन्नमूर्धा च दण्डधृत् । वामयज्ञोपवीती चाप्येकाकी वाग्यमः सुधीः ॥
पूर्वापराह्णयोर्भानोर्मण्डलं दक्षिणं यथा । दक्षिणाभिमुखो रात्रौ तृणमाधाय भूतले ॥
मूत्रं कृत्वा तु तस्योर्ध्वं न शीघ्रं विसृजेन्मलम् । अनावृत्य शिरो मोहाद्यो विप्रो मलमूत्रयोः ॥
उत्सर्गं कुरुते पापी स तु वै ब्रह्महा भवेत् ।

[4] A, B : निजयान्न pour निजधाम्नः ; E : निजमात्र

[5] B : कटघण्ट pour कण्टकेन ; E : कण्टकाद्यैर्

[6] A : छन्नमूर्ध्नोपवीतं तु

[7] E : मुखम pour मुखः

[8] C : विण्मूत्रमथ सर्जयेत्

[9] B, E : तृणाद्यन्तर्हिते ; C : तृणाभ्यन्तर्हिते

दिशो [1]लिङ्गं मलं चापि न निष्ठीवनमाचरेत् ।

[मलमूत्रविसर्जने परिहर्तव्याः प्रदेशाः[2]]

गोब्राह्मणाग्निनारीणां तथा देवालयस्य च ॥ ११ ॥

संमुखं परिहृत्यैव यतीनां च विशेषतः । कुश[3]बालतृणोपेते गोशकृद्भस्मसंयुते ॥ १२ ॥

एकवृक्षसमोपेते [4]कृष्टे [5]वल्मीकसंयुते । महीपतिसमीपे च [6]गर्ते प्रेतवने तथा ॥ १३ ॥

उद्याने च नदीतीरे [7]कुर्यान्नावश्यकं सुधीः । [8]सम्यगावश्यकं कृत्वा तृणजूत्या गुदं मृजेत्[9]॥१४॥

---

[1] A : लिङ्गमलं ; C : लिङ्ग मिलं

[2] Cf. *Kāmikāgama*, I, 3, 6-7 :
मार्गशष्पनदीगर्ततोयगोमयभस्मसु । श्मशानारामगोष्ठैकद्रुमशृङ्गाटकादिषु ॥
आवश्यकं न कर्तव्यं स्त्रीगोविप्रार्कलिङ्गिनाम् । चन्द्रस्य संमुखो भूत्वा भूतानां विकृतेस्तथा ॥

cf. *Kāraṇāgama*, I, 29, 10-12 :
गोवासे जलतीरे वा नद्यास्तीरे श्मशानके । कूपे चैव द्रुमच्छायाचत्वरे च समुद्रके ॥
शैलवृक्षे च वल्मीके हलाकृष्टस्थलेऽपि वा । देवागारे भूधरे च दृषदादौ च शाद्वले ॥
स्त्रीणां गोविप्रलिङ्गानां संमुखे चन्द्रसूर्ययोः । विण्मूत्रं च न कर्तव्यम् "

cf. *Makuṭāgama*, 2, 11 :
गोस्थानाद्देवतावासाद्वल्मीकाच्च जलाशयात् । ब्राह्मणानां गवां नृणां स्त्रीणां चान्यत्र सन्निधौ ॥

cf. *Yogajāgama*, 2, 2-3 :
वल्मीके च शिवस्थाने जलाश्रये गुरुसंन्निधौ । वृक्षसङ्घे च गोकोष्ठे पथि भस्मनि गोमये ॥
देवस्थानसमीपे तु नदीस्थाने विशेषतः । शिलासु पर्वताग्रेषु न कुर्याच्छौचकं बुधः ॥

[3] C : बाण pour बाल

[4] E : कोष्ठे

[5] A : वल्कि pour वल्मीक

[6] C : गते pour गर्ते

[7] A : कुर्यादावश्यकं

[8] Cf. *Kāmikāgama*, I, 3, 11 :
तृणलोष्टादिमृत्खण्डैर्मलं गुदगतं हरेत् । काष्ठगोमयपाषाणकाश्म्यादि परिवर्जयेत् ॥

cf. *Kāraṇāgama*, I, 29, 14a :
तृणलोष्टोपलैनाथ मृत्पिण्डेनैव वा गुदम् । प्रमृजेत् "

[9] La forme grammaticale correcte est मार्जयेत्

लोष्टकेनाथवा नैतत्काष्ठपाषाणगोमयैः । [1]ततस्त्यक्तमलश्चैव लिङ्गं वामेन पाणिना ॥ १५ ॥
संगृह्योत्थाय [2]गत्वाथ शुद्धदेशं ततः सुधीः । तत्र [3]हृत्वा मृदं [4]शुद्धामुपरिष्टाद्व्यपोह्य च॥१६॥
शौचार्थं मृत्तिकां दक्षहस्तेनैव समाददेत् । [5]सेतुवल्मीकवृक्षाम्बु[6]ग्रामधान्योत्करस्थिताम्॥१७॥
नियुक्तां [7]चान्यशौचाय [8]नाददीत कदाचन । जलाशयमनुप्राप्य तत्र शौचार्थमेव हि ॥ १८ ॥
क्षालयेत्प्रथमं [9]तीरं [10]तत्र मृत्संनिवेशयेत् । [11]तया[12] शौचं ततः कुर्याद्दक्षिणेनोद्धृताम्बुना[13]॥१९॥

---

[1] Cf *Kāmikāgama*, I, 3. 12-17a :
सवासा वामहस्तेन संगृह्य जननं नरः । शुद्धामशर्करां मृद्वीं मृदं शौचार्थमाहरेत ॥
वृक्षाम्बुसेतुवल्मीकग्राममध्योत्करस्थिताम । मृदमन्यावशिष्टां च शौचार्थं परिवर्जयेत ॥
प्रक्षालिताम्बुतीरे तु विन्यसेत्स्वस्य दक्षिणे । शौचं समाचरेदेकमृदा जननशोधनम ॥
तथैव वामहस्तं तु सप्तभिर्गुदशोधनम् । दशभिर्वामहस्तं तु सप्तभिश्चोभयं करम् ॥
पादौ पाणी च संशोध्य मृदा चैव सकृत् सकृत । आमलीफलमात्रं तु मृत्पिण्डं योजयेत्सकृत ॥
सोपवीतः समुत्थाय तटेऽन्यत्राचमेद्बुध ।

cf. *Kāraṇāgama*, I, 29, 14b-19a :
. . . . वामहस्तेन शेफं संगृह्य बुद्धिमान् । दक्षिणेन मृदं ग्राह्य संप्रविश्य जलाशयम ॥
तीरं प्रक्षाल्य तद्देशे मृदं क्षिप्त्वाथ शर्कराम् । तृणमूल्यादिकांस्त्यक्त्वा जलेनार्द्रीकृतां तु ताम ॥
आमलीफलमात्रेण सव्येनादाय वामके । निक्षिप्य वामहस्तेन घर्षयेत्तु पुनः पुनः ॥
जलं नीत्वा तु सव्येन सप्तापाने करे नव । मृदा शोध्यं गृहस्थस्य द्विगुणं ब्रह्मचारिणाम ॥
गृहस्थे त्रिगुणं ज्ञेयं यतीनां तु चतुर्गुणम् । यावन्मात्रं मनःशुद्धिस्तावच्छौचं विधीयते ॥

[2] A : कृत्वाथ
[3] A : गत्वा ; C : स्नात्वा
[4] E : शुद्धम pour शुद्धाम्
[5] A : वल्लिक pour वल्मीक
[6] A : ०ग्रामधान्युत्कनस्थिताः ; C : ०ग्रामधान्युत्कनास्तिना ; E : ०ग्रामधान्युत्कनस्थिताम
[7] A : चाद्य pour चान्य
[8] A : नार्जित pour नाददीत
[9] A : तीरे
[10] C : तत्र मृत्सा निवेशयेत् ; E : तत्र तत्संनिवेशयेत्

[11] Cf. *Suprabhedāgama*, I, 4, 3b–13a :
वामेन शिश्नं संग्राह्य मृत्पिण्डं दक्षिणे करे । जले शुद्धे समागम्य पश्चाच्छौचं समाचरेत ॥
सकृन्मृत्तिकया शिश्नमक्षमात्रप्रमाणतः । तथा सर्वत्र संयोज्य पश्चात्पादे तु मृत्तिकाम ॥
दशकृत्वः परं वामं सप्त कुर्यात्करद्वयम । शोधयेदम्भसा नित्यं गृहस्थानां विधीयते ॥
एतदुक्तं गृहस्थानां द्विगुणं ब्रह्मचारिणाम् । त्रिगुणं वानप्रस्थानां यतीनां तु चतुर्गुणम ॥
यावन्मात्रं मनःशुद्धिस्तावच्छौचं समाचरेत् । उत्थाय तीरान्तस्माद्वै अन्यत्राचमनं चरेत् ॥

cf. *Kālottarāgama*, 3, 6b-9a :
नालिकेरफलमात्रं शौचार्थं मृदमाहरेत् । दशकृत्वो मृदं दद्याद् गुदे वै गृहमेधिकः ॥
मेढ्रे तु त्रिमृदं दद्याद्वृषणे च तथैव च । वामं तु पञ्चभिः क्षाल्य द्वयोश्च दश वै भवेत् ॥
आमलीफलमात्रेण पादमेकं तु क्षालयेत् । अन्यच्च तावदेवं तु आचम्य च विधानवित ॥

[12] E : तथा pour तया
[13] A : उद्धृतां पुनः pour उद्धृताम्बुना

एकधा मृत्तिका [1]मेढ्रे सप्तधापानदेशके । पञ्चधा वामपाणौ च सप्तधा चोभयोरपि ॥ २० ॥

[2]एकैकधा [3]मृदं पश्चात्पादयोश्च द्वयोरपि । पुनरप्येकधा[4] पाणौ मृत्तिकां प्रक्षिपेद्बुधः ॥२१॥

ततश्चोत्थाय [5]गत्वान्यदेशं तत्र समाचरेत् ।

[दन्तधावनम्[6]]

आचम्य दन्तकाष्ठेन दन्तधावनमाचरेत् ॥ २२ ॥

दन्तकाष्ठमथो वक्ष्ये दन्तधावनसंमतम्[7] । शिरीषबिल्व[8]कारञ्जमपामार्गमथार्जुनम् ॥ २३ ॥

खादिरं मुक्तये भुक्त्यै [9]जम्ब्वाम्रककुभोद्भवम् । [10]सत्वक् [11]सार्द्रमृजु श्रेष्ठं [12]समच्छेदमनिन्दितम् ॥

तदष्टाङ्गुलं मुक्त्यै च भुक्त्यै च द्वादशाङ्गुलम् । दन्तकाष्ठमिति[13] प्रोक्तं दन्तानां मलशोधनम् ॥ २५ ॥

---

[1] A : मेध्ये

[2] A : एकैकया

[3] C : मृदा pour मृदं

[4] A : एकया pour एकधा

[5] A : गत्वान्यस्तेजस्तत्र

[6] Cf. *Kāmikāgama*, I, 3, 19-22 :

सत्वकङ्गुलमानं तु काष्ठं नैष्ठिकभोगिनोः । सार्द्रं त्वगन्वितमृजुं समच्छेदमजृद्धहम ॥
कनिष्ठाङ्गुलिनाहं तु कर्तव्यमुभयं नृणाम । करञ्जं चिरिबिल्वं च खदिरं चार्जुनं तथा ॥
अपामार्गं च मुक्त्यर्थं जम्वाम्रककुभादिकम । भुक्तयेऽथ च धात्रीं च माकुलीं निम्बसंभवम् ॥
शिग्रुश्लेष्मानकरण्डपिशाचतरुसंभवम् । वर्जयेद्दन्तकाष्ठं तदन्यल्लोहविनिर्मितम् ॥

cf. *Dīptāgama*, 55, 8b-12a :

शुचौ देशे समासीनः प्राङ्मुखोदङ्मुखः क्रमात् । प्लक्षोदुम्बरनिम्बांश्च अपामार्गं करञ्जकम ॥
आम्रं वै सर्वसिद्धिः स्याद्विशेषात्सर्वकामदम् । पाषाणं चेष्टकाचूर्णं मरीचेन परिच्छदम् ॥
उत्तरे दशने वामे दक्षिणे तदनन्तरम् । अधरे दक्षिणे वामे दन्तशुद्धिः प्रकीर्तिता ॥
निर्मलं दशनं यावत्तावद्वै दन्तधावनम् । ततस्तालु विशोध्यं तु तैलं बिम्बेऽपि शोधयेत् ॥

[7] A : संमितम pour संमतम ; E : संमदम्

[8] A : करजा pour कारञ्जम्

[9] A : जपताम्रकुतोभवम् ; B : जपताम्रकुतोभवम्

[10] A : तद्वत् pour सत्वक्

[11] A : सार्द्रमृजु श्रेष्ठं ; C : सान्द्रमृजु श्रेष्ठं

[12] C : समच्छेदन नन्दितम्

[13] C : इदं pour इति

तालपत्रादिभिः पश्चात्तालु[1]शोधनमाचरेत्[2] ।

[वारुणस्नाने मलस्नानविधिः[3]]

कृत्वास्यशुद्धिमाचम्य स्नानार्थं शुचिदेशजाम् ॥ २६ ॥

[4]मृत्तिकामस्त्रतः खात्वा त्यक्त्वोर्ध्वे चतुरङ्गुलम् । अधःस्थितां तु [5]संगृह्य [6]क्षालिताम्भस्तटे ततः॥

शिरसा तां समादाय शिखया शोधयेत्ततः । कवचेन त्रिधा भज्य तासु [7]चाप्येकया मृदा॥२८

[8]आनाभि क्षालयेद्गुह्यमन्यया[9] [10]शस्त्रजमया । ततः [11]सर्वाङ्गमालिप्य प्रविश्यान्तर्जले [12]स्थितः॥

पिधायाक्षाणि पाणिभ्यां दीप्तकालानलप्रभम् । अस्त्रं हृदि [13]तदा [14]ध्यायन् संनिमज्ज्योपविश्य च ॥ ३० ॥

---

[1] A : शोधनमारभेत्

[2] Cf. *Makuṭāgama*, 2, 14b-15 :

प्लक्षोदुम्बरनिम्बाद्यैः कुर्याद्धि दन्तधावनम् । अस्त्रमन्त्रेण नासास्यद्दन्तशुद्धिं समाचरेत् ॥
त्र्यक्षरं तु मकृज्जप्त्वा जिह्वाशुद्धिमनन्तरम् ।

cf. *Cintyāgama*, 3, 11 :

मरीचाद्येष्टिकाचूर्णैर्दन्ताञ्जिह्वां च शोधयेत् । जलेन शोधयेत्पश्चाद् गण्डूषान षोडश क्रमात् ॥

[3] Cf. *Kāmikāgama*, I, 3, 25-29a :

विशुद्धमृत्स्नया कुर्याद्वारुणं तु चतुर्विधम् । वस्वङ्गुलप्रमाणं तु खात्वोद्धृत्यास्त्रमुच्चरन ॥
हृदयेन मृदं ग्राह्य तेन खातं प्रपूरयेत् । निधाय जलतीरे तु संमिच्य शिरसैव तु ॥
तृणादि शिखया शोध्य कवचेन त्रिधा भजेत् । नाभेरधस्ताद्भागेन चान्येनास्त्रं समुच्चरन ॥
सप्तधा परतः सर्वाण्यङ्गानि क्षालयेद्बुधः । हस्ताभ्यामास्यदृङ्नासाश्रोत्रादीनि पिधाय च ॥
प्राणानायम्य हृयस्त्रं निमज्ज्यार्कद्युतिं स्मरेत् ।

[4] A : मृत्तिकामतृतं खात्वा ; B : मृत्तिकामत्र तं खात्वा ; E : मृत्तिकां मात्रतः खात्वा

[5] E : संग्राह्य

[6] A : क्षालितां ह्म्ननटे ततः

[7] C : चाल्पकया

[8] A : अन्वभि pour आनाभि

[9] E : अन्यथा pour अन्यया

[10] C : चास्त्र pour शस्त्र

[11] C : सप्त pour सर्व

[12] A : ततः pour स्थितः

[13] E : तथा pour तदा

[14] A : यावन् pour ध्यायन्

[सन्ध्योपासनम्[1]]

स्नात्वोत्तीर्य पुरा ब्राह्मीं यजेत्संध्यां तु [2]भौतिकः । नैष्ठिकश्चेद्यजेत्संध्यां केवलं [3]चास्त्रसंज्ञिताम् ॥
प्राणायामत्रयं कृत्वा शिवास्त्राष्टशतं जपेत् । सर्वात्महृदयं मन्त्री नमस्कारान्तमुच्चरन् ॥ ३२ ॥
प्राञ्जलिस्त्रिरुपावृत्य चोपस्थानं समाचरेत् । अस्त्रसंध्या तु निर्दिष्टा [4]शैवसाधारणा हिता॥३३॥
सा [5]संध्या विश्वलोकैकवन्द्या भवति भास्वरा । सा शैवी [6]शक्तिरित्युक्ता संध्या सर्वैकसाक्षिणी॥
प्रातः सारुणवर्णा स्यान्मध्याह्ने च सितप्रभा । [7]श्यामा सायाह्नकाले तु संध्यावन्दनकर्मणि ॥
॥ ३५ ॥

---

[1] Cf. *Kāmikāgama*, I, 3, 29b-32 :
जले स्नात्वैवमुत्तीर्य दीक्षायुक्तस्त्रिवर्णकः । अविरक्तः पुरा ब्राह्मीं सन्ध्यां वन्देत साधकः ॥
भजेत्तदन्ते शैवीं तु संक्षेपविधिमाश्रितः । सर्वकामप्रसिद्ध्यर्थं मेलामन्त्रं जपेद्बुधः ॥
इतरस्तु विरागात्मा लौकिकार्थपराङ्मुखः । कुर्याद्ब्राह्मीं न वा कुर्याच्छैवीमेव नियोगतः ॥
दीक्षितो गणजातिश्चेदस्त्रसंध्यामुपासयेत् ।

cf. *Svāyambhuvāgama*, 5, 8b-9 :
कृत्वाचम्य पुरा ब्राह्मीं भजेत्संध्यां द्विराश्रमी । इतरस्तु विरागात्मा लौकिकार्थपराङ्मुखः ॥
कुर्याद्ब्राह्मीं न वा कुर्याच्छैवीमेव नियोगतः ।

cf. *Kāmikāgama*, I, 3, 127b-131 :
सकलीकृतदेहस्तु ततः संध्यामुपासयेत् । ब्राह्मीं ब्रह्मगुणोपेतां ब्रह्मकाले विचिन्तयेत् ॥
मध्याह्ने वैष्णवीं ध्यायेदशेषाच्युतलक्षणाम् । सायं रौद्रीं तु संध्यायेद्रुद्रलक्षणलक्षिताम् ॥
नियामिकां त्रिमूर्तीनां साक्षिणीं सर्वकर्मणाम् । या शक्तिः परमेशस्य सा संध्येति निगद्यते ॥
तद्दीप्तिमध्यगो भूत्वा प्रातः कर्माणि साधयेत् । मेलामन्त्रक्रमेणैव शम्भुशक्तिं पुनर्जपेत् ॥
ततस्तद्वन्दनं कार्यं महास्त्रजपपूर्वकम् ।

cf. *Somaśambhupaddhati*, I, 1, 51-53 :
सकलीकरणं कृत्वा प्राणायामेन संस्थितः । त्रिः समावर्तयेन्मन्त्री मनसा शिवसंहिताम् ॥
पूर्ववत्पुनराचम्य विधाय श्रोत्रवन्दनम् । कृत्वा कराङ्गविन्यासमेकचित्तो व्यवस्थितः ॥
ब्राह्मीं च वैष्णवीं रौद्रीं रक्तां शुक्लां सितेतराम् । प्रातर्मध्याह्नके सायं संध्यां ध्यायेदनुक्रमात् ॥

[2] A : भौतिकान्
[3] E : चात्र pour चास्त्र
[4] A : शैवसाधारणानि तु
[5] C : वन्द्या pour सन्ध्या
[6] A : शांकरीत्युक्ता
[7] C : श्यामच्छायास्तकाले तु

संध्याकाले कृतं [1]कर्म यच्छुभं चाशुभं भवेत् । तत्सर्वं तन्नमस्काराद्वर्धते[2] क्षीयतेऽपि च॥३६॥
[3]तस्मात्तद्वन्दनं [4]कुर्याद्यदीच्छेच्छुभमात्मनः ।

[वारुणस्नाने विधिस्नानम्[5]]

ततो मृच्छेपमादाय कृत्वा वामकरे सुधीः ॥ ३७ ॥
प्रविश्यान्तर्जलं तत्र [6]स्थितो दिनमुखस्ततः । मृत्पिण्डं तु त्रिधा भज्य [7]पूर्वमस्त्रेण मन्त्रवित् ॥
[8]दक्षिणं तु शिवेनैव [9]तनुत्राणेन चोत्तरम् । सप्तकृत्वस्ततो मन्त्री प्रत्येकमभिमन्त्रयेत् ॥ ३९ ॥
अस्त्रजप्तं क्षिपेद्दिक्षु वर्मजप्तं तनौ ततः । आलिप्य शिरसः पश्चाच्छिवजप्तं[10] जले क्षिपेत्॥४०॥

---

[1] C : यत्तत् शुभं चाशुभं भवेत्; B : कर्म यत्तच्छुभाशुभम्

[2] A : बध्यते pour वर्धते; E : बन्धनं		[3] E : तस्मात्तद्वर्तनं

[4] C : कुर्याद्य इच्छेच्छ्रेय आत्मन:

[5] Cf. *Kāmikāgama*, I, 3, 33-39 :

अवशिष्टमृदो भागं संग्राह्य जलमध्यत: । स्थित्वा वामकरे कुर्यात्त्रिभागमुदगानन: ॥
चतुरङ्गै: सकृद्दक्षं सप्तधा हेतिनेन्द्रगम् । मूलेन दशधेन्दुस्थं भागमेवं तु मन्त्रयेत् ॥
दिक्ष्वस्त्रजप्तं प्रक्षिप्य मूलजप्तं जले न्यसेत् । कल्पयेच्छिवतीर्थं तु बाहुभ्रमणमात्रत: ॥
लिप्त्वाङ्गजप्तभागेन सर्वाण्यङ्गानि मस्तकात् । निमज्ज्य पिहितद्वारो ध्यायेच्छिवमनामयम् ॥
सूर्यसोमात्मकौ हस्तौ संयोज्य घटमुद्रया । मूलमन्त्रादिकैर्मन्त्रै: सेक: कार्य: सकृत् सकृत् ॥
सुगन्धामलकाद्यैस्तु स्नायाद्राजोपचारत: । राजवद्धेमपीठादिसुस्थितो हेमकुम्भकै: ॥
स्नात्वा निमज्जनार्थं तु कुर्याच्छब्दै: सुमङ्गलै: । तीर्थे विन्यस्तमन्त्रांस्तु संहृत्य स्वहृदि न्यसेत् ॥

cf. *Yogajāgama*, 4, 3b-11a :

जलस्नानं पुरा कृत्वा मृत्स्नानं च तत: परम् । सद्योजातेन मन्त्रेण मृत्पिण्डं तु त्रिधा भजेत् ॥
पूर्वं च दक्षिणं चैव उत्तरं च प्रकल्पयेत् । पूर्वं तत्पुरुषेणैव अघोरेण तु दक्षिणम् ॥
वामदेवेन मन्त्रेण उत्तरं चापि मन्त्रयेत् । अस्त्रेण प्रक्षिपेद्दिक्षु दशस्वपि यथाक्रमम् ॥
दक्षिणेन मृदा चैव अङ्गमालिप्य मन्त्रत: । शिरो वक्त्रं च हृदयं गुह्यं पादौ विभागश: ॥
हृदयेनैव घोरेण सर्वाङ्गमुपलेपयेत् । उत्तरेण मृदा चैव शिवतीर्थं प्रकल्पयेत् ॥
स्नानं राजोपचारेण सुगन्धामलकादिभि: । पञ्चब्रह्मषडङ्गैश्च अभिषेकं प्रकल्पयेत् ॥
गोमयेन पुनश्चैव स्नापयेदुपलिप्य च । कलशमुद्रां तु बध्वा तु प्रासादेनाभिषेचयेत् ॥
तत्तीर्थं तु समासाद्य रजन्यालेपनं कुरु । पश्चात्स्नानं समासाद्य आचम्य च यथाविधि ॥

[6] B, D, C : स्थितो दीनमुखस्तत: ; le *Kāmikāgama* I, 3, 33 prescrit उदगानन: au lieu de दिनमुख: ;

[7] A : पूर्वमन्त्रेण ; B : पूर्वं मन्त्रेण		[8] A : दक्षिणे

[9] A, E : तनुत्राणेनैव ; B : तन्त्राणेनैव		[10] A : जप्ते pour जप्तं

तत्र [1]बाहुघ्नमात्रेण [2]शिवतीर्थं प्रकल्पयेत् । हस्तयोः [3]सूर्यसोमौ तु दक्षिणेतरयोः क्रमात्॥४१॥
विन्यस्य कुम्भमुद्रां तु बध्वा मूर्धनि सेचयेत् । पञ्चब्रह्मषडङ्गैश्च स्मृत्वा देवं त्रियम्बकम्॥४२॥
संनिमज्ज्य ततो मन्त्री प्रणवं सम्यगुच्चरन् । स्नात्वा राजोपचारेण सुगन्धामलकादिभिः ॥
समुत्तीर्य [4]जलात्पश्चात्तत्तीर्थमुपसंहरेत् । [5]तप्तेन शीतलेनाथ पवित्रेणाम्बुना शुचौ ॥ ४४ ॥
देशे स्नानं गृहे वाथ कुर्याद्वै विधिना सुधीः[6] । शिरःप्रभृति चोन्मृज्य मृदुना शुद्धवाससा ॥

[आचमनविधिः[7]]

[8]समन्त्रमाचमेद्भूयः परिधायाम्बरं शुचि[9] । [10]बद्धचूडोत्कुटासीनो [11]जानुमध्यकरद्वयः ॥ ४६॥
[12]आवेष्टितशिराः पादौ पाणी प्रक्षाल्य [13]वाग्यतः।प्राग्वक्त्रो वाप्युदग्वक्त्रः सपवित्रकरस्तदा[14]॥
जले [15]चैकं पदं [16]न्यस्य स्थले [17]चैकं पदं न्यसेत् । [18]कृत्वा [19]गोकर्णवद्धस्तं तेनोद्धृत्य ततो जलम् ॥ ४८ ॥
[20]प्रकृतिस्थमसत्त्वं च फेनादिरहितं [21]शुचि । [22]माषमग्नपयो [23]मन्त्रैरात्मविद्याशिवाणुभिः ॥४९॥
[24]हृद्गं विप्रस्य निर्दिष्टं [25]कण्ठगं स्यान्नृपस्य[26] तु । तालुगं विट्सवर्णानां [27]क्रमेणाशनं भवेत्[28] ॥ ५० ॥

---

[1] B : बाह्वघ्न pour बाहुघ्न ; E : जान्वघ्न०

[2] Pour les détails du शिवतीर्थ voir *Suprabhedāgama*, I, 5, 12b-14a :
मत्स्यमण्डूकसर्पैश्चैरन्यैश्च जलजादिभिः । सेवितं तु जलं नित्यं तस्माद्दुष्टं विशेषतः ॥
तद्दोषशमनार्थं तु शिवतीर्थं प्रकल्पयेत् । हस्तमात्रप्रमाणेन परितश्चतुरश्रकम् ॥

[3] A : सोमसूर्यौ तु

[4] E : जलात्तत्र pour जलात्पश्चात्

[5] E : जप्तेन pour तप्तेन

[6] cf. *Kāmikāgama*, I, 3, 40-42a :
अथवा स्वगृहे शुद्धवारुण्या शीतलेन वा । तप्तेन लिप्तभूमिस्थपीठस्थः स्नानमाचरेत् ।
नवाष्टपञ्चभिः कुम्भैः शिवमन्त्रप्रकल्पितैः । वामया परिशुद्धेन धवलेन शरीरगम् ॥
उद्वर्त्यापनयेत्सम्यक् स्नानवारि शनैः शनैः ।

[7] Cf. *Kāmikāgama*, I, 3, 110b-120a :
आजानुपादौ प्रक्षाल्य हस्तावामणिबन्धनात् । कुक्कुटासनसंस्थस्तु जानुमध्यगपाणियुक् ॥
सम्यग्बद्धशिखो भूत्वा प्राङ्मुखो वाप्युदङ्मुखः । हस्तं गोकर्णवत्कृत्वा माषमग्नजलं पिबेत् ॥
अप्राणियुगफेनं च बुद्बुदादिविवर्जितम् । ब्रह्मतीर्थेन मूलेन त्रिः पीत्वा द्विः प्रमार्जयेत् ॥
ओष्ठावङ्गुष्ठमूलेनानामिकाङ्गुष्ठयोगतः । चक्षुर्नासां श्रुती बाहू वक्षो नाभिं शिरः स्पृशेत् ।
समन्त्राचमनं पश्चादात्मविद्याशिवाणुभिः । स्वधान्तैः सलिलं पीत्वा हेतिनोष्ठौ प्रमार्जयेत् ॥
हृन्मन्त्रेणाक्षिसंस्पर्शं कुर्यात्सव्यापसव्यतः । अथवान्यप्रकारेण कुर्यादाचमनं बुधः ॥

माषमग्नजलं ग्राह्य निर्दोषं त्रिः पिबेत्पुनः । आस्यं द्विः प्रमृजेदस्त्रात्सकृन्मृज्य मुखं शनैः ॥
पादावभ्युक्ष्य मूर्धानमङ्गुष्ठानामिकेन तु । सव्यात्तु चक्षुर्षी स्पृष्ट्वा तर्जन्यङ्गुष्ठकेन तु ॥
नासाद्वारावुभौ स्पृष्ट्वा कनिष्ठाङ्गुष्ठयोगतः । श्रोत्रे स्पृष्ट्वा जलोपेताङ्गुष्ठकेन तु बाहुकौ ॥
नाभिमङ्गुष्ठकेनैव सर्वाङ्गुल्याग्रमन्वितः । हृत्प्रदेशे तु संस्पृश्य सर्वाङ्गुल्या स्वमूर्धनि ।

cf. *Makuṭāgama*, 2, 36b-47a :

"मन्त्रैराचमनं शृणु । दक्षपादं स्थले कृत्वा वामपादं जलेऽपि वा ॥
हस्तं संकुचितं कृत्वा पवित्रेण विभूषितम् । माषमात्रप्रमाणेन जलानां प्राशनं भवेत् ॥
एवं त्रिवारं पीत्वास्यमङ्गुष्ठेन द्विधा स्पृशेत् । मुखं हस्तेन संस्पृश्य पादावभ्युक्षयेत्पुनः ।
अङ्गुष्ठानामिकाभ्यां तु चक्षुर्षी संस्पृशेद्बुधः । अङ्गुष्ठतर्जनीभ्यां तु स्पृशेन्नासापुटद्वयम् ॥
पश्चात्कनिष्ठाङ्गुष्ठाभ्यां संस्पृशेच्छ्रोत्रयोर्द्वयम् । अङ्गुष्ठमध्यमाभ्यां तु बाह्वोर्युग्मं पुनः स्पृशेत ॥
स्पृशेत्सर्वाङ्गुलीभिस्तु नाभिं च हृदयं शिरः । एवं कृत्वा तु मन्त्रज्ञः प्रत्यङ्गमुपसंस्पृशेत् ।
विशेषाचमनं पश्चाच्छृणुष्वैतन्महेश्वर । सद्यतत्पुरुषाघोरमन्त्रैः पीत्वा क्रमात्त्रिधा ॥
संस्पृशेद्धृदयेनैव सर्वाण्यङ्गानि देशिकः । विशेषाचमनं प्रोक्तम्"

[8] La forme grammaticale correcte est आचामेद्.

[9] A : शुचिः pour शुचि

[10] A : बन्धेर्धचूडो कुक्कुटामीनो ; E : बद्धचूडो कुक्कुटामीनो

[11] B : जानुमध्ये करद्वयम्

[12] C, E : आवेष्टितशिरो पादौ

[13] A : वाग्यमः

[14] A : सदा pour तदा

[15] E : चैकपदं

[16] A : न्यस्त्वा

[17] B, E : चैकपदं

[18] E : बध्वा pour कृत्वा

[19] A : गोकर्णबन्धं तु

[20] A : प्रकृतिस्थममत्वं च ; B : प्रकृतिस्थमसत्यं च ; C : प्रकृष्टस्थममत्वं च ; E : प्रकृतिस्थस्समत्वं च

[21] A : शुचिः ; E : शुचिम्

[22] B : माषमग्नं पयो

[23] C, E : मन्त्री pour मन्त्रैर्

[24] B : E : हृद्गलं यस्य

[25] B : कण्टकं

[26] A : नृपेण pour नृपस्य

[27] A : क्रमेणावशनं ; B : क्रमेणाब्जाशनं ; C : क्रमेणापाशनं

[28] Cf. *Sakalāgamasārasaṃgraha*, p. 24 :

अजिते

हृद्गतं विप्रनिर्दिष्टं कण्ठगं स्यान्नृपस्य तु । तालुगं चैव वैश्यानां शूद्राणामोष्ठगं भवेत् ॥
विप्रादीनां च वर्णानां क्रमेणाम्बुगतं भवेत् ।

Mais dans tous les mss. utilisés pour notre édition, les passages शूद्राणामोष्ठगं भवेत् et विप्रादीनां च वर्णानां sont omis : remarquer les variantes हृद्गतं विप्रस्य निर्दिष्टं pour हृद्गं विप्रस्य निर्दिष्टं et क्रमेणाम्बुगतं pour क्रमेणावशनं

त्रिः पिबेद्ब्रह्मतीर्थेन द्विरोष्ठौ हेतिना [1]मृजेत् । सर्वात्मना ततो मन्त्री खानि सर्वाणि संस्पृशेत् ॥५१॥
अङ्गुष्ठानामिकाभ्यां तु [2]सव्यवामक्रमेण[3] वै । [4]नेत्रे स्पृष्ट्वा [5]ततोऽङ्गुष्ठतर्जनीभ्यां च नासिकाम् ॥
कनिष्ठाङ्गुष्ठयोगेन मध्यमाङ्गुष्ठयोगतः । [6]कर्णौ बाहू च संस्पृश्य नाभिमङ्गुष्ठकेन च[7] ॥ ५३ ॥
तर्जनीमध्यमानामा[8]कनिष्ठाभिः [9]स्तनान्तरम् । अङ्गुल्यग्रैस्ततः सर्वैः [10]शिरःस्पर्शं समाचरेत् ॥५४॥

[मार्जनम्, अघमर्षणं च[11]]

एवमाचमनं कृत्वा हित्वा चैव पवित्रकम् । अन्यत्कृत्वा पवित्रं च कुर्यादत्राघमर्षणम् ॥ ५५ ॥
वामहस्ते जलं स्थाप्य [12]स्रवदुत्क्षिप्य मस्तके । [13]मन्त्रसंहितया धीमान्मार्जनं सम्यगाचरेत् ॥५६
दक्षहस्तस्थितं कृत्वा [14]वामपाणेस्ततो जलम् । आघ्राय पूरकेणैव [15]कृष्णं पापं विचिन्तयेत् ॥५७
रेचकेन पुनः [16]पापमस्त्रेणाशु जलस्थितम् । ध्यात्वा भूमौ क्षिपेद्धीमांस्तज्जलं चास्त्रमन्त्रतः ॥५८॥

---

[1] A : मृजौ
[2] E : स्वस्व pour सव्य
[3] A : करेण pour क्रमेण
[4] B, C, E : नेत्रं pour नेत्रे
[5] A : ततोऽङ्गुष्ठं तर्जनीभ्यां च ; E : ततोऽङ्गुष्ठतर्जनीनां तु
[6] A : कर्णं बाहुं च संदृश्य ; E : कर्णं बाहू च संस्पृश्य
[7] C, E : तु pour च
[8] A : अनामी pour अनामा ; B, C, E : अनामि
[9] E : त्वनन्तरम्
[10] A : शिरस्सर्वं
[11] Cf. *Kāmikāgama*, I, 3, 132-136 :
अभ्युक्षणात्मकं कर्म कर्तव्यं तदनन्तरम् । वामहस्ते जलं स्थाप्य स्रवच्छिरसि योजयेत् ॥
मूलाङ्गब्रह्मभिर्मन्त्रैर्दक्षहस्तेन नित्यशः । भूयोऽपि दक्षहस्तस्थं शेषवारि रविद्युति ॥
आहृत्य पूरकेणैव दक्षनासापुटेन तु । दक्षनासासमीपस्थं दक्षहस्तं तु सोदकम् ॥
तस्मात्तोयाच्च निर्दग्धं पापं देहेऽसितप्रभम् । रेचकाद्दक्षनासान्तान्निर्गच्छत्परिचिन्तयेत् ॥
तद्देहे दक्षहस्तस्थं जलं क्षिपेच्छिवास्त्रतः । कृत्वैवं मार्जनाद्यं तु "
cf. *Kiraṇāgama*, II, 1, 10 :
मार्जनं संहितामन्त्रैः शिवेन सलिलोक्षणम् । कृष्णं ध्यात्वा क्षिपेत्तोयम् "
cf. *Suprabhedāgama*, I, 5, 27b : पञ्चब्रह्मशिवाङ्गैश्च त्रिपदैरघमर्षणम्
Voir aussi, *Mṛgendrāgama*, *kriyāpāda* 2, 14b et le commentaire de Bhaṭṭa Nārāyaṇakaṇṭha.
Voir aussi, *Somaśambhupaddhati*, I, 1, 67-70
[12] A : स्रुवादुत्क्षिप्य ; E : स्रुवदुत्क्षिप्य
[13] A : मन्त्रं सहिताय धीमान्
[14] E : वामपाणिस्थितं जलम्
[15] E : तूर्णां pour कृष्णं
[16] B, C, E : पापं मात्रेणाशु

[तर्पणम्[1]]

अघमर्षणमेवं[2] स्यात्; ततस्तर्पणमुच्यते । आचम्य विधिवद्भूत्वा सपवित्रकरस्ततः ॥ ५९ ॥
[3]पुष्पदर्भतिलैश्चापि पृथगक्षतसंयुतैः । देवानृषीन्पितॄंश्चापि[4] तर्पयेत्क्रमशो बुधः[5] ॥ ६० ॥
गृहीत्वाञ्जलिना पूर्वं सपुष्पं साक्षतं जलम् । [6]देवानां वक्ष्यमाणानामङ्गुल्यग्रैश्च[7] [8]तर्पयेत्[9]॥६१॥

---

[1] Cf. *Kāmikāgama*, I, 3, 137-152a :
देवादीनां यथायोग्यद्रव्यैर्वारिविसर्जनम् । हस्ताभ्यां तर्पणं प्रोक्तं त्रयाणां तर्पणं स्मृतम् ॥
मन्त्राश्च देवता वाणी दिशस्तत्पतयस्तथा । मुनयोऽथ मनुष्याश्च सिद्धाश्चैव ग्रहास्तथा ॥
भूतानि पितरश्चान्ये ज्ञातयो गुरवस्तथा । तर्पणीया यथान्यायं साधकैः सिद्धिकाङ्क्षिभिः ॥
स्वाहया मन्त्रदेवानां सरस्वत्यास्तथैव च । दिक्पतीनां मुनीनां तु नमोऽन्तं मनुजे वषट् ॥
सिद्धानां ग्रहसङ्घानां नमोऽन्तं परिकल्पयेत् । भूतानां वौषडन्तं स्यात् पित्रादीनां स्वधान्तकम् ॥
सर्वं हृदयपूर्वं स्यात्कुसुमं देवतर्पणम् । कुशो मुनीनां विहितः पित्रादीनां तिलं स्मृतम् ॥
शेषाणामक्षतैः कुर्याद्यथायोग्योपवीतधृक् । असव्यं सव्यकं सव्यमुपवीतत्रयेण तु ॥
मन्त्रास्तु मूलब्रह्माङ्गहेतयो मुनिसत्तमाः । शिवेशविष्णुरुद्राब्जभुवा देवाः प्रकीर्तिताः ॥
वाग्वादिनी भवेद्वाणी दिशश्चेन्द्रयादयः स्मृताः । इन्द्रादयस्तत्पतयो ब्रह्मानन्तावसानकाः ॥
अत्रिश्च विश्वामित्रश्च पुलस्त्यः पुलहः क्रतुः । वसिष्ठश्च मरीचिश्च मुनयः परिकीर्तिताः ॥
ततो मनुष्याः सनकः सनन्दनसनातनौ । सनत्कुमारः कपिलो भृगुः पञ्चशिखस्तथा ॥
शिवो रुद्रो भवानी च ब्रह्मविष्ण्वग्निवायवः । धर्मः सूर्यश्चन्द्रमाश्च सिद्धाश्चैते प्रकीर्तिताः ॥
आदित्यसोमावङ्गारबुधौ चैव बृहस्पतिः । शुक्रः शनैश्चरो राहुः केतुश्चेति ग्रहाः स्मृताः ॥
भूतान्यसंख्यसंख्यानि भूतेभ्य इति योजयेत् । सोमश्च पितृमांश्चैव अङ्गिरार्यम एव च ॥
अग्निश्च कव्यवाहाद्याः पितरः परिकीर्तिताः । पितृपत्न्यादिकं सर्वं क्रमाद्बुध्वा समाचरेत् ॥
आचम्य दद्यात्सूर्यार्घ्यं त्र्यक्षरेण तु मन्त्रतः ।
Voir aussi *Mṛgendrāgama, kriyāpāda*, 2, 15-21a :

[2] A : एतत् pour एवं [3] A : पुष्पं pour पुष्प

[4] A : एव pour अपि

[5] B, C, E : सुसमाहित : pour क्रमशो बुधः
cf. *Kālottarāgama*, 3, 62b-63 :
कुशपुष्पाक्षतैश्चैव देवानां तर्पयेद्बुधः । कुशैः सर्वऋषीणां तु पितॄणां च तिलेन च ।
देवानां च ऋषीणां च जलेनैव तु तर्पयेत् ।

[6] Cf. *Kāraṇāgama*, I, 29, 41b : कनिष्ठाङ्गुष्ठमूलाभ्यां देवांस्तर्प्यादपुष्पयुक्; cf. *Suprabhedāgama*, I, 5, 23b : अङ्गुलीनां तु मूले तु दैविकं तीर्थमुच्यते ; cf. *Somaśambhupaddhati*, I, 1, 65b : "तीर्थं दैवं कराग्रतः"

[7] A : अग्रेण pour अग्रैश्च ; C : अग्रे च

[8] C : तर्पणम् pour तर्पयेत् ;

[9] Les *śloka* 62 à 122 et les *śloka* 1 à 117 du *paṭala* XX manquent dans le ms. B.

ब्रह्मविष्णू [1]ततो रुद्रमीश्वरं च सदाशिवम् । सरस्वतीं [2]ततो लक्ष्मीमुमां गौरीं मनोन्मनीम् ॥
भवादीनष्टमूर्तीश्च शक्तीर्वामादिकास्ततः । रुद्रान्वसूंस्तथादित्यान्प्रजेशं च वषट्कृतिम् ॥ ६३ ॥
इन्द्रादिलोकपालांश्च [3]वज्रादीन्यायुधान्यपि । [4]नवग्रहांस्तथार्कादींस्तर्पयेत्स्वस्वनामतः[5]॥ ६४ ॥
स्वाहान्तेन हृदा मन्त्री [6]सधारेण यथाक्रमम् । मूलमन्त्रादिमन्त्रांस्तु [7]सर्वानप्यथ तर्पयेत्॥६५॥
ततः [8]कण्ठोपवीती स्यादृषितर्पणकर्मणि[9] । कृत्वा [10]जलाञ्जलिं तेषां कुशाक्षतसमायुतम्[11]॥६६॥
[12]आर्षेणैव तु तीर्थेन ऋषीणां तर्पणं भवेत् । [13]अत्रिं क्रतुं वसिष्ठं च विश्वामित्रमतः परम्॥६७॥

---

[1] C, E : तथा pour ततो [2] C, E : तथा pour ततो

[3] A : इन्द्रादीनायुधान्यपि ; C, E : वज्रादीनायुधानपि

[4] A : नवग्रहस्तथार्कादि त० ; C : नवग्रहांस्तथार्कादींस्त० ; E : नवग्रहांस्तथादित्यांस्त०

[5] Cf. *Cintyāgama*, 4, 24-45a :
आदित्यं सोममङ्गारं बुधं बृहस्पतिशुक्रकौ । शनिं राहुं च केतुं च नामभिस्तर्पयेत्क्रमात् ॥
ब्रह्मा प्रजापतिर्धाता हिरण्यगर्भश्चतुर्मुखः । स्वयम्भूः पद्मयोनिश्च परमेष्ठी पितामहः ॥
स्रष्टा च दशनामेति तृप्यत्वन्तेन तर्पयेत । तदन्ते केशवश्चैव नारायणश्च माधवः ॥
गोविन्दश्चैव विष्णुश्च मधुसूदस्त्रिविक्रमः । वामनः श्रीधरश्चैव हृषीकेशः पद्मनाभकः ॥
दामोदर इति नामभिर्द्वादशभिश्च तर्पयेत् । महेशं चन्द्रमौलिं च नृत्तमूर्तिं तथैव च ॥
देव्यर्धं च वृषारूढं त्रिपुरघ्नं यमान्तकम् । दक्षिणामूर्तिं वटुकं श्रीकण्ठं शूलपाणिनम् ॥
रुद्रानेकादशांश्चैव तर्पयेत्तु यथाक्रमम् । इन्द्रं चैव तथाग्निं च यमं च निर्ऋतिं तथा ॥
वरुणं चैव वायुं च सोममीशं च तर्पयेत् । कौशिकः काश्यपश्चैव भारद्वाजोऽथ गौतमः ॥
अगस्त्यश्चैव पञ्चैतान्मुनींश्च तर्पयेत्तथा । अत्रिश्च विश्वामित्रश्च पुलस्त्यः पुलहः क्रतुः ॥
वसिष्ठश्च मरीचिश्च मुनयः सप्त तर्पयेत् । . . . सूर्यमूलेन सूर्यस्य अर्घ्यं वारि ददेत्त्रिधा ॥ . . .
कनिष्ठानामिकामध्ये पर्वेष्वङ्गुष्ठसंयुतम् । शिवगायत्रिकां जप्त्वा त्रिधा मूलेन तर्पयेत् ॥
पर्वेषु च क्रमेणैव जप्त्वा तर्प्य पुनः पुनः । अन्त्रमेकादशानां तु तर्पयेत्तदनन्तरम् ।
गणेशं सुब्रह्मण्यं च क्षेत्रपालं तथैव च । आचार्यादि क्रमेणैव तर्पयेत्क्रमशो बुधः ॥

[6] C : साधारेण ; E : साधकेन [7] A : सर्वाणि pour सर्वान्

[8] C : कण्ठोपवीतः

[9] Cf. *Kālottarāgama*, 3, 49a : देवानामुपवीतेन ऋषीणां कण्ठलम्बितम ।

[10] E : कृताञ्जलिं [11] C : समायुतः pour समायुतम्

[12] Cf. *Kālottarāgama*, 3, 50b et 52a :
आर्षेणैव तु तीर्थेन ऋषीणां तर्पयेत्पुनः । . . . अग्रेस्तु ऋषितीर्थं स्यात् "
cf. *Kāraṇāgama*, I, 29, 42a : अङ्गुल्यग्रेण हस्ताभ्यां मुनींस्तर्प्य कुशैस्तथा ।
cf *Suprabhedāgama*, I, 5, 24a : अङ्गुल्यग्रे ऋषितीर्थम्
cf. *Somaśambhupaddhati*, I, 1, 66b : " ऋषीणां तु समग्रेषु ह्यङ्गुलीपर्वस निरग्रु ।

[13] A : अत्रिं क्रतु वसिष्ठं च ; C : अत्रिकेतुवसिष्ठं च ; E : अत्रिं केतु वसिष्ठं च

[1]मरीचिं च पुलस्त्यं च तथैवागस्त्यमेव च । ओंकारादि स्वनाम्ना तु तर्पणं स्यान्नमोऽन्तकम् ॥
अपसव्योपवीती स्यात्ततश्च पितृतर्पणे[2] । दक्षिणाग्रान्कुशान् [3]भूमावास्तीर्याग्रेषु तर्पणम् ॥६९॥
तिलाक्षतसमायुक्तं कृत्वा तेषां जलाञ्जलिम् । अपसव्येन हस्तेन पितृतीर्थेन तर्पणम्[4] ॥७०॥
[5]सोमादिकान्पितॄन्सर्वान्स्वधा नम इति ब्रुवन् । तर्पयेत्तर्पयामीति [6]पितृपत्न्यात्मजांस्तथा ॥
गणांश्च [7]पितृसंबन्धींस्तर्पयित्वा ततः क्रमात् । [8]स्वपितृनामगोत्राभ्यां तर्पयेत्पूर्ववत्सुधीः॥७२॥
[9]पितामहमतश्चापि प्रपितामहमेव च । [10]पितामहीं ततश्चापि तर्पयेत्प्रपितामहीम् ॥ ७३ ॥
[11]ततो मातामहं चापि मातुश्चापि पितामहम् । प्रपितामहं ततश्चापि तर्पयेन्मन्त्रवित्तमः॥७४॥
ज्ञातीन्सर्वांस्तथाचार्यांस्तर्पयित्वा समाहितः । त्यक्त्वा पवित्रकं पश्चादाचम्य विधिपूर्वकम् ॥

[सूर्यायोदकदानम्[12]]

पवित्रहस्तो भूत्वाथ [13]कृत्वा चैव जलाञ्जलिम् । षडक्षरेण मन्त्रेण सूर्यस्याप्युदकं ददेत् ॥७६॥

---

[1] A : मरीचं च  [2] E : तर्पणम् pour तर्पणे

[3] C : भूमौ विस्तीर्याग्रैव तर्पयेत्; E : भूमौ विस्तार्याग्रैव तर्पणम्

[4] Cf. *Kāraṇāgama*, I, 29, 43 :
यज्ञं कृत्वापसव्यं तु जलैस्तु तिलमिश्रकैः । दक्षिणाङ्गुष्ठतर्जन्योर्मूलेनैव पितॄनपि ॥
cf. *Kālottarāgama*, 3, 49b, 51a et 52a :
पितॄणां प्राचीनावीती तर्पयेत्सुसमाहितः । पैतृकेण तु तीर्थेन पितॄणां तर्पयेत्पुनः ॥
"पैतृकोऽङ्गुष्ठमूलतः ।
cf. *Suprabhedāgama*, I, 5, 23a : तर्जन्यङ्गुष्ठयोर्मध्ये पैतृकं तीर्थमुच्यते ।
cf. *Somaśambhupaddhati*, I, 1, 65a : पैत्रं मूले प्रदेशिन्याः"

[5] D : सोदकांश्च pour सोमादिकान्  [6] A : पितृपत्न्यां जलांस्तथा

[7] La forme grammaticale correcte est पितृसंबन्धिनस्तर्पयित्वा

[8] A : स्वपितृन्नामगोत्राभ्यां : C : स्वपितुर्नामगोत्राभ्यां

[9] C : पितामहं ततश्चापि , E : पितापितामहांश्चापि  [10] A : पितामहीं pour पितामहीं

[11] A : मातामातामहं चापि : C, E : मातामहीं ततश्चापि

[12] Cf. *Kiraṇāgama*, II, 1, 12b-13a :
कृत्वा हृदाञ्जलिं बध्वा त्रीन् वारानुदकेन तु । कृत्वाञ्जलिं सुपुष्पाढ्यं रवेः पश्चाच्छिवं यजेत् ॥
cf. *Kālottarāgama*, 3, 27a : तत्रैव सूर्यमुद्दिश्य षडक्षेणोदकं ददेत् ।

[13] C : त्यक्त्वा pour कृत्वा

जलस्नानमिति प्रोक्तं भस्मस्नानमथोच्यते ।

[आग्नेयस्नानम्[1]]

आग्नेयं तद्भवेत्स्नानं तच्च भस्म चतुर्विधम् ॥ ७७ ॥

[2]चातुर्विध्यमिदं विद्धि कल्पं [3]चाप्यनुकल्पकम् । उपकल्पमकल्पं च [4]प्रथमाद्धीनमुच्यते॥७८॥

[कल्पम्[5]]

रोगादिरहितायास्तु युवत्या गोस्तु यद्भवेत् । [6]पयस्विन्यास्तु संगृह्य प्रणवेनाब्जपत्रके ॥७९॥
पलाशपत्रके वाथ भूतले पतितं तु वा । अधश्चोर्ध्वं परित्यज्य तत्तथा शुचि गोमयम् ॥८०॥
तेन पिण्डानि कुर्वीत सर्वात्मानं समुच्चरन् । एकान्ते शोषयित्वा तु निर्दहेच्छिववह्निना॥८१॥
[7]नित्याग्नौ [8]वा शुचिर्धीमाञ्शिवमन्त्रं समुच्चरन् । [9]कल्पमेवं समुद्दिष्टमनुकल्पमतः[10] शृणु॥८२॥

---

[1] Cf. *Kāraṇāgama*, I, 3, 42b-44a :
भुक्तिमुक्तिदमाग्नेयं कार्यं शुद्धेन भस्मना । स्नानं चतुर्विधं भस्म भवेत्कल्पादिभेदतः ॥
कल्पं चैवानुकल्पं च उपकल्पमकल्पकम । तेष्वाद्यं तत उत्कृष्टतममन्यदभावतः ॥
cf. *Acintyaviśvasādākhya*, 10, 67-68a :
चतुर्विधं तु तद्भस्म कल्पं प्रथममुच्यते । अनुकल्पं द्वितीयं च तृतीयमुपकल्पकम् ॥
अकल्पं तु चतुर्थं स्यात्पूर्वं पूर्वं तथोत्तमम् ।

[2] C : चतुर्विधमिदं

[3] A : चाप्यनुकल्पनम्

[4] A : प्रथमातनमुच्यते ; C : प्रथमार्धानमुच्यते

[5] Cf. *Kāraṇāgama*, I, 3, 44b-46a :
रोगादिरहिता या गौः कृष्णा वा कपिलाथवा । तस्या गोमयमादाय खस्थं पद्मदलादिना ॥
सद्येन गोमयं ग्राह्यं पिण्डं वामेन कारयेत् । विमले शोषयित्वा तु दहेद्धोराच्छिवाग्निना ॥
cf. *Acintyaviśvasādākya*, 10, 68b-74a :
वर्ज्या वृद्धा व्याधिताश्च दुर्लक्षणयुतास्तथा । तर्णकेन विहीनाश्च बाला मौख्र्यवर्तीविना ॥
सुलक्षणाश्च कपिला रक्ताः शुक्लाः सितेतराः । एतासां गोमयं पद्मपत्रे ह्यम्भोद्भवे तथा ॥
पालाशपत्रके वापि हस्ताभ्यां व्योम्नि धारयेत् । गोष्ठे वा गोमयं ग्राह्यं सद्योमन्त्रेण धारयेत् ॥
उपर्यधस्तथा कुर्याद्विमृजेन्मध्यमं पुनः । गोलकाकारकं कुर्याद्वामदेवादिमन्त्रवित् ॥
अघोरेणैव संशोध्य शुद्धदेशे दहेत्पुनः । पुरुषेण विशेषेण नवभाण्डे विनिक्षिपेत् ॥
कर्पूरोशीरह्रीबेरकेतकैश्चम्पकैस्तथा । दमनैरीशमन्त्रेण जपेत्तस्माद्विशेषतः ॥

[6] A : पयस्विनास्तु

[7] E : नित्यार्थी pour नित्याग्नौ

[8] C, E : तु pour वा

[9] C : अल्पमेवं

[10] C : अथ pour अतः

[अनुकल्पम्[1]]

[2]आरण्यं गोमयं पूतं चूर्णयित्वा [3]नवे घटे । प्रक्षिप्य पूर्ववद्दग्धमनुकल्पमिति स्मृतम् ॥ ८३ ॥

[उपकल्पम्[4]]

[5]अग्निदग्धे तु कान्तारे गोवासे वा गृहादिके । इष्टकामृद्घटादीनामापाके वाथ [6]संस्थितम् ॥ ८४ ॥

गृहीत्वा भस्म [7]गोमूत्रात्कृत्वा वै [8]बद्धपिण्डितम् । [9]संशोष्य पूर्ववद्दग्धमुपकल्पं च कीर्तितम् ॥

[अकल्पम्[10]]

[11]स्त्रीशूद्रादिजनैरन्यैर्विशुद्धे तु महीतले । दग्धं [12]यत्तदकल्पं स्यात्तेषु चैकं चतुर्ष्वपि ॥ ८६ ॥

---

[1] Cf. *Kāmikāgama*, I, 3, 46b-47a :
शुष्कं वनगतं यत्तु गोमयं चूर्णितं तथा । निर्दग्धमनुकल्पाख्यम् ''

cf. *Acintyaviśvasādākhya*, 10, 74b-75a :
अनुकल्पं ततश्चैव शृणु त्वं नन्दिकेश्वर । वने शुष्कं शकृद्गृह्य कल्पवत्पूर्ववत्कुरु ॥

[2] A : आरण्यगोमयं [3] A : वने pour नवे

[4] Cf. *Kāmikāgama*, I, 3, 47a-48a :
" आपाकादिगतं तु यत् । वस्त्रेणान्तरितं भस्म गोमूत्रैर्बद्धपिण्डकम् ॥
दग्धं प्रागुक्तविधिना भवेद्भस्मोपकल्पकम् ।

cf. *Acintyaviśvasādākhya*, 10, 75b-76 :
तृतीयमुपकल्पं स्यादरण्ये शुष्कगोमयम् । चूर्णं कृत्वा तु संगृह्य गोमूत्रैः पिण्डवत्कुरु ॥
दग्धं पूर्वोक्तविधिना भवेद्भस्मोपकल्पकम् ।

[5] A : अग्निदग्धेषु [6] E : तत्स्थितम्

[7] A : गोमूत्रौ pour गोमूत्रात् ; C : गोमूत्रात्

[8] A : बद्धपिण्डिकाम् ; E : बलिपिण्डितम् [9] A : संशोध्य

[10] Cf. *Kāmikāgama*, I, 3, 48b-50, 52-54a :
अन्यैरापादितं भस्म अकल्पकमिति स्मृतम् । जात्यादिदोषनिर्मुक्तं रोगादिरहितं च यत् ॥
तेन स्नानं प्रशस्तं स्यान्नान्येन मुनिसत्तमाः । एष्वेकतममादाय पात्रेषु कलशादिषु ॥
त्रिसंध्यमाचरेत्स्नानं यथासंभवतोऽथवा । . . . जलस्नानं पुरा कृत्वा प्रातराग्नेयमभ्यसेत् ॥
संध्यान्तरे तथाग्नेयं केवलं वा सवारुणम् । शक्तानां विधिरेवं स्यादशक्तानां यथेच्छया ॥
आग्नेयं वारुणस्नानादसंख्येयफलावहम् । तस्माद्वारुणमुत्सृज्य स्नानमाग्नेयमभ्यसेत् ॥

cf. *Acintyaviśvasādākhya*, 10, 77-78 :
पूर्वोक्तविधिमुत्सृज्य केवलं भस्मसाधनम् । संस्कारे पिण्डवत्कुर्यादकल्पमभिधीयते ॥
अन्यैरापादितं भस्म अकल्पमिति पूज्यते । चातुर्विध्यमिदं प्रोक्तं सर्वपापनिकृन्तनम् ॥

[11] Les *śloka* 86 à 122 manquent dans le ms. C.

[12] E : पक्वमकल्पं pour यत्तदकल्पं

गृहीत्वा शुद्धपात्रेषु[1] तन्निक्षिप्य जनार्दन । वस्त्रेणान्तरितं कृत्वा [2]सितं केशादिवर्जितम्॥८७॥
तेन प्रशस्यते स्नानमाग्नेयमधिकं गुणैः[3] । प्रातर्मध्याह्न[4]सायाह्नमध्यरात्रेषु [5]सुव्रती ॥ ८८ ॥
जलस्नानोत्तरं [6]पूर्वमनुत्तरमथोत्तरे ।

[उद्धूलने वर्ज्यम [7]]

न देवसंनिधौ मार्गे न चाग्निगुरुसंनिधौ ॥ ८९ ॥
उद्धूलनं प्रकर्तव्यं तथाशुद्धे महीतले ।

[उद्धूलनविधिः[8]]

आचम्य सुखमासीनः प्राङ्मुखो वाप्युदङ्मुखः ॥ ९० ॥
[9]सव्येन मुष्टिमादाय भस्मनां सुसमाहितः । तिसृभिर्धारणाभिस्तु [10]विशोध्यैतज्जनार्दन ॥९१॥

---

[1] A : पात्रेण pour पात्रेषु
[2] E : कृतं pour सितं
[3] A : गणैः pour गुणैः
[4] E : ०सायाह्ने मध्यरात्रौ तु
[5] A : च प्रति pour सुव्रती
[6] E : पूर्वमनुकारमथोत्तरम्

[7] Cf. *Kāmikāgama*, I, 3, 66-67 :
न च गुर्वग्निदेवानां संनिधौ मार्ग एव च । अशुद्धभूतले चैव भस्मस्नानं नयेत्सुधीः ॥
क्वचिच्छस्तं हि देवस्य संनिधावग्निसंनिधौ । उद्धूलनविधिः प्रोक्तो विप्रस्य शिवशासने ॥
cf. *Kārṇāgama*, I, 30, 52b-53a :
देवाग्निगुरुविद्यानां समीपे यदि दर्शने । अशुद्धभूतले मार्गे कुर्यान्नोद्धूलनं व्रती ॥
cf. *Acintyaviśvasādākhya*, 10, 99-100a :
गुरुदेवाग्निविद्यानां संनिधौ वान्यदर्शने । महापातकयुक्तानां कृतघ्नस्यापि दर्शने ॥
अशुद्धभूतले मार्गे धूलनं न विधीयते ।

[8] Cf. *Mataṅgapārameśvara, kriyāpāda*, pp. 37-39 :
गृहीत्वा भस्मपात्रं तु मृण्मयं वाथ वैणवम् । अलाबुकं वा प्रच्छन्नः कौबेर्याभिमुखः स्थितः ॥
शुचौ प्रदेशे शान्तात्मा ध्यात्वास्त्रं पूर्ववत्सुधीः । भस्ममुष्टिं गृहीत्वा तु दक्षिणेन करेण तु ॥
शिरो मुखं च ग्रीवां च लेशधा मज्जयेत्ततः । उरो बाहू च हृदयं पृष्ठं जघनमेव च ॥
यदगम्यं दक्षिणस्य तद्वामेन तु पाणिना । सम्यगाधूलयेदङ्गं स्पृष्ट्वान्योन्यकरावुभौ ॥
कटिमुत्थाय गुह्यं च तथोरुयुगलं शनैः । जङ्घे च क्रमशः पश्चात्ततोऽन्तः पादमुत्सृजेत् ॥
अन्यद्वस्त्रं तु संगृह्य भस्मना साधकोत्तमः । परिधाय शुचिर्वस्त्रैः पाणी प्रक्षालयेत्ततः ॥
सलिलेन च पूतेन पादौ मृद्भिस्तु सप्तभिः । आचमेत्प्रयतो भूत्वा हस्तौ तु परिशोधयेत् ।
भूयोऽपि भस्मनो न्यस्य गृहीत्वा मुष्टिमादरात् । लिप्तायां भुवि सौम्यास्यः स्मृत्वा नाथं सदाशिवम् ।
ईशमन्त्रेण मन्त्रज्ञः शिर उद्धूलयेत्पुरा । वदनं वक्त्रमन्त्रेण हृदयं बहुरूपिणा ॥
गुह्यं वामेन सद्येन शेषमुद्धूलयेत्सुधीः ।

[9] E : भस्मना pour सव्येन
[10] E : विशोध्येन जनार्दन

षडङ्गेनाभिमन्त्र्याथ वामहस्ततले न्यसेत् । उद्धूलनं [1]ततः कुर्यात्तेन कादि समाहितः ॥९२॥
ईशेनोद्धूलयेन्मन्त्री मुखे तत्पुरुषेण तु । हृदये घोरमन्त्रेण वामदेवेन गुह्यके ॥ ९३ ॥
पादयोः सद्यमन्त्रेण पृष्ठे सर्वात्मनाणुना । अस्त्रेणोद्धूलयेत्पश्चात्सव्यवामक्रमेण तु ॥ ९४ ॥
सर्वाङ्गानि समुद्धूल्य गत्वान्यत्र ततो बुधः । परिवर्त्य ततो वस्त्रं कौपीनं [2]चाचमेत्सुधीः ॥
गृहिणां वारुणं स्नानमाग्नेयं[3] ब्रह्मचारिणाम् । माहेन्द्रादिचतुष्कं तु यन्नैमित्तिकमेतयोः ॥९६॥

[भस्मपुण्ड्रविधिः[4]]

उद्धूलनविधिर्ह्येवं[5] ब्राह्मणस्य शिवागमे[6] । क्षत्रविट्छूद्रजातीनां [7]पट्टपुण्ड्रं ललाटके ॥ ९७ ॥
[8]त्रिपुण्ड्रं यच्चतुर्णां च वर्णानामपि योग्यकम् । [9]षडङ्गुलसुविस्तीर्णं ब्राह्मणानां [10]त्रिपुण्ड्रकम् ॥
नृपाणां चतुरङ्गुल्यं वैश्यानां तु [11]त्रियङ्गुलम् । शूद्राणामपि सर्वेषां [12]भवेद्द्व्यङ्गुलविस्तृतम्॥९९॥
सवर्णाद्यनुलोमानां [13]वैश्यवत्तु त्रिपुण्ड्रकम् । [14]द्वात्रिंशत्संधिदेशेषु[15] षोडशस्वथवा पुनः॥१००॥

---

[1] E : ततस्तेन कुर्यात्
[2] Voir p. 182 note 8.
[3] A : माहेन्द्रं pour आग्नेयं
[4] Cf. *Kāraṇāgama*, I, 29, 62-63 :
षडङ्गुलप्रमाणेन ब्राह्मणानां त्रिपुण्ड्रकम् । नृपाणां चतुरङ्गुल्यं वैश्यानां तु त्रियङ्गुलम् ॥
शूद्राणां द्विरङ्गुलं प्रोक्तं स्त्रीणामेकाङ्गुलं भवेत् । अनुलोमादिसर्वेषां त्रिपुण्ड्रं पितृवद् [भवेत्] ॥
cf. *Makuṭāgama*, 2, 79b-80 :
ब्राह्मणानां षडङ्गुल्यं नृपाणां चतुरङ्गुलम् । वैश्यानां द्व्यङ्गुलं प्रोक्तं शूद्राणामेकमङ्गुलम् ॥
अन्येषामपि सर्वेषां त्रिपुण्ड्रं शूद्रवद्भवेत् ।
[5] E : ज्ञेयं pour ह्येवं
[6] A : शिवाश्रमे
[7] A : पट्टपुण्ड्रललाटकम् : cf. *Kāmikāgama*, I, 3, 69a : नृपविट्छूद्रजातीनां पट्टपुण्ड्रं ललाटके ।
[8] A : त्रिपुण्ड्रं यच्चतुर्वर्णां वर्णानां परिकीर्तितम्
[9] E : रमाङ्गुलं तु विस्तीर्णं
[10] A : त्रिपुण्ड्रकम्
[11] E : त्रयङ्गुलम् : la forme grammaticale correcte est त्र्यङ्गुलम्
[12] E : भवेदङ्गुलविस्तृतम्
[13] E : वैश्यवत्स्यात्त्रिपुण्ड्रकम्
[14] Cf. *Kāraṇāgama*, I, 29, 67b-68 :
द्वात्रिंशत्संधिदेशेषु ह्यथवा षोडशेष्वपि । अष्टसन्धिषु वा मन्त्री त्रिपुण्ड्रं विधिना कुरु ॥
cf. *Acintyaviśvasādākhya*, 10, 83b-84 :
त्रिपुण्ड्रं कारयेत्पश्चाद्ब्रह्मविष्णुशिवात्मकम् । द्वात्रिंशत्स्थानके वापि षोडशस्थानकेऽपि वा ॥
अष्टस्थाने तथा चैव पञ्चस्थानेऽपि योजयेत् ॥
[15] E : देशे वा pour देशेषु

[1]कुर्यादष्टसु चाङ्गेषु मितेन भमितेन च ।

[ द्वात्रिंशत्संधयः[2] ]

साम्बुना प्रथमं मूर्ध्नि ललाटे तु ततः परम् ॥ १०१ ॥

ततश्च हृदये न्यस्य [3]दोर्द्वयेऽतः परं भवेत् । [4]अंसयोश्च ततः कुर्यात्कर्णयोश्च ततो भवेत् ॥ १०२ ॥

गलमध्ये ततः [5]कुर्याद्थैवं पार्श्वयोर्द्वयोः । वामेतरक्रमेणैव कुकुद्यां तु ततः परम्[6] ॥ १०३ ॥

त्रिकयोश्च ततः कुर्यात्पश्चात्कूर्परयोरपि । मणिबन्धद्वये[7] चाथ ततश्चापि [8]कटिद्वयोः ॥ १०४ ॥

[9]नाभौ कुक्षौ तथा पृष्ठ ऊर्वोरपि ततः परम् । [10]जानुद्वयोस्ततः कुर्याज्जङ्घयोः पादयोरपि ॥

[षोडश संधयः[11]]

द्वात्रिंशत्संधयः प्रोक्ताः ; [12]षोडशेष्वथ चोच्यते । के ललाटे च [13]हृदये दोर्द्वयोः कण्ठमध्यमे ॥

[14]कुकुद्यां कर्णयोश्चैव पार्श्वयोर्नाभिदेशके । [15]कूर्परद्वितये चैव मणिबन्धद्वये [16]तथा ॥ १०७ ॥

---

[1] A : कुर्याच्चाष्टसु चाङ्गेषु

[2] Cf. *Kāmikāgama*, I, 3, 70-72a :

मूर्धा ललाटं कर्णौ च चक्षुषी घ्राणकौ तथा । आस्यं ग्रीवा तु चांसौ च बाहू कूर्परकौ तथा ॥
मणिबन्धौ च हृन्नाभिमेढ्रं पायुस्तथैव च । ऊरू च जानुनी चैव जङ्घे स्फिचौ तथैव च ॥
पादौ द्वात्रिंशदित्येते पठ्यन्ते संधयः क्रमात् ।

cf. *Acintyaviśvasādākhya*, 10, 85-87a :

उत्तमाङ्गे ललाटे च करयोर्नेत्रयोस्तथा । नासावक्त्रगलेष्वेवमंसद्वयमतः परम् ॥
कूर्परौ मणिबन्धौ च हृदये पार्श्वयोर्द्वयोः । नाभौ गुह्यद्वयोश्चैवमूर्वोः स्फिग्द्वे द्विजानुनी ॥
जङ्घाद्वये वा पादौ द्वौ द्वात्रिंशत्स्थानमुत्तमम् ।

[3] E : दोर्द्वयोश्च ततः परम्

[4] A : द्वियंसयोस्ततः

[5] E : कुर्यादथ तत्पार्श्वयोर्द्वयोः

[6] A : कृत्वा कट्यां ततः परम्

[7] E : द्वयोः pour द्वये

[8] E : कटद्वयोः

[9] E : नाभौ पृष्ठे तथा कुक्षौ

[10] E : जानुद्वये ततः

[11] Cf. *Kāmikāgama*, I, 3, 73-74a :

ललाटं कर्णौ चांसौ च बाहू च मणिकूर्परौ । हृदयं जठरं चैव नाभिः पार्श्वौ तथैव च ॥
पृष्ठं च इति विज्ञेयाः संधयः षोडश क्रमात् ।

cf. *Kāraṇāgama*, I, 29, 72-73a :

ग्रीवा ललाटमंसौ च बाहू च कूर्परौ तथा । हृदयं जठरं चैव पार्श्वौ च मणिबन्धकौ ॥
नाभिः पृष्ठं च विज्ञेयाः संधयः षोडश क्रमात् ।

[12] A : षोडशत्वथ

[13] E : हृदेश

[14] A : कट्यां कर्णद्वयोश्चैव

[15] A : कोर्पर pour कूर्पर

[16] A : ततः pour तथा

[अष्टसंधयः[1]]

षोडशस्थानमुद्दिष्टं ; स्थानाष्टकमतः[2] शृणु । मूर्ध्नि देशे ललाटे च हृद्देशे [3]दोर्द्वयोस्तथा॥१०८॥
कर्णयोरुभयोश्चैव गलमध्ये ततः परम् । एवं त्रिविध [4]उद्दिष्टस्त्रिपुण्ड्रस्थाननिर्णयः॥ १०९ ॥
[5]एतेष्वेकतमं कुर्याद्गृहस्थः पापशोधनम् । ब्रह्मचारी [6]त्विदं कुर्याद्भस्मोद्धूलनमुत्तमम्[7]॥ ११० ॥
गृहस्थस्यापि तत्प्रोक्तं प्रायश्चित्तविधौ[8] परम् । स्नानद्वयमिदं[9] प्रोक्तं जलभस्मोपलक्षितम्॥१११॥

[माहेन्द्रस्नानम्[10]]

माहेन्द्रादिचतुष्कं यत्क्रमेण स्नानमुच्यते । आतपे वृष्टिसंयुक्ते प्राङ्मुखश्चोर्ध्वबाहुकः ॥ ११२ ॥
ईशानं तु जपेन्मन्त्रं [11]गच्छेच्च पदसप्तकम् । स्नानं माहेन्द्रमित्युक्तं ; वायव्यमधुनोच्यते॥११३॥

[वायव्यस्नानम्[12]]

वायुना दिवि विस्तीर्णं [13]रजो यद्गोकृतं महत् । अनुसृत्य [14]तु तद्गच्छेज्जपन्पुरुषमुत्तमम् ॥११४॥
यावच्छतपदं तु स्यात्स्नानं वायव्यमुत्तमम्[15] ।

---

[1] Cf. *Ācintyaviśvasādākhya*, 10, 96b-97a :
शिरःस्थानं ललाटं च कर्णद्वयमतः परम् । अंसद्वयं च हृदयं नाभिरित्यष्टकं भवेत् ॥
cf *Kāraṇāgama*, I, 29, 73b-74a :
शिरोललाटकर्ण [ण्ठं ? ] च बाहू च हृदयं तथा । नाभिः पृष्ठमिति ज्ञेयास्त्वष्टौ वै संधयः क्रमात् ॥
[2] B : अथ pour अतः
[3] E : दोर्द्वये तथा
[4] A : उद्दिष्टं त्रिपुण्ड्रस्थाननिर्णयम्
[5] Cf. *Kāmikāgama*, I, 3, 101b-102a :
वारुणं वा गृहस्थानां यतीनां भस्मना कृतम् । स्नानान्तरं तयोरेव नैमित्तिकमुदाहृतम् ।
[6] E : ततः pour त्विदं
[7] A : ०नविग्रहम्
[8] A : विधेः pour विधौ
[9] E : इति pour इदं
[10] Cf. *Kāmikāgama*, I, 3, 102b-103a :
ऐन्द्रं चातपवृष्ट्या स्यात्प्राङ्मुखेनोर्ध्वपाणिना । स्मरता मूर्धजं मन्त्रं गच्छता पदसप्तकम् ॥
Voir aussi *Mṛgendrāgama*, *kriyāpāda*, 2, 30
[11] E : गच्छेत्तु
[12] Cf. *Kāmikāgama*, I, 3, 103b-104a :
कुर्याद्गोकुलसंचारधूलिभिर्वायुसंभवैः । पुरुषेणैव मन्त्रेण स्नानानामुत्तमोत्तमम् ॥
Voir aussi *Mṛgendrāgama*, *kriyāpāda*, 2, 4b et 29
[13] E : रजोऽन्यकलुषीकृतम्
[14] E : जपन pour तु तद्
[15] E : स पञ्चषट्पदं तस्माद्वायव्यमितिर्मीरितम्

[मान्त्रस्नानम्[1]]

सद्यादिपरिपूतेन वारिणाभ्युक्षणं तु यत् ॥ ११५ ॥

[मानसस्नानम्[2]]

मूर्ध्नि [3]तन्मान्त्रमुद्दिष्टं; मानसं त्वधुनोच्यते । प्रणवस्य जपेनैव [4]मानसेन प्रकीर्तितम् ॥ ११६ ॥
अष्टोत्तरशतेनैव प्राणायामयुतेन च । [5]मानसं स्नानमेवं स्यात्स्नानान्युक्तानि षण्मया ॥ ११७ ॥

[वारुणस्नाननिमित्तानि[6]]

[7]गृध्रवायससंस्पृष्टे श्वखरोष्ट्रकपोतकैः । ग्रामसूकरसंस्पृष्टे[8] [9]ग्रामकुक्कुटकैस्तथा ॥ ११८ ॥
[10]वीरहात्रतिसंस्पृष्टे [11]निर्माल्यस्य तु भोजने । रजस्वलान्त्यजप्रेतसूतिकापतितैरपि ॥ ११९ ॥
अन्यैश्च लिङ्गिभिः स्पृष्टे [12]वारुणं स्नानमाचरेत् । [13]विण्मूत्ररेतःसंसर्गे [14]दुर्भुक्तौ वमने तथा ॥ १२० ॥

---

[1] *Kāmikāgama*, I, 3, 104b-105a :
सद्यादिमन्त्रजतेन तोयेन परिमार्जनम् । मान्त्रं तद्वारुणस्नानविधावपि विधीयते ॥

cf. *Kāraṇāgama*, I, 29, 93-95 :
प्रक्षाल्य पादावाचम्य पात्रे क्षिप्त्वा जलं तथा । व्योमव्यापिपदैश्चैव षडङ्गैर्ब्रह्मपञ्चकैः ॥
मूलेनैव तु तत्तोयमभिमन्त्र्य सकृत् सकृत् । संस्पृशेत्तेन तोयेन मूलमन्त्रेण वर्मणा ॥
मूर्धादिपादपर्यन्तं त्रिधा संस्पर्शयेत्ततः । मन्त्रस्नानं समाख्यातं सर्वपापक्षयो भवेत् ॥

[2] Cf. *Kāmikāgama*, I, 3, 105b-106a :
प्रणवस्मरणोपेतं प्राणायामेन मानसम् । सर्वस्नानेषु कर्तव्यं केवलं वा विधीयते ॥
Voir aussi *Mṛgendrāgama, kriyāpāda*, 2, 31b–32a

[3] A : तन्मन्त्रमुद्दिष्टं

[4] A : मानसं परिकीर्तितम्

[5] E : मानसस्नानमेवं स्यात्

[6] Cf. *Kāmikāgama*, I, 3, 106b-110a :
खरवायसगृध्रान्त्यजनश्वग्रामसूकरैः । कुक्कुटप्रेतभूसङ्गशावसूतकपातकैः ॥
शाक्यनिर्गन्थनिर्माल्यभोजकैरन्यलिङ्गिभिः । अन्यैश्च निन्दितैः स्पृष्टो यदि स्नानं समाचरेत् ॥ . . .
छर्दितेऽभ्युदिते सूर्ये श्मश्रुकर्मणि मैथुने । दुःस्वप्ने दुर्जनस्पर्शे स्नानं षट्सु विधीयते ॥

Cf. *Somaśambhupaddhati*, I, 1, 34-36 :
कपोतकुक्कुटाद्यैश्च काककङ्कखरश्वभिः । ग्रामसूकरगृध्रोष्ट्रैर्म्लद्गुद्गुनाङ्गवैकृतैः ॥
श्मशानपतितप्रेतसूतिकामाल्यभोजकैः । तथान्यलिङ्गिभिः स्पर्शे वारुणं स्नानमाचरेत् ॥
शुक्रविण्मूत्रसंपर्के नाभेरूर्ध्वं करौ विना । वपने वमने तोयमवगाहेत शुद्धये ॥

[7] A : गृध्रकाकवळस्पृष्टे च खरोष्ट्र च घातके

[8] A : संस्पर्शे pour संस्पृष्टे

[9] A : ग्रामकुक्कुटजे तथा

[10] A : विरहाग्र्यसंस्पृष्टे ; E : वीरहामृतिसंस्पृष्टे

[11] E : निर्माल्येन तु

[12] E : स्नानं वारुणमाचरेत्

[13] E : विण्मूत्ररेतसां सर्गे

[14] A : दुर्भक्ते

[1]नाभेरूर्ध्वं करौ हित्वा यदङ्गं तु मलादिभिः । दुष्येत्तत्र [2]चरेत् स्नानं शेषं प्रक्षाल्य शुद्ध्यति ॥

[भस्मस्नाननिमित्तानि[3]]

सुप्त्वा भुक्त्वा जलं पीत्वा कृत्वा चावश्यकं व्रती । शय्यादाववसाने च भस्मस्नानं समाचरेत्
॥ १२२ ॥

[4]इत्यजिताख्ये महातन्त्रे [क्रियापादे] [5]स्नानविधिर्नाम

एकोनविंशः पटलः ॥

---

[1] A omet les *śloka* 121 et 122a [2] E : वपेत् pour चरेत्

[3] Cf. *Somaśambhupaddhati*, I, 1, 40-41 :

संध्यात्रये निशीथे च चर्यापूर्वावसानयोः । सुप्त्वा भुक्त्वा पयः पीत्वा कृत्वा चावश्यकादिकम् ॥
स्त्रियं नपुंसकं शूद्रं बिडालबकमूषिकान् । स्पृष्ट्वा तथा विधानेन चाग्नेयस्नानमाचरेत् ॥

[4] E : इत्यजिते स्नानविधिपटलः [5] A : स्नानविधिः विंशतितमः पटलः

## [ विंशः पटलः ]

### अर्चनाविधिः[1]

[ अर्चनाप्रशंसा[2] ]

अथ नित्यार्चनं वक्ष्ये सर्वसिद्धिप्रदं[3] नृणाम् । सर्वपापहरं चैव सर्वयज्ञोत्तमोत्तमम् ॥ १ ॥

[ आत्मार्थपूजा परार्थपूजा च[4] ]

आत्मार्थं च परार्थं च [5]यजनं द्विविधं स्मृतम् । [6]दीक्षितो गुरुणा तेन [7]दत्तं लिङ्गं चलात्मकम् ॥

गृहीत्वा तत्र वान्यत्र क्षणिके [8]स्थण्डिलेऽथवा । [9]जले वा प्रतिमायां वा मण्डले चित्रकेऽपि वा ॥

[10]पटे वा हृदये वाथ भवेदात्मार्थमर्चनम् । [11]शिवलिङ्गे स्वयंभूते लिङ्गे बाणार्चितेऽपि वा ॥ ४ ॥

[12]गाणपे दैविके वाथ चार्षे वा[13] मानुषेऽपि वा । [14]मुखलिङ्गेषु सर्वेषु व्यक्तेष्वपि जनार्दन ॥ ५ ॥

---

[1] Pour अर्चनाविधि voir *Aṃśumadāgama, ātmārthapūjāvidhi, Acintyaviśvasādākhya* 12 et 13, *Kāmika* I, 4 et 5, *Kāraṇa* I, 15, 30 et 31, *Kiraṇa* II, 2, *Cintya* 6, 7 et 8, *Dīpta* 23 et 26, *Makuṭa* 3 et 4, *Mataṅgapārameśvara, kriyāpāda* 29, *Mṛgendra* II, 3, *Yogaja* 6, *Raurava* II, 10, *Vīra* 38, *Sahasra* 4, *Suprabheda* I, 7 et 8, *Sūkṣma* 4, 5, 9 et 45 et *Svāyambhuva* 7 et 8.

[2] Cf. *Kāraṇāgama*, I, 30, 1-2a :
वक्ष्ये नित्यार्चनं पुण्यं शुभदं पापनाशनम् । महापातकदोषघ्नं सर्वयज्ञफलप्रदम् ॥
आत्मार्थं च परार्थं च पूजा द्विविधमुच्यते ।

cf. *Suprabhedāgama*, I, 8, 1-2 :
अथातः संप्रवक्ष्यामि शिवार्चनविधिक्रमम् । सर्वपापहरं दिव्यं सर्वलोकसुखावहम् ॥
श्रीप्रदं सर्वविघ्नघ्नं राज्ञां राष्ट्रविवर्धनम् । तदपि द्विविधं प्रोक्तमात्मार्थं च परार्थकम् ॥

cf. *Kāmikāgama*, I, 4, 1 :
अथार्चनविधिं वक्ष्ये भुक्तिमुक्तिफलप्रदम् । परार्थं स्वार्थमित्येव द्विविधं तत्प्रकीर्तितम् ॥

[3] C, E : सर्वसिद्धिकरं

[4] Cf. *Kāraṇāgama*, I, 30, 2b-3a :
दत्ते च गुरुणा लिङ्गे स्थण्डिले स्वयमात्मनि । क्षणिके मण्डले तोयेऽप्यात्मार्थयजनं स्मृतम् ॥

cf. *Suprabhedāgama*, I, 8, 3 :

क्षणिके चललिङ्गे च स्थण्डिले मण्डलेऽपि च । कौतुके भित्तिचित्रे वा आत्मार्थेऽर्चनमारभेत् ॥

cf. *Kāmikāgama*, I, 4, 2 :

दीक्षान्ते गुरुणा दत्ते लिङ्गे वा स्थण्डिलादिके । यजनं स्वार्थमाख्यातं स्वस्येष्टफलदं यतः ॥

cf. *Kāraṇāgama*, I, 30, 12 :

सर्वेषामात्मरक्षार्थमिष्टलिङ्गार्चनं गृहे । आत्मार्थमिति विख्यातम्"

voir aussi *Mṛgendrāgama*, II, 3, 56b-58

cf. *Kāmikāgama*, I, 4, 3-5 :

ग्रामखेटपुरादौ वा नद्यां पर्वत एव वा । अष्टषष्टिमहाक्षेत्रेष्वन्यत्र च मनोरमे ॥
स्वयम्भूदैवबाणार्षलिङ्गयुक्ते शिवालये । मनुजैः स्थापिते लिङ्गे परार्थयजनं स्मृतम् ॥
नृपनेरायुरारोग्यजयसम्पद्विवृद्धये । ग्रामादीनां विवृद्ध्यर्थं परार्थेज्या प्रयुज्यताम् ॥

cf. *Kāraṇāgama*, I, 30, 10-11 :

सर्वेषां रक्षणार्थाय ग्रामादिषु विशेषतः । स्थापितं विधिना लिङ्गं सुरैर्वा मुनिभिर्नरैः ॥
स्वयमुद्भूतलिङ्गं च प्रतिमा चेश्वरात्मिका । तत्परार्थं समाख्यातं सर्वेषामात्मनः फलम् ॥

[5] C, E : द्विविधं यजनं स्मृतम्

[6] C : दक्षिणो

[7] C : दत्तलिङ्गं pour दत्तं लिङ्गं

[8] E : स्थण्डिलेऽपि वा

[9] A omet les demi-*śloka* 3b et 4a

[10] A : पादे pour पटे

[11] Cf. *Kāraṇāgama*, I, 30, 14-16 :

स्वयंभूः स्वयमुत्पन्नं देव्यर्चनं तु दैविकम् । दिव्यं देवार्चनं चैव ऋषिपूजितमार्षकम् ॥
मानुषैः स्थापितं लिङ्गं मानुषं परिकीर्तितम् । असुरै राक्षसैः पूज्यमासुरं राक्षसं भवेत् ॥
बाणं नाम जलं प्रोक्तं तज्जातं बाणलिङ्गकम् । बाणेन पूजितं लिङ्गं बाणलिङ्गमिहोच्यते ॥

[12] A : गाणवे

[13] A : आर्षे वा ; E : आर्षके

[14] C : ग्रामादिष्वविशेषेण युक्तेष्वपि ; E : ग्रामादिषु विशेषेण युक्तेषु हि

प्रासादादिषु सर्वत्र स्थापितेषु बहुष्वपि । राज्ञा वा राजकल्पैर्वा [1]जनैर्जानपदैस्तु वा ॥ ६ ॥
अनुभूय कृतां वृत्तिं क्रियते [2]यद्यदर्चनम् । तत्परार्थमिति प्रोक्तमन्येषां [3]फलदानतः ॥ ७ ॥

[ आत्मार्थ-परार्थपूजास्वधिकारिणः[4] ]

शिवाश्रितस्य तत्प्रोक्तं ब्राह्मणस्य शिवागमे । [5]क्षत्रियादित्रयाणां च बाह्यानां न परार्थकम् ॥ ८ ॥
सवर्णाद्यनुलोमानां [6]प्रोक्तमात्मार्थमुच्यते[7] । द्वयोः परार्थयजनं शृणु वक्ष्ये जनार्दन ॥ ९ ॥

[ पूजाभेदाः[8] ]

भवेदष्टप्रकारं [9]तत् [10]प्रकारस्त्वधुनोच्यते । उत्तमत्रितयेनाथ मध्यमत्रितयेन च ॥ १० ॥

---

[1] A : जनैर्जनपदैस्तु [2] A : द्वयर्चनं तु यत् pour यद्यदर्चनम् [3] C : फलदा यतः ; E : फलदं यतः

[4] Cf. *Kāmikāgama*, I, 4, 6-10 :
परार्थयजनं कार्यं शिवविप्रैस्तु नित्यशः । धार्मिकः कथ्यते नित्यमादिशैवो द्विजोत्तमः ॥
अन्ये तु स्वार्थकादन्यत् कुर्युश्चेत्कर्तृनाशनम् । शिवसृष्टिं विना ये तु जायन्ते ब्रह्मणो मुखात् ॥
ते सामान्या न तेषां तु परार्थेज्याधिकारिता । यदि मोहेन कुर्वीरन् राज्ञो राष्ट्रस्य नाशनम् ॥
भृत्यर्थं ये शिवं विप्राः सामान्यास्त्वर्चयन्ति चेत् । षण्मासात्पतनं यान्ति तस्मात्तान् परिवर्जयेत् ॥
शिवदीक्षाभिषिक्तस्य शिवविप्रस्य धीमतः । शिवाज्ञावशतस्तस्य परार्थेज्या न दोषभाक् ॥
cf. *Kāraṇāgama*, I, 30, 17-18 :
विप्रक्षत्रियविट्छूद्रा दीक्षिताश्च प्रवेशकाः । आत्मार्थयजनं कुर्यान्न कुर्याच्च परार्थकम् ॥
आत्मार्थं च परार्थं च स्वादिशैवेन पूजितम् । आदिशैव इति प्रोक्तः स शिवब्राह्मणो गुरुः ॥
cf. *Suprabhedāgama*, I, 8, 14 .
दीक्षितानां द्विजातीनामात्मार्थमनुलोमिनाम् । परार्थमादिशैवानामात्मार्थं वा समर्चयेत् ॥
cf. *Aṃśumadāgama, ātmārthapūjāvidhi*. 3b-4 :
शिवविप्रेण कर्तव्यमात्मार्थं च परार्थकम् । विप्रक्षत्रियवैश्याश्च शूद्राश्चैव तु दीक्षिताः ॥
आत्मार्थमर्चनं कुर्यान्न कुर्यात्तु परार्थकम् ॥

[5] A : क्षत्रियाणां च वर्णानां अर्चना तु प्रकारार्थकम ।; C : .... .. ...... नोऽर्चनं तु परार्थकम् ।

[6] C, E : उक्तम् pour प्रोक्तम् [7] E : आत्मार्थपूजनम् pour आत्मार्थमुच्यते

[8] Cf. *Kāmikāgama*, I, 5, 1-4 :
अर्चनाङ्गविधिं वक्ष्ये संध्यालक्षणपूर्वकम । भास्करोदयमारभ्य यावद्वै भास्करोदयम ॥
सप्तार्धघटिकामानो यामोऽयं संधिरुच्यते । षड्युच्छ्वासो भवेत्प्राणः षट्प्राणो घटिका भवेत् ॥
घटिकाषष्ट्यहोरात्रमष्टसंध्यं तदुच्यते । अष्टसंध्यासु या पूजा सा भवेदुत्तमोत्तमा ॥
सप्तषड्भूतवेदाग्नियुग्मेन्दुप्रहरेषु च । यामार्धकालसंवृत्ता पूजा नवविधा भवेत् ॥
cf. *Kāraṇāgama*, I, 31, 5-8a :
सार्धेन नाडिकाः सप्त यामं तत्संधिरुच्यते । संधयोऽष्टौ समाख्यातास्त्वहोरात्रं प्रजापते ॥
यजनं प्रतियामं तु उत्तमं त्विति कीर्तितम् । उदये चैव मध्याह्ने प्रदोषे चार्धयामके ॥
यजनं मध्यमं मध्ये उदयेऽस्तमनेऽधमम् । परार्थे त्वेषु कालेषु पूजयेत्तु विशेषतः ॥
द्विकालमेककालं वा आत्मार्थयजनं स्मृतम ।

[9] C, E : यत् तत्प्रकारमथोच्यते [10] A : प्रकारमधुनोच्यते

अधमद्वितयेनापि पूजैषा ह्यष्टधा स्मृता ।

[ उत्तमोत्तमा पूजा[1] ]

[2]अह्नि यामचतुष्के तु प्रतियामं विशेषतः ॥ ११ ॥

निशि यामचतुष्के च प्रतियामकृतार्चना[3] । यथोक्तविधिना पूजा सा भवेदुत्तमोत्तमा ॥ १२ ॥

[ उत्तममध्यमा[4] ]

दिवा [5]यामचतुष्केषु पूजनं च विशेषतः । [6]रात्रौ च त्रितये कुर्याद्यार्चा सोत्तममध्यमा ॥ १३ ॥

[ उत्तमाधमा[7] ]

[8]अह्नि संधिचतुष्केषु रात्रिसंधिद्वयेऽपि च[9] । [10]षट्संधिषु कृता पूजा सा भवेदुत्तमाधमा ॥ १४ ॥

[ मध्यमोत्तमा[11] ]

प्रातर्मध्याह्नसायेषु रात्रौ [12]यामे द्वितीयके । चतुर्थे [13]च कृता पूजा सा भवेन्मध्यमोत्तमा[14] ॥ १५ ॥

---

[1] Cf. *Cintyāgama*, 6, 1b-2a et 5a :
अष्टयामं भवेन्नित्यमुदयाद्युदयान्तकम् । अष्टसंधि यजेच्छम्भुं क्रमाद्यामं प्रति प्रति ॥ . .
वरसिद्धान्तपूजेति उत्तमोत्तममिष्यते ।

[2] A : अग्निश्चतुष्कयामे तु ; C : अह्नी चतुष्कयामे ; E : अहश्चतुष्कयामे

[3] C, E : प्रतियामं कृतार्चनम्

[4] Cf. *Cintyāgama*, 6, 5b-6a :
यामेषु सप्तमं त्यक्त्वा सप्तयामेषु पूजनम् । मुनिसिद्धान्तकं प्रोक्तमुत्तमे मध्यमं भवेत् ॥

[5] A : . . . चतुर्थेषु ; C, E : यामचतुर्थे च

[6] C : रात्रौ त्रितयं क्रियते सार्चा सोत्तममध्यमा ; E : रात्रौ त्रियामं कुरुते सार्चा चोत्तममध्यमा

[7] Cf. *Cintyāgama*, 6, 6b-7a :
चतुर्थं सप्तमं त्यक्त्वा यामान्यकप्रपूजनम् । गणसिद्धान्तकं प्रोक्तमुत्तमे कन्यसं भवेत् ॥

[8] C : अभिसन्धिचतुष्केषु ; E : अहस्सन्धिचतुष्के तु

[9] A, C, E : द्वितीयके pour द्वयेऽपि च

[10] C : षट् बन्धौ च कृता ; E : षट्सन्धौ च कृता

[11] Cf. *Cintyāgama*, 6, 7b-8 :
सर्वसिद्धान्तयजनाच्छ्रुत्वा मध्योत्तमादयः । प्रातर्मध्याह्नरात्रौ चार्धयामान्त्ययामकम् ॥
पञ्चसंधि यजेन्नित्यं मध्यमोत्तममुच्यते ॥

[12] A : यामद्वितीयके

[13] A : वा pour च

[14] E ajoute प्रातर्मध्याह्नसन्धौ च रात्रौ यामद्वये तथा । चतुर्यामे कृता पूजा सा स्यान्मध्यममध्यमा ॥

[ मध्यममध्यमा[1], मध्यमाधमा[2] च ]

अर्धयामार्चनाहीना सा भवेन्मध्यमध्यमा[3] । प्रातर्मध्याह्नसायेषु[4] [5]या पूजा मध्यमाधमा ॥१६॥

[ अधमोत्तमा,[6] अधममध्यमा[7] ]

प्रातःकाले च साये च या पूजा [8]साधमोत्तमा । [9]एकधा तु कृता पूजा सा स्यादधममध्यमा[10] ॥

[ अधमाधमा[11] ]

[12]अधमाधमपूजा च [13]नैव लिङ्गेषु दृश्यते । तस्मादष्टप्रकारोऽयमिति [14]तन्त्रे विनिश्चितः॥१८॥

---

[1] Cf. *Cintyāgama*, 6, 9 :
प्रातर्मध्याह्नरात्रौ च निशान्तं संधिमेव तु । मध्यमे मध्यमं प्रोक्तं चतुःसंध्यमिहोच्यते ॥

[2] Cf. *ibid*, 6, 10a :
प्राग्रात्रौ च निशान्ते तु त्रिसंध्यं मध्यमाधमम् ।

[3] C, E : मध्यमाधमा

[4] E : सायाह्ने pour सायेषु

[5] A : सा pour या

[6] Cf. *Cintyāgama*, 6, 10b :
प्राता रात्रौ द्विसंधी च यजनं कन्यसोत्तमम् ।

[7] Cf. *ibid.*, 6, 11a :
एकसंधि यजेन्नित्यं कन्यसे मध्यमं भवेत् ।

[8] C, E : चाधमोत्तमा

[9] C, E : एकया pour एकधा

[10] E ajoute यत्र कुत्र कदाचित्स्यात्सा भवेदधमाधमा

[11] Cf. *Cintyāgama*, 6, 11b-12a :
नित्यपूजां विना यच्च पुण्यऋक्षेषु पूजनम् । अधमाधममित्युक्तम् "

[12] A : अधमस्याधमा पूजा ; C, E : अधमादधमा पूजा

[13] C : जान्वै pour नैव

[14] C : तन्त्रेण निश्चितः ; E : तन्त्रेषु निश्चितम्

[ त्रिविधा पूजा[1] ]

शुद्धा मिश्रा [2]च संकीर्णा त्रिविधा सात्र कथ्यते । शुद्धा हविःप्रदानान्ता मिश्रा नित्योत्सवान्तका॥
संकीर्णा शुद्धनृत्तान्ता [3]तासु पूजासु [4]सर्वदा । प्रातर्मध्याह्नसायेषु या पूजा क्रियते जनैः ॥२०॥
तां मिश्रां तु प्रकुर्वीत [5]संकीर्णां वा विशेषतः । संपत्तावपि सर्वासु [6]चोपसंध्यासु [7]सर्वदा ॥२१
मिश्रसंकीर्णयोः प्राप्तिर्नेष्यतेऽत्र जनार्दन । तासु [8]शुद्धैव पूजा स्यादिति शास्त्रस्य निश्चयः ॥२२

---

[1] Cf. *Suprabhedāgama*, I, 7, 1b-3 :
पाद्यमाचमनं चार्घ्यं गन्धं पुष्पं च धूपकम् । दीपं चैव निवेद्यं च लिङ्गनृत्तं दशैव तु ॥
दशाङ्गैस्तु समायुक्ता पूजा श्रेष्ठा शिवस्य तु । दीपान्तमर्चनं प्रोक्तं नैवेद्यान्तं तु पूजनम् ॥
शान्तिकं बलिनृत्तान्तं पूजा त्रिविधमुच्यते ।
cf. *Kāraṇāgama*, I, 30, 405b-415a :
अर्चना नवधा सम्यक् पूजयेत्तु विशेषतः । दीपान्तं तु निवेद्यान्तं बल्यन्तं कन्यसत्रयम् ॥
होमान्तमुत्सवान्तं तु स्तोत्रान्तं मध्यमत्रयम् । सौख्यान्तं चुलुकोदान्तं प्राणाग्निहोत्रमेव च ॥
उत्तमत्रयमाख्यातं सा पूजा फलदायका । दीपान्तमर्चनं प्रोक्तं निवेद्यान्तं तु पूजनम् ॥
बल्यन्तं शान्तिदं प्रोक्तं फलं वै कन्यसत्रयम् । होमान्तं विजयं प्रोक्तमुत्सवान्तं तु शान्तिकम् ॥
स्तोत्रान्तं पौष्टिकं प्रोक्तं फलं वै मध्यमत्रयम् । सौख्यान्तमुत्तमं विद्धि चुलुकान्तं श्रियावहम् ॥
प्राणाग्निहोत्रं सफलं त्रिविधं परिभाष्यते । साङ्गोपाङ्गं च प्रत्यङ्गं पूजयेत् त्रिविधं स्मृतम् ॥
स्नानतोयं च पाद्यं च तथा चाचमनीयकम् । वस्त्रनाभरणं चैव सुगन्धलेपनं तथा ॥
अर्घ्यं च मन्त्रपुष्पं च साङ्गं चेति प्रकीर्तितम् । उपाङ्गं गन्धधूपं स्यात्सायरक्षा तु भस्मना ॥
छत्रचामरकं चैव दर्पणं दर्शयेत्ततः । नृत्तगेयसमायुक्तमुपाङ्गं चेति कीर्तितम् ॥
नैवेद्यं बलिदानं च होमं नित्योत्सवं तथा । चुलुकोदं च प्रत्यङ्गं त्रिविधं समुदाहृतम् ॥
cf. *Dīptāgama*, 26, 1b-4a :
स्नानं वस्त्रं च गन्धं च पुष्पं चैव यथाक्रमम् । पाद्यमाचमनं चार्घ्यं धूपदीपं निवेद्यकम् ।
बलिं नित्योत्सवं चैव शुद्धनृत्तं तथैव च । गीतवाद्यसमायुक्तं पञ्चाधिकदशं भवेत् ॥
दीपान्तमर्चनं प्रोक्तं हविर्यान्तं तु पूजनम् । बल्यन्तं शान्तिकं प्रोक्तं नृत्तान्तं सर्वसिद्धिदम् ॥
cf. *Makuṭāgama*, 3, 32-34a :
पाद्यमाचमनं चार्घ्यं गन्धं पुष्पं च धूपकम् । दीपं चैव निवेद्यं च अष्टाङ्गं संप्रकीर्तितम् ॥
अष्टाङ्गेन समायुक्तं पूजयेद्धि महेश्वरम् । अर्चनाद्यं तु दीपान्तं पूजान्तं तु हविस्सकम ॥
शान्तिकं चैव बल्यन्तं पूजा त्रिविधमुच्यते ।

[2] C, E : तु pour च

[3] E : सुपूज्या स्युर्भवेद्यथा pour तासु पूजासु सर्वदा

[4] C : सर्वथा pour सर्वदा

[5] A, C : संकीर्णे pour संकीर्णां

[6] C : सायं संध्यासु ; E : सोपसंध्यासु

[7] C, E : सर्वथा pour सर्वदा

[8] C, E : श्रद्धैव pour शुद्धैव

[ महासंध्या, उपसंध्या च ]

[1]सूर्योदयात्समारभ्य [2]यावद्यामं तु या कृता। पूर्वसंध्येति [3]सा प्रोक्ता [4]महासंध्या च सा भवेत्॥
[5]तदूर्ध्वे [6]चार्धयामेन या पूजा तु [7]समर्पिता। [8]सोपसंध्येति विज्ञेया [9]मध्याह्ने यामतः कृता॥२४
मध्याह्नसंध्या सापि स्यान्महासंध्येति नामतः। तदूर्ध्वे चार्धयामेन या पूजा तु [10]समर्पिता॥
सापि स्यादुपसंध्यैव [11]चाह्नि यामचतुष्टये। महासंध्याद्वयं प्रोक्तमुपसंध्याद्वयं ततः ॥ २६ ॥
रात्रौ चास्तं समारभ्य [12]यावद्यामान्तमर्पिता। पूजा [13]सापि महासंध्या [14]ह्यर्धयामं ततो भवेत्॥
ततश्चाप्यर्धयामेन तृतीयां परिकल्पयेत्। पञ्चनाडिकया पश्चाच्चतुर्थी[15] परिकल्पयेत्॥ २८॥
नाडिकापञ्चकं[16] प्रोक्तमुदयात्पूर्वमेव हि। रात्रौ [17]महती संध्या या भवेदेका ततो हरे॥२९॥
[18]त्रिसंध्याश्चोपसंध्याः स्युरेवं [19]पूजाक्रमो भवेत्। विभवे सति पूजासु [20]क्रम एष उदाहृतः॥३०॥
एवमष्टविधेष्वेषु[21] यजनेष्वेकमाश्रयेत्। यत्र [22]लिङ्गे यथा पूजा क्रियते विधिना पुरा॥ ३१॥
[23]तस्मिञ्ज्ञाते तु वैकल्ये [24]प्रायश्चित्तं विधीयते। इति विज्ञाय यत्नेन विधिनैव समर्चयेत्॥३२॥

---

1 C, E : सूर्योदयं pour सूर्योदयात्
2 C : यावद्यामां pour यावद्यामं
3 C : या pour सा
4 C : महासन्ध्या pour महासंध्या
5 C omet les demi-*śloka* 24 et 25a
6 E : चार्धयामे च pour चार्धयामेन
7 A : समाहृता
8 A : सोपसन्ध्येति
9 E : तदूर्ध्वे pour मध्याह्ने
10 E : समर्पिता
11 A : अग्नि pour चाह्नि ; C, E : अह्नि
12 E : यावद्यामं तु या कृता
13 A : यापि ; C : चापि
14 A omet हि dans ह्यर्धयामं
15 A : चतुर्थ : E : चतुर्थी
16 A : पञ्चमं pour पञ्चकं
17 A : महत्त्रिसंध्यायां भवेदेकान्ततो हरे ; C : महति संध्याया पदेका महतो हरे ; E : महितसंध्यायां भवेदेका ततो हरे
18 C, E : तिस्रश्चाप्युपसन्ध्याः स्युर्
19 A, C, E : पूजाक्रमं pour पूजाक्रमो
20 A : क्रममेवमुदाहृतम् ; E : क्रमेणाद्यमुदाहृतः
21 A : विधेष्वेव pour विधेष्वेषु
22 A : लिङ्गं pour लिङ्गे
23 A : तस्माद् pour तस्मिन्
24 C, E : प्रायश्चित्तो

हृदि संहृत्य तत्रस्थं [1]सान्तबीजमयं हृदा । स्मृत्वा [2]संपुटितं जीवं तनुं पुर्यष्टकान्वितम्[3] ॥४५॥
[4]हुंकारस्य [5]शिखान्तस्थं सूक्ष्ममात्मानमव्ययम् । कृत्वा कुम्भकमूर्ध्वे तं रेचकेन प्रवर्तयेत् ॥४६॥
[6]रन्ध्रैस्तैस्तु पुरा प्रोक्तैर्हुंकारोद्धात[7]मन्त्रतः । ततः [8]शिवे शिखाग्रे तु शुद्धस्फटिकसंनिभे॥४७॥
[9]द्वादशाङ्गुलमात्रस्थे ताररूपे निवेशयेत् । ध्यात्वा देहं स्वकं पश्चाद्दहेद्वै[10] तनुरोमतः ॥ ४८ ॥
[11]अग्निमण्डलमध्यस्थज्वालामालानुसन्ततैः[12] । [13]पादाङ्गुष्ठं समारभ्य मस्तकान्तं च मन्त्रवित्॥४९॥
[14]दग्धनिःशेषपापत्वाद्विमलीकृतमुज्ज्वलम् । सितभस्ममयं ध्यात्वा भूतशुद्धिं समारभेत् ॥ ५०

[शरीरशुद्धिः, अथवा भूतशुद्धिः[15]]

पञ्चभूतसमारब्धं[16] शरीरं सर्वदेहिनाम् । तस्मात्तेषु कृता [17]शुद्धिर्भूतशुद्धिरिति स्मृता ॥ ५१ ॥

---

[1] C, E : सान्तं बीजमयं
[2] A : सूचितजीवं तु pour संपुटितं जीवं
[3] A : अश्वितम् pour अन्वितम्
[4] A : ह्रींकारस्य
[5] C : शिवान्तस्थं
[6] A : रन्ध्रसैतु pour रन्ध्रैस्तैस्तु ; E : रन्ध्रस्तेन
[7] A : उद्घाट pour उद्धात
[8] A : शिवशिवाग्रे तु ; E : शिवे शिवाग्रे तु
[9] A : शिखाग्रे द्वादशान्तस्थे
[10] C, E : महद्वै pour दहेद्वै
[11] A : अग्निमण्डलमध्यस्थां ज्वालामालानुसन्ततनाम्
[12] E : सन्ततान् pour सन्ततैः
[13] Cf. *Mṛgendrāgama, kriyāpāda*, 3, 4-5 :
[14] C : दग्धं pour दग्ध
[15] Cf. *Kāmikāgama*, I, 4, 61b-76 :

पञ्चतत्त्वक्रमाद्वक्ष्ये शोधनं देहशुद्धये । निवृत्तिश्च प्रतिष्ठा च विद्या शान्तिश्च नाभसी ॥
एताः कलास्ताभिरेव व्याप्तं सर्वमिदं जगत् । मन्त्राः पदानि वर्णैश्च व्याप्तानीह समन्ततः ॥
वर्णास्तु भुवनैर्व्याप्तास्तत्त्वव्याप्तानि तानि तु । कलाभिस्तानि तत्त्वानि व्याप्तानीह कलाः क्रमात् ॥
शोधनीया विभाव्यैवं पञ्चपञ्चाध्वगर्भिताः । वर्णचिह्नाकृतिगुणैर्मन्त्रमन्त्रेशपूर्वकैः ॥
यद्ध्यानं प्रतिपर्वं तु प्राणायामसमन्वितम् । तदत्र धारणा प्रोक्ता विषनिर्हरणादिवत् ॥
पार्थिवं चतुरश्रं तु हेमाभं वज्रलाञ्छितम् । लबीजं ब्रह्मदैवत्यमजातहृदयात्मकम् ॥
निवृत्त्याख्यकलोपेतं ह्लामित्युद्धातपञ्चकम् । आप्यमिन्दुसिताब्जाङ्कं विष्णुदैवं वबीजकम् ॥
वामशीर्षसमायुक्तं प्रतिष्ठाकलयान्वितम् । युक्तं चतुर्भिरुद्धातैर्ह्लीमित्युच्चारपूर्वकम् ॥
अग्निस्त्र्यश्रं सप्तशिखं रक्ताभं रुद्रदैवतम् । रार्णाघोरशिखायुक्तं विद्याख्यकलयान्वितम् ॥
युक्तं तत्त्रिभिरुद्धातैर्ह्लूमित्युच्चारसंयुतम् । वायव्यं रसकोणं तु विन्दुषट्कमथासितम् ॥
ईशाधिपत्यं यार्णं तत्पुरुषकवचैर्युतम् । शान्त्या युक्तं द्विरुद्धातैर्ह्लैमित्युच्चारपूर्वकम ॥
आकाशं वर्तुलं व्यक्तलाञ्छनं धूम्रवर्णकम् । सदेशाधिष्ठितं हार्णमीशास्त्रातीतसंयुतम् ॥
एकोद्धातेन ह्लौमुक्त्वा यथास्थानं प्रयोजयेत् । पार्थिवं हृदयस्थानमाप्यं कण्ठगतं भवेत् ॥
वाह्नेयं तालुमूले तु भ्रूमध्ये वायुसंभवम् । ब्रह्मग्रन्थियुतं व्योमस्थानं यद्वान्यथा मतम् ॥
आजानु पृथिवी ज्ञेया नाभेराप्यं निगद्यते । अनलं कण्ठदेशात्तु वायुरामुखमण्डलात् ॥
तदूर्ध्वं गगनस्थानं धारणार्थं प्रकीर्तितम् ।

[16] A : समारब्ध pour समारब्धं
[17] A : शुद्धिर्देहशुद्धिरिति

[1]भूतांशानां शरीरेऽस्मिन्मिश्र[2]भावात्स्थितावपि[3] । [4]व्यवच्छेदस्थितिं तेषां शुद्ध्यर्थं परिकल्पयेत्॥
शुद्धिर्मन्त्रात्मिका [5]यस्मात्तस्मान्मन्त्रेण[6] शोधयेत् । [7]पृथ्व्यादिभिस्ततो बीजैः पञ्चभिश्च जनार्दन॥
हृदयं च शिरश्चैव शिखा कवचमेव च । अस्त्रं च क्रमशस्त्वेतान्संयोज्य सुसमाहितः ॥ ५४ ॥
[8]हुंफडन्तं ततस्तेषु पृथक्सर्वेषु योजयेत् । शोधयेत्पञ्चभूतानि स्मृत्वा तन्मण्डलादिकम्॥५५॥
[9]चतुरश्रं हरिद्राभं कठिनं वज्रलाञ्छितम् । निवृत्त्याख्यकलारूपं[10] परमेष्ठ्यधिदैवतम् ॥५६ ॥
[11]आजानु संस्थितं तच्च [12]मन्त्रोद्घातैश्च पञ्चभिः । विशोध्य [13]पार्थिवांशं तमाप्यशुद्धिरतः परम् ॥
चापाकारं सितं सौम्यं पद्मलाञ्छनलाञ्छितम् । प्रतिष्ठाशक्तिरूपं[14] तं विष्ण्वीशं तोयमण्डलम् ॥
आनाभि संस्थितं तच्च [15]चतुरुद्घाततः शुचिः । आग्नेयमण्डलं रक्तं [16]त्र्यश्रं स्वस्तिकलाञ्छितम् ॥
[17]क्रूरं विद्याकलारूपं[18] रौद्रमाकण्ठसंस्थितम् । [19]उद्घातैः शोधनं तस्य त्रिभिरेव[20] प्रकीर्तितम्॥६०॥

---

1 A : भूतांशास्तु pour भूतांशानां ; C, E : भूतांशे तु

2 C, E : मित्र pour मिश्र

3 A : स्थितामपि pour स्थितावपि ; E : स्थितानपि

4 A : व्यवच्छेदात् स्थितिं ; C : व्यवच्छेदास्थितं

5 E : या तु pour यस्मात्

6 A : तन्मन्त्रेणैव pour तस्मान्मन्त्रेण

7 A : पृथिव्यादिभिस्ततो ; C : हृद्यादिभिस्ततो ; E : हृदादिभिस्ततो

8 A : हुंफडन्तस्ततस्तेषु

9 E : चतुरश्रं च हेमाभं

10 A : आरूढं pour रूपं

11 A : आज्ञानुसंस्थितं

12 A : मन्त्रोद्धारैस्तु

13 A : पार्थिवं शान्तमाप्यशुद्धिर् pour पार्थिवांशं तमाप्यशुद्धिर्

14 A : रूढं pour रूपं

15 A : मन्त्रोद्धार ततः शुचिः

16 A : त्र्यश्रिनं स्वस्तिलाञ्छनम् ; C : त्र्यश्रुस्वस्तिकलाञ्छितम्

17 C : विद्याकलाख्यरूपं तु

18 A : आरूढं pour रूपं

19 E : उद्घातोत्सारणं तस्य

20 A : एवं pour एव

वायव्यं तु षडश्रं स्यात्कृष्णं षड्बिन्दुलाञ्छितम्[1] । चलं शान्ति[2]कलारूपमैश्वरं[3] च [4]ललाटके ॥
उद्घातद्वितयेनाथ[5] तस्य शुद्धिरुदाहृता । आकाशमण्डलं [6]वृत्तं पाण्डरं [7]शूललाञ्छितम् ॥६२॥
निर्मलं शान्त्यतीताख्यं सदाशिवाधिदैवतम् । [8]ललाटाद् द्वादशाङ्गुल्यामेकोद्घातस्ततः शुचिः ॥
[9]विशुद्धभूतजातेऽस्मिन् [10]देहे धातूंश्च शोधयेत् । त्वचोऽसृङ्मांसयोश्चैव [11]मेदसोऽस्थ्नस्ततः परम् ॥ ६४ ॥
मज्जायाः शुक्रकस्यापि [12]शुद्धिं भूरादिसप्तभिः । मन्त्रैः कुर्याच्छिरोवक्त्र[13]कण्ठहृद्गुह्यजानुषु ॥
[14]पादयोः संस्थितान्मत्वा[15] क्रमेणैव जनार्दन । एवं [16]शुद्धं शरीरं तत् [17]स्रवता परमामृतात् ॥६६॥
[18]ताररूपाच्छिवादस्मादमृतेनाथ पूरयेत् । ब्रह्मरन्ध्रप्रविष्टेन चन्द्रबीजं समुच्चरन् ॥ ६७ ॥
ततश्च [19]संस्मरेद्देहं विमलं भास्वरं तथा । [20]अकलङ्को यथा [21]पूर्णश्चन्द्रो नभसि निर्मले ॥६८॥
ईदृशीमनयोः शुद्धिं [22]कृत्वा देहात्मनोरपि । [23]शिवीभूते शरीरेऽस्मिञ्शिवीभूतस्य[24] देहिनः ॥
आसनं हृदि निष्पाद्य साष्टपत्रं सकर्णिकम् । [25]पद्मं तत्रस्थमात्मानमनामयमनाकुलम् ॥ ७० ॥

---

[1] A : कलान्वितम् pour लाञ्छितम्
[2] A : कलारूढम् pour कलारूपम्
[3] A : ऐश्वर्यं pour ऐश्वरं
[4] A : ललाटकम्
[5] C, E : एव pour अथ
[6] C : वृत्तपाण्डुरं
[7] E : व्यक्त pour शूल
[8] A : ललाटे द्वादशाङ्गुल्ये स्थिते कोद्घाततच्छुचिः ; E : ललाटाद्वादशाङ्गुल्यमेकेनोद्घाततः शुचिः
[9] C : विशुद्धिर्भूतजाते ; E : विशुद्धिभूतजाते
[10] A : देहयात्रं सुशोधयेत्
[11] A : मेदसोऽस्थि ततः परम् ; C : मेदसोस्रा ततः परम् ; E : मेदसो स्नाय्वतः परम्
[12] C, E : शुद्धिः pour शुद्धिं
[13] A : वक्त्रं pour वक्त्र
[14] C : पादेव pour पादयोः ; E : पादेषु
[15] A : मत्या pour मत्वा
[16] A : शुद्धिशरीरं
[17] Le mot स्रवता s'accorde avec अमृतेन (67a)
[18] C : ताररूपं शिवं तस्माद् ; E : तारकं तु शिवं तस्माद्
[19] A : संस्मरन् pour संस्मरेद्
[20] E : अकलं वा pour अकलङ्को
[21] A : पूर्णश्चन्द्राभे च सुनिर्मले ; C : पूर्णा चन्द्रो भवति निर्मले
[22] C, E : कृत्वात्मादेहयोरपि
[23] C, E : शुचीभूते
[24] C, E : शुचीभूतस्य
[25] A : पद्मं तत्र सनात्मानम् ; E : पद्मनन्तुस्थमात्मानम्

बीजरूपं समानीय [1]प्रस्फुरद्रश्मिमण्डलम् । व्योमस्थाद् द्वादशान्ताच्च [2]शिवरूपं निवेशयेत्॥७१॥
अमृतेनाभिषिच्यैनं [3]ताररूपं ततः शिवम् । वौषडन्तेन मूलेन कराभ्यां व्योमसंस्थितम्॥७२॥
आनीयामृतरूपं तमात्मतत्त्वोपरि न्यसेत् ।

[करन्यासः[4]]

करन्यासं ततः कुर्यात्तद्विधिश्चोच्यते मया ॥ ७३ ॥
[5]तलके हस्तपृष्ठे च गन्धचन्दनलेपिते[6] । परस्परावघर्षेण [7]सुधूपेन [8]प्रधूपिते ॥ ७४ ॥
शोधयित्वास्त्रमन्त्रेण[9] मूलेनैव [10]च देशिकः । हस्तयोः करशाखासु [11]पूर्वस्वङ्गुष्ठयोरपि ॥७५॥
[12]विन्यसेत्पञ्चमं पश्चात्पुरुषादिचतुष्टयम् । तर्जन्याद्यासु विन्यस्य कनिष्ठान्तासु च क्रमात् ॥
ततः कनिष्ठिकाद्यासु [13]पञ्चस्वङ्गुलिषु क्रमात् । हृदादिपञ्चकं [14]न्यस्य तलयोर्नेत्रमेव च॥७७॥
[15]स्थितिन्यासस्त्वयं प्रोक्तो विपरीता तु [16]संहृतिः । दक्षिणेतरयोः पश्चात्सूर्यसोमौ च हस्तयोः॥
तत्तन्मन्त्रेण विन्यस्य मध्यमाभ्यां परस्परम् । कवचेनावकुण्ठ्याथ[17] [18]करकच्छपिकां ततः॥७९॥
[19]मुद्रां कराभ्यामाबध्य करन्यासं समाप्य च । अङ्गन्यासं ततः कुर्यान्मन्त्रैरेतैर्जनार्दन ॥८०॥

---

[1] A : प्रस्फुरद्रश्मिमण्डलैः : E : प्रस्फुरद्ब्रह्मिमण्डलम् [2] A, C : शिवरूपात् pour शिवरूपं

[3] C : तारकूपं

[4] Cf. *Dīptāgama*, 23, 12-19a :
हस्तपृष्ठतलौ चैव शिवास्त्रेणैव शोधयेत् । शक्तिद्वयं शिवं चैव द्वयोः संकल्प्य हस्तयोः ॥
कृत्वा मन्त्रात्मकं कायमष्टत्रिंशत्कलामयम् । अङ्गुष्ठादि कनिष्ठान्तं सृष्टिन्यासमिति स्मृतम् ॥
कनिष्ठाद्यङ्गुष्ठान्तं यत् संहारन्यासमुच्यते । ईशानादि च सद्यान्तं सृष्टिन्यासमिदं परम् ॥
सद्यादीशानपर्यन्तं संहारकृत एव हि । दक्षिणाङ्गुष्ठमादि स्यात्कनिष्ठान्तं तथोत्तरे ॥
दशबीजं न्यसेद्विद्वान् स्थितिन्यासमिदं परम् । मध्यादि देशिन्यन्तं हि शिवाङ्गं विन्यसेत्क्रमात् ॥
नेत्रं हस्ततले न्यस्य अस्त्रं तर्जन्यां विन्यसेत् । दिव्याङ्गमेवं विन्यस्य शिवं पर्वणि विन्यसेत् ॥
गृहस्थः सृष्टिमार्गेण करन्यासं तु कारयेत् । सपत्नीको वनस्थश्चेत्संहारन्यासमाचरेत् ॥
करन्यासं समाख्यातम् ”

[5] A : तलिकौ हस्तपृष्ठौ च

[6] A : लेपितौ pour लेपिते

[7] A : सधूपेन

[8] A : प्रदीपितौ : C : प्रधूपितौ

[9] C, E : शोधयेत्वस्त्रमन्त्रेण

[10] C, E : स pour च

[11] A : पूर्वमङ्गुष्ठयोरपि

[12] A : विन्यासं pour विन्यसेत्

[13] A : पञ्चस्वाङ्गुलिषु क्रमात्

[14] E : न्यस्त्वा pour न्यस्य

[15] A : स्थितिन्यासमिदं प्रोक्तं विपरीतं तु संहृतिः

[16] C : संहृदि

[17] A : अन्तौ pour अथ

[18] A : करकश्चिपुकान्ततः ; E : करकश्चिबुकान्ततः

[19] C : रुद्रं pour मुद्रां ; E : रौद्रं

[अङ्गन्यासः[1]]

मूर्ध्नि वक्त्रे च हृद्देशे गुह्यदेशेऽथ पादयोः । ईशानादिक्रमेणैव विन्यसेत्पिण्ड[2]पञ्चकम् ॥८१॥
अङ्गुष्ठाग्रेण [3]मूर्ध्नीशं विन्यसेद्बद्ध[4]मुष्टिना । मुखे [5]तत्पुरुषं चैव [6]तर्जन्यङ्गुष्ठयोगतः ॥ ८२ ॥
मध्यमाङ्गुष्ठयोगेन हृद्यघोरं [7]ततो न्यसेत् । अङ्गुष्ठानामिकायोगाद् गुह्ये वामं च विन्यसेत् ॥८३॥
कनिष्ठाङ्गुष्ठयोगेन सद्योजातं तु पादयोः । [8]पिण्डमन्त्रैरयं प्रोक्तः कलामन्त्रैस्तथोच्यते ॥८४॥

[कलान्यासः[9]]

कलाः पञ्च [10]चतस्रश्च [11]ततोऽष्टौ च त्रयोदश । ततश्चाष्टौ [12]समादिष्टाः [13]कलाश्चेशादितः क्रमात् ॥ ८५ ॥

---

[1] Cf. *Cintyāgama*, 8, 50b-52 :
करन्यासावमाने तु अङ्गन्यासं समाचरेत् । हस्तयोस्तलकौ भ्राम्य अस्त्रमन्त्रेण च त्रिधा ॥
ईशानं मूर्ध्नि विन्यस्य मुखे तत्पुरुषं न्यसेत् । अघोरं हृदये न्यस्त्वा वामदेवं तु गुह्यके ॥
सद्यं च पादयोर्न्यस्त्वा ”

Cf. *Kāraṇāgama*, I, 30, 132b-134 :
“ अङ्गन्यासं ततः शृणु । मूर्धादि सृष्टिरत्रोक्तं पादादिः संहृतिर्भवेत् ॥
स्वमूर्ध्नि विन्यसेदीशं वक्त्रे वक्त्रं तु विन्यसेत् । न्यस्त्वाघोरं हृदि स्थाने वामं गुह्ये तु विन्यसेत् ॥
सद्यमन्त्रं न्यसेत्पादे ”

[2] A : पिण्डि pour पिण्ड [3] C : मूर्तीशं [4] A : बन्ध pour बद्ध [5] A : तत्पुरुषेणैव
[6] A : तर्जन्याङ्गुष्ठयोगतः [7] C, E : तथा pour ततो [8] A : पिण्डमन्त्रैरिदं प्रोक्तं

[9] Cf. *Makuṭāgama*, 4, 82b-94 :
ईशानस्य कलाः पञ्च पुरुषस्य चतुष्कलाः । अघोरस्य कलाश्चाष्टौ वामदेवे त्रयोदश ॥
अष्टौ सद्यकलाश्चैव अष्टत्रिंशत्कला इमाः । कलाभिस्तु कलाशक्तिन्यासं वक्ष्ये क्रमाच्छृणु ॥
शशिनी त्वङ्गदा चैव तथेष्टा च मरीचिका । ज्वालिनीति कलाः पञ्च क्रमादेताः प्रविन्यसेत् ॥
पूर्वे च दक्षिणे पश्चादुत्तरे पश्चिमे तथा । ऊर्ध्वं च मूर्धनीमानां स्थानपञ्चसु कथ्यते ॥
शान्तिर्विद्या प्रतिष्ठा च प्रधाना च सुपुष्कलाः । एताः पुरुषशक्तीस्तु चतुर्वक्त्रेषु विन्यसेत् ॥
पूर्वे च दक्षिणे चैव सौम्ये चैव तु पश्चिमे । तमा मोहा क्षया निष्ठा मृत्युर्मायाभया रजा ॥
एताः कलास्त्वघोरस्य हृदयादिषु विन्यसेत् । हृदये चैव कण्ठे च स्कन्धयुग्मे तथैव च ॥
उदरे चैव नाभौ च पश्चाद्भागे तथैव च । उरसीत्यष्टभिः स्थानैर्वक्ष्यते च यथाक्रमम् ।
रजा रक्षा रतिश्चैव पाली कामा च संयमा । कार्या बन्धा क्रिया धात्री भ्रामणी च तथा पुनः ॥
मोहिनी च भया वामे त्रयोदश कला इमाः । मेढ्रे गुदे च ऊर्वोश्च जान्वोश्चैव तु जङ्घयोः ॥
पश्चाज्जघनयोः कट्यां पार्श्वयोश्च क्रमान्न्यसेत् । सिद्धिर्ऋद्धिर्द्युतिश्चैव लक्ष्मीर्मेधा तथैव च ।
कान्तिः स्वधा स्थितिश्चैव सद्योजातकला इमाः । पादयोः करयोश्चैव स्तनयोः कक्षयोर्न्यसेत् ।
ध्यात्वा शिवमयं रूपमष्टत्रिंशत्कलामयम् ।

[10] C, E : च चत्वारः pour चतस्रश्च [11] E : तथा pour ततो
[12] C, E : समुद्दिष्टाः [13] A : कलाश्चेशादितः

शक्तयश्च तथैव स्युः स्थानानि च तथैव हि । [1]शशिनी चाङ्गदा [2]निष्ठा मरीची ज्वालिनी तथा ॥
[3]मूर्ध्नि मध्ये ततः पूर्वे दक्षिणोत्तरयोरपि । पश्चिमे च क्रमेणैव कलाभिः सह विन्यसेत्॥८७॥
[4]ईशानस्य कलाः पञ्च विन्यस्यैवमतः परम् । [5]शान्तिर्विद्या प्रतिष्ठा च निवृत्तिश्च क्रमेण वै ॥
पूर्वे च दक्षिणे वक्त्रे [6]चोत्तरे पश्चिमेऽपि च । एवं [7]तत्पुरुषस्यापि कलाभिः सह विन्यसेत् ॥
[8]तत्पुरुषकलान्यासे विशेषोऽत्र विधीयते । शान्त्यतीतकलायुक्तं प्रणवं चोर्ध्ववक्त्रके[9] ॥ ९० ॥
विन्यसेच्छिवलिङ्गे तु न शरीरे तदिष्यते । तमो मोहा [10]क्षुधा निद्रा मृत्युर्मायाभया जरा॥
[11]एता घोरकलाशक्तीर्हृदि [12]कण्ठेंऽसयोरपि । नाभौ कुक्षौ च पृष्ठे च वक्षस्यष्टकलायुताः॥९२॥
[13]विन्यस्याथ च वामस्य त्रयोदशकला अपि । शक्तिभिर्विन्यसेत्ताश्च क्रमेण कथयामि ते॥९३॥
रजो रक्षा [14]रतिः [15]पाली कामा संयमिनी क्रिया । [16]बुद्धिः कार्या [17]तथा [18]धात्री [19]भ्रामिणी मोहिनी तथा ॥ ९४ ॥
एताः क्रमेण गुह्येऽथ[20] मेढ्रे चोर्वोस्तथैव च[21] । [22]जान्वोश्च जङ्घयोश्चापि स्फिचोः [23]कट्यां तथैव च॥

---

[1] Pour des détails concernant le *kalānyāsa* voir *Rauravāgama*, vol. I, pp. 22-28, note 20, p. 25-28, et tableau "*Les noms des 38 kalā dans les textes*". Les noms des *kalā* inscrits sous *Ajita* dans ce tableau ont été pris dans le manuscrit A (KîLvelûr) qui était le seul à notre disposition à ce moment-là. Les autres manuscrits dont nous disposons maintenant, donnent des variantes qui semblent devoir être adoptées de préférence.

[2] C, E : अरिष्टा pour निष्ठा

[3] E : मूर्धमध्ये

[4] C omet les *śloka* 88 et 89

[5] A : शान्ति विद्यां प्रतिष्ठां च निवृत्तिं च

[6] A : पश्चिमे चोत्तरेऽपि च

[7] A : तत्पुरुषं चापि

[8] A : तत्पुरुषस्य कलान्यासे ; C : ततः पुरुषकलान्यासे

[9] A : मूर्धनि pour वक्त्रके

[10] E : रक्षा pour क्षुधा

[11] A : एते pour एताः

[12] C : कर्णे pour कण्ठे

[13] C, E : विन्यसेद्वामकलाः सर्वे त्रयोदशकला अपि

[14] A : यतिः pour रतिः

[15] A : पाल्या pour पाली

[16] A : सिद्धिः pour बुद्धिः

[17] Selon d'autres *āgama* il semble que le nom soit क्षया

[18] A : पत्री pour धात्री

[19] A : भ्रामिनी ; C : ग्रामणी ; E : ब्राह्मणी

[20] E : च pour अथ

[21] C, E : मेढ्रयोर्वास्तथैव च

[22] A omet ce demi-*śloka* 95b.

[23] C : कार्याः pour कट्यां

पार्श्वयोश्च[1] कलाभिस्तु विन्यस्याथ[2] कलाष्टकम् । सद्योजातस्य मन्त्रस्य शक्तिभिः सह विन्यसेत्॥
[3]सिद्धिर्ऋद्धिर्द्युतिर्लक्ष्मीर्मेधा कान्तिः स्वधा धृतिः । शक्तयस्तु [4]समुद्दिष्टाः स्थानानि [5]क्रमतः शृणु॥
[6]पादौ पाणी च नासा च [7]शिरो बाहू तथैव च । अष्टत्रिंशत्कला ह्येवं[8] [9]विन्यसेत्स्वस्वशक्तिभिः ॥

[अङ्गमन्त्रन्यासः[10]]

[11]निजया मुद्रया पश्चादङ्गान्यङ्गेषु[12] विन्यसेत् । हृदयं हृदि विन्यस्य शिरः शिरसि विन्यसेत् ॥
शिखायां तु शिखां न्यस्य कवचं च तथोरसि । नेत्रं [13]नेत्रद्वयोश्चापि विन्यसेदक्षराणि च[14] ॥

[अक्षरन्यासः[15]]

अकारं मूर्ध्नि विन्यस्य [16]चाकारं तु ललाटके । [17]भ्रुवोरिकारमीकारं दक्षिणेतरयोः [18]क्रमात् ॥१०१

[1] C, E : तु pour च
[2] A : अंश pour अथ
[3] E : सिद्धिऋद्धी द्युतिर्लक्ष्मीर् ; C : सिद्धिर्ऋद्धिर्दितिर्लक्ष्मीर्
[4] C : समादिष्टाः
[5] C, E : क्रमशः
[6] A omet पादौ
[7] A : शिरश्च pour शिरो
[8] C, E : कलाश्चैव pour कला ह्येवं
[9] C : विन्यस्य स्वस्वशक्तितः ; E : विन्यस्य स्वस्वशक्तिभिः
[10] Cf. *Cintyāgama*, 8, 52b-54a :
" हृदयं हृदयेऽपि च । शिरः शिरसि विन्यस्य शिखायां च शिखां न्यसेत् ।
हस्ताभ्यां विन्यसेद्धीमान् कवचं स्तनमध्ययोः । नेत्रं तु नेत्रयोर्न्यस्य दिग्बन्धं चास्त्रमन्त्रतः ॥
cf. *Kāraṇāgama*, I, 30, 134b-136a :
" ततस्त्वङ्गानि विन्यसेत् । हृदयं हृदये न्यस्य शिरः शिरसि विन्यसेत् ।
शिखायां तु शिखां न्यस्य कवचं स्तनमध्यतः । लोचने तु न्यसेन्नेत्रमस्त्रमस्त्रप्रदेशके ।
[11] C : निद्रया pour निजया
[12] E : अङ्गे तु pour अङ्गेषु
[13] E : नेत्रद्वये चापि
[14] C, E : अथ pour च
[15] Cf. *Makuṭāgama*, 4, 51-59a :
अकारं मूर्ध्नि विन्यस्य आकारं तु ललाटके । इकारं दक्षिणे नेत्रे ईकारं वामलोचने ॥
उकारं दक्षनासायामूकारं वामके पुटे । ऋकारं दक्षिणे कर्णे ॠकारं वामकर्णके ।
ऌकारं दक्षिणे गण्डे ॡकारं वामगण्डके । एकारमुत्तरोष्ठे स्याद् ऐकारमधरे तथा ॥
ओकारमूर्ध्वदन्ते तु औकारं दशनेष्वधः । अंकारं तालुमध्ये तु अःकारं तालुमस्तके ॥
कवर्गं दक्षिणे हस्ते चवर्गं वामहस्तके । टवर्गं दक्षिणे पादे तवर्गं वामपादके ॥
पफौ च दक्षिणे पार्श्वे बभौ वै वामपार्श्वके । मकारं नाभिदेशे तु यकारं त्वचि विन्यसेत् ॥
रेफं रक्तप्रदेशे तु लकारं मांसदेशके । वकारं मेदसो देशे शकारं चास्थिदेशके ॥
मज्जादेशे षकारं तु सकारं शुक्रदेशके । हकारः प्राण इत्युक्तो भ्रूमध्ये तु प्रविन्यसेत् ॥
ळकारं मेढ्रदेशे तु क्षकारं वृषणे न्यसेत् ।
[16] A: आकारं
[17] C : दृशोः pour भ्रुवोः ; E : नेत्रयोः
[18] C : अपि pour क्रमात्

[1]तथैवोकारमूकारं [2]नेत्रयोरथ विन्यसेत् । ऋकारं तस्य दीर्घं च नासिकापुटयोर्न्यसेत्॥१०२॥
[3]ऌकारद्वितयं तद्वद् दन्तपङ्क्त्योश्च विन्यसेत् । [4]उत्तरोष्ठे तथैकारमैकारमधरोष्ठके ॥ १०३ ॥
[5]ओकारं चाप्यथौकारं कर्णयोः स्यात्ततः परम् । [6]अंकाराःकारकौ चापि गण्डयोरथ विन्यसेत् ॥ १०४ ॥
कवर्गं दक्षिणे हस्ते चवर्गं च [7]तथोत्तरे । टवर्गमुदरे न्यस्य [8]तपवर्गौ [9]च पार्श्वयोः ॥ १०५ ॥
यवर्गं दक्षिणे [10]पादे शवर्गं वामपादके । [11]ळवर्णं हृदये [12]न्यस्य [13]मूलमन्त्रं च विन्यसेत्॥१०६
इति मन्त्राक्षरन्यासैः कृत्वा विद्यामयीं तनुम् । परमीकरणं कृत्वा महामुद्राप्रयोगतः ॥१०७॥
[14]प्ररोच्य तेजसा देहमात्मशुद्धिं समापयेत् ।

[स्थानशुद्धिः[15]]

ततः [16]स्थानविशुद्ध्यर्थं [17]नाराचास्त्रप्रयोगतः ॥१०८॥

---

[1] A : तथैवोंकार ऊकारो
[2] C : नेत्रयोश्चाथ ; E : कर्णयोश्चाथ
[3] C : ऌकारादिद्वयं तद्वद् ; E : ऌकारं च द्वितीयं तद्
[4] A : उत्तरेषु pour उत्तरोष्ठे
[5] A : ओंकारं चाप्यथौंकारं
[6] A : अकार अःकारकौ चापि
[7] C, E : तथैतरे
[8] E : तवर्गं चैव पार्श्वयोः
[9] A : तु pour च
[10] C, E : पादो pour पादे
[11] A : हवर्गं ; C, E : ळवर्गं
[12] C, E : न्यस्त्वा
[13] C, E : मूलं तत्रैव विन्यसेत्
[14] A : पुरोऽस्य pour प्ररोच्य
[15] Cf. *Makuṭāgama*, 4, 123b-127a :
" स्थानशुद्धिक्रमं शृणु । हस्तमात्रं खनेद्भूमिं तां मृद्भिः पूरयेत्क्रमात् ॥
सम्यक् परीक्ष्य बहुधा अस्थिलोष्टादि वर्जयेत् । समं भूमितलं कृत्वा प्रोक्षयेत्पञ्चगव्यतः ॥
वितानध्वजसंयुक्तं कदलीक्रमुकान्वितम् । दर्भमालासमायुक्तं मुक्तादामविभूषितम् ॥
पुष्पमालासमाकीर्णं प्रोक्षयेत्कुशवारिणा । स्थानशुद्धिक्रमः प्रोक्तः "
cf. *Kāraṇāgama*, I, 30, 142-146 :
शिवाग्रे स्थण्डिलं कृत्वा हस्तमात्रं तु देशिकः । आवाहयेत्ततो भूमिं सर्वाभरणभूषिताम् ।
द्विभुजां च द्विनेत्रां च करण्डमकुटान्विताम् । हेमयज्ञोपवीताढ्यां पीतनेत्रां सुयौवनाम् ॥
पीताभां पीतवस्त्रां च पुण्डरीकदलेक्षणाम् । कृताञ्जलिपुटोपेतां सनालोत्पलधारिणीम् ॥
सुप्रसन्नां भूमिदेवीं सर्वावयवसुन्दराम् । गन्धादिभिः समभ्यर्च्य हृदयेनैव मन्त्रतः ॥
अस्त्रेणैव तु मन्त्रेण दिग्विरेचनमारभेत् । स्थानशुद्धिरिति प्रोक्ता "
[16] A : स्थापनशुद्ध्यर्थं
[17] A : नानाचास्त्रप्रयोगतः

दिग्बन्धं पूर्वमापाद्य ततस्ताल[1]त्रयेण च । [2]परितस्तालमस्त्रेण कवचेनावकुण्ठनम्[3] ॥ १०९ ॥
कुर्याद्याग[4]गृहस्यैवं स्थानशुद्धिरुदाहृता ।

[अन्तर्यागः[5]]

अन्तर्यागं ततः [6]कुर्याद्धृदये च विधानतः ॥ ११० ॥
नाभौ होमविधानेन [7]ललाटे ध्यानयोगतः । द्रव्यशुद्धिं ततः कुर्यादथ तच्छुद्धिरिष्यते ॥

[द्रव्यशुद्धिः[8]]

[9]प्रक्षालितेषु पात्रेषु सर्वेष्वस्त्रप्रयोगतः । पाद्यस्याचमनीयस्य तथार्घ्यस्य च मन्त्रवित् ॥ ११२ ॥

---

[1] A : तालु pour ताल

[2] A : परितस्तालुमस्त्रेण ; C : परितस्तालमन्त्रेण ; E : परितस्तालमात्रेण

[3] A : अवगुण्ठनम् pour अवकुण्ठनम् [4] A : युग pour याग

[5] Cf. *Acintyaviśvasādākhya*, 12, 114b-121 :
अन्तर्यागं ततः कुर्याद्ध्यानपूजापुरःसरम् । भावनाद्यैश्च पुष्पाद्यैर्हृदम्भोजे शिवं यजेत् ॥
तन्नाभिकन्दात्संभूतं दलाष्टकसमन्वितम् । कर्णिकाकेसरैर्युक्तं सुषुम्नापार्श्वसंस्थितम् ॥
आधारशक्तिमारभ्य शक्त्यन्तं चासनं भवेत् । शिवासनं च मूर्तिं च विन्यसेन्नन्दिकेश्वर ॥
आवाहनादि बल्यन्तं मन्त्राणां तर्पणं तथा । भावद्रव्यैरहिंसाद्यैर्गन्धगत्या सुपूजयेत् ॥
सदाशिवस्वरूपे तु भक्तियुक्तो विशेषतः । पिङ्गलानाडिचारेण नाभिकुण्डे स्वकोदितम् ॥
शिवाग्निं पूजयेत्तत्र बहिर्यजनवत्क्रमात् । इडया पूरकाकृष्टसुधया च शिवाणुभिः ॥
द्वादशान्तामृतेनैव कर्तव्यं नन्दिकेश्वर । शरदिन्दुप्रतीकाशं बिन्दुरूपं महेश्वरम् ॥
ललाटदेशमध्यस्थं विमलं चिन्तयेत्सदा ॥

[6] A : कुर्याद्धृदयेन [7] C : ललाटध्यानयोगतः

[8] Cf. *Cintyāgama*, 8, 107-111a :
शरावं ताम्रपात्रादिजलभाण्डं च वर्धनीम् । पाद्यमाचमनं चार्घ्यपात्रं शङ्खादिकं क्रमात् ॥
क्षालयेच्च हृदा मन्त्री निरीक्ष्य घोरमन्त्रतः । शङ्खं वा वर्धनीं वापि पूरयेत्तु शिवाम्भसा ॥
पुष्पाक्षतं कुशाग्रं च प्रणवेन निधाय च । पिधाय दक्षहस्तेन ब्रह्माङ्गैरभिमन्त्रयेत् ॥
दर्शयेल्लिङ्गमुद्रां च सुरभिं चैव मुद्रिकाम् । प्रोक्षयित्वा हृदा सर्वान्पूजोपकरणादिकान् ॥
द्रव्यशुद्धिरियं प्रोक्ता ”

cf. *Dīptāgama*, 23, 25b-31a

पाद्यपात्रं शरावं च शङ्खमाचमनार्थकम् । वर्धनीं जलभाण्डं च पुष्पपात्रार्घ्यपात्रकम् ॥
क्षालयेद्गुरुर्मन्त्रेण हृदयेन निरीक्षयेत् । कवचेनावकुण्ठ्यापि तथैवोन्मीलनं कुरु ॥
शिवाम्भसा तु संपूर्य शङ्खं वै वर्धनीं तथा । तोयमध्ये न्यसेद्ब्रह्म पाणिमन्त्रं हृदा सदा ॥
निधाय दक्षिणं हस्तं व्योमव्यापि जगद्गुरुः । दर्शयेत्सुरभीमुद्रां शूलमुद्रां च दर्शयेत् ॥
पात्राणि च हृदा प्रोक्ष्य शङ्खतोयेन सर्वशः । क्षीरं दधिघृतादीनि गन्धपुष्पं च धूपकम् ॥
वर्धनीतोयमादाय प्रोक्षयेत्पुरुषेण तु । द्रव्यशुद्धिर्भवेदेवम् ”

[9] C, E : प्रक्षाल्य तेषु पात्रेषु

पात्राणि वस्त्रपूतेन पूरयेद्गन्धवारिणा । मन्त्रसंहितया तेषु तत्तद्द्रव्याणि निक्षिपेत् ॥ ११३ ॥
[1]प्रणवेनाभिमन्त्र्यैतन्मुद्रयेद्धेनुमुद्रया । [2]अवकुण्ठनमेतेषां कवचेनाथ कल्पयेत् ॥ ११४ ॥
गन्धपुष्पादिकं [3]यत्तद् द्रव्यं संप्रोक्ष्य [4]चास्त्रतः । अभ्युक्ष्य कवचेनाथ मन्त्रसंहितयालभेत्[5] ॥
द्रव्यशुद्धिर्विधातव्या[6] ;

[आत्मपूजा[7]]

स्वशिरस्यर्घ्यसेचनम् । कृत्वास्त्रेणाथ [8]मूलेन पुष्पमारोप्य मूर्धनि ॥ ११६ ॥
ललाटे तिलकं कृत्वा चन्दनेन सुगन्धिना । मन्त्रशुद्धिं[9] ततः कुर्यात्सच्छुद्धिरिह[10] कथ्यते ॥

[मन्त्रशुद्धिः[11]]

मौनी भूत्वा शिवं ध्यात्वा मूलमन्त्रादिकानणून्[12] । ओंकारदीपितान्सर्वान् [13]नादान्तान् सम्यगुच्चरेत् ॥ ११८ ॥

---

[1] A : प्रणवेनाभिमन्त्र्यैतान् ; E : प्रणवेनाभिमन्त्र्यैता मुद्रया धेनुमुद्रया
[2] A : अवगुण्ठन pour अवकुण्ठन
[3] C : व्यक्त pour यत्तद्
[4] E : शाश्वत: pour चास्त्रतः
[5] C : आददेत् pour आलभेत्
[6] A : द्रव्यशुद्धिविधानेन ; E : द्रव्यशुद्धिर्विधातव्यं
[7] Cf. *Somaśambhupaddhati*, I, 3, 41 :
"पुष्पं दत्त्वा निजासने । विधाय तिलकं मूर्ध्नि पुष्पं मूलेन योजयेत् ॥
cf. *Kāmikāgama*, I, 4, 221 :
आत्मानमर्चयेद्द्रव्यैरेवं भूतैर्यथाक्रमम् । तिलकं चन्दनं कृत्वा पुष्पं शिरसि विन्यसेत् ॥
[8] A : मूर्ध्नेन
[9] E : चिन्तां pour शुद्धिं
[10] C, E : अथ pour इह
[11] Cf. *Vīrāgama*, 38, 20-22 :
पञ्चमं मन्त्रशुद्धिं तु कारयेद्देशिकोत्तमः । पञ्चब्रह्मशिवाङ्गैश्च प्रासादेन समन्वितम् ॥
व्योमव्यापिसमायुक्तं विद्येश्वरांश्च एव च । गणेशान्लोकपालांश्च लोकपालास्त्रमेव च ॥
ओंकारमादितः कृत्वा नमस्कारान्तं योजयेत् । मन्त्रशुद्धिर्भवेदेवम् "
cf. *Dīptāgama*, 23, 36b-37 :
"मन्त्रशुद्धिं ततः शृणु । ओंकारदीपिता मन्त्रा नमस्कारान्तयोजिताः ॥
अर्चने तु प्रयोक्तव्या मन्त्राश्चामोघशक्तयः ॥
[12] C : मनून् pour अणून्
[13] C, E : प्लुतान्तान् pour नादान्तान्

[द्वारपूजा[1]]

मन्त्रशुद्धिं विधायैवं[2] द्वारदेवान्यजेत्ततः । सामान्यार्घ्यं गृहीत्वाथ सोष्णीषः सोत्तरीयकः ॥

लिङ्गाग्रे तु वृषस्थाने[3] तस्य पूजां [4]समारभेत् । वृषगायत्रिमन्त्रेण सजलेनाभिषिच्य च ॥१२०॥

अर्घ्यं दत्त्वाथ शिरसि गन्धपुष्पादिभिर्यजेत् । [5]प्रासादं संविशेत्तस्य दक्षिणे वामपार्श्वके ॥१२१॥

नन्दिगङ्गे महाकालयमुने च [6]क्रमाद्यजेत् । द्वारोर्ध्वे विघ्नराजं च भारतीं तस्य दक्षिणे ॥१२२॥

कवाटयोश्च विमलं [7]सुबाहुं दक्षिणान्ययोः । पूर्वं तारं समुच्चार्य ततो हृद्बीजमुच्चरन् ॥१२३॥

ततो नाम चतुर्थ्यन्तं नमस्कारेण योजयेत् । मन्त्रेणानेन सर्वेषां कृत्वा यजनमुत्तमम् ॥१२४॥

---

[1] Cf. *Kāmikāgama*, I, 4, 273-277 :

सामान्यार्घ्यं च संग्राह्य द्वाराग्रे वृषभं यजेत् । लोहजं संयजेद्द्वारे परिवारे तु शैलजम् ॥
सप्तवर्गाच्चतुर्थं तु सप्तस्वरविभूषितम् । बिन्दुनादसमायुक्तमादौ प्रणवपूर्वकम् ॥
वृषभाय नमश्चान्ते तस्मिन्ब्रह्माङ्गकल्पना । द्वारमन्त्रेण संप्रोक्ष्य द्वारपानर्चयेत्क्रमात् ॥
गणपं भारतीमूर्ध्वे नन्दिनं जाह्नवीयुतम् । महाकालेन यमुनां सव्येऽसव्ये समर्चयेत् ॥
विमलं च सुबाहुं च तत्पयोश्च क्रमाद्यजेत् । एते पूज्या नमोऽन्तैस्तु हृदयाद्यैर्यथाक्रमम् ॥

cf. *Cintyāgama*, 8, 257b-263, 268-269 :

शिवद्वारार्चनार्थं तु महाघण्टां प्रताडयेत् । त्रिधा चास्त्रेण संताड्य दैत्यादीनां विनाशनम् ॥
शङ्खध्वनिसमायुक्तं वाद्यघोषसमन्वितम् । द्वारे विघ्नेश्वरं पूज्य नालिकेरफलादिभिः ॥
हे गणेश गुहस्याग्र शिवसान्निध्यकारण । शिवपूजाप्रवृत्ताय निर्विघ्नाय प्रसीद मे ॥
इति विज्ञाप्य पश्चात्तु कवाटमुद्घाटयेद्गुरुः । पूजान्ते रुद्रमभ्यर्च्य कवाटेन तु बन्धयेत् ॥
द्वारस्योर्ध्वेऽप्यधश्चैव पतङ्गं च भुवङ्गकम् । पतङ्गोर्ध्वे गणेशं च तस्य वामे सरस्वतीम् ।
मध्यमे तु महालक्ष्मीं पूजयेत्तु क्रमेण तु । द्वारस्य दक्षिणे नन्दि गङ्गां च तस्य दक्षिणे ॥
वामपार्श्वे महाकालं यमुनां तस्य वामके । ... .... ... ... ॥
द्वारमध्येऽस्त्रराजं तु पूजयेत्तु विशेषतः । विमलं च सुबाहुं च सव्यवामकवाटयोः ॥
श्रीदेवीं च यजेन्मध्ये स्कन्दं च पट्टिकोपरि । वृषभं चार्चयेदग्रे पुष्पैर्धूपैर्यथाक्रमम् ॥

[2] A : एव pour एवं

[3] C, E : वृषस्थानं

[4] E : समाचरेत्

[5] A : प्रासादविगतस्तस्य

[6] C : क्रमान्न्यसेत्

[7] B : सुबाहुदक्षिणो द्वयोः ; C : सुबाहुं दक्षिणाद्ययोः

[विघ्नोत्सारणम्[1]]

नाराचास्त्रप्रयोगेण प्रासादान्तः प्रविश्य च । पुष्पं प्रक्षिप्य चास्त्रेण पार्ष्णिघातत्रयं ततः ॥ १२५ ॥
कृत्वा दक्षिणपादेन तेनैवान्तःप्रवेशनम् । वामाशाखाश्रयी भूत्वा देहलीमस्पृशंस्तदा ॥ १२६ ॥
देहल्यां [2]विघ्ननाशार्थं [3]पुष्पमस्त्रेण निक्षिपेत् । महाघण्टां ततोऽभ्यर्च्य [4]हेतिना तेन ताडयेत् ॥
कृत्वा यवनिकां पश्चाद्देवाभ्याशप्रवेशने । ईक्षणेन ततो दिव्यान् [5]पुष्पक्षेपेण नाभसान्[6] ॥ १२८ ॥
भूमिष्ठान् पार्ष्णिघातेन विघ्नानुत्सारयेत्ततः ।

[लिङ्गशुद्धिः[7]]

ततो लिङ्गान्तिकं गत्वा [8]दत्त्वार्घ्यं लिङ्गमस्तके ॥ १२९ ॥
सामान्यार्घ्येण तां पूजां पूर्वसंध्यार्चितां ततः । गायत्र्याभ्यर्च्य निर्माल्यं [9]पञ्चब्रह्म जपेद्बुधः ॥

---

[1] Cf. *Acintyaviśvasādākhya*, 12, 37b-42a :
अङ्गुष्ठानामिकाभ्याम् ओं हां हौं शिवाय नमोऽन्तकम् । नेत्रत्रयेऽपि विन्यस्य निरस्येद्दिव्यविघ्नकान् ॥
संत्यज्य दिव्यविघ्नांश्च पुनर्नाराचमुद्रया । तर्जन्यङ्गुष्ठपुष्पेण ओं हः अस्त्राय फडिति ॥
अन्तरिक्षकविघ्नानां निरासं नन्दिकेश्वर । सव्यपार्ष्णित्रिघातेन भूमिष्ठविघ्ननाशनम् ॥
हुं फडन्तास्त्रमन्त्रेण विघ्ननिस्सरणं भवेत् । परार्थे देहलीं शाखां दक्षिणां संश्रितो यजेत् ॥
दक्षिणेनैव पादेन प्रविशेदन्तरं पुनः । ओं हामस्त्राय फडिति विन्यस्यास्त्रमुदुम्बरे ॥

[2] A : विघ्नराजार्थं
[3] A : पुष्पमन्त्रेण
[4] A : भेरीनादेन pour हेतिना तेन
[5] A : पुष्पक्षेपणनाभसान
[6] Dans le ms. D, les *śloka* 1 à 128 manquent.
[7] Cf. *Vīrāgama* 38, 15-19 :
"लिङ्गशुद्धिं ततः शृणु । हृदयेनैव मन्त्रेण घण्टां चैव तु ताडयेत् ॥
हुंकारेण तु मन्त्रेण यवनिकामपनीय च । पूजापर्युषितानां तु हृदयेन विसर्जनम् ॥
सद्योजातेन मन्त्रेण पुष्पं शिरसि विन्यसेत् । अपनीय च निर्माल्यं चण्डेशाय प्रदापयेत् ॥
न शून्यमस्तकं लिङ्गं कृत्वाभिषेकं तु साधकः । लिङ्गं प्रक्षालयेत्तत्र हृदयेन तु मन्त्रतः ॥
लिङ्गे वा कौतुके वापि भित्तिचित्रे च मण्डले । एवमेव क्रमेणैव लिङ्गशुद्धिमथाचरेत् ॥
cf. *Dīptāgama*, 23, 31-36 :
लिङ्गशुद्धिं ततः शृणु । घण्टां तु ताडयेद्धीमान्घण्टामन्त्रमनुस्मरन् ॥
अपनीय पटं विद्याद्धृदयं मन्त्रमुच्चरन् । गर्भगेहं ततः प्राप्य लिङ्गशुद्धिं समाचरेत् ॥
पूर्वसन्ध्यार्चितं पुष्पमीशानेन विसर्जयेत् । कनिष्ठानामिकामध्ये पुष्पं संगृह्य देशिकः ॥
अङ्गुष्ठतर्जनीभ्यां तु वामहस्ते विसर्जयेत् । विसर्जनस्य तत्काले पुष्पं मूर्ध्नि निपातयेत् ॥
न शून्यमस्तकं लिङ्गं भवेत्तत्र कदाचन । ऐशान्यां दापयेन्मालां चण्डेशाय हृदा पुनः ॥
लिङ्गं प्रक्षाल्य चास्त्रेण पीठं पाशुपतेन तु । लिङ्गशुद्धिर्भवेदेवम्"

[8] A : तदर्घ्यं pour दत्त्वार्घ्यं
[9] A : पञ्चब्रह्मजपेन तु ; D, C, E : पञ्चमन्त्रं जपेद्बुधः

कनिष्ठानामिकाभ्यां तु व्यपोह्य शिरसि न्यसेत् । तर्जनीमध्यमाभ्यां तु गृहीतं कुसुमं [1]तु यत्॥
[2]अपनीय तु निर्माल्यं [3]पिण्डिकेशानदेशके । चण्डेशायेति निक्षिप्य बाह्ये चण्डाय दापयेत् ॥
[4]अन्यदाभरणं [5]प्रातर्मुक्त्वा [6]द्रव्येण शोध्य च । प्रक्षाल्यास्त्रेण निक्षिप्य [7]लिङ्गशुद्धिं समाचरेत्॥
[8]आवर्तितजलद्रोण्यां चन्दनादिसुवासितम्[9] । [10]मन्त्रसंहितया वाथ [11]पवित्रैरभिमन्त्रितम् ॥
सुवर्णाद्यैर्यथालाभं कृतेन कलशेन तु । स्वशिरःपरिणाहेन[12] शिवार्धपूरकेण[13] वा ॥ १३५ ॥
निश्छिद्रेणातिशुद्धेन[14] [15]शोधितेनास्त्रमन्त्रतः । गृहीत्वाथ जलं तेन लिङ्गशुद्धिं [16]समाचरेत् ॥
[17]कुशोशीरादिमूलेन कृतेन सुदृढेन तु । कूर्चेन बहुशो लिङ्गं शोधयित्वा [18]सपीठकम्॥१३७॥
अस्त्रेण क्षालयेत्सम्यग्बहुशोऽशून्य[19]मस्तकम् । यथा तथाभिषिच्याथ [20]स्थलशुद्धिं च कारयेत् ॥
[21]आत्मानं च स्थलं द्रव्यं मन्त्रं लिङ्गं च पञ्चकम् । विशोध्यैवं[22] ततो मन्त्री यजेल्लिङ्गे[23] सदाशिवम् ॥ १३९ ॥

[शिवासनपूजा]

पूजार्थमासनं तस्य कल्पयित्वार्चयेच्छिवम् । उत्तराभिमुखः पार्श्वे समासीनः स्थितोऽथवा ॥ १४०

[1] A : यथा pour तु यत्
[2] A : अपनीतं तु
[3] A : पिटक pour पिण्डिका
[4] A : अन्नमाभरणं ; B, C, E : अन्यमाभरणं : D : अन्यमाहरणं
[5] B : प्रीतं दृष्ट्वा pour प्रातर्मुक्त्वा ; C, D : प्रातं मुक्त्वा ; E : प्राप मुक्त्वा
[6] A : द्रव्यं विशोध्य च
[7] A : लिङ्गशुद्धिमथाचरेत्
[8] A : अवर्जितजलद्रोणां ; D, E : आवर्तितं जलद्रोण्यां
[9] A : सुवासितः
[10] A : मन्त्रं संचितया चाथ
[11] B, D, E : पवित्रम् pour पवित्रैर्
[12] D : परिणामेन pour परिणाहेन
[13] A : शिवार्थपूरकेण वा ; D : शिवार्धं पूरकेण वा
[14] C, D : विशुद्धेन pour अतिशुद्धेन
[15] A : शोधितोऽपि pour शोधितेन
[16] B, C, D, E : समारमेत् pour समाचरेत्
[17] B, E : काश pour कुश
[18] E : सुपीठकम्
[19] A : धन्य pour अशून्य ; B : न्यस्त
[20] A : जल pour स्थल
[21] A : आत्मस्थानमथ द्रव्यस्थानं ब्रह्म च पञ्चकम् ; B : आत्मानं च स्थलं ब्रह्ममन्त्रलिङ्गं च पञ्चकम् ; C : आत्मनश्च स्थलद्रव्यं मन्त्रलिङ्गं च पञ्चकम्
[22] B, E : एव pour एवं
[23] C, D : लिङ्गं pour लिङ्गे

[1]कल्पयेदासनं पीठे [2]भवेदाधार आसनम् । आधेयस्तु शिवस्तत्र मूर्तिमानुपरि स्थितः ॥१४१॥
आसनं शब्दवत्प्रोक्तमर्थवत्स्यात्सदाशिवः । आसनं बिन्दुवत्तत्र नादवच्छिव [3]इष्यते ॥ १४२ ॥
एवं तदविनाभावः शिवशक्त्योः प्रतीयते । शक्तिरेव भवेद्दिव्यमासनं तद्वदामि ते ॥ १४३ ॥
[4]लिङ्गमूले यजेत्पूर्वं शक्तिमाधाररूपिणीम्[5] । [6]तदूर्ध्वेऽनन्तमभ्यर्च्य सिंहं तस्योर्ध्वतो यजेत्[7] ॥
धर्मं ज्ञानं च वैराग्यमैश्वर्यं च चतुष्टयम् । आग्नेयादिषु कोणेषु सिंहरूपाणि कल्पयेत् ॥१४५॥

---

[1] Cf. *Cintyāgama*, 8, 274-275a :
आधार आसनं प्रोक्तमाधेयः परमः शिवः । नादो लिङ्गस्वरूपं तु बिन्दुः पीठाकृतिर्भवेत् ॥
आधार आसनं तस्मादाधारः शक्तिरेव च ।

[2] A : भवेदाधारमासनम्  [3] B, C, D, E : उच्यते pour इष्यते  [4] D : लिङ्ग मूले

[5] L'ordre ascendant des *āsana* dans les textes āgamiques est le suivant : selon *Kāmika*, *Kāraṇa*, *Kiraṇa*, *Makuṭa* et *Raurava* : अनन्त, सिंह, योग, पद्म et विमल ; selon *Acintyaviśva* : अनन्त, योग, सिंह, पद्म et विमल ; selon *Ajita* : अनन्त, सिंह, योग, विमल et पद्म

[6] Voici comment le *Vīrāgama*, 38, 25b-33a conçoit l'*anantāsana* :
शक्त्यक्षरसमायुक्तं नवमाङ्कुरसंयुतम् । बीजाक्षरसमायुक्तं नालान्तं परिकीर्तितम् ॥
मध्ये नालसमायुक्तं पद्मात्कर्णिकायुतम् । पद्मासनान्तकैर्देध्यैस्तदूर्ध्वे कर्णिका न्यसेत् ॥
अनन्तं पूर्वतो भागे वासुकिं चाग्निगोचरे । तक्षकं दक्षिणे स्थाप्य कार्कोटकं तु नैर्ऋते ॥
शङ्खपालं च वारुण्यां गुलिकं वायुगोचरे । पद्मं तु सौम्यदिग्भागे महापद्ममीशगोचरे ॥
अनन्तासनं प्रदद्यात्कूर्मस्योपरि संस्थितम् । मध्यस्थं चैव नालं तु शिवाङ्गं वेष्टयेत्ततः ॥
आधारं चाप्यते विप्र देवानां च शृणुष्व च । अनन्तेशश्च सूक्ष्मश्च शिवोत्तमश्चैकनेत्रकः ॥
एकरुद्रस्त्रिमूर्तिश्च श्रीकण्ठश्च शिखण्डिकः । पूर्वादीशानपर्यन्तं क्रमाद्विन्यस्य देशिकः ॥
शेषश्चैव तु नागेन्द्रं गुलिकांश्च चतुर्दिशि । अनन्तासनमिह प्रोक्तम् "

voir aussi *Makuṭāgama*, 4, 326 :
अनन्ताख्यासनं त्वूर्ध्वमुपर्युपरि संस्थितम् । अष्टनागसमायुक्तमनन्तासनमुच्यते ॥

[7] Cf. *Vīrāgama*, 38, 40-45 :
योगासनोपरिष्टात्तु सिंहासनमिहोच्यते । आग्नेय्यां धर्मं विन्यस्य नैर्ऋत्यां ज्ञानमेव च ॥
वैराग्यं चैव वायव्यामैश्वर्यमीशगोचरे । चतुष्कोणे महासिंहमासनं पादनिर्मितम् ॥
शङ्खस्फटिकपीतं च रक्तं सिंहस्य वर्णकम् । अधर्मं पूर्वतो भागे अज्ञानं दक्षिणे तथा ॥
अवैराग्यं पश्चिमे न्यस्यानैश्वर्यं चोत्तरे दिशि । कृष्णवर्णसमायुक्तामिलिकां तत्र विन्यसेत् ॥
अव्यक्तो नियतिः कालः कला चेति चतुष्टयम् । महादिक्षु न्यसेदेनं मध्यपादस्तु केशवः ॥
त्रिगात्रान् भीमसंकाशान् विदिक्ष्वभिमुखांस्तथा । एवं सिंहासनम् प्रोक्तम् "

cf. *Makuṭāgama*, 4, 327b-331a :
धर्मज्ञानं च वैराग्यमैश्वर्यं च चतुष्टयम् । धर्मं च भूतरूपं तु ज्ञानं वैराग्यरूपकम् ।
वैराग्यं सिंहरूपं स्यादैश्वर्यं चाश्वरूपकम् । कोटिभिः कोटिभिः सिंहैः प्रत्येकं परिवारितम् ॥
राजावर्तस्वरूपेण सर्वेषां सिंहमेव वा । अव्यक्तो नियतिः कालः कला चेति चतुष्टयम् ॥
चतुर्भागे तु फलके महादिक्षु क्रमान्न्यसेत् । केशवो मध्यपादः स्यादित्थं सिंहासनं शुभम् ॥

[1]शुक्लं रक्तं तथा पीतं कृष्णं [2]तद्रूपमुच्यते । विपरीतमधर्मादि महादिक्षु चतुष्टयम् ॥ १४६ ॥
राजावर्तनिभं प्रोक्तमिन्द्रादिषु यथाक्रमम् । ज्ञानाग्रेऽधश्छदं [3]यष्ट्वा यजेदूर्ध्वच्छदं ततः॥१४७॥
ऐश्वर्याग्रे च [4]तावेतावधश्चोर्ध्वे च कल्पयेत् । मध्ये तमो रजश्चैव सत्त्वं चैव क्रमान्न्यसेत् ॥
एवं सिंहासनं [5]यष्ट्वा ततो योगासनं यजेत्[6] । अव्यक्तो [7]नियतिः कालः [8]कला चेति चतुष्टयम् ॥ १४८ ॥
पूर्वादिषु यजेन्मन्त्री[9] तद्वर्णं [10]प्रथमं सितम् । कृष्णं रक्तं तथा [11]धूम्रं ततो विमलमर्चयेत्[12] ॥

---

[1] C, D, E : शुक्लं पीतं तथा रक्तं [2] E : तत्रैवमुच्यते
[3] La forme grammaticale correcte est इष्ट्वा
[4] A : ताः वेदा यत्र चोर्ध्वे च [5] Voir note 3
[6] Cf. *Virāgama*, 38, 33-39 :
"योगासनमिहोच्यते । चतुरश्रं तु योगं स्याच्छेषस्योपरि विन्यसेत् ॥
प्राणं तु पूर्वतः स्थाप्य अपानं वह्निगोचरे । व्यानं च यमदेशे तु उदानं नैर्ऋते तथा ॥
समानं पश्चिमे न्यस्य नागं चैव तु वायवे । कूर्मं चैव तु सौम्ये तु कृकरं त्वीशगोचरे ॥
देवदत्तधनञ्जयौ मध्यमे च विधीयते । आधारं तु मया प्रोक्तं देवतानां शृणुष्व च ॥
प्रणवं मध्यदेशे तु-आकारं पूर्वदेशके । ईकारं वह्निदेशे तु ऊकारं दक्षिणे ततः ॥
अंकारं चैव नैर्ऋत्यामःकारं वारुणे न्यसेत् । अकारं वायुदेशे तु इकारं सौम्यदेशके ॥
उकारमीशदिग्भागे ओंकारं पूर्वसंस्थितम् । अधश्चाधोर्ध्वच्छदनं योगासनमिति स्मृतम् ॥
cf. *Makuṭāgama*, 4, 332-334 :
शुद्धकूर्मवदाकारमग्निवर्णं तदासनम् । प्रणवं पूर्वतो न्यस्य अकारं चानले तथा ॥
आकारं याम्यभागे तु इकारं नैर्ऋते तथा । ईकारं पश्चिमे भागे उकारं वायुदेशके ॥
ऊकारं सोमदिग्भागे ऋकारं त्वीशदेशके । ॠकारं मध्यभागे च न्यसेद्योगासनं भवेत् ॥
voir aussi *Rauravāgama*, vol. I, II, 10, 33b-34 :
[7] B, C : नियतः [8] A : कलाश्चेति
[9] A : मन्त्रे pour मन्त्री [10] B, C, D, E : प्रथमोदितम्
[11] B, C, D, E : पीतं pour धूम्रं
[12] Cf. *Virāgama*, 38, 53b-55 :
चतुर्वेदस्वरूपं तु विन्यसेद्व्याघ्रचर्मवत् । इलिकोपरि विन्यस्य देवताश्च शृणुष्व च ॥
अम्बिकां पूर्वतः स्थाप्य गणाम्बिकां च दक्षिणे । गौरीं च पश्चिमे न्यस्य प्रज्ञां चैवोत्तरे दिशि ॥
विमलासनमिदं प्रोक्तम्"
cf. *Makuṭāgama*, 4, 338-339a :
गणाम्बिकामुत्तरे तु महादेवीं च पूर्वके । तत्रो गौरी तु याम्ये च वारुणे तु प्रचोदयात् ॥
एताभिः शक्तिभिः कान्तं कल्पयेद्विमलासनम् ।

आत्मतत्त्वं तदूर्ध्वे तु[1] [2]विद्यातत्त्वं तदूर्ध्वतः । शिवतत्त्वं तदूर्ध्वेऽथ [3]यष्ट्वा पद्मासनं यजेत् ॥

[पद्मासनम्[4]]

तन्मध्ये कर्णिकां [5]यष्ट्वा दलेष्वष्टसु च क्रमात् । [6]वामादिशक्तीरष्टौ चापीन्द्रादिषु [7]समर्चयेत् ॥

मध्ये मनोन्मनीं देवीं [8]ततश्चोपदलेषु च । सूर्यमण्डलमभ्यर्च्य तदूर्ध्वे [9]मण्डलाधिपम् ॥१५३॥

ब्रह्माणं पूजयित्वाथ [10]केसराग्रेषु च क्रमात् । सोममण्डलमभ्यर्च्य तदूर्ध्वे मण्डलाधिपम् ॥

[11]विष्णुमभ्यर्चयेद्दिक्षु चतसृष्वेव मन्त्रवित् । मध्येऽग्निमण्डलं [12]पश्चात्कर्णिकायां तदूर्ध्वतः ॥१५५॥

---

1 A : अथ pour तु

2 Le ms. A omet विद्यातत्त्वं तदूर्ध्वतः । et शिवतत्त्वं तदूर्ध्वेऽथ et lit आत्मतत्त्वं तदूर्ध्वेऽथ यष्ट्वा पद्मासनं यजेत्

3 Voir page 218, note 3

4 Cf. *Vīrāgama*, 38, 46-53a :

पृथ्वी पूर्वदले चैव आपश्चैवाग्निगोचरे । तेजोरूपं तु दक्षिण्यां वायुरूपं च नैर्ऋते ॥
आकाशं चैव विप्रेन्द्र वारुण्यां दल उच्यते । सत्त्वं वायव्यके न्यस्य रजो विन्यस्य सोमके ॥
ईशाने तु दले विप्र तमोरूपं प्रकल्पयेत् । तत्त्ववर्णसमायुक्तमाधारं चोच्यते मया ॥
मूलं सद्येन मन्त्रेण नालं वामेन कारयेत् । अघोरं दलमेवाहुस्तत्पुरुषं गुह्यदेशके ॥
सुषिरमीशमन्त्रेण कुर्याद्धि देशिकोत्तमः । देवताः संप्रवक्ष्यामि कालीं पूर्वे तु विन्यसेत् ॥
कलविकरणीं चाग्नेये रौद्रीं चैव तु दक्षिणे । बलकरणीं नैर्ऋत्यां वामां पश्चिमतो न्यसेत् ॥
बलप्रमथनीं वायव्ये ज्येष्ठां चैवोत्तरे दिशि । सर्वभूतदमनीमीशान्ये मनोन्मनीं तु मध्यमे ।
एवं पद्मासनं प्रोक्तम्"

cf. *Makuṭāgama*, 4, 335-337b :

वामा ज्येष्ठा च रौद्री च काली कलविकरणी । तथा बलविकरणी बलप्रमथिनी तथा ।
सर्वभूतदमनी या च मध्ये चैव मनोन्मनी । विन्यसेत्केसराग्रेषु कर्णिकायां यथाक्रमात् ॥
इत्थं पद्मासनं प्रोक्तम्"

5 Voir p. 218 note **3**

6 B, D, E : वामादिशक्तयश्चाष्टौ ; C : वामादिशक्तयोऽष्टौ तु

7 D, E : समाचरेत्

8 E : तस्य चोपदलेषु च

9 B : कुण्डल pour मण्डल

10 B, C, D, E : मण्डलाग्रेषु

11 A : विष्णुमण्डलमभ्यर्चयेद्दिक्षु च मन्त्रवित्

12 B, C, D, E : पूज्य तदूर्ध्वे मण्डलाधिपम्

[1]मण्डलाधिपतिं रुद्रं [2]सर्वोर्ध्वे च शिवासनम्[3] । स्वनामपदमन्त्रैस्तानर्घ्य[4]गन्धादिभिस्तथा ॥
[5]पूजयेदासनीभूतदेवान्सर्वान्यथाक्रमम् । धरादिशुद्धविद्यान्ततत्त्वजातमयं ततः ॥ १५७ ॥

---

[1] R : अभ्यर्च्याधिपतिं रुद्रं [2] E : तदूर्ध्वे

[3] Pour les détails concernant les quatre maṇḍala Sūrya-, Soma-, Agni-, et Śakti- (ou Śivāsana) et le rituel afférent, voir *Acintyaviśvasādākhya*, 13, 47-61a :

मण्डलत्रयमप्यासामूर्ध्वोर्ध्वे कल्पयेत्क्रमात् । कोट्यादित्यप्रतीकाशं शिवसूर्यस्य मण्डलम् ॥
आदित्यं चैव ब्रह्माणमात्मतत्त्वस्वरूपिणम् । पञ्चवक्त्रं चतुर्बाहुं प्रतिवक्त्रं त्रिलोचनम् ॥
तप्तकार्तस्वराभासं स्फटिकाक्षधरं परम् । नमोमुद्रान्वितं देवं सृष्टिकारणकारणम् ॥
ओं हां पूर्वं समुच्चार्य सूर्यमण्डलाय नमः । मण्डलान्तं पुनश्चोक्त्वा त्वधिपतये ब्रह्मणे नमः ॥
ओं हां सूर्यमण्डलाय नमः । ओं हां सूर्यमण्डलाधिपतये ब्रह्मणे नमः ।
एवं क्रमेण विष्णुं च सोममण्डलनायकम् । तथैव वह्निबीजं च रुद्रं तत्रैव मन्त्रयुक् ॥
ब्रह्मणश्चोर्ध्वमौलौ च चन्द्रबिम्बं सुभावयेत् । कोटिचन्द्रद्युतियुतं कोटिचन्द्रसुशीतलम् ॥
ओं हां सोममण्डलाय नमः ।
तन्मध्ये चादिविष्णुं च नीलजीमूतसंनिभम् । भस्मोद्धूलितसर्वाङ्गं सर्वाभरणभूषितम् ॥
एकवक्त्रं द्विनेत्रं च कर्णकुण्डलभूषितम् । चतुर्भुजं शङ्खचक्रनमस्कारसमन्वितम् ॥
पीताम्बरधरं विष्णुं स्थितिकारणकारणम् । किरीटमकुटोपेतं विद्यातत्त्वस्वरूपिणम् ॥
ओं हां सोममण्डलाधिपतये विष्णवे नमः ॥
आग्नेयमण्डलं तस्य विष्णोर्मूर्धनि विन्यसेत् । अनन्ताग्निसमप्रख्यं शैवाग्निं तत्र कल्पयेत् ॥
ओं हां अग्निमण्डलाय नमः ।
रुद्रं माणिक्यवर्णाभमेकास्यं च त्रिलोचनम् । चतुर्भुजं जटाजूटमिन्दुरेखाप्रसूनकम् ॥
भस्मोद्धूलितसर्वाङ्गं त्रिपुण्ड्रेण विराजितम् । नमोमुद्रान्वितं देवं लयकारणकारणम् ॥
ओं हां वह्निमण्डलाधिपतये रुद्राय नमः ।
तत्त्वत्रयाधिपांश्चैव सर्वशक्तिसमन्वितान् । सर्वाभरणसंयुक्तान् प्रत्येकं भावयेत्क्रमात् ॥
विमलासनमेवोक्तं बिम्बत्रयसमन्वितम् ।
चिच्छक्तिमण्डलं पश्चात्सर्वतेजोमयं परम् । दलैः सहस्रैः संकीर्णमिन्दुगोक्षीरसंनिभम् ॥
गौरीगायत्रिसंयुक्तमिच्छाज्ञानक्रियात्मकम् । क्षित्यादिशुद्धविद्यान्तं तत्त्वव्यापकमासनम् ॥

ओं हां शक्तिमण्डलाय शिवासनाय नमः । ओं हां इच्छाशक्तये नमः । ओं हां क्रियाशक्तये नमः । ओं हां ज्ञानशक्तये नमः । ओं हां गणाम्बिकायै विद्महे । महातपायै धीमहि । तन्नो गौरी प्रचोदयात् ।

उत्तरादिचतुर्दिक्षु गौरीगायत्रिमन्त्रतः । आत्मत्रयं च संपूज्य प्रणवाक्षरमध्यमे ॥
प्रासादबीजं तन्मध्ये शिवासनमिदं परम् ।
ओं हां शिवासनाय नमः ।

[4] E : पाद्य pour गन्ध

[5] E : पूजयेदासनं कृत्वा सर्वान् देवान् यथाक्रमम्

[मूर्तिध्यानम्[1]]

शिवासनं प्रकल्प्यैवं ततो मूर्तिं विचिन्तयेत् । पुष्पैरञ्जलिमापूर्य स्थिरधीः संयतेन्द्रियः ॥

बद्धपद्मासनां दिव्यां शुद्धस्फटिकसंनिभाम् । पञ्चवक्त्रशिरोयुक्तां सुप्रसन्नां स्मिताननाम् ॥

सूर्यकोटिप्रतीकाशां प्रत्यग्रोद्दाम[2]यौवनाम् । दशहस्तां पिशङ्गोर्ध्व[3]जटाचूडविराजिताम् ॥१६०॥

प्रतिवक्त्रं [4]लसत्तारशक्तित्रितयलोचनाम् । ज्ञानचन्द्रकलाचूडां सर्वकारणकारणाम् ॥ १६१ ॥

[5]दक्षिणैरभयं शूलं परशुं खड्गमेव च । वज्रं [6]तथेतरैर्हस्तैः [7]पाशं नागाङ्कुशौ तथा ॥ १६२ ॥

वह्निं घण्टां क्रमेणैव वहन्तीं [8]पारमेश्वरीम् । सर्वलक्षणसंयुक्तां सर्वाभरणभूषिताम् ॥ १६३ ॥

दिव्याम्बरधरां [9]रम्यां [10]दिव्यस्रग्गन्धलेपनाम् । [11]मूर्तिं संचिन्त्य [12]पूर्वोक्ते तस्मिन्नेव शिवासने॥

---

[1] Cf. *Acintyaviśvasādākhya*, 13, 61b-68a :

तन्मध्ये देवदेवेशं परमेशं तु भावयेत् । सदाशिवस्वरूपेण शुद्धस्फटिकसंनिभम् ॥
पञ्चवक्त्रयुतं तेषु प्रतिवक्त्रं त्रिलोचनम् । जटामकुटसंयुक्तं दशदोर्भिः समन्वितम् ॥
शूलं परशुखड्गं च वज्राभये च दक्षिणे । पाशनागाङ्कुशं चैव घण्टां वह्निं च वामके ॥
सर्वावयवसंपूर्णं दिव्याम्बरधरं शुभम् । दिव्यगन्धानुलिप्ताङ्गं दिव्यपुष्पैरलंकृतम् ॥
सर्वाभरणसंयुक्तमर्धेन्दुकृतशेखरम् । द्वात्रिंशल्लक्षणोपेतं युवानं पुष्करस्रजम् ॥
प्रसन्नवदनोपेतं प्रशान्तं सर्वकारणम् । बद्धपद्मासनासीनं देवदेवं विचिन्तयेत् ॥
एवं सदाशिवं न्यस्य मूर्तिशक्त्यन्तगोचरम् । ओं हां हं हां शिवमूर्तये नमः ॥

cf. *Virāgama*, 38, 62-67 :

शुद्धस्फटिमसंकाशं स्फुरन्तं दीप्ततेजसम् । त्र्यक्षं दशभुजं चैव चन्द्रार्धकृतशेखरम् ॥
जटामकुटसंयुक्तं चारुगात्रसमायुतम् । पञ्चवक्त्रं च देवेशं पञ्चमूर्धसमन्वितम् ॥
सर्वलक्षणसंयुक्तं सर्वाभरणभूषितम् । मकुटं कुण्डलं चैव केयूरकटकं ततः ॥
कटिसूत्रोदरबन्धं मेखलानूपुरैर्युतम् । दिव्याम्बरधरं देवं दिव्यगन्धानुलेपितम् ॥
पाशं परशुखड्गं च वज्रं चाभयं दक्षिणे । वामेऽङ्कुशं च वरदं घण्टां नागं च वह्निं च ॥
एवं सदाशिवं ध्यात्वा सर्वलोकसुखावहम् ॥

[2] A : उत्काम pour उद्दाम
[3] A : जटामकुटराजिनाम्
[4] A : लसत्कार pour लसत्तार
[5] C, D : दक्षिणे त्वभयं; E : दक्षिणेनाभयं
[6] C, D, E : तथेतरे हस्ते
[7] D : पाशनागाङ्कुशौ , E : पाशं नागाङ्कुशं
[8] A : परमेश्वरीम्
[9] C, D : सौम्यां
[10] B, E : दिव्यगन्धानुलेपनाम्
[11] B : मूर्त pour मूर्तिं
[12] A : पूर्वोक्तो अस्मिन्नेव

तेनैव पुष्पाञ्जलिना मन्त्रेणानेन [1]पूजकः । आवाहयेत्ततो [2]मूर्तिमन्त्रं शृणु जनार्दन ॥ १६५ ॥
तारं पूर्वं समुच्चार्य हृद्बी च ततस्त्रिधा । [3]शिवमूर्तिपदं पश्चाच्चतुर्थ्यन्तं ततो हरे ॥ १६६ ॥
नमस्कारेण संयुक्तं मूर्तिमन्त्रमुदाहृतम् ।

[सूक्ष्मतनुकल्पनम्[4]]

एवं मूर्तिं समावाह्य [5]ततः स्फटिकसंनिभे ॥ १६७ ॥
[6]न्यसेदीशानमूर्ध्वास्ये कर्णिकारसमद्युतौ[7] । [8]पुरुषे[9] पुरुषं चैव भिन्नाञ्जनसमप्रभे[10] ॥ १६८ ॥
अघोरे बहुरूपं च जपाकुसुमसंनिभे[11] । वामे वामं ततो मन्त्री कुन्दचन्द्रसमद्युतौ[12] ॥१६९॥
पश्चिमे विन्यसेन्मन्त्री सद्योजातं [13]समुद्रया । [14]अष्टत्रिंशत्कलान्यासमपि पूर्ववदाचरेत्॥१७०॥

[विद्यातनुकल्पनम्[15]]

विद्यामयीं ततः कुर्यात्तनुं तां पारमेश्वरीम् । [16]तदर्थं मन्त्रमुद्दिष्टमिदमेवं[17] जनार्दन ॥ १७१ ॥
द्वादशान्तं समुच्चार्य ततो हृद्बीजसंपुटम् । [18]हौंकारमपि तस्यान्ते [19]विद्यादेहपदं सुधीः॥१७२॥

---

[1] B : पूजयेत्  [2] A : मन्त्रमूर्ति ; B, D : मूर्ति मन्त्रं ; C : मूर्ति मन्त्रणं
[3] C, D : शिवमूर्ति परां ; E : शिवमूर्ति ततः
[4] Cf. *Kāmikāgama*, I, 4, 340b-341 :
ईशः स्फटिकवन्मध्ये पूर्वे कुङ्कुमवन्नरः । दक्षिणेऽञ्जनवद्घोरः सौम्ये वामः कुसुम्भवत् ॥
चन्द्रांशुनिर्मलं सद्यवक्त्रं पश्चिमदिग्गतम् ।
cf. *Rauravāgama*, vol. I, II, 10, 41-43 :
गोक्षीरसदृशं पूर्वे दक्षिणे त्वञ्जनप्रभम् । पश्चिमे तु तडिज्ज्योतिरुत्तरे कुङ्कुमप्रभम् ॥
ऊर्ध्वे स्फटिकसंकाशमेवं सादाख्यकल्पनम् । एवं सूक्ष्मतनुं ध्यात्वा तस्मिन्नङ्गानि कल्पयेत् ॥
प्रत्यङ्गोपाङ्गकं पश्चान्न्यस्य मूलं च विन्यसेत् । मकुटात्पादपर्यन्तमष्टत्रिंशत्कला न्यसेत् ॥
[5] B : ततत् pour ततः
[6] A : न्यसेदीशानमूर्ध्वास्ये ; C, D : न्यसेदीशानमूर्ध्वास्ये ; D : न्यसेदीशानमूर्ध्नास्ये
[7] A : समुद्यतौ pour समद्युतौ  [8] D omet les *śloka* 168b et 169
[9] A : पुरुषेण pour पुरुषे  [10] E : प्रभम् pour प्रभे
[11] E : संनिभम् pour संनिभे  [12] E : द्युतिः pour द्युतौ
[13] B, C, D, E : विशेषतः pour समुद्रया  [14] B, C, D, E : पिण्डमन्त्रं कलामन्त्रमपि
[15] Cf. *Kriyākramadyotikā*, p. 99 :
" ओं हां हौं विद्यादेहाय नमः " इति ब्रह्मरन्ध्रान्तव्यापकं प्रासादमुच्चार्य, शिवतत्त्वान्तव्यापिकं सौदामिनीनिर्भरगलावाविर्भूतं ध्यात्वा, लिङ्गारोहे विद्यादेहं समुदितरूपं विन्यस्य..."
[16] A : तदर्थे pour तदर्थं  [17] A, C : एव pour एवं
[18] A : हूंकारमपि, D : खौंकारमपि  [19] A : विद्यादेहं पदं

चतुर्थ्यन्तं समायोज्य नमस्कारपदं पठेत् । अनेन मन्त्रवर्येण [1]दत्तेऽर्घ्ये शिवमस्तके ॥१७३॥
[2]भवेत्सर्वसुराराध्या तनुर्विद्यामयी तदा ।

[आवाहनम[3]]

ततोऽप्यञ्जलिमापूर्य पुष्पैर्विकसितैः शुभैः ॥ १७४ ॥
ततो [4]हृत्पद्मसुषिरे [5]बिन्दुस्थानस्थितं शिवम् । [6]परमात्माभिधानं तं परात्परतरं प्रभुम्॥१७५॥
द्वादशान्तेन संयोज्य वाच्यवाचकभावतः । चिन्मात्रं सर्वभूतस्थं सर्वकारणकारणम् ॥ १७६ ॥
ध्यात्वा [7]प्राणपथानीय ततो लिङ्गस्य मूर्धनि । मूलमन्त्रं समुच्चार्य सद्योजातपुरःसरम्॥१७७॥
तेनैव पुष्पाञ्जलिनावाहन्या मुद्रया सुधीः । [8]आवाह्य स्थापनादीनि ततः कर्माणि कारयेत् ॥

[आवाहनक्रियाविवरणम्[9]]

सर्वदा संस्थितस्यापि [10]शिवस्यावाहनक्रिया । लिङ्गमूर्तौ तु या नित्यमाविर्भावाय सा भवेत्॥१७८॥

---

[1] E : दत्त्वार्घ्यं

[2] D : भवेत्सर्वसुराराध्यतनुर्विद्यामयी : E : भवेत्सर्वसुराराध्यतनुं विद्यामयीं

[3] Cf. *Suprabhedāgama*, I, 8, 111b-115a :
पुष्पैरञ्जलिमापूर्य तदावाहनमुद्रया । प्रविष्टे हृदयाग्रे तु शिवरूपं विचिन्तयेत् ॥
प्रणवं मनसोच्चार्य सर्वज्ञादिगुणैर्युतम् । सर्वोपाधिविनिर्मुक्तं कारणानां तु कारणम् ॥
अतर्क्यमप्रमेयं च ध्रुतमव्ययमीश्वरम् । विन्दावभ्युदितं ध्यायेत्स्थिरधीः पुरतः स्थिरे ॥
सदाशिवात्ममध्यस्थं विन्यसेद्देशिकोत्तमः । आवाहनादिभिर्भक्त्या परमेशं सुपूजयेत् ॥

[4] A : हृत्पादसुषिरे

[5] D : बिन्दुस्थानं स्थितं

[6] A : परमार्थविधानं तं

[7] A : प्रणवमानीय ; B, C : प्रणवयानीय

[8] B, C, D, E : आचार्यः pour आवाह्य

[9] Cf. *Kāmikāgama*, I, 4, 354b-362 :
सर्वज्ञस्य शिवस्येह कथमावाहनं प्रभो । यथावाहनमिष्टं स्यात्सर्वगत्वं विहन्यते ॥
ईश्वर उवाच—
आमूलाग्रस्थितस्याग्नेरभिव्यक्तिर्यथा तरौ । तद्वदेकत्र विद्यशक्तिर्व्यापकस्य न बाध्यते ॥
यथात्मनस्तनुद्वारा स्यातामिह गमागमौ । तद्वन्मन्त्रतनुद्वारा शिवस्येष्टगमागमौ ॥
अचिन्त्यशक्तियुक्तत्वाद्व्यापकोऽव्यापकश्च सः । सतनुस्तनुहीनो वा सर्वकृत्सर्वगः शिवः ॥
एवं बिन्दुगतस्त्वीशो हस्तपुष्पगतं स्मरेत् । तच्च प्राणपथा कार्यं नाड्या ज्योतिस्वरूपया ॥
तस्माददाय लिङ्गस्थं स्थापिन्या विन्यसेत्तनौ । येन सामर्थ्यतः शम्भोः स्वस्य स्वस्वामिता भवेत् ॥
तच्छक्तिप्रकटीभावः संनिधानं स्वमुद्रया । संनिधेरपरित्यागो यो वा कालावसानकः ॥
संनिरोधो निरोधिन्या विभोरपि विभाव्यते । लोके सुखात्मकं वस्तु गोपनीयं यथा तथा ॥
तस्यावकुण्ठनं कार्यमवकुण्ठनमुद्रया ।

[10] E : शिवस्यावाहनं वृथा

[स्थापन-संनिधान-निरोध-स्वागत-पाद्य-आचमन-अर्घ्यादि[1]]

[2]आविर्भूतं तु [3]वामेन [4]स्थापन्या स्थापयेत्ततः । बहुरूपेण मन्त्रेण [5]संनिधीकृत्य मुद्रया॥१८०॥
संनिधानं ततश्चापि पुरुषेण निरोधयेत् । निष्ठुरां दर्शयित्वाथ पुष्पमीशानमुच्चरन् ॥ १८१ ॥
[6]दत्त्वा स्वागतमुद्दिश्य[7] ततः पाद्यं तु पादयोः । मुखेष्वाचमनं [8]दद्यादर्घ्यं शिरसि विन्यसेत् ॥
सद्येन बहुरूपेण पञ्चमेन यथाक्रमम् ।

[अभिषेकः[9]]

ततश्च घण्टां संताड्य [10]हृत्वा यवनिकामपि ॥ १८३ ॥
ततस्तु देवदेवेशं सर्वात्महृदयेन तु । मन्त्रसंहितया चैव [11]पवित्रैश्चाभिषेचयेत् ॥ १८४ ॥
पञ्चगव्यविधानेन पञ्चगव्याभिषेचनम् । [12]सर्वात्महृदयेनैव कृत्वा पश्चाज्जनार्दन ॥ १८५ ॥

---

[1] Cf. *Suprabhedāgama*, I, 8, 115b-118 :

आवाह्य सद्यमन्त्रेण स्थापयेद् गुह्यमन्त्रतः । बहुरूपेण सान्निध्यं पुरुषेण निरोधनम् ॥
सर्वावयवसंपूर्णमीशानेन तु भावयेत् । आवहनाख्ययावाह्य स्थापयेच्छान्तमुद्रया ॥
ध्वजाख्यया तु सान्निध्यं रोधनं निष्ठुराख्यया । पाद्यं हृदाणुना दत्त्वा वक्त्रेणाचमनं ततः ॥
अर्घ्यं तु शिरसा दत्त्वा पञ्चमूर्धसु बुद्धिमान् ।

Voir aussi *Rauravāgama*, vol. I, II, 10, 37b-39a :

[2] A : आविर्भावे तु
[3] D : मानेन
[4] B, C, D, E : स्थापिन्याः
[5] A : संनिधीकृतमुद्रया
[6] A : गत्वा pour दत्त्वा
[7] E : आवेद्य pour उद्दिश्य
[8] A : चैव शिरःस्वर्घ्यं निवेशयेत्
[9] Cf. *Kāraṇāgama*, I, 30, 273-279a :

पञ्चब्रह्मषडङ्गैश्च व्योमव्यापि समुच्चरन् । जलेन स्नापयेत्पश्चाद्दधिक्षीरघृतैरपि ॥
नालिकेरोदकेनैव मधुना ब्रह्मपञ्चकैः । हृदा वै शालिपिष्टेन घर्षयेल्लिङ्गमादरात् ॥
शिवाम्भसा तु संस्नाप्य घर्षयेदामलेन तु । लेपयेद्रजनीं पश्चात् स्नापयेद्गन्धवारिणा ॥
आचमनं ददेत्पश्चात्पञ्चवक्त्रेषु बुद्धिमान् । वस्त्रेण लिङ्गपीठे तु कारयेल्लम्बनं बुधः ॥
हृदयेन तु मन्त्रेण पुष्पं मूर्ध्नि निधापयेत् । घण्टां तु ताडयेत्तत्र क्षिपेद्यवनिकां ततः ॥
वस्त्रोपवीतं गन्धं च मकुटं कुण्डलं तथा । हारकेयूरमालाश्च हृदयेन प्रदापयेत् ॥
धूपदीपं हृदा दत्त्वा ”

[10] E : भृत्वा pour हृत्वा
[11] D : पवित्रे वा pour पवित्रैश्च
[12] A : सर्वात्मा हृदयेनैव

[1]शुद्धोदेनाभिषिच्याथ [2]शिवगायत्रिमुच्चरन् । शालिगोधूमनीवारयवमाषादिपिष्टकैः ॥ १८६ ॥
लिङ्गमालिप्य बहुशः [3]सहवेदिकया क्रमात् । रूक्षयित्वाभिषिच्येशं[4] [5]शुद्धोदेन पुनः पुनः ॥
[6]लक्ष्म्यामलकयोस्तद्वत्क्षोदेनालिप्य मन्त्रवित् । अभिषिच्याथ तोयेन ततश्चापि हरिद्रया ॥
आलिप्य गन्धतोयेन [7]पवित्रैरभिषेचयेत् । मुखेष्वाचमनं दद्यात्तत्तन्मन्त्रमुदाहरन्[8] ॥ १८९ ॥
स्थलशुद्धिं ततः [9]कुर्यात्कृत्वा यवनिकां बुधः[10] । [11]महाघण्टाप्रहारेण दत्त्वार्घ्यं लिङ्गमूर्धनि ॥
प्रणवेन ततो मन्त्री कार्पासमयवाससा । [12]उन्मृज्यापनयेद्वारि लग्नं [13]तल्लिङ्गपीठयोः ॥१९१

[वस्त्र-गन्ध-पुष्प-धूप-दीप-उपवीत-भूषणादि]

दुकूलपट्टदेवाङ्गकार्पासादिषु संभवम् । वस्त्रं प्रधूपितं दद्याद्धेमाम्बरमथोपरि[14] ॥ १९२ ॥
चन्दनागरुकर्पूरैः [15]श्लक्ष्णपिष्टैः सकुङ्कुमैः । [16]लिङ्गं पर्याप्तमालिप्य केवलं चन्दनेन वा ॥१९३
प्रणवेन सकृद्दत्त्वा [17]शिरःस्वर्घ्यं सपुष्पकम् । मूलमन्त्रेण देवेशं पूजयेल्लिङ्गमूर्धनि ॥ १९४ ॥
तत्रैव पश्चिमेनाथ [18]पुरुषाख्येण पूर्वतः । दक्षिणे बहुरूपेण वामदेवेन चोत्तरे ॥ १९५ ॥
[19]सद्योजातेन मन्त्रेण पश्चिमेऽप्यथ पूजयेत् । आग्नेय्यां हृदयं पश्चादैशान्यां तु शिरो यजेत् ॥
नैर्ऋत्यां तु शिखां [20]यष्ट्वा [21]वायव्यां कवचं यजेत् । [22]दक्षिणेऽस्त्रं तु संपूज्य नेत्रमीशानगोचरे॥
[23]पूजायामर्घ्यदानं स्यात्प्रथमं तदनन्तरम् । [24]गन्धं पुष्पं च धूपं च दीपं दद्याद्यथाक्रमम् ॥१९८

---

[1] A : शुद्धोदकेनाभिषिच्य
[2] A : शिवगायत्रिमन्त्रत: ; C : शिवगायत्रमन्त्रत:
[3] C, D : सहवेदि यथाक्रमात् ; E : महादेवी यथाक्रमात्
[4] C : इत्थं pour ईशं
[5] A : शुद्धोदकैः
[6] B, C, D : लक्ष्यामलक pour लक्ष्म्यामलक
[7] B, C, D, E : पवित्रेणाभिषेचयेत्
[8] C : उद्धारयन pour उदाहरन
[9] C, D : कृत्वा कृत्वा ; E : कुर्यान्नीत्वा
[10] B, C, D, E : पुनः pour बुधः
[11] A : महाघण्टाप्रकारेण ; C, D : महाघण्टां प्रहारेण
[12] C : उन्मुच्य वारयेद्वारि ; D : उन्मृज्यापानयेद्वारि
[13] C : तं लिङ्गपीठयो:
[14] C, D, E : ततोपरि pour अथोपरि
[15] B : श्लक्ष्णैः पिष्टैः
[16] E : लिङ्गवर्योक्तमालिप्य
[17] B : शिरसार्घ्यं ; C, E : शिरस्यर्घ्यं
[18] A : पुरुषार्घ्येण
[19] A : सद्योजातेति मन्त्रेण
[20] Voir p. 218 note 3
[21] E : वायव्ये
[22] C : दक्षिणे तु सुसंपूज्य
[23] A : पूजायामप्रदानं स्यात्
[24] B, C, D : गन्धपुष्पं

सोपवीतं ततो दद्याद्भूषणं [1]सर्वमेव हि । सुगन्धपुष्पमालाभिरलंकारं प्रयोजयेत् ॥ १९९ ॥

[ आमन्त्रणहविर्दानविधिः[2] ]

[3]आमन्त्रणहविः पश्चाद्दद्यादभिमुखे मुखे । [4]आदाय च महाघण्टां [5]ताडयित्वा शिवाग्रतः ॥

हविःप्रदानकालेऽपि दत्त्वा चाचमनीयकम् । हृदयेनाथ संप्रोक्ष्य हविरस्त्रं समुच्चरन् ॥२०१॥

[6]नाराचास्त्रप्रयोगेण चतुर्दिक्षु कृतेन वा । [7]प्ररोच्य चामृतीकृत्य मुद्रया धेनुसंज्ञया ॥२०२॥

पुष्पहस्तो हविर्दद्यान्मूलमन्त्रं समुच्चरन् । तदनन्तरतो नीत्वा [8]निश्वासानां तु पञ्चकम् ॥२०३

दत्त्वा चाचमनं तत्र हृदयेन ततोऽर्चयेत् । चण्डेशाय विसृज्याथ ताम्बूलं तु हृदा ददेत् ॥२०४

---

[1] B : सर्प एव हि

[2] Cf. *Kāraṇāgama*, I, 30, 388b-399 :

नैवेद्यं पुरतो न्यस्त्वा चतुःसंस्कारसंस्कृतम् । कृत्वा सुरभिमुद्रां चाप्यन्नमुद्रां प्रदर्शयेत् ॥
परिषेचनं ततः कृत्वा मेरुमुद्रां प्रदर्शयेत् । दधिमुद्रां क्षीरमुद्रां घृतमुद्रां तथैव च ॥
माक्षिकाख्यां च मुद्रां च मुष्टिमुद्रां प्रदर्शयेत् । द्रव्याभावे तु नैवेद्ये दर्शयेद्द्रव्यमुद्रिकाम् ॥
अन्नस्योष्णोपशान्त्यर्थं शङ्खमुद्रां प्रदर्शयेत् । पूजाकाले तु नैवेद्यं सर्वलोकस्य शान्तये ॥
दापयेद्विधिनानेनाप्यहमस्मीति मन्त्रतः । तदभावे च नैवेद्ये लोकस्थान्भक्षयेद्धरः ॥
तस्मात्सर्वप्रयत्नेनाप्यर्चनान्ते निवेदयेत् । पञ्चवक्त्रेषु नैवेद्यं दद्याद्वरदमुद्रया ॥
अथवाप्यूर्ध्ववक्त्रे वा नैवेद्यमपि कारयेत् । हविःप्रदानकाले तु दत्त्वा चाचमनीयकम् ॥
पायय स्वेति पञ्चानामास्ये तर्पणमाचरेत् । तत्परं लिङ्गनैवेद्यं सप्तपञ्चत्रिवारकम् ॥
अथवाप्येकवारं वा नैवेद्यं दापयेत्क्रमात् । आचार्यो हस्तमुद्धृत्य गौरीहस्ते निवेदयेत् ।
गौरीहस्तं समुद्धृत्य शिवहस्ते निवेदयेत् । शिवहस्तं समुद्धृत्य पुत्रोच्छिष्टं तु [ कारयेत् ]॥
तस्माच्छिवस्य नैवेद्यं भक्तानां तु निवेदयेत् । जलेनाचमनं दत्त्वा दिग्बन्धं च ततः कुरु ॥
पुनराचमनं दत्त्वा चण्डेशाय निवेदयेत् ।

[3] B : आमन्त्रणं हविः

[4] A : आदाय च हविर्घण्टां ; B : आदाय च हविर्दद्यात्

[5] A : ताडयित्वाथवाग्रतः ; B : घण्टयित्वा शिवाग्रतः

[6] A : नानाशास्त्रयोगेन

[7] A : प्रचोच्य

[8] B, C, D, E : विश्वासानां pour निश्वासानां

[ धूप-दीपविधिः[1] ]

ततश्च घण्टानादेन [2]हृत्वा यवनिकामपि । धूपदीपौ तदा दद्यात्तयोर्विधिरथोच्यते[3] ॥२०५॥
[4]निर्धूमज्वलदङ्गारं [5]धूपपात्रोदरे हृतम् । दह्यमानेन धूपेन दद्याद्धूपं स च त्रिधा ॥ २०६ ॥
धूपः कृष्णागरूद्भूतः कर्पूरेण प्रशस्यते । [6]शीतारिर्वात्र धूपाय [7]सघृतो वाथ गुग्गुलुः ॥२०७॥
[8]दीपस्तु गोघृताक्तेन भवेत्कर्पूरवर्तिना[9] । धूपदीपप्रदाने तु घण्टां वामेन [10]वादयेत् ॥२०८॥
धूपमस्त्रेण [11]संप्रोक्ष्य [12]तन्मन्त्रेण प्रदापयेत् । दीपं चापि तथा दद्याद्दीपपात्रेण [13]दीपयेत् ॥

[ व्यजन-दर्पण-च्छत्र-चामर-गीत-नृत्ताद्युपचाराः[14] ]

[15]व्यजनं दर्पणं चैव च्छत्रचामरमेव च । हृन्मन्त्रेण [16]क्रमाद्दत्वा स्तोत्रैः स्तुतिसमन्वितैः ॥२१०

---

[1] *Kāraṇāgama*, I, 31, 90-101 :

" धूपस्य लक्षणम् । चन्दनं चैव निर्यासं कुन्दुरुक्षं च कुङ्कुमम् ॥
मेघं च कृष्णलोहं च कर्पूरं च क्रमेण तु । सप्तषट्भूतवेदांशानग्न्यश्विन्यम्बरांशकान ॥
आहृत्य चूर्णयित्वा तु मधुना च परिप्लुतम् । एतच्छीतारिधूपं तु शिवप्रीतिकरं शुभम् ॥
कृष्णलोहं च निर्यासं चन्दनं च क्रमेण तु । व्योमपक्षाश्विनीभागमाषत्कर्पूरमिश्रितम ॥
उत्तमं धूपमाख्यातं मधुना च परिप्लुतम् । चन्दनोशीरसंयुक्तं लघुयुक्तं मधुप्लुतम ॥
भागं तु पूर्ववत्प्रोक्तं मध्यमं धूपमुच्यते । गुग्गुलं घृतसंयुक्तमधमं धूपमुच्यते ॥
दीप्ताङ्गारकसंयुक्तं घण्टां वामकरेण तु । धूपपात्रं समादाय दापयेद्विधिवद्बुधः ॥
कपिलाघृतेन दीपं स्यात् सितरक्तासितासु वा । अजाघृतमलाभे तु शुद्धतैलं तु कन्यसम ॥
कपिलाया घृतं श्रेष्ठमन्यासां मध्यमं भवेत् । अधमं स्यादजासर्पि शुद्धतैलं तु कन्यसम ॥
सात्त्विकं राजसं चैव तामसं च क्रमेण तु । कर्पूरावर्तितं दीपं दापयेत्सर्वसिद्धिदम् ॥
श्रेष्ठं युगाङ्गुलज्वालं मध्यमं तु गुणाङ्गुलम् । अधमं द्व्यङ्गुलज्वालं दीपमेवं प्रकीर्तितम् ॥
वृक्षबीजोद्भवैः स्नेहैः शिवदीपं तु वर्जयेत् । माहिष्येण घृतेनैव शिवदीपं न कारयेत् ॥

[2] B : भृत्वा pour हृत्वा
[3] A : यथोच्यते pour अथोच्यते
[4] B, C, D, E : निर्धूमज्वलनाङ्गारधूपपात्रोदरे
[5] A : पूर्ण pour धूप
[6] E : शीतारि वात्र
[7] C : सर्वतो वाथ गुग्गुलम
[8] C, D, E : दीपं तु
[9] Le mot वर्ति se trouve ici au masculin (ou neutre) au lieu du féminin normal.
[10] D : वापयेत्
[11] A : संयोक्ष्य
[12] C, D, E : तत्तन्मन्त्रेण दापयेत्
[13] C : दापयेत्
[14] Cf. *Kāmikāgama*, I, 4, 500b-501a :

श्रीमत्पञ्चमहाशब्ददर्पणच्छत्रचामरैः । गेयनृत्तजपस्तोत्रैस्तदा तमभिनन्दयेत् ।

[15] B : अञ्जनं : D : व्यञ्जनं
[16] D : क्रमादत्र

गीतनृत्तैश्च सातोद्यैर्जयशब्दादिमङ्गलैः । तोषयेद्देवदेवेशं लिङ्गस्थं भुवनेश्वरम् ॥ २११ ॥

[ पञ्चवक्त्रेषु हविःप्रदानम्[1] ]

ततो हविःप्रदानं स्यात्पञ्चवक्त्रेषु चैव हि । [2]ईशानके तु शुद्धान्नं गौलं तत्पुरुषे [3]तथा ॥२१२

[4]कृसरं दक्षिणे वक्त्रे मुद्गान्नं च तथोत्तरे । पश्चिमे पायसं चैव स्वस्वनाम्ना समाहितः ॥ २१३

दापयेत्स्वस्वदिग्भाग ईशानस्याग्रके भवेत् । अलाभे पञ्चहविषामग्रे शुद्धान्नमुच्यते ॥ २१४ ॥

[ बलिदानम्[5] ]

[6]ततो बलिप्रदानं स्याद् [7]वृषेन्द्रस्य च [8]नन्दिनः । महाकालस्य [9]च द्वारि ततो [10]बाह्ये बलिं क्रमात् ॥

परिवारविधौ प्रोक्ता ये देवास्तु मया हरे । तेषां शुभ्रोत्तरीयेण पुत्रकेणैव दापयेत् ॥ २१६ ॥

ताम्बूलं च ततो दद्यान्मुखवाससमन्वितम् । सामान्यार्घ्यं गृहीत्वाथ कुर्यादावरणार्चनम् ॥ २१७ ॥

---

[1] Cf. *Rauravāgama*, vol. I, II, 10, 36b-38a :

शुद्धौदनं हरिद्रान्नं पायसान्नं गुलौदनम् । मुद्गौदनं क्रमेणैव चेशपञ्चमुखे यजेत् ॥
तेष्वेवं तु यथालाभं पूर्वे वा पश्चिमे मुखे । हृदा निवेदयेद्धीमान्पानीयादि च पञ्चसु ।

cf. *Kāraṇāgama*, I, 33, 35b-36 :

कृसरान्नं सद्यवक्त्रे वामवक्त्रे गुलौदनम् । पायसमघोरवक्त्रे तु शुद्धान्नं पुरुषास्यके ॥
मुद्गान्नमीशवक्त्रे तु पञ्चवक्त्रे निवेदयेत् ।

[2] A : ईशानस्य तु ; C : ईशानेन तु    [3] A : ततः pour तथा

[4] A : कृसरान्नं pour कृसरं ; C : कुसरं

[5] Cf. *Kāraṇāgama*, I, 30, 400-401 :

द्वारस्य दक्षिणे पार्श्वे नन्दिने बलिमाचरेत् । महाकालाय वामे तु वृषभाय तदग्रतः ॥
ताम्बूलं दापयेत्पश्चात्सद्येन तु विशेषतः । परिवारबलिं दत्त्वा ''

[6] B, E : तदन्ते बलिदानं ; C : अतो बलिप्रदानं

[7] E : वृषेन्द्राय pour वृषेन्द्रस्य    [8] B, C, D, E : नन्दिने pour नन्दिनः

[9] A : चत्वारि pour च द्वारि    [10] A : बाह्यबलिं

[ आवरणार्चनम्[1] ]

अनन्तेशं च सूक्ष्मं च [2]शिवोत्तमं चैकनेत्रकम् । एकरुद्रं त्रिमूर्तिं च [3]श्रीकण्ठं च शिखण्डिनम्॥
[4]अग्रादारभ्य संपूज्य [5]तथोमां चण्डमेव च । नन्दिनं च महाकालं वृषं विघ्नेशमेव च ॥२१९॥
महासेनं च भृङ्गीशं [6]वामादारभ्य पूजयेत् । [7]अथेन्द्राग्नी यमं चैव निर्ऋतिं [8]वरुणं तथा॥२२०
वायुं सोमं [9]तथेशानमनन्तं कमलासनम् । पूजयित्वाथ[10] वज्रं च शक्तिं दण्डं तथैव च॥२२१
खड्गं चैव तथा पाशं सृणिं पश्चाद्गदामपि । त्रिशूलं [11]पद्मचक्रे च [12]स्वदिग्भागे तु पूजयेत् ॥
[13]पद्ममिन्द्रेशयोर्मध्ये ब्रह्मबाह्ये समर्चयेत् । रक्षोवरुणयोर्मध्ये चक्रं [14]केशवबाह्यतः ॥ २२३ ॥

---

[1] Cf. *Virāgama*, 38, 121-132 :

" विद्येशावरणं शृणु । अनन्तं पूर्वतः पूज्य सूक्ष्मं वै दक्षिणेन तु ॥
शिवोत्तमं पश्चिमे पूज्यैकनेत्रं तथोत्तरे । एकरुद्रं तथेशान्यां त्रिमूर्तिं त्वग्निगोचरे ॥
श्रीकण्ठं चैव नैर्ऋत्यां शिखण्डिं वायुगोचरे । विद्येशावरणं ह्येतद् गणेशावरणं शृणु ॥
उमादेवीं चोत्तरे देशे पूजयेद्देशिकः सदा । चण्डेशमीशदिग्भागे नन्दीशं पूर्वतो यजेत् ॥
महाकालं वह्निदेशे वृषभं दक्षिणे यजेत् । विघ्नेशं निर्ऋतौ चैव भृङ्गीशं वारुणे यजेत् ।
महासेनं च वायव्यां जयेद्गन्धपुष्पकैः । गणेशावरणं ह्येतल्लोकपालाञ्शृणुष्व च ॥
इन्द्रं तु पूर्वतः पूज्य वह्निं चाग्नेय एव च । याम्यायां तु यमं पूज्य निर्ऋत्यां निर्ऋतिं यजेत् ॥
वारुण्यां पूज्य वरुणं वायव्यां वायुमेव च । सौम्यायां सोमं संपूज्यैशान्यामीशमेव च ॥
ब्रह्माणं नैर्ऋते भाग ईशान्यां विष्णुरुच्यते । लोकेशावरणं ह्येतल्लोकपालास्त्रमुच्यते ॥
पूर्वे तु वज्रं संपूज्य शक्तिं चाग्नेय एव च । याम्ये दण्डं यजेत्तत्र खड्गं निर्ऋतिगोचरे ।
वारुण्यां तु यजेत्पाशमङ्कुशं वायुगोचरे । गदायुधं चोत्तरे पूज्य शूलमीशानगोचरे ॥
पद्मं तु नैर्ऋते भागे चक्रं त्वीशानगोचरे । गन्धैः पुष्पैश्च धूपैश्च दीपैश्चैव तु पूजयेत् ॥

[2] C : शिवोक्तं

[3] B : शितिकण्ठं pour श्रीकण्ठं च

[4] E : अग्न्यारभ्य च संपूज्य

[5] A : ततोमा

[6] A : वामाद्यारभ्य

[7] B, C, D, E : महेन्द्राग्नी

[8] A : वरुणमेव च ; B : वारुणं तथा

[9] E : तथेशानमनन्तं

[10] A, B, C, D : च pour अथ

[11] A : पादचक्रौ च

[12] B : वेदिभागे तु : E : स्वदिग्भागेषु

[13] A : पद्म pour पद्मम

[14] B, C, E : केशवबाह्यके : D : केशवभाग्यके

एवं पीठे क्रमाद्देवांश्चतुरावरण[1]स्थितान् । [2]बाह्ये बाह्ये क्रमेणैव पूजयित्वा ततः सुधीः ॥२२४॥
[3]पूर्वोक्तेन स्वनाम्ना तु सर्वेषामर्चनं भवेत् ।

[ नित्याग्निकार्यम्[4] ]

महाघण्टानिनादेन [5]हत्वा यवनिकामपि ॥ २२५ ॥
सामा यार्घ्यकरो भूत्वा प्रविश्य च [6]महानसम् । आग्नेय्यां दिशि कुण्डे तु वेदाश्रे हस्तसंमिते ॥
त्रिमेखलासमायुक्ते दक्षिणे योनिसंयुते । [7]प्रलिपेद्गोमयेनाथ चतुर्भिर्विटरैर्युते ॥ २२७ ॥
उपविश्योत्तरास्यस्तु समिद्धं पावकं ततः । [8]नमस्कृत्यार्घ्यमायोज्य परिषिच्य ततः क्रमात् ॥
दिक्पतीनर्चयेदर्घ्यगन्धाद्यै[9]रनुपूर्वशः । ततः शिवासनं चाग्नौ [10]पद्ममेकं प्रकल्पयेत् ॥ २२९ ॥
पद्मासनायेत्युच्चार्य नमस्कारसमन्वितम् । [11]तत्र लिङ्गे यथा [12]देवः सदाशिव इतीरितः॥२३०॥

---

[1] C, D, E : चतुर्थावरण pour चतुरावरण

[2] E : बाह्यबाह्यक्रमेणैव　　[3] A : सर्वोक्तेन

[4] Cf. *Kāraṇāgama*, I, 15, I-4a ; 6-12a :

अतः परं प्रवक्ष्यामि नित्याग्नियजनक्रमम् । आग्नेय्यां स्थापयेदग्निं विधिना देशिकोत्तमः ॥
चतुरश्रं वाथ वृत्तं वा मेखलात्रयसंयुतम् । अरत्निमात्रविस्तारं तन्मानं बिलमुच्यते ॥
पश्चिमे दक्षिणे वापि योनिरश्वत्थपत्रवत् । कुण्डे तु स्थापयेदग्निमविच्छिन्नं तु कारयेत् ॥
यावन्मूलोपचारं तु तावदग्निं सुपूजयेत् । ...　...　...　...　... ॥
शिवाग्रे वाथ कर्तव्यं सर्वशान्तिकरं परम् । मार्जनं प्रोक्षणं तत्र गोमयेनोपलेपयेत् ।
अघोरास्त्रेण मन्त्रेण शोधयेत्तु विशेषतः । गन्धैः पुष्पैश्च धूपैश्च दीपैरर्घ्यैश्च पूजयेत् ॥
परिस्तरेद् द्विदर्भैश्च परिषेकमथाचरेत् । कृत्वा चैवाज्यसंस्कारं पश्चादाघारमेव च ॥
आज्यं हुत्वा हृदा मन्त्री हविश्चैवाक्षमात्रतः । अग्न आयाहि मन्त्रेण शोधयेत्तु विशेषतः ।
प्रत्येकं षोडश वारं द्वाविंशद्वा समाचरेत् । प्रणवेनैव हुत्वा तु पश्चादिध्माहुतिं चरेत् ॥
चरुं हुत्वा तदन्ते तु व्याहृतिं जुहुयात्ततः । ब्रह्माङ्गानि ततो हुत्वा स्विष्टान्तं हि न कारयेत् ॥
प्रणीताघारसमिधो ब्रह्मकूर्चं विना चरेत् ।

[5] B : भूत्वा pour हत्वा　　[6] A : महासनः

[7] La forme grammaticale correcte est प्रलिम्पेद् ; A : प्रलिप्येद्

[8] B : नमस्कृत्वा समायोज्य ; C, D : नमस्कृत्यास्यमायोज्य ; E : नमस्कृत्य समायोज्य

[9] A : अर्घ्यं गन्धाद्यैर् pour अर्घ्यगन्धाद्यैर् ; E : अर्घ्यैर्गन्धाद्यैर्

[10] A : परमेकं　　[11] E : यत्र pour तत्र

[12] B : देवं सदाशिवमुदीरितम् ; C, D, E : देवः सदाशिव उदीरितः

तथा ध्यात्वात्र तं देवं पञ्चब्रह्माङ्गसंयुतम् । आवाहनादिकं सर्वं कृत्वा होमं [1]समारभेत् ॥२३१॥
संस्कारं सर्पिषः कृत्वा प्रोक्षयित्वा [2]समिच्चरून् । व्याहृतिं सर्पिषा हुत्वा [3]संपूज्य च पुनः शिवम्॥
समिदाज्यचरूणां तु प्रत्येकं पञ्चविंशकम् । दशकं [4]व्याहुतीनां तु [5]मूलेन जुहुयात्क्रमात् ॥२३३॥
पञ्चब्रह्मशिवाङ्गैस्तु प्रत्येकं पञ्चसंख्यया । सर्पिषा जुहुयात्पश्चादनन्तादि यथाक्रमम् ॥२३४॥
[6]एकैकामाहुतिं दद्यादथवास्त्रसमन्विताम् । [7]तिलेन चरुभिः कुर्यादाज्येन चरुणापि वा ॥२३५॥
ततो होमं समाप्यैवं[8] संपूज्य परिषिच्य च । अग्निधाम्नस्ततो मन्त्री प्रविश्याभ्यन्तरं ततः[9]॥

[ नित्योत्सवः, जपः[10] प्रदक्षिणं च ]

नित्योत्सवं [11]ततः कुर्याद्यथाशास्त्रविनिश्चितम् । नित्योत्सवसमाप्तौ तु जपं कुर्यात्स्वशक्तितः ॥
त्रिविधेषु जपेष्वेकं मानसादिषु पूजकः । जपं कृत्वा समुत्थाय कृत्वा [12]च त्रिः प्रदक्षिणम् ॥
सव्यापसव्यमार्गेण [13]दद्याच्च चुलुकोदकम् ।

[ चुलुकोदकविधिः[14] ]

चुलुकोदविधिं वक्ष्ये [15]तच्छृणु त्वं जनार्दन ॥ २३९ ॥

---

[1] E : समाचरेत्
[2] B : समुच्चरन : D : समिच्चलम्
[3] A : संपूज्यैव
[4] B, E : व्याहृतीनां तु
[5] C : अनले pour मूलेन
[6] C, D, E : एकंकमाहुतिं
[7] B : तिलांश्च pour तिलेन : C, D : तिलाश्च : E : तिलैश्च
[8] A : एव pour एवं
[9] C ajoute इत्यजिताख्ये महातन्त्रे नित्यार्चनविधिपटलः समाप्तः
[10] Cf. *Kiraṇāgama*, II, 2, 42-44 :
जपेद्यावदनुद्विग्नो न द्रुतं न विलम्बितम् । नास्पष्टं न मनोभ्रान्तं जपं कुर्यात्समाहितः ॥
त्रिविधः स च विज्ञेयो मानसो मनसैव तु । उच्चार्यः स्यात्स यो भाष्यो ज्ञेयोऽन्यश्रवणात्मकः ॥
परिवर्त्याक्षमालां तां नागेन्द्रपरिवर्तवत् । एवं कृत्वा जपेन्मन्त्री ध्यायेद्देवं कलातनुम् ॥
[11] A : तु कुर्वीत pour ततः कुर्याद्
[12] C : तु pour च
[13] E : दत्वात्र pour दद्याच्च
[14] Cf. *Kāraṇāgama*, I, 30, 447b-448 :
अञ्जलिं दक्षिणं हस्तं कुञ्चितं चतुरङ्गुलम् । पुष्पवारि गृहीत्वाथ पादमूले प्रदापयेत् ॥
चुलुकोदमिति ख्यातं पूजयेत्तु प्रजापते ।
[15] A, B, C, D : तच्छृणुष्व pour तच्छृणु त्वं

अर्घ्योदकं [1]समापाद्य दक्षिणे हस्तसंपुटे । [2]गन्धपुष्पाक्षतैर्देवं [3]हृदि तं संनिवेश्य च ॥२४०॥
पठेन्मन्त्रमिमं[4] मन्त्री [5]तच्छृणु त्वं समाहितः । [6]गुह्यातिगुह्य गोप्ता त्वं गृहाणास्मत्कृतं जपम् ॥
सिद्धिर्भवतु[7] मे येन [8]त्वत्प्रसादान्मयि स्थिरा । [9]यत्किंचित्कर्म हे देव सदा सुकृतदुष्कृतम् ॥
तन्मे शिवपदस्थस्य भुङ्क्ष्व क्षपय शंकर । शिवो दाता शिवो [10]भोक्ता शिवः सर्वमिदं जगत् ॥
शिवो [11]यजति सर्वत्र यः शिवः सोऽहमेव तु । [12]एवं मन्त्रं[13] समुच्चार्य स्वनाममूलमन्त्रतः ॥२४४
लिङ्गमूले समायोज्य क्षमस्वेति विसर्जयेत् । प्रातः संध्यां समाप्यैवमुपसंध्यां [14]समारभेत् ॥२४५
[15]द्वारदेवार्चनं [16]कृत्वा प्रविश्यान्तर्गृहं ततः । तत्र [17]शुद्धिषु सर्वासु लिङ्गशुद्धिं [18]समाचरेत् ॥२४६
आसनावाहनं [19]मन्त्रैर्ब्रह्माङ्गैः शिवमर्चयेत् । अथ मध्याह्नसंध्यायां विशेषोऽयं च कथ्यते ॥ २४७
[20]गव्याभिषेककाले तु पञ्चामृतविधिर्भवेत् । मध्याह्नादूर्ध्वसंध्यायां[21] द्वितीयार्चनवद्भवेत् ॥२४८
रात्रौ प्रथमसंध्यायां [22]द्वितीयायां च कथ्यते । विशेषोऽयं सुरश्रेष्ठ कुर्यादारात्रिकं तयोः[23]॥२४९

---

[1] B, E : समासाद्य
[2] A : गन्धपुष्पाक्षतोपेतं
[3] A : ह्रादितं ; B, C, E : हृदिकं ; D : ह्रदितं
[4] A : इदं pour इमं
[5] E : तच्छृणुष्व pour तच्छृणु त्वं
[6] Cf. *Kāmikāgama*, I, 4, 512-514 :
गुह्यातिगुह्यगोप्ता त्वं गृहाणास्मत्कृतं जपम् । सिद्धिर्भवतु मे येन त्वत्प्रसादात्त्वयि स्थिते ॥
यत्किंचित्कर्म हे देव सदा सुकृतदुष्कृतम् । तन्मे शिवपदस्थस्य भुङ्क्ष्व क्षपय शंकर ॥
शिवो दाता शिवो भोक्ता शिवः सर्वमिदं जगत् । शिवो यजति सर्वत्र यः शिवः सोऽहमेव तु ॥
[7] A : भवति pour भवतु
[8] C : त्वत्प्रसादात्त्वमीश्वर ; D : त्वत्प्रसादात्त्वमीश्वरम : E : त्वत्प्रसादान्महेश्वर
[9] B : यत्किंचित्कर्मदेहे च
[10] D : प्रोक्ता
[11] A : जयति pour यजति
[12] E : शिवो यज्ञो जपश्चैव स्वनाममूलमन्त्रतः
[13] A : मन्त्रान् pour मन्त्रं
[14] A : अतः शृणु pour समारभेत् ; D, E : अथारभेत्
[15] C omet ce *śloka* 246
[16] E : हित्वा pour कृत्वा
[17] B : शुद्धिं च
[18] D : समारभेत्
[19] A : मन्त्रं pour मन्त्रैर्
[20] B, E : द्रव्य pour गव्य
[21] C : संध्यायाः pour संध्यायां
[22] A : द्वितीयायां चैव कथ्यते
[23] Pour les détails concernant le आरात्रिक, voir le *Sūkṣmāgama*, 9, 1-9 :
मण्डपे स्वत्रदेशे वा स्थण्डिलं शालिना कुरु । पुण्याहं वाचयेत्तत्र प्रोक्षयेत्पुरुषेण तु ॥
त्रिपात्रूर्ध्वे न्यसेद्धीमानभ्यर्च्यारात्रिकं हृदा । बहुरूपेण मन्त्रेण दीपमारोप्य देशिकः ॥
गन्धपुष्पादिनाभ्यर्च्य धूपदीपास्त्रमन्त्रतः । गर्भगेहं प्रविश्याथ पूर्वोक्तविधिना यजेत् ॥
धूपदीपं ददेच्छम्भोः पश्चादारात्रिकं ददेत् । सर्षपं च तिलं निम्बपत्रं कार्पासबीजकम् ॥
लवणेन समायुक्तं भ्रामयेल्लिङ्गमूर्धनि । निक्षिप्यारात्रिकं मध्ये तदन्ते भसितं ददेत् ॥
आरात्रिकं तु संग्राह्य वाद्यघोषसमन्वितम् । वृषाग्रे तु विनिक्षिप्य पादप्रक्षालनं कुरु ॥

[1]तस्यामेव तु पूजायां विशेषोऽयमुदीरितः। [2]शक्तिस्थानात्तु तां देवीं सर्वालंकारसंयुताम्॥२५०॥
गीत[3]नृत्तादिभिर्युक्तैः शङ्खदुन्दुभिनिस्वनैः। आलयान्तर्गृहे [4]लिङ्गवामपार्श्वे निधाय च॥२५१॥
पूजयित्वाष्टपुष्पेण देवं देवीं च [5]पूजकः। [6]शिवाभ्यां तु हविर्दत्त्वा[7] पूजामेवं समापयेत्॥२५२॥

[पादुकाराधनम्[8]]

अथवा पादुके रम्ये [9]स्वर्णादिभिर्विनिर्मिते। स्थलिकायां तु विन्यस्य [10]तयोर्देवं समर्चयेत्॥
शिरसा वाहयित्वा [11]ते शङ्खदुन्दुभिनिस्वनैः। पिञ्छचामरसंयुक्ते[12] शक्तिस्थानं समानयेत्॥
शयने [13]नितरां रम्ये शिवयोः परिकल्पिते। [14]शिवया शिवमभ्यर्च्य पादुके [15]वाममन्त्रवित्॥
[16]शयनाभ्याशके न्यस्य चक्रवर्त्युपचारतः। शिवयोश्च हविर्दत्त्वा[17] तत्रापूपादिकं तथा॥२५६॥

---

[1] B : तस्यां वामे तु ; C, D, E : तस्यां वामे तु

[2] A : शक्तिस्थानात्कृतां ; B, D : शक्तिस्थाने तु तां

[3] C, D, E : वाद्य pour नृत्त

[4] A : लिङ्गं वामपार्श्वे

[5] B : पूर्वकम् ; E : पूर्वतः

[6] A : शिवान्यां तु

[7] E : दद्यात् pour दत्त्वा

[8] Cf. *Sūkṣmāgama*, 45, 1-8 :
पादुकाराधनं वक्ष्ये श्रुणु त्वं तत्प्रभञ्जन। अर्धयामस्य पूजान्ते पूजयेत्पादुके उभे॥
स्थलिकोर्ध्वे तु विन्यस्य तन्मध्ये वृषभं लिखेत्। तस्योर्ध्वे शिवमावाह्य गन्धपुष्पस्रगादिभिः॥
शिबिकोर्ध्वे समारोप्य शङ्खघोषसमन्वितम्। सर्वालंकारसंयुक्तं सर्ववाद्यसमन्वितम॥
स्तोत्रगीतसमायुक्तं शक्तिस्थानं समाविशेत्। पादप्रक्षालनं कृत्वा पाद्यमाचमनं ददेत्॥
हस्ते वारि गृहीत्वा तु विकिरेच्छयनोपरि। देवीमभ्यर्च्य विधिवत्क्रमेणावाह्य देशिकः॥
शयनोपरि विन्यस्य तस्योर्ध्वे शिवमर्चयेत्। पाद्यमाचमनं दत्त्वा भक्ष्यापूपादिकं ददेत्॥
धूपदीपादिकं दत्त्वा ताम्बूलं दापयेद्बुधा। दशास्त्रं परितोऽभ्यर्च्य पादुके विन्यसेत्स्थले॥
वस्त्रेणैव पिधानं च कुर्यात्कपाटबन्धनम्। चण्डेश्वरं समभ्यर्च्य स्वगृहं प्रविशेद् गुरुः॥

[9] C, D, E : सुवर्णादिभिर्निर्मिते

[10] E : तयोर्देवौ

[11] A : तौ ; B, C, D, E : तां

[12] A : संयुक्तौ pour संयुक्ते ; B, C, D, E : संयुक्तां

[13] A : निर्मिते pour नितरां

[14] A : शिवाया ; E : शिवाय

[15] A : वाहमन्त्रवित्

[16] A : शयनाभ्याशे हि विन्यस्य ; B, E : शयनाभ्याशके न्यस्त्वा ; C : शयनाभ्यांशके न्यस्त्वा

[17] E : दद्यात् pour दत्त्वा

गीतनृत्तादिभिश्चैव शङ्खदुन्दुभिनिस्वनैः[1] । [2]एवं रात्रौ द्वितीयायां पूजां सम्यक्समापयेत् ॥२५७
[3]तृतीयामुपसंध्यां च पूर्ववत्परिकल्पयेत् । [4]चतुर्थायां तु पूजायां शङ्खदुन्दुभिनिस्वनैः ॥२५८॥
कुर्यात्प्रबोधकं[5] शंभोरतः[6] पूजां समारभेत् । तत्काले [7]स्थलिकायां तु [8]पूर्ववत्पादुके तथा ॥
[9]विन्यस्यातोद्यसंयुक्तमानीयान्तः प्रविश्य च । संपूज्योद्वासयेद्देवं लिङ्गे पूजार्थमव्ययम्॥२६०॥
तत्काले [10]चात्मशुद्ध्यादीन्पूजकः संप्रयोजयेत् ।

[अष्टपुष्पविधिः[11]]

पञ्चस्वप्युपसंध्यासु यदि वा स्नपनादिकम् ॥२६१॥
हित्वा दत्त्वाष्टपुष्पं तु हविर्दत्त्वा समापयेत् । मूलेन मूर्तिमन्त्रेण [12]षडङ्गैरपि च क्रमात्॥२६२॥
अर्घ्यानन्तरतः पुष्पं [13]दत्त्वा स्यादष्टपुष्पिका ।

---

[1] Le ms. B place ici les *śloka* 261b et 262a
[2] B : एवं यामद्वितीयां तु
[3] B : द्वितीयाम् pour तृतीयाम
[4] Cf. *Kāraṇāgama*, I, 31, 34-37a :
रात्रान्तके विशेषेण सर्वदेवप्रियार्थकम् । कुर्यात्पञ्चमहाशब्दं तथाशुभनिवृत्तये ॥
दारुजं पृथिवीजातं शङ्खजं चाब्जमुच्यते । आग्नेयं लोहजं प्रोक्तं वायव्यं वंशजं भवेत् ॥
गेयं गगनजातं स्यात्पञ्चैते शब्द उच्यते । सुषिरं गायनं चैव चर्मबन्धं तथैव च ॥
तन्त्रीवाद्यसमायुक्तः शब्दः पञ्चमहाह्वयकः ॥
[5] A : प्रबोधिकां pour प्रबोधकं : E : प्राबोधकं
[6] E : ततः pour अतः
[7] A : स्थलिकायान्तं
[8] A : पूर्ववत्पादुकावुभौ
[9] B, C, D, E : विन्यस्त्वा pour विन्यस्य
[10] D : चात्मशुद्ध्यादि पूजकः
[11] Normalement, dans la pratique, नेत्रमन्त्र est omis parmi les six अङ्गमन्त्र et आसनमन्त्र est ajouté. Cf. *Sakalāgamasārasaṃgraha*, śl. 1040-1044 :
पङ्कजार्कपलाशं च नन्द्यावर्तं च मल्लिका । करवीरवकं चैव नीलोत्पलमथाष्टकम् ॥
आसनं प्रथमं पुष्पं दातव्यं शुद्धतेजसा । मूर्तिदानं हृदा कार्यं पुष्पेणैवापरेण तु ।
पञ्चपुष्पप्रदानेन पञ्चाङ्गानि प्रपूजयेत् । शिवं तथाष्टमेनैव नेत्रहीनाष्टपुष्पिका ॥
एतानि चाष्टपुष्पाणि सर्वसाधारणानि तु । प्रातर्मध्याह्नसायाह्ने तथा चान्तरिते रवौ ॥
पूजयेत्परया भक्त्या ह्यष्टपुष्पविधानतः ।
cf. *Śaivaparibhāṣāmañjarī*, 8, 67 : आसनमूर्तिमूलाङ्गैर्नेत्रहीनाष्टपुष्पिका ।
[12] B : संध्यांशैरपि च
[13] A : दत्त्वा स्यादष्टपुष्पिकाम् ; C, D : दत्त्वार्घ्यादष्टपुष्पकम् ; E : दत्त्वार्घ्यादष्टपुष्पकम्

[कालविधिः[1]]

[2]कालातिक्रमणे दोषो [3]नैव ह्रासे तु विद्यते ॥ २६३ ॥

तस्मात्सर्वप्रयत्नेन [4]काले काले समर्चयेत् । [5]शुद्ध्यर्थं नाडिका [6]प्रोक्ता नाडिकैकाभिषेचने[7] ॥

अर्चने [8]च तथा प्रोक्ता तथालंकारकर्मणि । हविःप्रदाने[9] [10]चार्धा स्याद्बलिदाने तथैव च॥२६५॥

तथैवावरणार्चायां शेषं नित्योत्सवं[11] भवेत् । [12]एवं मिश्रेऽथ संकीर्णे हविरादिचतुष्टयम्॥२६६॥

कृत्वा नाडिकयान्यानि[13] [14]नृत्तान्तमुपकल्पयेत् । एवं कालविधिः प्रोक्तो महासंध्यात्रयस्य च[15]॥

---

[1] Cf. *Kāmikāgama*, I, 5, 5-9 :

पूजारम्भात्तु नृत्तान्तं कुर्यात्संध्यावसानकम् । संध्यातिक्रमणाद्दोषो न्यूनायां तु न दोषभाक् ॥
गुरूपचारपूजायां विधिरेषः प्रकीर्तितः । घटिकाद्वितयं स्नाने घटिकैकार्चने भवेत् ॥
घटिकार्धं निवेद्यार्थं बलिदानं तु तत्समम् । नित्याग्निकार्यमर्धं च नित्योत्सवे द्विनाडिका ॥
घटिकैका तु नृत्तार्थं काल एषः प्रकीर्तितः । एवं कालविधिः प्रोक्तो महासंध्यात्रयस्य तु ॥
लघूपचारे संध्यायां हीनं चेत्तु न दूषकम् । यथासंभवकाले तु यथासंभवनाडिका ॥

cf. *Cintyāgama*, 6, 2b-4 :

द्वारार्च्यं नाडिकापादं तत्समं लिङ्गशोधनम् । स्नानकं मन्त्रविन्यासमेकमेकं प्रति प्रति ॥
शिवावृतार्चनं चार्धं नैवेद्यमर्धनाडिका । तत्समं होमकर्मेति बलिदानं द्वयार्धकम् ॥
एकं वा धूपदीपादि यजेद्यामं प्रति प्रति ।

[2] E : कालातिक्रमणाद्दोषो     [3] A : न ह्रासे तु न विद्यते

[4] B, E : सर्वकाले pour काले काले ; C : पूर्वकाले ; D : सर्वं काले

[5] A : शुद्ध्यर्थनाडिका     [6] D : प्रोक्तं

[7] A : अभिषेचयेत् pour अभिषेचने

[8] B, C, D, E : तु pour च     [9] C : प्रधाने pour प्रदाने

[10] A : चतुर्थं pour चार्धा

[11] Le mot नित्योत्सव se trouve au neutre au lieu du masculin ; voir *Rauravāgama*, vol. I, p. 69, note 6.

[12] Voir les *śloka* 19 à 22 de ce *paṭala* pour les détails concernant les मिश्र et संकीर्ण

[13] A : अन्योन्यो pour अन्यानि : C, E : अन्योन्यौ ; D : अन्यान्यौ

[14] A : नृत्तार्थम् pour नृत्तान्तम     [15] A : तु pour च

[यवनिकाविधिः[1]]

पञ्चशुद्धिविधौ [2]पूर्वमर्चालंकारकर्मणि । हविःप्रदाने सर्वत्र तथा चावरणार्चने ॥ २६८ ॥
ताम्बूलादिप्रदाने च कुर्याद्यवनिकां [3]बुधः ।

[वाद्यघोषकालः[4]]

स्नाने [5]यवनिकोद्धारे हविर्दानान्तिमे तथा ॥ २६९ ॥
आरात्रिके बलौ तद्वन्नित्योत्सवविधावपि । कुर्यादातोद्यवाद्यं तु केवलं शङ्खनिस्वनम् ॥२७०॥
हविरानयने चैव ताम्बूलानयने तथा । माल्याद्यानयने चैव भक्ष्यपानीययोस्तथा ॥ २७१ ॥
[6]कारयेद्यजने नित्यमाचार्यः शास्त्रपारगः । परार्था स्यादियं पूजा :

[आत्मार्थपूजायां विशेषः[7]]

चात्मार्थे तु जनार्दन ॥ २७२ ॥
एककाले द्विकाले वा त्रिकाले वा विधीयते । [8]न द्वारपूजा[9] तत्रोक्ता [10]न चण्डेशनिवेदनम्
॥ २७३ ॥

---

[1] Cf. *Suprabhedāgama*, I, 8, 77b-79a :
निर्माल्योद्वासने काले स्नानान्ते तु विशेषतः । हविष्यादौ च नृत्तान्ते कुर्याद्यवनिकां ततः ॥
स्नानारम्भे तथा धूपे हविष्यान्ते तथैव च । नित्योत्सवादिकाले च पटप्रच्छादनं त्यजेत् ॥

[2] E : पूर्वे pour पूर्वम्  [3] A : ततः pour बुधः

[4] Cf. *Suprabhedāgama*, I, 10, 15b-16a :
स्नाने भोजनके याने प्रच्छन्नपटमार्जने । बलिदानेऽप्युपःकाले वाद्यघोषं तु कारयेत् ॥

[5] B, C, D, E : यवनिकाद्वारे  [6] A : कारयन्त्यजने

[7] Cf. *Suprabhedāgama*, I, 8, 10b-13 :
दीपान्नं वा हविष्यन्नमात्मार्थे तु परार्थके । सामान्यमिदमाख्यातं परार्थे तु विशेषतः ॥
नित्योत्सवं तु नित्याग्नियजनं पादुकार्चनम । नीराजनं रजन्यां च गीतं नृत्तं च वाद्यकम् ॥
तेषु कुर्याद्यथाशक्यं लिङ्गे स्थावरसंज्ञके । उक्तेषु तेषु सर्वेषु विना नित्योत्सवं ततः ॥
पादुकाभ्यर्चनं त्यक्त्वा शेषाण्यात्मार्थ आचरेत् ।

[8] Les *śloka* 273b à 275 sont cités dans la *Kriyādīpikā*, pp. 26-27

[9] E : तद्द्वारपूजा

[10] B : न चण्डेशं निवेशयेत् ; C : न चण्डेशन वेशयेत् ; E : न चण्डेशनिवेशनम

[1]नामन्त्रणहविस्तत्र न [2]नित्योत्सवमेव हि । महाघण्टा [3]च नोद्दिष्टा [4]न तिरस्करिणीक्रिया ॥
शुद्धनृत्तविधिर्नोक्तो [5]सूर्यं विघ्नं गुरुं तथा । संपूज्य यजनं कुर्यादात्मार्थं मन्त्रवित्तमः ॥२७५॥

[6]इत्यजिताख्ये [7]महातन्त्रे [क्रियापादे] [8]अर्चनाविधिर्नाम
विंशः पटलः ॥

---

[1] A : नामन्त्रिणहविस्तत्र ; E : नामन्त्रिणा हविस्तत्र: *Kriyādīpikā* : न मन्त्रेण हविस्तत्र

[2] Voir p. 235 note 11

[3] A : न चोद्दिष्टा ; D : ०र्चनोद्दिष्टा

[4] B : नन्दिनास्तरणीक्रिया

[5] B : सूर्यविघ्नं pour सूर्यं विघ्नं

[6] E : इत्यजिते pour इत्यजिताख्ये

[7] E omet महातन्त्रे

[8] A : अर्चनाविधिरेकविंशः पटलः ; B : अर्चनाविधिपटलः : C : नित्योत्सवविधिपटलः समाप्तः ; E : अर्चनाविधिपटलः १९

## [एकविंशः पटलः]

### [अग्निकार्यविधिः[1]]

[2]अग्निकार्यमथो वक्ष्ये [3]भोगमोक्षैकसाधनम् । [4]हविषां हवनं त्वग्नावग्निकार्यमिति स्मृतम् ॥ १ ॥

[लिङ्गेऽग्नौ च शिवस्य यजनम्[5]]

[6]पूजां गृह्णाति लिङ्गस्थो वह्निस्थो हविषा [7]हुतम् । एक एव शिवस्तस्मादुभयत्र [8]समः शिवः॥२॥
इति संचिन्त्य यत्नेन [9]लिङ्गेऽग्नौ च शिवं यजेत् ।

---

[1] Pour अग्निकार्यविधि, voir *Kāmika* I, 8, *Kāraṇa* I, 22 et II, 20, *Kiraṇa* II, 4, *Cintya* 30, *Dīpta* 33, *Makuṭa* 6, *Mataṅgapārameśvara*, *kriyāpāda* 30, *Mṛgendra* II, 6, *Yogaja* ms. pp. 347-356, *Raurava* vol. I, II, 15, *Vīra* 39, *Suprabheda* I, 11, *Sūkṣma* 6 et *Svāyambhuva* 50 ; pour कुण्डलक्षणविधि, voir *Kāmika* 7, *Kāraṇa* I, 21, *Kiraṇa* II, 5, *Raurava*, vol. I, II, 14, *Vīra* 54 et et *Suprabheda* I, 12

[2] E : अग्निकार्यविधिं वक्ष्ये

[3] A : भोगमोक्षप्रसादकम् ; B : भोगमोक्षे च साधनम्

[4] A : हविषा वहनं ; B : हविषावाहनं

[5] Cf. *Kāraṇāgama*, I, 23, 3b-6 :

कर्षणादिप्रतिष्ठान्ते प्रतिष्ठाद्युत्सवान्तके । प्रायश्चित्ते तथान्यस्मिन्मङ्गले शान्तिकर्मणि ।
कर्मारम्भेषु सर्वेषु वह्निरूपो महेश्वरः । पूजनायां विशेषेण रूपध्यानपुरःसरम् ॥
सर्वदेवमयो वह्निः सर्वमन्त्रमयस्तथा । मन्त्रविद्यात्मकश्चासौ सर्वज्ञानात्मकस्तथा ॥
तस्मात् सर्वेषु कार्येषु ध्यातव्यो विधिमार्गतः ।

[6] A : पूजागृहादिलिङ्गस्थो

[7] A : हुतम् ; E : हुतः

[8] B : शिवः समः

[9] A : लिङ्गोऽग्नौ

[कुण्डविधिः[1]]

इष्टकाभिः सुपक्काभिरपक्काभिरसंभवे ॥ ३ ॥

[2]कुण्डं कृत्वाथ तत्कुण्डे होमं कुर्याद्विचक्षणः । त्रिमेखलं भवेत्कुण्डमेकमेखलमेव वा[3] ॥ ४ ॥

विस्तारसमखातं[4] च ; तस्य लक्षणमुच्यते । [5]शतार्धशतहोमे तु [6]मुष्टिररत्निमितं भवेत् ॥ ५ ॥

[7]सहस्रायुतहोमस्य हस्तं हस्तद्वयं क्रमात् । लक्षे च दशलक्षे च [8]चतुर्हस्तं च षट्करम् ॥ ६ ॥

[9]कोटिहोमेऽष्टहस्तं स्यात्तस्मादूर्ध्वं न कारयेत् । [10]सहस्रकोटिं वा तत्र होमयेदष्टहस्तके ॥ ७ ॥

---

[1] Cf. *Kāraṇāgama*, I, **21**, 20a : सुधापक्वेष्टकाभिर्वा मृदा चैव तु कारयेत् ।

cf. *Kāmikāgama*, I, 7, 4-5a :

नित्यनैमित्तिके चैव काम्ये कल्पप्रचोदितम् । इष्टकाभि: सुपक्काभिरपक्काभिरसंभवे ॥

कुर्यात्कुण्डं तु शास्त्रोक्तं मन्त्रहोमानुरूपत: ।

[2] C : कुण्डीकृत्वाथ

[3] Cf. *Kiraṇāgama*, II, 5, 3-**5**a :

शतार्धशतहोमे तु मुष्ट्यरत्निप्रमाणकम् । सहस्रायुतहोमे तु हस्तहस्तद्वयं क्रमात् ॥

स्याल्लक्षप्रयुते होमे चतुर्हस्तं च षट्करम् । कोटिहोमेऽष्टहस्तं स्यात्तस्मादूर्ध्वं न कारयेत् ॥

त्रिमेखलं भवेत्कुण्डमेकमेखलमेव वा ।

cf. *Kāraṇāgama*, I, 21, 3-**6** :

कोट्याहुत्यष्टहस्तं स्याल्लक्षहोमं तु षट्करम् । अयुतस्य चतुर्हस्तं तथैवाष्टसहस्रकम् ॥

द्विहस्तं पञ्चसाहस्रे हस्तं साहस्रहोमके । रत्निमात्रं शताहुत्यां मुष्टिमात्रं शतार्धके ॥

मुष्टिमात्रमधोमानमष्टहस्तात्परं न हि । मात्राङ्गुलेन कर्तव्यमन्यमाने न कारयेत् ॥

कुण्डविस्तारमानेन कुर्यादवटकं तत: । कुण्डं त्रिमेखलोपेतमेकमेखलमेव वा ॥

[4] B : घातं pour खातं

[5] A : शतार्ध शतहोमे तु

[6] A : मुष्ट्यरत्निमिदं भवेत् ; C : मुष्टिरत्नमितं भवेत्

[7] A : सहस्रायुतहोमेऽर्धहस्तहस्तद्वयं क्रमात्

[8] A : चतुर्हस्तद्विषट्करम्

[9] C : कोटिहोमेषु हस्तं स्यात्

[10] A : सहस्रकोटी वा ; C : सहस्रकोटि वा

[मेखलालक्षणम्[1]]

पञ्चाङ्गुलं तु [2]मुष्टिः स्याद्रत्निस्तु तिथिसंख्यया । मुष्टिमात्रस्य कुण्डस्य प्रथमार्धाङ्गुला मता ॥८॥

एकाङ्गुला तदूर्ध्वस्था [3]तृतीया स्याद् द्वियङ्गुला । [4]रत्निमात्रस्य कुण्डस्य प्रथमाङ्गुलसंमिता ॥९॥

मेखला [5]द्वयङ्गुलोर्ध्वा स्यात्तदूर्ध्वा तु [6]त्रियङ्गुला । [7]हस्तमात्रस्य कुण्डस्य [8]प्रथमा द्वयङ्गुला मता ॥ १० ॥

---

[1] Cf. *Kiraṇāgama*, II, 5, 5b-12a :

मुष्टिमात्रस्य कुण्डस्य मेखला त्वङ्गुलद्वया । मेखलाद्वितयं कार्यं ह्यङ्गुलार्धाङ्गुलक्रमात् ।
अरत्निमात्रकुण्डस्य नेमिः स्यादङ्गुलैस्त्रिभिः । पूर्वा नेमिद्वयं चान्यद् द्वयङ्गुलाङ्गुलतो भवेत् ॥
हस्तमात्रस्य कुण्डस्य नेमिः स्याच्चतुरङ्गुला । अन्यन्नेमिद्वयं कार्यं त्र्यङ्गुलद्वयङ्गुलक्रमात् ॥
कुण्डस्य द्विकरस्य स्यात्पूर्वनेमिः षडङ्गुला । अन्याङ्गुलचतुष्केण तृतीया चाङ्गुलैस्त्रिभिः ॥
चतुर्हस्तस्य कुण्डस्य पूर्वनेम्यङ्गुलाष्टकम् । षड्भिरन्याङ्गुलैः कार्या चतुर्भिरपराङ्गुलैः ॥
कर्तव्या मेखला पूर्वा षड्ढस्तस्य दशाङ्गुला । अङ्गुलैरष्टभिश्चान्या तृतीया षड्भिरङ्गुलैः ॥
अष्टहस्तस्य या पूर्वा मेखला द्वादशाङ्गुला । दशाङ्गुला द्वितीया स्यात्तृतीयाष्टाङ्गुला मता ॥

cf. *Kāmikāgama*, I, 7, 25b-32 :

" मेखलां शृणुत द्विजाः । मुष्टिमात्रस्य कुण्डस्य मेखला ह्यङ्गुलद्वया ॥
मेखलाद्वितयं कार्यमङ्गुलार्धाङ्गुलक्रमात् । रत्निमात्रस्य कुण्डस्य नेमिः स्यादङ्गुलैस्त्रिभिः ॥
अन्यनेमिद्वयं तस्य तृतीयार्धाङ्गुला मता । हस्तमात्रस्य कुण्डस्य नेमिः स्याच्चतुरङ्गुला ॥
कर्तव्या मेखला चान्या त्रिद्वयङ्गुलक्रमात्तथा । कुण्डस्य द्विकरस्य स्यात्पूर्वनेमिः षडङ्गुला ॥
अन्याङ्गुलचतुष्का स्यात्तृतीया त्वङ्गुलैस्त्रिभिः । चतुर्हस्तस्य कुण्डस्य नेमिः पूर्वाङ्गुलाष्टका ॥
षड्भिरन्याङ्गुलैः कार्या चतुर्भिरपराङ्गुलैः । कर्तव्या मेखला पूर्वा षड्ढस्तस्य दशाङ्गुलैः ॥
अङ्गुलैरष्टभिश्चान्या तृतीया षड्भिरङ्गुलैः । अष्टहस्तस्य या पूर्वा मेखला द्वादशाङ्गुला ॥
दशाङ्गुला द्वितीया तु तृतीयाष्टाङ्गुला मता ।

[2] C : मुष्टि स्याद्रत्नं च ; B : मुष्टिः स्यान्मूर्तिश्च ; D, E : मुष्टिः स्याद्रत्निश्च

[3] A : तृतीयस्य त्रियङ्गुला ; B : तृतीया स्याद्यदङ्गुला ; E : तृतीया स्याद द्वयङ्गुला

[4] A : अग्नि pour रत्नि

[5] A : द्वयङ्गुला चास्य तदूर्ध्वा

[6] D : त्र्यङ्गुला ; E : त्रयाङ्गुला

[7] E : हस्तमानस्य

[8] A : प्रथमा स्याद् द्वियङ्गुला

[1]द्वितीया त्र्यङ्गुला ज्ञेया तृतीया चतुरङ्गुला । द्विकरस्य तु कुण्डस्य [2]त्रिचतुष्षड्भिरङ्गुलैः॥११॥
मेखलात्रितयं कार्यं पूर्ववत्कुण्डसंविदैः[3] । चतुर्हस्तस्य कुण्डस्य प्रथमा चतुरङ्गुला ॥ १२ ॥
[4]रसाङ्गुला द्वितीया स्यादूर्ध्वा वस्वङ्गुला भवेत् । षट्करस्यास्य कुण्डस्य भवेदाद्या षडङ्गुला॥१३॥
[5]अष्टाङ्गुला द्वितीया च तृतीया स्याद्दशाङ्गुला । अष्टहस्तस्य कुण्डस्य मेखलाष्टाङ्गुला मता ॥१४॥
द्वितीया दशाङ्गुला ज्ञेया तृतीया द्वादशाङ्गुला ।

[कुण्डयोनिः[6]]

[7]मुष्टिमात्रस्य कुण्डस्य योनिरर्काङ्गुलायता ॥ १५ ॥

---

[1] E : द्वितीया च त्रयाङ्गुल्या

[2] D, E : भवेदाद्या षडङ्गुला ; les mss. D et E omettent le passage qui va de त्रिचतुष्षड्भिरङ्गुलैः (11b) à षट्करस्यास्य कुण्डस्य (13b) et donnent la lecture द्विकरस्य तु कुण्डस्य भवेदाद्या षडङ्गुला

[3] A : संविवैः pour संविदैः

[4] A : द्वितीयस्य रसाङ्गे स्यादूर्ध्वा

[5] A : अष्टाङ्गुलद्वितीया च

[6] Cf. *Kāmikāgama*, I. 7, 36b-39 :

मेखलामध्यगा योनिर्व्यङ्गुलोच्छ्रायसंयुता । मुष्टिरत्न्येकहस्तेषु योनिमानमुदीरितम् ॥
द्विहस्तादिषु कुण्डेषु विस्तारे द्व्यङ्गुलाधिका । अग्न्यङ्गुलाधिका दैर्घ्यादुत्सेधः स्वभुजान्ततः ॥
सा योनिः सर्वकुण्डानां स्वार्धमानेन निर्मिता । अश्वत्थपत्रवद्वाथ गजोष्ठसदृशाथवा ॥
प्रणालेन समायुक्ता कुण्डमानयुतेन तु ।

cf. *Kiraṇāgama*, II, 5, 13b-14 :

अश्वत्थपत्रवत्कार्या विस्तारेऽष्टाङ्गुला मता । द्वादशाङ्गुलदीर्घं स्यादोष्ठं विस्तरतोऽङ्गुलम् ॥
शेषाणां द्व्यङ्गुला वृद्धिर्विस्तारायामतोऽपि हि ।

cf. *Kāraṇāgama*, I, 21, 11-14a :

अग्न्यङ्गुलं तु विस्तारं भूताङ्गुलं तु दैर्घ्यकम् । क्रमेण कृशतां योनिं कुर्यात् पिप्पलपत्रवत् ॥
योनिलक्षणमेवोक्तं कुण्डस्यैककरस्य तु । विस्तारस्य त्रिभागैकमुत्सेधं परिकीर्तितम् ।
द्विहस्तादि समारभ्य यावदष्टकरान्तकम् । विस्तारे त्वङ्गुलाधिक्यं दैर्घ्ये त्विन्यङ्गुलाधिकम् ॥
योनिलक्षणमेवं स्यान्मेखलोपरि कल्पयेत् ।

[7] A : मुष्टिकामात्रकुण्डस्य

वस्वङ्गुलविशाला च [1]तथोष्टेऽङ्गुलविस्तृता । [2]शेषाणामङ्गुलाद् वृद्धिर्विस्तारायामयोरपि ॥१६॥

[कुण्डलक्षणम्[3]]

मेखलालक्षणं प्रोक्तं; कुण्डलक्षणमुच्यते । चतुरश्रं धनुर्वृत्तं पद्मं [4]दिक्षु प्रकल्पयेत् ॥ १७ ॥
[5]योनिं त्रिकोणं षट्कोणं वस्वश्रं च विदिक्षु च । [6]चतुरश्रे तु कुण्डानि सर्वाण्यपि भवन्ति हि॥

[चतुरश्रकुण्डम्[7]]

पूर्वसूत्रं [8]पुरा कृत्वा द्वितीयं चोत्तरायतम् । चतुरश्रं समं कृत्वा प्रमाणेन विनिश्चितम् ॥१९॥

---

[1] A : ततोऽष्टाङ्गुलविस्तृता    [2] A : शेषाणामङ्गुला वृद्धिर

[3] Cf. *Kiraṇāgama*, II, 5, 2 :
श्रुत्यश्रयोनिखण्डेन्दुत्र्यश्रवृत्तषडश्रकम । पद्ममष्टाश्रमेतेषां पूर्वादिक्रमतः स्थितिः ॥

cf. *Suprabhedāgama*, I, 12, 9-11a :
तत्पूर्वे चतुरश्रं स्यादाग्नेय्यां तु भगाकृति । अर्धचन्द्रं तु याम्यायां नैर्ऋत्यां तु त्रिकोणकम् ॥
वारुण्यां वर्तुलं कुण्डं षट्कोणं चैव वायवे । उत्तरे पद्मकुण्डं तु ऐशान्यामष्टकोणकम ॥
ऐन्द्रशाङ्कर्योर्मध्ये वृत्तकुण्डं तु कारयेत ।

cf. *Vīrāgama*, 54, 8-10a :
पूर्वे तु चतुरश्रं स्याद अग्नावश्वत्थपत्रवत् । याम्यायामर्धचन्द्रं च नैर्ऋत्यां तु त्रिकोणकम् ॥
वारुण्यां वर्तुलं चैव वायव्यां पञ्चकोणकम् । सौम्यायां सप्तकोणं तु ऐशान्यामष्टकोणकम् ॥
एवमेव क्रमेणैव कुण्डानि वर्तयेत्ततः ॥

voir *Rauravāgama*, vol. I, les planches en face des pages 54-55, pour les formes des *kuṇḍa*.

[4] A : तत्र pour दिक्षु    [5] A : योनिस्त्रिकोणषट्कोणं

[6] A : चतुरश्राणि कुण्डानि

[7] Cf. *Kiraṇāgama*, II, 5, 15b-16a :
पूर्वसूत्रं पुरा दत्त्वा द्वितीयं चोत्तरायतम । चतुरश्रं पुरा कृत्वा योनिं सर्वाश्रकुण्डके ॥

cf. *Suprabhedāgama*, I, 12, 15-16 :
चतुरश्रस्य कुण्डस्य लक्षणं शृणु सांप्रतम् । प्राङ्मुखानि त्रिसूत्राणि उदङ्मुखानि तथैव च ॥
एवं विन्यस्यमाने स्याच्चतुरश्रं चतुष्पदम् । योन्यादिसर्वकुण्डानि चतुरश्रोद्भवानि हि ॥

cf. *Kāraṇāgama*, I, 21, 21-25 :
कुण्डानां वर्तनार्थाय चतुरश्रं तु साधयेत । प्राक्सूत्रं तु न्यसेत्पूर्वं मत्स्यं तु दक्षिणोत्तरम ॥
कुर्यात्पश्चिमपूर्वं तु यावत्कुण्डस्य विस्तरम । पूर्वापरायतं सूत्रं मध्यात्प्रागायतं समम ॥
पूर्वापरसमानेन सूत्रेणोत्तरदक्षिणं । अङ्कयेदपरानेकान्पूर्वेणापि तथैव च ॥
तत्तत्क्षेमार्थमानेन मत्स्यं कोणेषु साधयेत् । तत्र सूत्रप्रधानेन चतुरश्रं भवेदिदं ॥
चतुरश्रं पुनः कृत्वा चतुष्कोणसमन्वितम । कुण्डानामपि सर्वेषां वेदाश्रं योनिरुच्यते ॥ -

[8] E : पुनः pour पुरा

[धनुष्कुण्डम्[1]]

क्षेत्रे दशांशके तस्मिंश्चतुरश्रेंऽशमुत्तरे । [2]विसृज्य दक्षिणे [3]चापि भागमेकं परित्यजेत् ॥२०॥
तयोर्मध्ये [4]प्रमाणे तु [5]सूत्रेण सुमिते ततः । [6]उत्तरेऽङ्कितसूत्रे तु [7]न्यस्यावष्टभ्य यत्नतः ॥२१॥
दक्षिणे [8]भ्रामयेदङ्काच्चापाकारं यथा भवेत् । ज्यारेखामुत्तरे कुर्याद् [9]धनुष्कुण्डमिदं भवेत्॥२२॥

[वृत्तकुण्डम्[10]]

नन्दांशे चतुरश्रे तु [11]ह्येकांशार्धं बहिर्नयेत्[12] । [13]मध्यार्धेन प्रमाणेन वर्तितं वर्तुलं भवेत् ॥२३
वर्तुलं तु समाख्यातम् ;

[1] Cf. *Vīrāgama*, 51, 13b-15a :
चतुरश्रस्य कर्णं तु ग्राहयेत्तु द्विजोत्तमः । ततो विसृज्य क्षेत्रार्धं शेषं कुर्यात्त्रिभागिकम् ॥
भागमेकं न्यसेत्पूर्वे मध्यात्पूर्वादि भ्रामयेत् । वर्तुलं कृतमेवं तु तदर्धं धनुरुच्यते ।
cf. *Kāraṇāgama*, I, 21, 28-29 :
श्रोत्रार्धं तु परिग्राह्य क्षेत्रार्धे तु विनिक्षिपेत् । द्विधा कृत्वाधिकं तत्र याम्येऽन्तरप्रदेशयोः ॥
एकैकांशं न्यसेद्बाह्ये सूत्रादभ्यन्तरे ततः । तन्मानेन भ्रमेद्विद्वाञ्चापाभं चोत्तरे क्रमात् ॥

[2] A : विश्रभ्य pour विसृज्य [3] E : वापि pour चापि

[4] E : प्रमाणं तु [5] C, D : सूत्रे तु pour सूत्रेण ; E : सूत्रं तु

[6] A : उत्तरेकैंथसूत्रं तु ; C, D : उत्तरेऽङ्कितसूत्रे तु ; E : उत्तराङ्कितेन सूत्रेण

[7] A, C, D, E : न्यस्त्वा pour न्यस्य

[8] A : भ्रामयेदङ्काच्चापाकारं ; C, D : भ्रामयेदङ्कान चापाकारं ; E : भ्रामयेदङ्कां चापाकारं

[9] A : धनुर्कुण्डमिदं

[10] Cf. *Kāraṇāgama*, II, 5, 22 :
नवभागकृतं क्षेत्रमेकांशार्धं बहिर्नयेत् । तस्मान्मध्यं गृहीत्वैवं भ्राम्यं तद्वर्तुलं भवेत् ॥
cf. *Suprabhedāgama*, 1, 12, 21b-22a :
अष्टादशकृतं क्षेत्रमेकभागं बहिर्न्यसेत् । तस्मान्मध्यं गृहीत्वैव भ्राम्य तद् वर्तुलं स्मृतम् ॥
cf. *Kāraṇāgama*, I, 21, 32-33a :
श्रोत्रार्धं तु परिग्राह्य क्षेत्रार्धं तु विनिक्षिपेत । द्विधा कृत्वाधिकं तत्र व्योमांशं बाह्यतो न्यसेत् ॥
वर्तयेत्तेन मानेन वर्तुलं कुण्डमुत्तमम् ।
cf. *Vīrāgama*, 54, 19b-20a :
लोकेशांशं तु क्षेत्रं स्यात्पूर्वमेकेन विन्यसेत् । तस्मान्मध्यं गृहीत्वा तु वृत्तकुण्डं करोति हि ॥

[11] A : एकांशार्धं [12] E : न्यसेत pour नयेत

[13] A : मध्यान्तेन

[ चतुर्दलपद्मकुण्डम्[1] ]

चतुरश्रेऽष्टभाजिते । भागं [2]न्यस्य [3]चतुर्दिक्षु प्रत्येकं [4]बाह्यतः सुधीः ॥ २४ ॥
तस्मान्मध्यं गृहीत्वाथ[5] सूत्रेण सुमितं ततः । तयोर्मध्ये चतुर्दिक्षु लाञ्छयित्वा विचक्षणः ॥२५॥
तत्रावष्टभ्य सूत्रं [6]तु दिशासु चतसृष्वपि । भ्रामयेत्कुण्डपर्यन्तं [7]पद्मकुण्डं तु तद्भवेत् ॥ २६ ॥
चतुर्दलमिदं [8]पद्मम् :

[ अष्टदलपद्मकुण्डम्[9] ]

[10]अथाष्टदलमुच्यते । चतुरश्रे कृते तस्मिंश्चतुर्विंशतिभाजिते[11] ॥ २७ ॥
एकांशं [12]परितस्त्यक्त्वा जनयेच्चतुरश्रकम् । [13]मध्यात्कोणं गृहीत्वा तु पश्चाद्दिक्षु च [14]लाञ्छयेत्[15] ॥ २८ ॥

---

[1] Cf. *Kāraṇāgama*, I, 21, 38-39 :
"चतुर्भागकृतं क्षेत्रमेकैकांशं न्यसेत्ततः । क्षेत्रार्धं तेन मानेन मध्यं कृत्वा विचक्षणः ॥
तन्मध्यमाच्चतुर्दिक्षु चतुष्पत्रं तु वर्तुले । विमिर्नीकुण्डमेवं तु "
cf. *Kiraṇāgama*, II, 5, 25 :
पद्मपत्रसमं कार्यं कर्णिकादलसंयुतम् । गर्भार्धं कन्दुकं कार्यं दलाग्रं दर्शयेद्बहिः ॥

[2] A, C, D, E : न्यस्त्वा pour न्यस्य
[3] C : चतुर्दिक्षु : D : सर्वदिक्षु : E : समं दिक्षु
[4] A : बाह्यकं
[5] A : तु pour अथ
[6] A : तद्दिशासु च चतसृषु
[7] A : पद्म pour पद्म
[8] A : कार्यं pour पद्मम्
[9] Cf. *Vīrāgama*, 54, 24 :
पूर्ववद् वृत्तकुण्डं तु कुर्याद्धि देशिकोत्तमः । अष्टपत्रसमं कृत्वा पद्मकुण्डमिहोच्यते ॥
cf. *Suprabhedāgama*, I, 12, 24-25a :
वर्तुलं पूर्ववत्कृत्वा मध्यमे कर्णिकां न्यसेत् । षोडशदलसंयुक्तं दलाग्रं दर्शयेद्बहिः ॥
पद्मकुण्डमिदं प्रोक्तं सर्वकामार्थसाधनम् ।

[10] A : यथेष्ट pour अथाष्ट
[11] A : भागिके pour भाजिते
[12] C, D : परितो न्यस्त्वा : E : परितो न्यस्य
[13] C : मध्यात्कोणं
[14] A : लापयेत्
[15] Le ms. A place le demi-*śloka* 30b après 28b

[1]दिक्ष्वेकादशकैः सूत्रैश्चतुर्भिश्चतुरश्रकम् । [2]अपरं जनयेत्तत्र [3]भवेदष्टदलाम्बुजम् ॥ २९ ॥
[4]पद्ममेवं द्विधा प्रोक्तः

[योनिकुण्डम[5]]

योनिकुण्डमथोच्यते । [6]चतुरश्रे समे तत्र चतुष्कोष्ठसमन्विते ॥ ३० ॥
पश्चात्तत्कोष्ठयोर्मध्ये [7]सूत्रेण [8]सुमितं ततः । मध्यात्कोणं गृहीत्वाथ [9]भ्रामयेदुभयोरपि ॥३१॥
[10]क्षेत्रार्धावधिकं [11]यावत्ततस्तत्क्षेत्रवाह्यके[12] । पञ्चांशं [13]प्राचि विन्यस्य [14]तस्मात्पार्श्वद्वयोरपि ॥
सूत्रेण [15]संगतिं कुर्याद्योनिकुण्डमिदं भवेत् । अश्वत्थपत्रवत्कार्यं [16]तस्याग्रं [17]चोत्तरं भवेत्॥३२

---

[1] D : दिक्ष्वेकदश तैः सूत्रैः
[2] E : अपनुद्य नयेत्तत्र
[3] C, D, E : भवेत्तत्र दलाम्बुजम
[4] A : पद्ममेव त्रिधा प्रोक्तं
[5] Cf. *Vīrāgama*, 54, 10b-13a :
कर्णसूत्रस्य मोक्षांशं पश्चिमे विन्यसेत्ततः । वर्तयेत्तेन मानेन कोणान्तं तु विशेषतः ॥
दक्षिणे चोत्तरे वृत्तं कारयेद्देशिकोत्तमः । सप्तांशं विभजेत्कर्णमिन्द्रेणैकांशकं न्यसेत् ॥
कोणादि तत्र सूत्रं च विन्यसेद्देशिकोत्तमः । एवमेव क्रमेणैव कुण्डं योन्याकृतिर्भवेत् ॥
cf. *Suprabhedāgama*, 1, 12, 17-18 :
कोणे ग्राह्य चतुर्थांशं तद्भागेन तु वर्तयेत् । क्षेत्रस्यार्धावधिर्यावत्तथान्यं भ्रामयेत्क्रमात् ॥
कर्णयानस्य सप्तांशं पूर्वस्यां दिशि विन्यसेत् । तस्माच्च पातयेत्सूत्रौ भवेदश्वत्थपत्रवत् ॥
cf. *Kiraṇāgama*, II, 5, 16b-18a :
क्षेत्रार्धं कर्णिकां गृह्य कर्णार्धेन भ्रमेत्पुनः । यावत्क्षेत्रावधिस्तावत्तथा न भ्रामयेत्पुनः ॥
पञ्चभागीकृतं क्षेत्रं भागमेकं बहिर्नयेत् । तस्मात्तत्सङ्गमाद्योनिकुण्डं पिप्पलपत्रवत् ॥
cf. *Kāraṇāgama*, 1, 21, 36b-37 :
अष्टभागकृतक्षेत्रे दिक्षु चैकांशकं न्यसेत् । तत्पुरस्ताद्बहिर्न्यस्त्वा तस्मात्तु द्वयपार्श्वयोः ॥
सूत्रे संयोजिते कुण्डं भवेत् पिप्पलपत्रवत् ।
[6] Voir p. 244 note 15
[7] C : रुद्रेण pour सूत्रेण
[8] A : सुमिते pour सुमितं
[9] A : भ्रावयोरुभयोरपि
[10] A : क्षेत्रार्धद्विधिकं
[11] C : यावत्तस्मात् pour यावततः
[12] A : पार्श्वयोः pour बाह्यके
[13] A : प्राचीं pour प्राचि : C : प्राचीः
[14] C, D, E : तस्याः pour तस्मात्
[15] A : संततिं
[16] A : तस्याग्र
[17] E : चोत्तमं

[त्रिकोणकुण्डम्[1]]

त्रिकोणमथ वक्ष्यामि चतुरश्रे समे कृते । तस्य क्षेत्रस्य पञ्चांशं दक्षिणोत्तरयोर्न्यसेत् ॥ ३४ ॥
पार्श्वयोस्तु ततो [2]मध्यान्मानसूत्रं विगृह्य च । निर्ऋतौ वायुदेशे च [3]कुर्यान्मत्स्यद्वयं ततः ॥
मत्स्यद्वयविनिष्क्रान्तात्सूत्राद्वै[4] दक्षिणोत्तरात् । दक्षिणोत्तरयोश्चापि पञ्चभागविवर्धनात् ॥३६॥
आलिख्य पश्चिमां रेखां तन्मानेनैव दक्षिणे । उत्तरे चापि विन्यस्य सूत्रं प्राग्दिशि [5]संगतम् ॥
विलिखेत्तेन मानेन त्रिकोणं [6]व्यज्यते स्फुटम् । कुण्डं त्रिकोणमुद्दिष्टं षडश्रमधुनोच्यते॥३८॥

[षडश्रकुण्डम्[7]]

[8]वसुभागकृते क्षेत्रे दक्षिणोत्तरयोरपि । एकैकं भागमादाय [9]बाह्ये [10]कुण्डावधेस्ततः ॥ ३९ ॥

---

[1] Cf. *Vīrāgama*, 54, 15b-17a :
अष्टभागकृतं क्षेत्रमेकभागं तु दक्षिणे । उत्तरे चैकभागं तु एकभागं तु पूर्वतः ।
विन्यसेच्चैव विप्रेन्द्र तेन मानेन सूत्रकम् । एवमेव क्रमेणैव त्रिकोणं प्रोच्यते क्रमात् ॥
cf. *Kiraṇāgama*, II, 5, 20-21 :
पञ्चभागकृतात्क्षेत्राद्बाह्ये भागद्वयं भवेत् । तद्द्वयोः पार्श्वयोर्न्यस्य तस्मान्मध्यं प्रगृह्य च ॥
लाञ्छयेत्तेन मानेन कोणयोरुभयोरपि । तत्र सूत्रत्रयं दत्त्वा त्रिकोणं सिध्यते स्फुटम् ॥
cf. *Suprabhedāgama*, I, 12, 20-21a :
पञ्चभागकृतं क्षेत्रं द्विभागौ पार्श्वयोर्न्यसेत् । तेन मानेन सूत्रेण द्विसूत्रं चाग्रसंयुतम् ।
तत्र सूत्रत्रयं कृत्वा तत्त्रिकोणमिहोच्यते ।
cf. *Kāraṇāgama*, I, 21, 30-31 :
क्षेत्रे तु भूतभागे तु एकैकांशं तु पार्श्वयोः । विन्यसेच्छफरं तत्र नैर्ऋते वायुदेशके ॥
त्रिकोणाभ्यन्तरं सूत्रं कृत्वा वै मत्स्यपुच्छके । संयोज्य त्रिगुणानेव त्रिकोणायतनं स्मृतम् ॥
[2] C : मध्यमानसूत्रं विसृज्य च ; D : मध्या जानसूत्रं विगृह्य च [3] A : कुर्यान्मध्यद्वयं ततः
[4] E : सूत्राच्च pour सूत्राद्वै [5] C, D : संस्थितम [6] A : वेद्यते
[7] Cf. *Vīrāgama*, 54, 21b-23 :
वसुभागकृतं क्षेत्रं दक्षिणे चार्धभागतः । उत्तरे चार्धभागं तु विन्यसेद्द्विजोत्तमः ॥
तस्मान्मध्यं गृहीत्वा तु कृत्वा षट्कोणमेव च । पूर्वे च पश्चिमे चैव द्वौ द्वौ कोणाविहोच्यते ॥
दक्षिणे चोत्तरे चैकं कोणमित्यभिधीयते ।
cf. *Kāraṇāgama*, I, 21, 35-36a et *Suprabhedāgama*, I, 12, 22b-23 :
तत्क्षेत्रमष्टधा कृत्वा भागैकं पार्श्वयोर्बहिः । तयोर्मध्यं गृहीत्वार्धं सूत्रेणैव *भुजं तथा ॥
षट्सूत्रं परितः कृत्वा षट्कोणं तद्भवेदिह ।
* *Suprabheda* : पुरा pour भुजं
cf. *Kiraṇāgama*, II, 5, 23-24 :
अष्टभागकृतात्क्षेत्रादेकभागविवृद्धितः । उभयोः पार्श्वयोस्तत्र तस्मान्मध्यं विगृह्य च ॥
लाञ्छयेत्सर्वकोष्ठेषु तत्र षट्सूत्रपातनम् । कृत्वा तत्र भवेत्कुण्डं षट्कोणं स्फुटलक्षणम् ॥
[8] A : वायु pour वसु [9] A : वाहे pour बाह्ये [10] C : कुण्डापर्यन्ततः

तस्मान्मध्यं [1]गृहीत्वा तु मत्स्यं कोष्ठचतुष्टये । [2]कृत्वा क्षेत्रेषु तत्तेषु कुर्यात्षट्सूत्रसंगतिम्[3] ॥४०॥
एवं कृते [4]षडश्रं तु कुण्डं व्यक्तमिदं भवेत् । षडश्रं कुण्डमुद्दिष्टमष्टाश्रमधुनोच्यते ॥ ४१ ॥

[अष्टाश्रकुण्डम्[5]]

[6]चतुरश्रे कृते तस्मिंश्चतुर्विंशतिभागिके । एकांशं परितो न्यस्य जनयेच्चतुरश्रकम्[7] ॥ ४२ ॥
तस्य कर्णार्धमानेन प्रतिकोणं स्थितेन च । कोणानां पार्श्वयोः कुर्यादष्टौ [8]चाङ्कानि तेषु च ॥
[9]अङ्कादङ्कगतैः सूत्रैः कोणच्छेदं तु कारयेत् । एवं कृतेऽष्टकोणं तत्कुण्डं भवति [10]हि स्फुटम्॥४४

[कुण्डेषु मेखला-योनि-कण्ठादिकरणप्रकारः]

[11]यादृशं तु भवेत्कुण्डं तादृशी मेखला भवेत्[12] । [13]मेखलोपरि योनिः स्याद्दक्षिणे पश्चिमेऽपि वा॥

---

[1] A : गृहीत्वाद्य स्वं कोष्ठेषु चतुष्टये : E : गृहीत्वा तु मध्यकोष्ठचतुष्टये

[2] A : कृत्वाक्षे कोष्ठतत्तेषु ; C, D, E : कृत्वाक्षे केषु तत्तेषु

[3] A : संगतम pour संगतिम

[4] D : षडश्रे तु कुण्डे

[5] Cf. *Vīrāgama*, 51, 25-27a :
क्षेत्रं चैवं चतुर्विंशद्भागं कृत्वा तु देशिकः । अभ्यन्तरे तु विन्यस्य चतुर्दिक्षु विशेषतः ॥
मध्यात्कर्णं गृहीत्वा तु चतुर्दिक्षु च लाञ्छयेत् । लाञ्छनं कोणकं गृह्य एतदभ्यन्तरस्य तु ।
अष्टकोणं प्रकर्तव्यं सूत्रमानेन देशिकः ।

cf. *Suprabhedāgama*, I, 12, 25b-26 :
चतुर्विंशतिभागिकं बाह्ये दिक्षु व्यवस्थितम । मध्यात्कोणं गृहीत्वा तु अष्टसूत्रं समर्पयेत ।
अष्टकोणमिदं प्रोक्तमिति शास्त्रस्य निश्चयः ।

cf. *Kāraṇāgama*, I, 21, 39b-41a :
"क्षेत्रे गायत्रिभाजिते । तदेकांशं बहिर्न्यस्त्वा परितश्चतुरश्रकम ॥
कर्णार्थं सूत्रमानेन कोणात्कोणं तु लाञ्छयेत् । चतुर्दिक्ष्वष्टकोणाख्यं कुण्डं कुर्यात्सलक्षणम ॥

cf. *Kiraṇāgama*, II, 5, 26–27 :
चतुर्विंशतिभागं तु क्षेत्रं कृत्वा पुरा खग । एकभागं बहिः पश्चात्सर्वत्रैव विनाशयेत ॥
मध्यात्कोणं गृहीत्वैवं पश्चात्तद्दिक्षु लाञ्छयेत् । तत्र तत्सूत्रसंयोगादष्टकोणं भवेत्स्फुटम् ॥

[6] A : चतुरश्रीकृते

[7] E : चतुरंशकम pour चतुरश्रकम

[8] C : चाङ्गानि ; D : चक्रानि

[9] C : अङ्गादङ्गगतैः ; D : अङ्कादङ्के गतैः

[10] C : विस्फलम pour हि स्फुटम ; D, E : विस्फुटम

[11] A : यादृशी pour यादृशं

[12] Cf. *Kiraṇāgama*, II, 5, 12b : कुण्डस्य यादृशं रूपं मेखलानां तथा भवेत ।
cf. *Kāmikāgama*, I, 7, 33a : कुण्डस्य यादृशं रूपं मेखलानां तु तादृशम ।

[13] Cf. *Vīrāgama*, 54, 30a : योनिं प्रकल्पयेद्विद्वान मेखलोपरि देशिकः ।

[1]मेखलानामधः कुण्डपर्यन्ते तद्गलो भवेत् । सर्वेषामपि तत्कार्यं परितोऽङ्गुष्ठमानतः[2] ॥ ४६ ॥
सुधया [3]च प्रयुञ्जीत यदि पक्वेष्टकामयम् । अपक्वेष्टकया कुर्याद्यदि मृत्तिकया भवेत् ॥ ४७ ॥
[4]समा दृढतराः कार्या मेखलास्ताः प्रमाणतः । मेखलानां [5]समुत्सेधं यत्प्रमाणं प्रकीर्तितम्॥४८॥
विस्तारं च ततस्तासां तन्मानेनैव कल्पयेत् । [6]नित्याग्निकार्यकुण्डं तु चतुरश्रं प्रकल्पयेत् ॥४९॥
[7]अन्यत्र कुण्डक्लृप्तिस्तु [8]तत्तत्कल्पोक्तमानतः ।

[स्थण्डिलम्]

यदि वा स्थण्डिले होमं कुर्याद्धि [9]सैकते शुचौ ॥५०॥

[10]सैकतं स्थण्डिलं कार्यं हस्तमात्रेण नान्यथा[11] । उत्सेधमङ्गुलं तस्य समन्ताच्चतुरश्रकम् ॥५१॥

[होमकर्म]

गोमयालेपनं कृत्वा कुण्डे [12]वा स्थण्डिले भवेत् । शिवेन प्रोक्षणं चाथ [13]होमकर्माभिधास्यते ॥
होमारम्भेषु कुण्डस्य [14]वह्नेः स्रुक्स्रुवयोरपि । [15]आज्यस्य चैव कुर्वीत [16]तत्संस्कारश्च कथ्यते ॥५३
असंस्कृतेषु तेष्वग्नौ हुतं भवति निष्फलम् । तस्मात्कुण्डादिसंस्कारं कुर्यान्मन्त्रेण देशिकः ॥५४

---

[1] A : मेखलानामधः कण्ठपर्यन्ते ; E : मेखलान्नम्नतः कुण्डपर्यन्ते
[2] C : मात्रकः pour मानतः [3] E : तु pour च
[4] A : समा दृढतरा कार्या मेखला तत्प्रमाणतः
[5] C, D, E : तदुत्सेधं प्रमाणं परिकीर्तितम [6] C, D : नित्याग्निकार्यकुण्डे तु चतुरश्रं
[7] A : अन्यकुण्डैकक्लृप्तिस्तु ; C : अन्यत्र कुण्डकारस्तु
[8] A : तत्तत्कालोक्तमानतः [9] C, D, E : सैकतै, शुभैः
[10] A : सैकतस्थण्डिलं कुर्याद्धस्तमात्रेण
[11] Cf. *Suprabhedāgama*, I, 12, 35a : सैकतं, स्थण्डिलं चेत्तु स्यात्कुर्याद्धस्तमात्रकम ।
[12] C : तु pour वा ; E : सं [13] C, D, E : होमकर्म विधास्यते
[14] A : वह्नौ [15] C, D : आज्यस्य चापि ; E : आज्यस्यापि च
[16] C : संस्कारश्चात्र ; D : संस्कारः सोऽत्र ; E : संस्कारं चात्र

[कुण्डसंस्कारः[1]]

निरीक्ष्यास्त्रेण तत्कुण्डं संप्रोक्ष्य नयनेन च । संताड्य च पुनस्तेन हेतिनाभ्युक्षयेत्ततः ॥ ५५ ॥
खननं कवचेनैव तेनैवोत्कीर्य देशिकः । पूरयित्वा [2]समीकृत्य हृन्मन्त्रेणाथ सेचयेत् ॥ ५६ ॥
तेनैव कुट्टयेत्पश्चाद् वौषडन्तेन मन्त्रवित् । [3]संमार्जनोपलेपौ च हेतिना तत्र कारयेत् ॥ ५७ ॥
[4]कुण्डार्चनं ततः कुर्यात्कवचेन तु मन्त्रवित् । निवृत्तिं पूर्वदिग्भागे प्रतिष्ठां दक्षिणे [5]पुनः ॥५८॥
विद्यां च पश्चिमे चैव शान्तिमुत्तरगोचरे । [6]मध्ये च शान्त्यतीतां तु कलां विन्यस्य पूजयेत् ॥
[7]तस्य कुण्डस्य मध्ये तु रेखां [8]पूर्वायतां हृदा । कृत्वा रेखात्रयं[9] पश्चाद्दक्षिणोत्तरयोरपि[10] ॥६०॥
[11]तद्वत्कृत्वा पुनर्मध्ये रेखां तेनोदगायताम् । [12]अस्त्रेण वा समालिख्य प्रोक्षयेत्तां[13] शिवाम्भसा ॥
[14]यच्चोत्तराग्रास्तिस्रस्ता रेखां पूर्वायतामपि विलिखेत्कुण्डसंस्कारमेवं कृत्वाथ मन्त्रवित् ॥ ६२ ॥

---

[1] Cf. *Kāmikāgama*, I, 8, 41-45 :

असंस्कृते तु वै कुण्डे शिवाग्निर्नैव सिद्ध्यति । अनिष्पन्ने शिवाग्नौ तु हुतं भवति निष्फलम् ॥
वीक्षणं शिवमन्त्रेण प्रोक्षणं चास्त्रमन्त्रतः । वर्मणाभ्युक्षणं कार्यं ताडनं चास्त्रमन्त्रतः ॥
उल्लेखनावकिरणपूरणं सेचनं तथा । कुट्टनं च ततः कुर्यात्संमार्जनमतः परम् ।
उपलेपः कुण्डक्लृप्तिः कुण्डस्य परिधानकम् । कुण्डार्चनं च परिधिविष्टरन्यास एव च ॥
रेखाचतुष्टयं वज्रक्लृप्तिश्शृङ्गाटकल्पना । एतत्सर्वं तु मतिमानस्त्रमन्त्रेण कारयेत् ॥

cf. *Kiranāgama*, II, 4, 7b-10a :

प्रोक्ष्य देवाम्भसा कुण्डं हुंफडस्त्रेण ताडयेत् । वर्मणाभ्युक्षणं कृत्वा पुनरस्त्रेण भूतले ॥
उल्लिख्योत्कीर्य चापूर्य समीकृत्यापि कुट्य च । संमार्ज्य च समालेप्य कलारूपं प्रकल्पयेत् ॥
वर्मणावेष्ट्य सूत्रेण कलाभिः पुनरर्चयेत् । रेखात्रयं तु पूर्वं स्याद्रेखैका चोत्तरामुखी ॥

[2] D : समीकुर्याद् pour समीकृत्य
[3] D : संमार्जनापलेपौ च ; E : संमार्जनं च लेपं च
[4] A : कुण्डाकम्रि ततः ; C : कुण्डरश्मि ततः ; D : कुण्डैरग्नि ततः ; E : कुण्डेष्वग्नि ततः
[5] A : ततः pour पुनः
[6] C, D, E : मध्यमे pour मध्ये च
[7] E : तत्कुण्डकस्य मध्ये तु
[8] A : पूर्वामुदाङ्नाम
[9] C, D : द्वयं pour त्रयं
[10] E : इतरयोरपि pour उत्तरयोरपि
[11] E : तद्वत्तासां pour तद्वत्कृत्वा
[12] C, D, E : मन्त्रेण pour अस्त्रेण
[13] E : ताः pour तां
[14] C, D : द्वयोत्तराग्राः pour यच्चोत्तराग्राः

[वागीश्वरीवागीश्वरयोरावाहनम्]

तत्रैव संस्कृते कुण्डे वागीशीमग्निमातरम् । [1]वागीश्वरं च पितरमावाह्य [2]स्थाप्य चार्चयेत्॥६३॥
हृन्मन्त्रेणैव गन्धाद्यैस्तयो रूपमिदं शृणु । वागीशी सा भवेद्गौरी वागीशः स्यान्महेश्वरः ॥६४॥
[3]त्रिनेत्रं[4] चतुर्भुजं देवं पद्मरागसमद्युतिम्[5] । [6]वरदाभयदं चैव [7]शूलपाशधरं करैः ॥ ६५ ॥
[8]वागीशीं पुण्डरीकाभां चतुर्हस्तां घनस्तनीम्[9] । व्याख्यानपुस्तकाभ्यां तु कमण्डल्वक्षधारिणीम्[10]॥
एवं [11]ध्यायीत तौ देवौ ;

[अग्निसंस्कारः[12]]

संस्कारोऽथ निगद्यते । हविर्भुजस्तु[13] [14]सूर्याश्मभव[15]श्चारणिजस्तथा ॥ ६७ ॥

[1] D : वागेश्वरं
[2] La forme grammaticale correcte est स्थापयित्वा
[3] Cf. *Kāraṇāgama*, I, 20, 374-375 :
त्रिनेत्रं पञ्चवक्त्रं च चतुर्हस्तं तथैव च । जटामकुटसंयुक्तं सर्पभूषेन्दुभूषितम् ॥
शूलकपालसंयुक्तमभयं वरदं तथा । वागीशं पूजयेत् ''
[4] A : त्रिणेत्रं
[5] A : समन्वितम् pour समद्युतिम्
[6] C, D, E : वरदाभयकौ चैव
[7] C : शूलं पाशधरं करैः : D : शूलं पाशन्धनं करैः
[8] Cf. *Kāraṇāgama*, I, 20, 371b-372 :
श्यामाभां शुक्लवस्त्राङ्गीं जटामकुटमण्डिताम् । यौवनां च ऋतुस्नातां सर्वाभरणभूषिताम् ॥
अभयवरदोपेतां वागीशीं चैव पूजयेत् ॥
[9] A : वागीशी पुण्डरीकाभा चतुर्हस्ता घनस्तनी
[10] A: धारिणी pour धारिणीम्
[11] A : ध्यात्वा तु ; C, D, E : ध्यात्वैव
[12] Cf. *Kāmikāgama*, I, 8, 47b-54 :
कल्पमन्थानुसंपातं समिधश्चैतयोस्ततः । शुद्धात्मतत्त्ववद्वह्निमरणेर्जनितं क्षिपेत् ॥
सूर्यकान्ताद् द्विजावासात्प्रसूतमथवानलम् । अनुकल्पविधानेन मन्त्रपूतं नियोजयेत् ॥
अथ कान्तादितोऽकल्पमथवानीय कल्पवित् । ताम्रपात्रे शरावे वा वीक्षणाद्यैर्विशोधयेत् ॥
क्रव्यादांशं परित्यज्य प्रोक्षयेदस्त्रवारिणा । कवचेनावकुण्ठ्याथ ऐनुनायेति विन्यसेत् ॥
वह्निबीजं षडङ्गैश्च वह्नेः संयोजनं नयेत् । मूलेन वौषडन्तेन धेनुमुद्रायुतेन च ॥
अमृतीकृत्य संपूज्य कुण्डस्यैव प्रदक्षिणम् । त्रिधा कृत्वाथ जानुभ्यां विन्यसेदवनीं गतः ॥
वागीशीगर्भनाड्यां तु स्वात्मनः संमुखं यथा । मूलमन्त्रेण निक्षिप्य स्वात्मानं शिववत्स्मरेत् ॥
तोयबिन्दुं ततो दत्त्वाच्छादयेत्तु सदिन्धनैः ।
[13] E : च pour तु
[14] A : सूर्यात्म pour सूर्याश्म
[15] C : स्तारणि० pour श्चारणि०

[1]विप्रगेहोत्थितश्चापि श्रेष्ठो मध्यश्च[2] कन्यसः । मृत्पात्रे ताम्रपात्रे वा [3]कांस्ये वानीय चानलम् ॥
कुण्डस्य देशे विन्यस्य निरीक्ष्यैनं हृदा बुधः । प्रोक्ष्य नेत्रेण संताड्य हेतिनाथ [4]हविर्भुजम् ॥
[5]वर्मणाभ्युक्ष्य तत्राग्नौ क्रव्यादांशं परित्यजेत् । अस्त्रेण चाथ तत्रैव मूर्तिमन्त्रं समुच्चरन् ॥७०॥
वह्निद्वयैकीकरणं कृत्वाथ ब्रह्मपञ्चकैः । अभिमन्त्र्यावकुण्ठ्याथ कवचेन हविर्भुजम् ॥ ७१ ॥
मुद्रया चामृतीकृत्य गोस्तनाकारया[6] ततः । [7]पात्रेण च हृदोद्धृत्य जानुभ्यामवनौ स्थितः ॥७२॥
भ्रामयित्वा त्रिधा कुण्डमाललाटात्समुद्धृतम् । वागीशीगर्भनाड्यां तु [8]वह्निबीजमनुस्मरन् ॥७३॥
कुण्डमध्ये क्षिपेदग्निमात्मनः [9]संमुखं यथा । ईशबीजमिति स्मृत्वा [10]दत्त्वा चाम्बुलवं हृदा ॥

[गर्भाधानादिसंस्काराः[11]]

गर्भरक्षार्थमग्नेस्तु [12]दर्भैराच्छादयेत्तनुम् । आर्दाप्य कवचेनाग्नि सद्योजातेन पूजितम् ॥ ७५ ॥

---

[1] A : विप्रगेहोचितश्चापि

[2] A : तु pour च

[3] D : कंसे pour कांस्ये

[4] A : हविर्भुजाम

[5] Les mss. C, D et E omettent les *śloka* 70 et 71

[6] A : आगारया pour आकारया

[7] E : पात्रं च हृदयोद्धृत्य

[8] C : बहिर्बीजम् pour वह्निबीजम्

[9] C. D. E : सुमुखं pour संमुखं

[10] A : समभिप्लवनं हृदा ; C : दत्त्वा चाङ्गुलवं हृदा ; D : दत्त्वा चाम्बुलयं हृदा ; E : दत्त्वा संप्लवनं हृदा

[11] Cf. *Kāmikāgama*, I, 8, 55-62 :

दर्भकङ्कणमस्त्रेण जप्तं गर्भस्य रक्षणे । देवीहस्ते हृदा बध्वा गर्भाधाननिमित्तकम् ॥
सद्योजातं समावाह्य हृदयेनाहुतित्रयम् । तिलैर्दत्त्वा पुंसवननिमित्तं वाममर्चयेद् ॥
शिरसैवाहुतिं तद्वत्सीमन्तोन्नयने पुनः । अघोरेण समभ्यर्च्य शिखयैवाहुतित्रयम् ॥
दत्त्वा दर्भेण शिखया वक्त्राङ्गानां च कल्पनम् । निष्कृतिं च तथा कृत्वा जातकर्म ततो नयेत् ॥
पुरुषेणार्चनं कृत्वा कवचेनाहुतित्रयम् । तिलैरेव तदा कुर्यात् सूतकस्य निवृत्तये ॥
कुण्डमर्काम्भसा प्रोक्ष्य प्रागग्रानुदगग्रकान् । दर्भानास्तीर्य कुण्डस्य समन्तादस्त्रमन्त्रतः ॥
रक्षार्थं शिववह्नेस्तु वक्त्राण्युद्घाटयेत्तदा । आहुतित्रितयेनाथ वक्त्राणां पृष्ठयेऽपि वा ॥
लालापनोदनार्थं च सदिध्मान्पञ्च होमयेत् । चतुर्विंशतिसंख्याकान् षोडशाङ्गुलदैर्घ्यकान् ॥

[12] Les mss. sont corrompus. A lit ततो दृक्षाद्वृते तनुम् ; D lit ततो दयाद्वृते सनम् ; C lit ततो ध्याघृततेसनम् ; E lit ततोयाद्वृतत तेसनम् ; les passages parallèles dans les autres *āgama* et le passage गर्भरक्षार्थम् suggèrent la correction suivante दर्भैराच्छादयेत तनुम् ।

[1]गर्भाधानं भवेत्पश्चाद्वामदेवेन पूजितम् । [2]भवेत्पुंसवनं पश्चात्सीमन्ते[3] शिरसार्चनम् ॥ ७६ ॥
घोरेण शिरसा वापि पूजयेद्वक्त्रक्लृप्तये । वक्त्रोद्घाटनकर्माथ[4] [5]शिखया निष्कृतिस्तथा ॥७७॥
[6]जातकर्म नरेणाथ [7]कवचेनापि पूजनम् । ततः कुण्डस्य परितः सेचनं हेतिनाचरेत् ॥ ७८ ॥
कुशास्तरणकर्मापि ततस्तेनैव मन्त्रवित् । [8]इध्महोमं ततः कुर्यादस्त्रमन्त्रेण देशिकः ॥ ७९ ॥
[9]विष्टरान्परिधींश्चैव प्रागादिष्वथ विन्यसेत् । त्रिंशद्दर्भदलैर्गाढं [10]गृहीता [11]बाहुमात्रिकाः ॥८०॥
वेणिका [12]वेष्टिका वापि [13]विष्टराः परिकीर्तिताः[14] । तन्माना ऋजवश्चार्द्राः[15] [16]सत्पालाश-लतोद्भवाः ॥ ८१ ॥
अङ्गुष्ठपरिणाहेन युक्ताः परिधयः स्मृताः[17] । [18]पूर्वादिष्वथ[19] तेनैव [20]विष्टरेषु यथाक्रमम्॥८२

---

[1] C et E omettent ce demi-*śloka*
[2] E : ततः पुंसवनं
[3] A : सीमन्तं pour सीमन्ते
[4] A : अर्थ pour अथ
[5] C : शिखाया pour शिखया ; D : शिलायां
[6] E : जननार्थं pour जातकर्म
[7] C : कवचेन विपूजनम् ; E : कवचेनाथ पूजितः
[8] E omet ce demi-*śloka*
[9] D : विष्टरान् pour विष्टरान्
[10] A : गृहीत्वा
[11] A : बाहुमात्रकाम्
[12] A : वर्तुला pour वेष्टिका ; E : वेष्टिता
[13] A : विष्टरा परिकीर्तिता
[14] Cf. *Kāraṇāgama,* I, 18, 147b-148 :
सप्तविंशतिभिर्दर्भैः कलाङ्गुलसमायतम् । व्योमाङ्गुलं भवेद्ग्रन्थि वेदाङ्गुलं तथाग्रकम् ॥
वेणिका विष्टरा वाथ प्रोच्यते प्रोक्षणी तथा ।
cf. *Mṛgendrāgama, kriyāpāda,* 6, 51b : विंशत्तन्तुकृता वेणी बर्हिषां विष्टरः स्मृतः ।
[15] A : ऋजवश्चान्द्र pour ऋजवश्चार्द्राः ; E : ऋजवश्चात्र
[16] C : सपलाशलतोद्भवाः ; E : पलाशस्थलतोद्भवाः
[17] Cf. *Mṛgendrāgama, kriyāpāda,* 6, 50 :
याज्ञियद्रुमजा बाहुमात्राः परिधयः समाः । कनिष्ठिकास्थूलमूला हरिता व्रणवर्जिताः ॥
[18] Cf. *Kāmikāgama,* I, 8, 64-65 :
पित्रोर्विसर्जनं कुर्याद् मेखलासु च पूजयेत् । इन्द्रादींल्लोकपालांश्च पूजयेत्परिधिष्वपि ॥
विष्टरे च क्रमेणैव ब्रह्माणं रुद्रमेव च । विष्णुमीश्वरमभ्यर्च्य प्रागादिचतसृष्वपि ॥
cf. *Somaśambhupaddhati,* I, 4, 24-26 :
ब्रह्माणं शंकरं विष्णुमनन्तं च हृदार्चयेत् । पूर्वाद्युत्तरपर्यन्तं परिधिस्थाननुक्रमात् ॥
इन्द्रादीश्वरपर्यन्तान् विष्टरस्थाननुक्रमात् । अग्नेरभिमुखीभूतान्निजदिक्षु हृदार्चयेत् ॥
निवार्य विघ्नसङ्घातं बालकं पालयिष्यथ । शैवीमाज्ञामिमां तेषां श्रावयेत्तदनन्तरम् ॥
[19] C, D : पूर्वदिष्वथ
[20] A : विस्तरेषु

[1]ब्रह्माणं शंकरं विष्णुमनन्तं चापि पूजयेत् । [2]स्वनामपदमन्त्रैस्तु रक्षार्थं हुतभुक्शिशोः ॥ ८३ ॥
एवं सुसंस्कृते वह्नौ ततः पित्रोर्विसर्जनम् । हृदयेन प्रयुञ्जीत ः

[स्रुक्-स्रुव-संस्कारः[3]]

ततः स्रुक्स्रुवयोरपि ॥ ८४ ॥
लक्षणोपेतयोरिध्म[4] प्रक्षाल्य च पुनः पुनः । निरीक्ष्य हेतिना प्रोक्ष्य [5]नेत्राणुना [6]पिधाय च ॥
तनुत्राणेन [7]चाभ्युक्ष्य गृहीत्वा हृदयेन च[8] । प्रताप्याग्नौ कुशैः पश्चात्त्रिधा लेखनमाचरेत् ॥८६॥
[9]कुशमूलेन तन्मूलं मध्यं मध्येन योजयेत् । [10]अग्रमग्रेण संयोज्य ततो मूलादिषु क्रमात् ॥८७॥
आत्मविद्याशिवाख्यं [11]तु न्यसेत्तत्त्वत्रयं बुधः । [12]स्रुचि शक्तिं स्रुवे शंभुं विन्यसेच्च क्रमेण वै ॥
कवचेनावकुण्ठ्याथ[13] गन्धाद्यैः पूजयेद्धृदा । दक्षिणे [14]स्वस्य भागे तु कुशोपरि ततश्च तौ ॥८९
नमोऽस्तु [15]शक्तिशंभुभ्यामित्युदीर्य[16] निवेशयेत् ।

[आज्यसंस्कारः[17]]

ततः कापिलमानीय [18]ताम्रपात्रे स्थितं घृतम् ॥ ९० ॥

---

[1] E : ब्रह्माणमीश्वरं

[2] C, E : स्वनामपरिमन्त्रेषु ; D : स्वनामपरिमात्रेषु

[3] Cf. *Kāmikāgama*, I, 8, 66-68 :
गृहीत्वा स्रुक्स्रुवावस्त्रेण ह्यभ्युक्ष्य कवचेन तु । अवकुण्ठ्य प्रताप्याग्नावाभ्राम्य च तदग्रतः ॥
दर्भाग्रेणैव संस्पृश्य भ्राम्य मध्यं तु मध्यतः । पुनराभ्राम्य मूलेन मूलं संस्पृश्य तद्द्वयोः ॥
तद्वत्त्रपञ्चकं न्यस्य स्रुचि शक्तिं च विन्यसेत् । स्रुवे शम्भुं समभ्यर्च्य स्वात्मनो दक्षिणे न्यसेत् ॥

[4] C : लक्षणोपेतया रीत्या ; E : लक्षणोपेतयोश्चैव

[5] A : नेत्रेण च pour नेत्राणुना

[6] C : विधाय्य च : E : विधास्य च

[7] C, D, E : चाभ्यर्च्य

[8] C, D, E : तु pour च

[9] C : कुशं मूलेन

[10] C omet les *śloka* 87b à 90a

[11] D : च pour तु

[12] D, E : शक्तिं स्रुचि pour स्रुचि शक्तिं

[13] A : अवगुण्ठ्याथ pour अवकुण्ठ्याथ

[14] A : सव्यभागे pour स्वस्य भागे

[15] D : शम्भुशक्तिभ्याम् pour शक्तिशम्भुभ्याम्

[16] A : इत्युद्दिश्य pour इत्युदीर्य

[17] Cf. *Kiraṇāgama*, II, 4, 26b-29 :

ताम्रपात्रेऽथवा भाण्डे स्थाप्याज्यं कापिलं शुभम् । तस्याधिश्रयणं कुर्यात्पर्यग्निकरणं पुनः ॥
पवित्रीकरणं पश्चात्पवित्रेण कुशैश्च तत् । स्वप्रादेशसमं कृत्वा नागपाशकृतास्पदम् ॥
तेनैवोत्प्लवनं कुर्यात्तेनैवाज्यस्य संप्लवम् । ततश्चावोक्षणं कृत्वा प्रोक्षणं हृदयेन तु ॥
आज्यभागं च जुहुयादग्निषोमप्रयोगतः ।

cf. *Kāraṇāgama*, I, 22, 41b-44 :

घृतेन पात्रमापूर्य नीत्वाङ्गाराणि पश्चिमे । तस्योर्ध्वे तु न्यसेत्पात्रे द्विकुशाग्रं विनिक्षिपेत् ॥
पर्यग्निं च कुशाग्रं च कृत्वाग्नौ तु विनिक्षिपेत् । प्रादेशमात्रकूर्चेन मध्यग्रन्थियुतेन च ॥
हृदयेन तु मन्त्रेण त्रिः संप्लवनमाचरेत् । ग्रन्थिं विमृज्य संप्रोक्ष्य वह्निमध्ये विनिक्षिपेत् ॥
घृतं प्रदक्षिणं नीत्वा योन्यूर्ध्वे तु निधापयेत् ।

cf. *Kāmikāgama*, I. 8, 69-78 :

दर्भाणामुपरिष्टात्तु पूजयेद्धृदयेन तु । आज्यमस्त्रेण संप्रोक्ष्य कवचेनावकुण्ठ्य च ॥
प्रताप्याग्नौ शिवास्त्रेणोद्वास्य तत्कवचेन तु । कुण्डस्योपरिष्टात्तु त्रिः प्रदक्षिणमानयेत् ॥
योन्यां संस्थाप्य संग्राह्य दर्भाग्रद्वयनिर्मितम् । प्रादेशिकपवित्रं चाङ्गुष्ठानामिकमध्यमम् ॥
त्रिराज्योत्प्लवनं कृत्वा कवचेनाग्निसंमुखम् । तद्वत्संप्लवनं कृत्वा हृदयेनात्मसंमुखम् ॥
वह्नौ पवित्रं निक्षिप्य अस्त्रेणोद्योत्य तद्घृतम् । निरीक्ष्याज्यं ततो धीमान् नीराजनमथाचरेत् ॥
उल्कामग्नौ विनिक्षिप्य प्रोक्ष्याङ्गैरभिमन्त्रयेत् । अमृतीकृत्य मूलेन नेत्रमुद्रायुतेन च ॥
संपूज्य मूलमन्त्रेण दर्भं प्रादेशनिर्मितम् । ओंकारेणात्र विन्यस्य नाडीनां कल्पयेत्त्रयम् ॥
मध्यादाज्यं समानीय स्वाहाप्रणवसंयुतम् । अग्नये वामतः सोमायेति मन्त्रेण होमयेत् ॥
अग्नीषोमसमायुक्तं मध्ये होमं समाचरेत् । चतुर्थीमग्नये स्विष्टकृते स्वाहाहुतिं चरेत् ॥
तत्सर्पिषो लवक्षेपात्सर्पिषान्यानि शोधयेत् । अयं विभागः शुक्ले स्यात्कृष्णे सूर्याहुतिं चरेत् ॥

[18] A : ताम्रपात्रस्थितं

[1]निरीक्ष्यास्त्रेण संप्रोक्ष्य नेत्रेणाभ्युक्ष्य च क्रमात् । संताड्यास्त्रेण [2]मन्त्रज्ञो गृहीत्वा हृदयेन तु॥
आग्नेय्यां दिशि [3]संस्थाप्य चैशान्यां [4]चाप्यधिश्रयम् । कृत्वाग्नावथ [5]सर्पिस्तद्योन्यामारोपयेद्धृदा॥
[6]कूर्चं तु [7]द्विकुशाग्रेण ततः प्रादेशसंमितम् । अङ्गुष्ठानामिकाभ्यां तु गृहीत्वोभयपाणिना॥९३॥
स्वाहान्तमुच्चरन्मन्त्री[8] त्रिरुत्प्लवनमाचरेत् । [9]ततः संप्लवनं चैव स्वाहान्तेन हृदा तथा[10]॥९४॥
[11]अग्नेरभिमुखं पूर्वं द्वितीयं चात्मसंमुखम् । ततः पवित्रीकरणं कुशाग्रस्य निवेशनात् ॥ ९५ ॥
[12]नीराजनं कुशाग्रेण [13]दीपितेनाथ वह्निना । अवद्योतं तथा तस्य सर्पिषः परिकल्पयेत्॥९६॥
[14]शुक्ले कृष्णे च मध्ये च हृदये परिकल्पयेत् । अग्नेः [15]सोमस्य चाप्यंशं [16]तयोश्चापि [17]त्रिधा स्मरेत्॥
तत्र स्रुवेण होतव्यमाहुतीनां चतुष्टयम् । अग्नये त्वथ सोमाय प्रजानां पतये नमः ॥ ९८ ॥
[18]इन्द्रायेति च स्वाहान्तं ततस्तदभिमन्त्रणम्[19] । [20]पवित्रैरणुभिः कृत्वाऽमृतीकृत्य हृदा बुधः॥९९
कवचेनावकुण्ठ्याथ[21] [22]सर्पिष्येवं सुसंस्कृते । स्रुवेण घृतपूर्णेन [23]वह्नेर्वक्त्राभिघारणम्[24]॥१००॥
वक्त्रसंधानकर्माथ[25] वक्त्रैकीकरणं [26]ततः । स्वाहान्तेन हृदा [27]हुत्वा पश्चमेनाग्निमर्चयेत् ॥१०१

[1] C, D, E : निरीक्ष्यास्त्रेण नेत्रेण प्रोक्ष्य चाभ्युक्ष्य च क्रमात्
[2] E : मन्त्रेण pour मन्त्रज्ञो
[3] C, D : संताप्य
[4] A : चाप्यधिश्रियम् ; D : चापिधिश्रियम्
[5] C, D : सर्पिश्च pour सर्पिस्तद्
[6] Cf. *Somaśambhupaddhati*, IV, 34
[7] E : विशिखाग्रेण
[8] A : उच्चरेन्मन्त्री pour उच्चरन्मन्त्री
[9] A omet les *śloka* 94b à 97b
[10] E : तदा pour तथा
[11] C, E : अग्निरभिमुखं ; D : अग्नेरत्रिमुखं
[12] C : नीराजनं
[13] C : दापितेनाथ
[14] C : शुक्ले कृष्णं च मध्येव हृदाधः
[15] C : मानस्य
[16] E : द्वयोश्चापि
[17] E : तथा pour त्रिधा
[18] A : इन्द्राय चेति pour इन्द्रायेति च
[19] A : ततस्तदभिमन्त्रिणः
[20] C et D omettent les *śloka* 99b et 100
[21] A : अवगुण्ठयाथ pour अवकुण्ठयाथ
[22] E : सर्पिष्यपि च संस्कृते
[23] A : वह्नेर्वक्त्राभिघारकम्
[24] Cf. *Kāmikāgama*, I, 8, 79-81 :
आज्याहुतित्रयेणाग्नेः कुर्याद्वक्त्राभिघारणम् । स्वैः स्वैर्मन्त्रैः समोपेतं सद्यं वामेन योजयेत् ॥
वामं घोरण संयोज्य तं च तत्पुरुषेण तु । तं चेशाने तु संयोज्य तं शिवेनैव योजयेत् ॥
कृत्वैवं वक्त्रसंधानमेकीकरणमेव च । स्वस्वमन्त्रसमोपेतं सद्योजातादितो नयेत् ॥
[25] C : अर्थ pour अथ
[26] E : तथा pour ततः
[27] C, D, E : दत्वा pour हुत्वा

[अग्नेर्नामकर्म[1]]

ईतिना च [2]ततश्चाग्नौ नामकर्म कृतं भवेत् । एवं सुसंस्कृते पञ्च संस्कारैर्जातवेदसि[3] ॥ १०२ ॥
[4]शिवाग्निस्त्वमित्यामन्त्र्य तत्राग्निमभिचिन्तयेत् ।

[अग्निध्यानम्[5]]

[6]एकहृदयं द्विवक्त्रं च [7]द्विनासं च षडक्षकम् ॥ १०३ ॥
त्रिमेखलं [8]त्रिपादं च सप्तजिह्वाभिरावृतम् । चतुःशृङ्गं [9]सुखासीनं जटामकुटमण्डितम् ॥१०४॥
[10]दक्षिणे च चतुर्हस्तं [11]वामे चैव त्रिहस्तकम् । स्रुक्स्रुवौ शक्तिमग्निं च [12]दक्षिणे चापरैः करैः ॥
तोमरं व्यजनं चैव घृतपात्रं [13]तथैव च । [14]वहन्तमभिचिन्त्यैवमग्निबीजेन[15] पूजयेत् ॥१०६॥
सद्योजातादिभिर्मन्त्रैः पञ्चभिः षड्भिरेव च । हृदयाद्यैः पृथक् पञ्च [16]पञ्च चैवाहुतीः क्रमात्[17]॥
हुत्वा मूलेन मन्त्रेण वौषडन्तेन मन्त्रवित् । [18]पूर्णाहुतिः स्रुचा कार्या यथाविधिपुरःसरम् ॥
ततोऽग्निं परिषिच्याथ [19]व्याहृत्या होमयेद् बुधः । [20]सद्योजातादिभिर्मन्त्रैराज्येनैकेन [21]केवलम् ॥
एवं निष्पादिते वह्नौ [22]कल्पोक्तं होममाचरेत् ।होमारम्भेऽग्निरूपस्य हृदि देवं सदाशिवम्॥१०८॥

---

[1] Cf. *Kāmikāgama*, I, 8, 63 :
ईशानं नामकरणे त्वावाह्यास्त्रेण होमयेत् । शिवाग्निस्त्वमिति ब्रूयान्मूलमन्त्रपुरःसरम् ॥

[2] D : ततश्चाग्निनामकर्म

[3] C, D : जातवेदसम् pour जातवेदसि

[4] A : शिवाग्निस्त्वमिमं मन्त्र्य ; D : शिवाग्नि त्वमिदं मन्त्र्य ; E : शिवं शिवाग्निमभ्यर्च्य

[5] Cf. *Kāraṇāgama*, I, 22, 19b-23a :
द्विमुखं चैकहृदयं चतुरश्रोत्रं द्विनासिकम् । आस्यद्वयं च षण्णेत्रं पिङ्गलं सप्तहस्तकम् ॥
त्रिमेखलं त्रिपादं च सप्तजिह्वासमायुतम् । चतुश्शृङ्गं वृषारूढं बालादित्यसमप्रभम् ॥
उपवीतसमायुक्तं जटामकुटमण्डितम् । सव्यभागे चतुर्हस्तं त्रिहस्तमपसव्यके ॥
स्रुक्स्रुवौ चाक्षमाला च स शक्तिर्दक्षिणे करे । चामरं व्यजनं चैव घृतपात्रं तु वामके ॥

[6] A : एवं pour एक

[7] A : द्विनासिं

[8] C : द्विपादं

[9] C, E : समासीनं

[10] C : दक्षिणेन pour दक्षिणेन च

[11] C, D, E : वामभागे pour वामे चैव

[12] A : दक्षिणैश्चोत्तरैः करैः

[13] E : तु वामके pour तथैव च

[14] A : वहन्तमभिजान्यैवम् ; C, D : वहन्तमभिचान्यैवम् ; E : वहन्तमभिचान्यैनम्

[15] A : पुजेन pour बीजेन

[16] A : पञ्च चैकाहुतिः क्रमात् ; C : पञ्चैवाहुतिः क्रमात्

[17] Cf. *Mṛgendrāgama*, *kriyāpāda*, 6, 9b-10a.

[18] A : पूर्णाहुतिं यथा कुर्यात् सूर्चाविधिपुरःसरम्

[19] A : व्याहृत्यन्तैस्तु होमयेत् ; C, D : व्याहृत्यैर्होमयेद्बुधः

[20] A : युक्तो वाहादिमन्त्रैर् ; C, E : युक्तो वहादिभिर्मन्त्रैर्

[21] E : मन्त्रविन pour केवलम्

[22] D : कर्मोक्तं pour कल्पोक्तं

[1]यथा लिङ्गे तथा ध्यात्वा कृत्वा चावाहनादिकम् । पूजयित्वाथ गन्धाद्यैर्होमकर्म समारभेत् ॥
सर्पिषाथ [2]समित्पूर्वात्कल्पोक्तं जुहुयात्ततः[3] ।

[ अग्नेः सप्तजिह्वाः[4] ]

हिरण्या कनका रक्ता कृष्णा चैव तु सुप्रभा ॥ ११२ ॥
[5]अतिरक्ता बहुरूपा सप्तजिह्वा हविर्भुजः । हिरण्या [6]वारुणे जिह्वा कनका मध्यमे स्थिता॥११३॥
रक्ता [7]वै चोत्तरा जिह्वा कृष्णा [8]याम्यदिशि स्थिता । सुप्रभा पूर्वजिह्वा [9]स्यादतिरक्तानले स्थिता ॥
[10]बहुरूपेशदिग्भागे [11]जिह्वास्थानमुदीरितम् । [12]जिह्वेति यात्र निर्दिष्टा ज्वाला सा स्याद्धविर्भुजः॥

[ आहुतिद्रव्याणि[13] ]

[14]इध्महोमो हिरण्यायां कनकायां घृतं भवेत् । रक्तायां तु यवादीनि कृष्णायां [15]लाजपूर्वकम्
॥ ११६ ॥

---

[1] A : यथारूपं pour यथा लिङ्गे
[2] A : समित्पूर्वं pour समित्पूर्वात्
[3] A : अथ pour ततः
[4] Cf. *Kāraṇāgama*, I, 22, 24-27 :
हिरण्या कनका रक्ता कृष्णा चैव तु सुप्रभा । अतिरक्ता बहुरूपा सप्तजिह्वाः प्रकीर्तिताः ॥
हिरण्यादिचतस्रस्तु जिह्वा दक्षिणवक्त्रके । तिस्रस्तु सुप्रभाद्याः स्युर्जिह्वा वै वामवक्त्रके ॥
हिरण्या वारुणे जिह्वा कनका मध्यमस्थिता । रक्ता चोत्तरजिह्वा स्यात्कृष्णा याम्यदिशि स्थिता ॥
सुप्रभा पूर्वजिह्वा स्यादतिरक्ताग्नौ व्यवस्थिता । बहुरूपेशजिह्वा स्याज्जिह्वास्थानं प्रकीर्तितम् ॥
[5] C, E : अतिरिक्ता
[6] A : वरुणा pour वारुणे
[7] E : चैवोत्तरा pour वै चोत्तरा
[8] A : याम्यां दिशि
[9] C : स्यादतिरिक्तानले; E : स्यादतिरिक्ताग्निदिक्स्थिता
[10] C : बाहुरूपेशजिह्वा स्याद्; D, E : बहुरूपेशजिह्वा स्याद्
[11] C, D, E : जिह्वास्थानं प्रकीर्तितम्
[12] A : या जिह्वा यत्र निर्दिष्टा; D : जिह्वेति यत्र निर्दिष्टा
[13] Cf. *Kāraṇāgama*, I, 22, 64b-66 :
हिरण्यायां हुनेदिध्मं कनकायां घृतं चरुम् । जुहुयाल्लाजं च कृष्णायां रक्तायां च यवं हुनेत् ॥
सुप्रभायां हुनेत्सक्तुमतिरक्तायां तिलाहुतिम् । सिद्धार्थं बहुरूपायां सर्वासु व्याहृतिं हुनेत् ॥
द्रव्याण्येतानि सर्वाणि कनकायां हुनेत्क्रमात् ।
[14] A : इध्महोमं
[15] D : लाजपूपकम्

सुप्रभायां तिलादीनि होमयेच्च यथाक्रमम् । [1]सिद्धार्थमतिरक्तायामाद्यायां पत्रमेव च ॥११७॥

दधिमध्वादिकं तत्र [2]चरुं सर्वासु बुद्धिमान् । होमयेत्फलभक्ष्यादिवस्तुजातं च मध्यमे ॥११८॥

[ आहुतिद्रव्याणां प्रमाणम्[3] ]

[4]आज्याद्यं [5]यद् द्रवद्रव्यं [6]स्रुवपूर्णप्रमाणतः । [7]अन्नमक्षप्रमाणं [8]स्याल्लाजा मुष्टिमितं भवेत्॥११९॥

तिलसर्षपपूर्वाणां [9]शुक्तिमात्रं विधीयते । अखण्डं पत्रजातीनां फलानां च यथोचितम्॥१२०॥

[10]दरुनश्च [11]शुक्तिमात्रं स्यात्कन्दमूलादि खण्डशः[12] । कर्पूरादीनि [13]गन्धानि माषमात्रं तु होमयेत्॥

[14]इन्धनानि च शुष्काणि[15] जन्तुवर्ज्यानि [16]साधयेत् । [17]कुशाग्रान् [18]कोमलानार्द्राञ्शुचिदेश-
समुद्भवान् ॥ १२२ ॥

समित्कनिष्ठिकामात्रा द्वादशाङ्गुलदैर्घ्यका । [19]रुद्रसंख्या समच्छिन्ना निर्व्रणा त्वग्युता तथा
॥ १२३ ॥

---

[1] A : सिद्धार्थमतिरिक्ताकाम्; C, D : अतिरक्तायां सिद्धार्थम्; E : अतिरिक्ता च सिद्धार्थं मध्यायां पत्रमेव हि

[2] C, D, E : सर्वासु च चरून् बुधः

[3] Cf. *Kiraṇāgama*, II, 4, 45-47a :

घृतस्य कार्षिको होमः क्षीरस्य मधुनस्तथा । शुक्तिमात्रं हुनेद्दध्नः प्रसृतिं पायसस्य तु ॥
भक्ष्याणामभया मात्रा लाजानां मुष्टिसंमिता । खण्डत्रयं तु मूलानां फलानां स्वप्रमाणतः ॥
ग्रासार्धमात्रमन्नानां वक्त्राणां पञ्चके हुनेत् ॥

voir aussi *Mṛgendrāgama, kriyāpāda*, 6, 68b-74a :

[4] C : आज्याभ्यां
[5] D : यत्र च द्रव्यं
[6] D : स्रुवपूर्णं प्रमाणतः
[7] D : अन्यकक्ष्यप्रमाणं
[8] A : स्याल्लाजा मुष्टिमिदं भवेत्; C : स्याल्लाजमुष्टिमिदं भवेत्; D : स्याल्लाजमुष्टिमितं भवेत्; E : स्याल्लाजं मुष्टिमितं भवेत्
[9] A : भुक्ति pour शुक्ति; E : मुष्टि
[10] C, D, E : तीर्थं च pour दध्नश्च
[11] D : शुद्धि pour शुक्ति
[12] C : मूलादिकं दश pour मूलादि खण्डशः; D : मूलाद्यखण्डशः
[13] C, D, E : खण्डानि pour गन्धानि
[14] A : इध्मादीनि pour इन्धनानि
[15] D : चतुष्काणि pour च शुष्काणि
[16] A : शोधयेत
[17] C : कुशाश्च pour कुशाग्रान्; D, E : कुशाश्च
[18] C, E : कोमलाश्चार्द्राः शुचिदेशसमुद्भवाः
[19] A, C, D, E : रुद्रसंख्या समाच्छिन्ना पुनः शुष्का प्रशस्यते

[1]आर्द्रा च सरसच्छिन्ना पुनः शुष्का प्रशस्यते। एवं संपाद्य संभारान्होमकर्म समारभेत् ॥१२४॥

[स्रुक्-स्रुवलक्षणम्[2]]

होमार्थं स्रुक्स्रुवौ [3]ग्राह्यौ तयोर्लक्षणमुच्यते। पलाशखदिराश्वत्थप्लक्षोदुम्बरचन्दनैः ॥ १२५ ॥

वैकङ्कतशमी[4]बिल्वैर्मधूकपनसाम्रकैः। [5]श्रेष्ठमध्याधमाः स्युस्ते [6]स्रुक्स्रुवा होमकर्मणि ॥१२६॥

[तत्र स्रुक्[7]]

षट्त्रिंशाङ्गुलसंमिता[8] दृढतरा [9]स्रुक् तेषु [10]नेत्राङ्गुलं
[11]कुम्भं साक्षमरुद्द्विधाङ्गुलकृतो दण्डस्ततो [12]गण्डिका।
[13]वेदाश्रा त्वथ [14]वेदिका द्विगुणिता [15]कण्ठोऽम्बरांशस्ततो
वक्त्रं स्यात्स्वर[16]संमितं तदधरे [17]तारत्रिभागैकतः ॥ १२७ ॥

---

[1] C, D et E omettent ce demi-*śloka*

[2] Cf. *Kāraṇāgama*, I, 18, 28 :
स्रुक्स्रुवौ खदिरेणैव शम्या वैकङ्कतेन वा। अथवा याज्ञिकैर्वृक्षैः कर्तव्यौ लक्षणान्वितौ ॥

[3] A : ग्राह्य ततो pour ग्राह्यौ तयोर्

[4] C : बिल्वं मधूक॰ pour बिल्वैर्मधूक॰ ; D, E : बिल्वमधूक॰

[5] C : श्रेष्ठो मध्याधमौ ; E : श्रेष्ठमध्याधमौ

[6] A : स्रुक्स्रुवौ

[7] Cf. *Kiraṇāgama*, II, 4, 31b-38a :
स्रुक् च वैकङ्कती कार्या प्लक्षोदुम्बरपिप्पला। चूतचन्दनजाता च षट्त्रिंशदङ्गुलायता ॥
षडङ्गुलपरीणाहा दण्डे च द्वादशाङ्गुला। कुर्यादष्टाङ्गुलां वेदीं पात्रं कुर्यात् षडङ्गुलम् ॥
पुष्करं मध्यदेशस्थं वृत्तं स्याद्भ्रमणेन तु। उभयोः पार्श्वयोस्तस्य त्यजेदेकैकमङ्गुलम् ॥
छिद्रार्थं त्र्यङ्गुलं खातं चतुष्पलमितं भवेत्। तद्घोणमष्टमानेन कण्ठस्तद्वत्त्रिभागतः ॥
द्वौ भागौ वेदिकातुल्यावास्यं सप्ताङ्गुलं भवेत्। तत्सूत्रं भ्रामसंयोगात्त्रिभागेन प्रकल्पयेत् ॥
अङ्गुलानां च षट्केन गण्डिका गण्डिवत्कृता। कर्तव्यार्धाङ्गुला वृद्ध्या विचित्रवदनोज्ज्वला ॥
वेदिकामध्यतो रन्ध्रं विशेयावत्कनीयसी। तावत्खातमुखं तद्वद्दण्डमूले घटो भवेत् ॥

voir aussi *Mṛgendrāgama*, *kriyāpāda*, pp. 65-68 :

[8] E : निर्मिता pour संमिता

[9] D : सूत्रेषु pour स्रुक् तेषु

[10] A : नेत्राङ्गुला

[11] E : तुङ्गं तत्समरूपधाङ्गुलगतो दण्डं ततो

[12] A : दण्डिका pour गण्डिका

[13] A : वेदाश्रास्त्वथ

[14] C : वेदिकां द्विगुणितां ; E : वेदिकाभिगुणिता

[15] C : कर्ण pour कण्ठ

[16] C : मुर pour स्वर ; E : त्वर

[17] A : तारा त्रिभागैकतः ; D : तारा त्रिभागे गतः

तारं दैर्घ्यसमं [1]मुखे युगमितं [2]कण्ठे ततो वेदिका
तारेण [3]द्विगुणाश्रमानतबिलाखाता [4]तदर्धार्धतः ।
[5]तत्राग्न्याथ च [6]गण्डिका [7]युगमितास्यार्धार्धहीनेऽपरे[8]
[9]दण्डः स्याद्रसभागनाहसहितः कुम्भं च [10]दिङ्नाहतः ॥ १२८ ॥

[11]युक्तं [12]तद्घनमाश्रमाङ्गुलमितं वेद्यास्तु पृष्ठं ततः
सम्यक्पङ्कजपृष्ठवद्वसुदलं कृत्वा बिलस्याभितः ।
वेदाश्रं यवमात्रकोन्नतवृतिं[13] वेत्राकृतिं कारयेद्
आज्यस्याथ बिलात्तु यावदधरं मार्गं कनिष्ठामितम् ॥ १२९ ॥

[स्रुवः[14]]

वस्वङ्गुलैस्त्रिगुणितैः स्रुवदैर्घ्यमुक्तमृत्वङ्गुलं भवति तस्य तु मूलनाहम् ।
[15]आस्यस्य नाहमपि मूलवदेव कुर्यात्कण्ठस्य[16] नाहमुदितं [17]सममर्धमेव ॥ १३० ॥

---

[1] A : मुखैर्युगमिदं ; C : मुखं मगमितं [2] C : कर्णो pour कण्ठे ; D, E : कण्ठो

[3] C : द्विगुणाश्रमापितबला खातात् ; D : द्विगुणाश्रमापितपिला खाता ; E : द्विगुणाश्रमर्पितबिला खातात्

[4] A : तदर्धा यत:

[5] A : तत्राद्याथ च ; C : तत्राग्न्यामथ ; D : तत्रान्याशु च

[6] C : गन्धिका [7] C, D, E : सुगमिता pour युगमिता

[8] A : सा सार्धहीने परे pour आस्यार्धार्धहीनेऽपरे

[9] A : दण्डि: स्याद्दृढभागनाभिसहितै: ; C : दण्डस्याग्रसुभागनाहसहित:

[10] A : दिग्भागत: [11] C : उक्तं pour युक्तं

[12] E : तद्धनमिश्रमङ्गुलमितं [13] E : उन्नतमिदं pour उन्नतवृतिं

[14] Cf. *Kiraṇāgama*, II, 4, 30-31a :
" स्रुव: कार्यस्तु खादिर: । अङ्गुष्ठपर्ववत्स्थूलो हस्तमात्रसमो दृढ: ॥
अङ्गुष्ठमात्रतद्वातकर्षापूरसुपुष्कर: ।
voir aussi *Mṛgendrāgama*, *kriyāpāda*, p. 65

[15] A : अस्यास्य नाहमपि ; C : आस्यग्रनाहमपि ; E : अस्याग्रनाहमपि

[16] C : कर्णस्य pour कण्ठस्य [17] C : हितमेध्यमेव

[1]नासापुटप्रतिमपुष्करमास्यनाहं[2] कर्षाज्यपूरमनलाङ्गुलदैर्घ्यमुक्तम् ।
मूलात्क्रमेण कृशतामपि तद्गलान्तं कुर्वीत [3]सर्वहवनेषु मनोज्ञरूपम् ॥ १३१ ॥
उक्तं स्रुक्स्रुवयोरेवं समासाल्लक्षणं मया । लक्षणं यदरण्यादौ तदिदानीं विविच्यते ॥ १३२ ॥

[अरणिलक्षणम्[4]]

शम्यश्वत्थतरूद्भवा[5] द्विगुणितैरर्काङ्गुलैरायता[6]
विस्तारेण तदर्धमानसहिता तस्यार्धमानोच्छ्रया ।
कर्तव्या [7]ह्यरणिः षडङ्गुलततिं [8]वृत्तालिनीं कारयेद्
उत्पत्त्यै ज्वलनस्य मध्यतिलकीभूतां तु [9]तन्मध्यमे ॥ १३३ ॥
[10]मध्येऽर्काङ्गुलसंमितो भवति तन्नाहस्तदर्धाङ्गुलं
कृत्वा कीलमयोमयं दृढतरं तन्मूर्ध्नि संयोजयेत् ।
तस्याधामरणीं तु मध्यसुषिरामर्काङ्गुलैरायतां
कुर्यादुक्ततरूद्भवां[11] दृढतरां [12]नाहेन वस्वङ्गुलाम् ॥ १३४ ॥

[अग्न्युत्पादनम्]

एवं त्रीण्यपि निष्पाद्य [13]प्रक्षाल्य च पुनः पुनः । पञ्चगव्येन संप्रोक्ष्य प्रणवं [14]समुदाहरन् ॥

---

[1] C : नास्या pour नासा
[2] C : कार्यं pour नाहं
[3] A : सर्वभवनेषु
[4] Cf. *Kiraṇāgama*, II, 4, 2-7a :
शमीपिप्पलगर्भोत्थां कल्पयेदरणीं दृढाम् । द्विरष्टाङ्गुलविस्तीर्णां दीर्घाद् द्विद्वादशाङ्गुलाम् ॥
उच्छ्रायेणाङ्गुलानष्टौ प्रगण्डं स्यात्षडङ्गुलम् । चतुरष्टाङ्गुलं छत्रमापीडं तत्प्रमाणतः ॥
व्योममात्रं त्रिवृद्धाग्रं गोवालैस्तत्कृतं भवेत् । उदङ्मुखस्तु मथ्नीयाच्छिवबीजमनुस्मरन् ॥
गायत्र्या रविदीप्तिः स्यान्मन्थनं हृदयाणुना । भ्रमणं क्रमशो दद्याच्छत्रं खड्गेन योजयेत् ॥
शिखया योक्त्रकं युज्याच्छिरसा हस्तवेष्टनम् । एवं कृत्वोत्थितो वह्निर्द्विजमन्दिरजोऽपि वा ॥
सूर्यकान्तोद्भवो वा स्यात्सामान्यगृहजोऽपि वा ।
voir aussi *Mṛgendrāgama, kriyāpāda*, 6, 56-58
[5] E : समुद्भवा pour तरूद्भवा
[6] A : अश्वना pour आयता
[7] A : अरणिः pour ह्यरणिः ; C : हरिणी
[8] A : प्रोक्तालिनीं ; C : विनाखनी ; E : वृत्तावनिं
[9] E : मध्येऽर्चयेत्
[10] A : तन्मध्येऽर्काङ्गुलिसंमितौ
[11] C : तनूद्भवां pour तरूद्भवां
[12] A : नाभेरवस्वङ्गुलाम् ; C : नाभेन वस्वङ्गुलाम्
[13] C, E : प्रक्षाल्याचमनं पुनः
[14] C : समुदाहरेत्

गायत्र्या तां समभ्यर्च्य [1]मन्थानं प्रणवेन च । हृन्मन्त्रेण ततो विद्वान्पूजयेदुत्तरारणिम् ॥
गोमयालेपिते देशे [2]प्रोक्षितेऽथ शिवाम्भसा । [3]कुशैरास्तरणं कृत्वा तत्र [4]तामरणिं न्यसेत् ॥
प्राक्पश्चिमगतं [5]तस्यां मन्थानं विन्यसेद्दृढा । तस्योर्ध्वे [6]योक्त्रमाधाय प्रणवेन समाहितः ॥
उत्तराभिमुखो भूत्वा [7]गोवालकृतरज्जुना । [8]त्रिवृता वल्कलोत्थेन शुद्धतन्तुभवेन[9] वा॥१३९॥
[10]मथ्नीयाद् दृढमाक्रम्य सर्वात्मानं समुच्चरन् । ज्योतिर्ज्योतिपदेनाथ संजातं जातवेदसम् ॥१४०
ताम्रपात्रे [11]शरावे वा [12]संगृह्याग्निं गृहे क्षिपेत् । अरणीलक्षणं प्रोक्तम् ; ॥ १४१ ॥

[वह्नेर्गुणानुगुण्येन शुभाशुभफलम्[13]]

अथ वह्नेः समासतः । शुभाशुभफलं वक्ष्ये [14]निमित्तैर्बहुभिर्गुणैः ॥ १४२ ॥

---

[1] A : मथ्नानं pour मन्थानं
[2] C, E : प्रोक्षयेत्तु
[3] A : कुशेनास्तरणं
[4] C : तामरणीं
[5] C : तास्यं pour तस्यां
[6] A : वक्त्रम् pour योक्त्रम्
[7] C : गोपाल pour गोवाल
[8] A : त्रिवृता pour त्रिवृता
[9] C, E : कृतेन pour भवेन
[10] A : बध्नीयाद् pour मथ्नीयाद्
[11] A : शरावे च ; C : शरावेण
[12] C, E : संग्राह्य pour संगृह्य
[13] Cf. *Kiraṇāgama*, II, 4, 51b-56a :
शुभाशुभं विजानीयाद्वर्णगन्धानुरूपतः । पद्मरागेन्द्रनीलार्कशुद्धस्फटिकहेमवत् ॥
विपरीतं न सिद्ध्यर्थं स्याद्धरितापाण्डुवर्जितः । स्निग्धप्रदक्षिणावर्तः संपिण्डितशिखः शुभः ॥
मध्वाज्यक्षीरबिल्वार्कपूरगन्धश्च शोभनः । निर्गन्धः पाण्डरो रूक्षो कृष्णाङ्गारनिभश्च यः ॥
स्तब्धो मार्गप्रवृत्तश्च सधूमोऽधश्शिखोऽशुभः । एवं ज्ञात्वा प्रकर्तव्यो होमस्तेन न चान्यथा ॥
जयोऽरिमर्दनं शान्तिः क्षमा चापि धनागमः । पुष्टिर्ज्ञानं च पूर्वादिक्रमात्तेषां फलं भवेत् ॥
cf. *Suprabhedāgama*, I, 11, 45b-53a :
वर्णं गन्धं ध्वनिं धूमं शिखामग्नौ सुलक्षयेत् । वज्रकाञ्चनरौप्याभं सिन्दूरेन्दुसमप्रभम् ॥
आदित्योदयवर्णाभं हरितालसमप्रभम् । वैडूर्यद्युतिसंकाशं पिङ्गलं च स्वभावतः ॥
तप्तायसमुवर्णाभा दशवर्णाः प्रकीर्तिताः । चन्दनागरुकर्पूरकच्चोलजातिगन्धवत् ॥
मल्लिकापाटलीगन्धमन्दारं च सुगन्धिकम् । उशीरनागपुन्नागचम्पकं तु सुशोभनम् ॥
शङ्खभेर्यादिनिर्घोषं मेघदुन्दुभिनिस्वनम् । सर्वसंपत्करं घोषं धूमं चैव ततः शृणु ॥
कुन्दपुष्पसमाकारं श्यामलाक्षाकृति शुभम् । शुकपिञ्छनिभाकारं धूमं चाप्युत्तमं भवेत् ॥
स्वस्त्याकृतिसमाकारा छत्राकारोर्ध्वगामिनी । शिखा शिखिप्रतीकाशा कदम्बधवलाकृतिः ॥
यस्य होमे शिखा ह्येषा तस्य सिद्धिर्न संशयः । एवमादि शुभं ज्ञात्वा कारयेन्मन्त्रवित्तमः ॥
voir aussi *Mṛgendrāgama, kriyāpāda*, pp. 76-78 :
[14] A : निमित्तं बहुभिर्गुणैः

[1]हुतभुजि जलदशङ्खभेरिध्वनिमनुकुर्वति सर्वलोकपुष्टिः ।
[2]भवति सततमूर्ध्वगेऽप्रयत्नादुदितशिखे परिमण्डिते तथैव[3] ॥ १४३ ॥

सततमुदितभूरिपुण्यगन्धे ज्वलितशिखे च हवींषि लेलिहाने ।
जगति भवति हि [4]सदैव वृष्टिर्हुतभुजि भूसुरभूभृतां च तुष्टिः ॥ १४४ ॥

द्रुतकनकनिभेऽथ पद्मरागे मुषितजपासदृशे हुताशने तु ।
भवति हि यजतां सदा समृद्धिर्बहुधनधान्यकलत्रपुत्रभृत्यैः ॥ १४५ ॥

कमलकुमुदकुन्दचन्द्रहारैः[5] सदृशरुचिः [6]शुकपिञ्छसंनिभो वा ।
सकलदुरितनाशमाशु कृत्वा जनयति वह्निरशेषवाञ्छितार्थम्[7] ॥ १४६ ॥

छत्रचामरसरोज[8]दर्पणस्वस्तिकैरथ रथेन वै पुनः ।
आकृतिं दधति पावके समां [9]सिद्धिराशु यजतां प्रवर्तते ॥ १४७ ॥

प्रवाललाक्षा[10]रसचक्रतो वै गोरोचनाकुङ्कुमशक्रचापैः ।
मार्जारपारावतनेत्र[11]कण्ठैस्तुल्यद्युतिः सिद्धिद एव वह्निः ॥ १४८ ॥

श्रुतिपथकटुकध्वनिप्रकीर्णः प्रकटितवर्मविपाटकध्वनिर्वा ।
परितो दुर्धरविष्फुलिङ्गयुक्तो दुरितकरो यजतां समीरबन्धुः ॥ १४९ ॥

धूमदुर्दिनितयागमन्दिरे [12]यत्नतोऽपि महता कृतोदयः ।
पाप[13]गन्धसहितोऽपि पावकः कार्यनाशकर एव देहिनाम् ॥ १५० ॥

---

[1] A : हुतभुजि जलदाशीद्रेद्रकुर्यादितीन्मनुष्टितमर्वलोकपुष्टः ; C : हुतभुजि तलदं चिप्रेन्द्रकुर्यात् ध्वनिमनकुर्वीत सर्वलोकपुष्टिः ; E : हुतभुजि दलदश्चिप्रेन्द्रकुर्याद्धरिमनुकुर्वीत सर्वलोकपुष्टिः

[2] A : भवति सततं चोर्ध्वनगय.प्रयत्नाद

[3] C, E : उदितशिखैरमण्डितके तथैव

[4] A : म एव पुष्टिः ; C, E : मर्जावदेवत्रृष्टि

[5] A : भारैः pour हारैः

[6] D : कुशिक pour शुक

[7] A : पश्चिमार्थम pour वाञ्छितार्थम्

[8] A : दर्पणं pour दर्पण

[9] A : सिद्धिराशि यजतां प्रवर्तते ; C : सिद्धिराशि जयिनां प्रवर्तते ; E : सिन्धुराशि यजतां प्रवर्तते

[10] C, D, E : रथ pour रस

[11] A : कर्णैस्तुल्य pour कण्ठैस्तुल्य ; C : कण्ठे तुल्य ; E : कण्ठतुल्य

[12] C, D : वर्तितोऽपि महता तपोदयः

[13] C, D : विद्ध pour गन्ध

मृङ्गाञ्जनाम्बुधरहेतिसमानवर्णः[1] सर्वैस्तु कृष्णकुसुमैः समुदीप्तवह्निः ।
वेतालसर्पसरमा[2]खररूप[3]भूतैराहुत्यनिष्टमसकृद्यजतां विधत्ते ॥ १५१ ॥

शुद्धः सिद्धिकरः प्रदक्षिणशिखश्चोर्ध्वं गतो पावकः
[4]सद्यो भद्रमखण्डशैलसदृशः श्रीवर्धमानाकृतिः ।
वामावर्तशिखो लिहन्वसुमतीं विश्लिष्टकीलो मुहु-
र्मर्त्यानाकुलयन्करोति यजतामिष्टार्थविघ्नं सदा ॥ १५२ ॥

[5]इत्यजिताख्ये [6]महातन्त्रे [क्रियापादे] [7]अग्निकार्यविधिर्नामैकविंशः पटलः ॥

---

[1] A : वर्णान् pour वर्णः ; C : वर्तिन्
[2] E : पर pour खर
[3] A : भूता नीडस्थनिष्ठम् pour भूतैराहुत्यनिष्टम्
[4] A : सद्ये पत्रमण्डलसैल pour सद्यो भद्रमखण्डशैल०
[5] E : इत्यजिते pour इत्यजिताख्ये
[6] E omet महातन्त्रे
[7] A : अग्निकार्यविधिर्द्वाविंशत्तमः पटलः ; D, E : अग्निकार्यविधिपटलः

## [द्वाविंशः पटलः]

### अर्चनाङ्गविधिः[1]

[2]अथ वक्ष्येऽर्चनाङ्गानां द्रव्याणामिह निर्णयम् । स्नानोदकमुखानां तु [3]तच्छृणु त्वं समासतः ॥१॥

[स्नानाम्भःप्रमाणम्[4]]

पञ्च[5]भारैर्जलैः स्नानमुत्तमोत्तममुच्यते । [6]अधमाधमं भारेण भारार्धह्रासतो भवेत् ॥ २ ॥

[7]नव[8]प्रकारमुद्दिष्टं [9]स्नानाम्भस्तु जनार्दन । [10]यथोक्तपञ्चगव्येन तथा पञ्चामृतेन च ॥ ३ ॥

कुशाम्भसा सुगन्धेन क्रमेणैवाभिषेचनम् । प्रातर्मध्याह्नसायेषु श्रेष्ठमित्यभिधीयते ॥ ४ ॥

प्रातर्मध्याह्नयोस्ताभ्यां मध्यमं समुदाहृतम् । प्रातस्तु पञ्चगव्येन [11]स्नानं कन्यसमुच्यते ॥ ५ ॥

---

[1] Pour अर्चनाङ्गविधि, voir *Kāmika* I, 5, *Kāraṇa* I, 31, *Cintya* 6, *Dīpta* 26, *Makuṭa* 3, *Raurava*, vol. I, II, 9, *Suprabheda* I, 7 et *Sūkṣma* 4.

[2] B omet les *śloka* 1 à 22a

[3] E : तच्छृणुष्व pour तच्छृणु त्वं

[4] Cf. *Kāmikāgama*, I, 5, 20b-23a :

कल्पयेदभिषेकार्थं वारि संसारवारि यत् । भारादिनवभारान्तं नवलिङ्गेऽधमाधमे ॥
एकभारविवृद्ध्या तु भेदोऽत्र नवसंख्यया । अष्टद्रोणैरथाद्भिर्वा द्विगुणैस्त्रिगुणैस्तु वा ॥
स्वयम्भुबाणलिङ्गादौ प्रोक्तेभ्यूर्क्तं हि वाञ्छितम् । स्नानोदकप्रमाणं स्यादात्मार्थे हि यथेच्छया ॥

cf. *Dīptāgama*, 98, 296b-297 :

स्नानं षड्भारसंयुक्तमुत्तमं चेति कीर्तितम् । मध्यमं च चतुर्भारं द्विभारं कन्यसं भवेत् ॥
अभिषेकोदकं प्रोक्तम् ''

[5] A : हारैर् pour भारैर् ; D : धारैर्

[6] A : अधमाधमभारेण

[7] E : द्रव्य pour नव

[8] D : प्राकार pour प्रकार

[9] A : स्नानाम्भसि

[10] D, E : यथोक्तं पञ्चगव्येन

[11] D : स्नानकान्यसमुच्यते

[पञ्चगव्यप्रमाणम्[1]]

गोमूत्रं गोमयं क्षीरं दधि सर्पिर्यथाक्रमम् । षट्चतुस्त्रिद्विरेकैस्तु[2] भागैर्योज्यं क्रमेण वै ॥ ६ ॥

[पञ्चगव्ययोग्यगवां वर्णः[3]]

[4]कपिलायास्तु गोमूत्रं [5]रक्ताया गोमयं भवेत् । [6]कृष्णायाः क्षीरमुद्दिष्टं [7]सिताया दधि चैव हि॥७॥
[8]धूम्रायास्तु घृतं [9]ग्राह्यं पञ्चगव्योपपादने । सर्वं वा [10]कपिलायास्तु [11]नानावर्णयुजोऽथवा॥८॥

[पञ्चगव्ययोजनप्रकारः[12]]

तस्य योगं प्रवक्ष्यामि गोमयेनोपलेपिते[13] । शिवाग्रे भूतले मन्त्री प्रोक्षयित्वा शिवाम्भसा॥९॥
स्थण्डिलं कारयेच्छालिं[14] प्रत्येकं प्रस्थमाचरेत् । तदर्धैस्तण्डुलैर्भूष्य तदर्धैश्च तिलैरपि ॥ १० ॥
[15]स्थापयेत्स्नपनेनैव[16] स्थण्डिले व्रीहिनिर्मिते । मध्यमे सर्पिराधाय[17] गोमूत्रं गोमयं पुनः ॥११

---

[1] Cf. *Kāraṇāgama*, I, 35, 24-28 :

प्रस्थमाज्यं समाख्यातं दधि द्विप्रस्थमुच्यते । त्रिप्रस्थं चैव गोक्षीरं चतुःप्रस्थं तु गोमयम् ॥
षट्प्रस्थं चैव गोमूत्रं पलमात्रं कुशोदकम् । द्विपादघृतसंयुक्तं दधि प्रस्थमिहोच्यते ॥
प्रस्थार्धक्षीरसंयुक्तं द्विप्रस्थं गोमयं भवेत् । त्रिपस्थं चैव गोमूत्रं पञ्चगव्यं तु मध्यमम् ॥
एकपादं घृतं चैव दधि पादद्वयं भवेत् । त्रिपादं क्षीरमित्युक्तं चतुष्पादं तु गोमयम् ॥
षट्पादं चैव गोमूत्रं पलमात्रं कुशोदकम् । एवमेव क्रमेणैव त्रिविधं पञ्चगव्यकम् ॥

[2] A : चतुर्द्विरेकचतुर्भागैर्योज्या क्रमेण वै ; la forme grammaticale correcte est षट्चतुस्त्रिद्व्येककैस्तु ।

[3] Cf. *Kāraṇāgama*, I, 35, 35b-37a :

गोमयं कृष्णवर्णायां नीलायां गोजलं स्मृतम् । कपिलायां घृतं विद्धि शुक्लायां दधि चोच्यते ॥
पयश्च रक्तवर्णायां गवां वर्णः प्रकीर्तितः । अलाभे कपिलायास्तु सर्वं संग्राहयेद् बुधः ॥

[4] A : कपिलायां तु ; C : कपिलायाश्च ; E : कपिलायां च

[5] A : रक्तायां

[6] A : कृष्णायां

[7] A : सितायां दधि एव हि

[8] E : धूम्रायां तु

[9] A : गृह्यं

[10] C, D : कपिलायां तु

[11] A : नानावर्णैर्युता भवेत् ; C, D : नानावर्णेऽथवा भवेत्

[12] Pour les détails concernant le पञ्चगव्य voir *Aṃśumadāgama*, पञ्चगव्यविधिपटल, 21-49a :

गोमयालेपनं कृत्वा गवाग्रे चान्यदेशके । पिष्टचूर्णैरलंकृत्य सोष्णीषः सोत्तरीयकः ॥
उत्तराभिमुखो भूत्वा रुचिरासनसंस्थितः । विघ्नेशयजनं पूर्वं पुण्याहं तत्र कारयेत् ॥

---

प्राक्सूत्रं युगसूत्रं तु उदक्सूत्रं तथैव च । सूत्रात्सूत्रान्तरं तालं नवकोष्ठं प्रकल्पयेत् ॥
अथवा भूतसूत्रं तु प्रागग्रमुदगग्रकम् । मध्ये चतुष्पदं त्वेकं पूर्वादिद्विद्विकं पदम् ॥
आग्नेयादीशपर्यन्तमेकैकं पदमेव हि । ग्राहयेन्नवकोष्ठं तु शेषरेखां विलेपयेत् ॥
एकहस्तं द्विहस्तं वा चतुरश्रं स्थण्डिलं कुरु । उत्तमं तु चतुःप्रस्थं मध्यमं तु तदर्धकम् ॥
अधमं प्रस्थशालिं तु पदं प्रति पदं प्रति । तण्डुलैस्तिललाजैश्च गन्धैः पुष्पैः परिस्तरेत् ॥
पूर्वोत्तराग्रानास्तीर्य त्रीन्कुशान्प्रतिरेखगान् । मध्यमे शिवतत्त्वं तु पूर्वके च सदाशिवः ॥
विद्यातत्त्वं दक्षिणस्यां पुरुषतत्त्वं तथोत्तरे । पश्चिमे कालतत्त्वं तु पृथ्वीतत्त्वं तु पावके ॥
कं च नैर्ऋतिकोष्ठे तु वायुकोष्ठे मरुत्क्रमात् । ईशाने प्रकृतिकोष्ठं च कोष्ठैरेतैः प्रपूजयेत् ॥
स्वर्णरूप्यकपात्रैर्वा पालाशैर्मृण्मयैस्तु वा । त्रिसूत्रैर्वेष्टयित्वा तु धूपितैः स्थापितैः क्रमात् ॥
मध्यमे सुप्रतिष्ठं च सुशान्तं पूर्वपात्रके । तेजोवद्दक्षिणे चैव अमृतपात्रं तथोत्तरे ॥
रत्नोदं पश्चिमे चैव पञ्चपात्रेषु पूजयेत् । अथवा एकपात्रे च सुप्रतिष्ठादि पूजयेत् ॥
आग्नेये नियतिं पूज्य कालतत्त्वं च नैर्ऋते । कलातत्त्वं तु वायव्ये अव्यक्तमीशकोणके ॥
गन्धपुष्पादिभिश्चैव पूजयेत्स्वस्वनामतः । पात्रेषु विधिना पूर्वं मध्यादीशान्तकं क्रमात् ॥
क्षीरं विन्यस्य मध्ये तु दधि पूर्वे च विन्यसेत् । दक्षिणे तु घृतं न्यस्य गोमूत्रं चोत्तरे तथा ॥
गोमयं पश्चिमे चैव आग्नेय्यां पिष्टसंयुतम् । नैर्ऋत्यामामलकं स्थाप्य वायव्यां रात्रिचूर्णकम् ॥
चन्दनोदं तथैशान्यां ततः स्थापनमारभेत् । पुष्पकूर्चसमायुक्तान् धूपदीपादि पूजयेत् ॥
आप्यायस्वेति च क्षीरं दधिक्राव्णेति वै दधि । शुक्रमसि ज्योतिरसीत्याज्यं सावित्रि गोजलम् ॥
गन्धद्वारेति मन्त्रेण गोमयोदकपूरितम् । अग्निर्मीळेति पिष्टं स्यादिषे त्वामलकं न्यसेत् ॥
अग्न आयाहिमन्त्रेण रजनीं स्थापयेत्ततः । देवस्य त्वेति मन्त्रं वा स्थापयेद्देशिकोत्तमः ॥
ईशानादि च सद्यान्तमस्त्रं जप्त्वा विचक्षणः । एकद्वित्रिचतुष्पञ्चषट्कृत्वश्चाभिमन्त्रयेत् ॥
कुशोदकेन संयोज्य मेलामन्त्रमनुस्मरन् । तत्पुरुषाय विद्महे दधि मध्ये सुयोजयेत् ॥
अघोरेत्यादिमन्त्रेण घृतमेवं सुयोजयेत् । वामदेवेन मन्त्रेण गोमूत्रं च सुयोजयेत् ॥
सद्योजातेति मन्त्रेण गोमयं च सुयोजयेत् । शन्नोदेवीति मन्त्रेण कुशोदं च सुयोजयेत् ॥
शिवगायत्रिमन्त्रेण क्षीरं चैव सुयोजयेत् । त्रियम्बकेन मन्त्रेण मर्दयेत्त्रिः प्रदक्षिणम् ॥
अष्टोत्तरशतं चैव मूलमन्त्रं जपेद्बुधः । सुरभिं मुकुलं चैव दिग्बन्धेनावकुण्ठयेत् ॥
गन्धपुष्पादिनाभ्यर्च्य धूपदीपौ च मूलतः । दर्भैराच्छाद्य तत्पात्रं सापिधानसमन्वितम ॥
एवं गव्यं समापाद्य पूजयेत्परमेश्वरम् ।

[13] C, D, E : उपलेपयेत् pour उपलेपिते
[14] E : कारयेच्छालि
[15] A omet le demi-*śloka* 11a
[16] C : स्थपनेनैव ; D : स्नपनेनैव
[17] E : आशाम् pour आधाय

क्षीरं दधि क्रमेणैव प्रागादिषु च विन्यसेत् । ईशानादिभिरभ्यर्च्य मन्त्रैर्मध्यादिषु[1] क्रमात् ॥ १२ ॥
[2]तत्तन्मुखाणुभिर्मध्ये योजयेत्तान्क्रमात्सुधीः । प्रणवेन [3]तदेकस्थं [4]ब्रह्मभिस्त्वभिमन्त्रयेत् ॥ १३ ॥
मुद्रयेदथ [5]पात्रस्थं मुद्रया चामृताख्यया । एवं [6]भागैः समायुक्तमाढकं तत्प्रकीर्तितम् ॥ १४ ॥

[पञ्चामृतम्[7]]

पञ्चामृतमथो[8] वक्ष्ये सर्वसंपत्करं नृणाम् । क्षीरं दधि घृतं क्षौद्रं [9]सिता चैवेति पञ्चकम् ॥ १५ ॥
पञ्चामृतमिति ख्यातं [10]प्रतिप्रस्थं पृथङ्न्यसेत् । पादहीनं तु मध्यं स्यादर्धहीनं तु कन्यसम् ॥
मध्यादि पूर्ववन्न्यस्य[11] पूर्ववत्पूजयेत्ततः । [12]खण्डाभावे तु संग्राह्यं भवेदिक्षुरसं[13] तथा ॥ १७ ॥
खण्डं चाप्यभिषेकाय जलेनालोलितं भवेत् । अभिषेकः पृथक् प्रोक्तस्तोयस्नानान्तरान्तरे[14]
॥ १८ ॥

---

[1] A : मन्वादिषु pour मध्यादिषु

[2] A : तत्तन्मुखादिभिर्मध्ये ; E : तत्तन्मुखास्यभिर्मध्ये

[3] E : तदेवस्थं

[4] A : ब्रह्मभिर्वाभिमन्त्रयेत्

[5] C, D : वक्त्रस्थं

[6] E : भावैः pour भागैः

[7] Cf. *Kāraṇāgama*, I, 31, 5-12 :

क्षीरं दधि घृतं क्षौद्रं सितं चैव तु पञ्चमम् । पञ्चामृतमिति ख्यातं प्रतिदिक्स्थं पृथङ् न्यसेत् ॥
उत्तमं प्रस्थसंपूर्णं मध्यमं तु तदर्धकम् । तदर्धमधमं ज्ञेयं त्रिविधं परिकल्पयेत् ॥
दुग्धं तु मध्यमे स्थाप्यं पूर्वस्यां स्थापयेद्दधि । घृतं दक्षिणतो न्यस्य पश्चिमे क्षौद्रमुच्यते ॥
सितमुत्तरदिग्देशे गन्धोदं शांकरे न्यसेत् । रम्भापनसचूतानि अग्निनैर्ऋतिवायुषु ॥
संस्थाप्याभ्यर्चयेदीशपुंघोरवामसद्यकैः । एकद्वित्रिचतुःपञ्चवारमेवाभिमन्त्र्य च ॥
हृदयं च शिरश्चैव शिखामिश्रं तु विन्यसेत् । कवचेनावकुण्ठ्याथ धेनुमुद्रां प्रदर्शयेत् ॥
खण्डाभावे तु संग्राह्यो भवेदिक्षुरसस्तथा । खण्डं चाप्यभिषेके तु जलेन लोलितं भवेत् ॥
अभिषेकः पृथक्प्रोक्तस्तोयस्नानान्तरान्तकः । मध्ये मध्ये च धूपं च दीपं चैव प्रदापयेत् ॥

[8] E : इदं pour अथो

[9] C : मितं pour सिता

[10] E : प्रतिपादं pour प्रतिप्रस्थं

[11] A : न्यस्त्वा pour न्यस्य

[12] D : घण्टाभावे

[13] Les mots इक्षुरस et खण्ड se trouvent au neutre au lieu du masculin ; voir *Rauravāgama*, vol. I, p. **69**, note 6.

[14] A : अन्तकम् pour अन्तरे

[कुशोदकम्[1]]

[2]उशीरचन्दनोपेतं कुशाग्रैश्च[3] समन्वितम् । कुशाम्भ इति निर्दिष्टं प्रणवेनाभिमन्त्रितम् ॥ १९ ॥

[अभ्यञ्जनम्[4]]

तिलतैलेन शुद्धेन वासितेन सुगन्धिना । वारेष्विन्दुबुधार्कीणां[5] श्रेष्ठमभ्यञ्जनं स्मृतम् ॥ २० ॥
अधमं [6]कोणवारेषु मध्यमं बुधकोणयोः[7] । यवमाषशालिपिष्टं [8]श्रेष्ठमध्येतरं भवेत् ॥ २१ ॥
सुगन्धामलकं [9]लक्ष्मीर्हरिद्रा च तथैव च । त्रिभिरेतैर्वरं स्नानं हरिद्रामलकद्वयात् ॥ २२ ॥
मध्यमं स्नानमुद्दिष्टं कन्यसं स्याद्धरिद्रया ।

[पाद्यम्[10]]

चन्दनोशीरह्रीबेरैस्तुटिना[11] पाद्यमुत्तमम् ॥ २३ ॥
ह्रीबेरेण विना [12]मध्यमधमं सोशीरचन्दनम् ।

[आचमनीयकम्[13]]

[14]उशीरचन्दनोपेतं लोहकर्पूरसंयुतम् ॥ २४ ॥

---

[1] Cf. *Aṃśumadāgama, pañcagaryavidhipaṭala*, 19b-20a :
उशीरं चन्दनोपेतं कुशाग्रैस्तु समन्वितम् । कुशाम्भ इति निर्दिष्टमथवा कुशतोययुक् ॥

[2] A : उशीरं चन्दनोपेतं

[3] C, D, E : तु pour च

[4] Cf. *Yogajāgama*, ms. p. 346 : शनिवारे बुधवारे च गन्धतैलं क्षिपेद्बुधः ।

[5] C : अर्कीणां pour अर्कीणां

[6] A : गौण pour कोण

[7] A : वारयोः pour कोणयोः

[8] C, D : श्रेष्ठं मध्येतरं भवेत्

[9] A : द्राक्षी भद्रो मुस्तं तथैव च

[10] Cf. *Kāraṇāgama*, I, 31, 38-40a :
कुङ्कुमं चन्दनं दूर्वा सिद्धार्थोशीरकं तथा । जलेनैव समायुक्तं पाद्यमुत्तममुच्यते ॥
उशीरं चन्दनं चैव दूर्वा सिद्धार्थकं तथा । उदकेन समायुक्तं मध्यमं पाद्यमुच्यते ॥
चन्दनोशीरसंयुक्तं कन्यसं पाद्यमुच्यते ।

[11] A : ह्रीबेरकुटीना pour ह्रीबेरैस्तुटिना

[12] A, D : मध्यमधमोशीरचन्दनम् ; B : मध्यमधमं सोशीरचन्दनात् ; C : मध्यमध्यमोशीरचन्दनम्

[13] Cf. *Kāraṇāgama*, I, 31, 42b-44 :
उशीरं जातिकर्पूरं त्रुटितन्तुलवङ्गकम् । सुरेण सलिलोपेतं श्रेष्ठमाचमनीयकम् ॥
एलालवङ्गकर्पूरमुशीरं जातिसंयुतम् । जलेनैव समायुक्तं मध्यमाचमनीयकम् ॥
एलालवङ्गकर्पूरं जलैः सार्धं तु कन्यसम् ॥

[14] A : उशीरं चन्दनोपेतं

[1]जातीतक्कोलसंयुक्तं श्रेष्ठमाचमनीयकम् । कर्पूरलोहौ[2] हित्वा तु मध्यमं समुदाहृतम् ॥ २५ ॥
कर्पूरलोहतक्कोलान् हित्वा कन्यसमुच्यते ।

[अर्घ्यम्[3]]

अर्घ्यं तु यवसिद्धार्थशालितण्डुलसंयुतम् ॥ २६ ॥
[4]क्षीरकृष्णतिलोपेतं कुशदूर्वाग्रसंयुतम् । उत्तमं त्विति निर्दिष्टं द्वाभ्यां हीनं तु मध्यमम् ॥२७॥
अधमं [5]त्रिभिरुद्दिष्टमर्घ्यं चापि त्रिधा स्मृतम् । सर्वद्रव्यसमायुक्तं निष्कं निष्कार्धमेव वा ॥२८॥
[6]तदर्धं वा प्रयुञ्जीत [7]श्रेष्ठमध्याधमक्रमात् ।

[विलेपनम्[8]]

चन्दनागरु[9]कर्पूरकुष्ठकुङ्कुममुत्तमम् ॥ २९ ॥
[10]विलेपनार्थमुद्दिष्टं काश्मीरागरुवर्जितम् । मध्यमं केवलेनैव चन्दनेन तु कन्यसम् ॥ ३० ॥
कुङ्कुमागरुकर्पूरान्यथालाभं प्रयोजयेत् । [11]पलद्वयं सपादं तु श्रीखण्डं चोत्तमोत्तमम् ॥ ३१ ॥
ततः पादक्रमेणैव [12]ह्रासेदापादतः क्रमात् । कन्यसात्कन्यसं प्रोक्तं मध्ये सप्तविधं भवेत् ॥३२॥

---

[1] B, D : जाति pour जाती
[2] E : लोहे pour लोहौ
[3] Cf. *Kāraṇāgama*, I, 31, 46b-48a :
आपः क्षीरकुशाग्रैश्चाप्यक्षतैर्यवतण्डुलैः । तिलैः सिद्धार्थकैश्चैव अर्घ्यमुत्तममुच्यते ॥
यवसर्षपशाल्यद्भिस्तण्डुलैर्मध्यमार्घ्यकम् । यवतण्डुलशाल्यद्भिर्भवेदर्घ्यं तु कन्यसम् ॥
[4] A : क्षीरं pour क्षीर
[5] E : त्रिभिरुक्तमर्घ्यं चापि
[6] A : तदधर्धं वा
[7] B, C, D, E : श्रेष्ठमध्यादिषु क्रमात्
[8] Cf. *Kāraṇāgama*, I, 31, 51-54 :
कर्पूरं कुङ्कुमं पत्रं खड्गं चैव पलत्रयम् । चन्दनोशीरलोहं च गन्धमुत्तममुच्यते ॥
उशीरं चन्दनं चैव कर्पूरं च पलत्रयम् । घनं खड्गसमायुक्तं मध्यमं गन्धमुच्यते ॥
हिमं घनं च कर्पूरं कन्यसं गन्धमुच्यते । द्रव्यं प्रति पलं श्रेष्ठं तस्यार्धं मध्यमं भवेत् ॥
तदर्धमधमं ज्ञेयं गन्धद्रव्यं त्रिधोदितम् । स्नाने चार्घ्ये विलेपे च त्रिषु गन्धं तु दापयेत् ॥
[9] A : ०कर्पूरकुष्ठं कुङ्कुमम् ; B, E : ०कर्पूरं कोष्ठकुङ्कुमम्०
[10] E omet les *śloka* 30 et 31
[11] A : फलद्वयसमापादं ; C, D : फलद्वयं सपादं तु
[12] B : ह्रासेदापाततः क्रमात्

[अर्चनार्हाणि पुष्पाणि पत्राणि च]

श्वेतै रक्तैस्तथा पीतैः कृष्णैश्च कुसुमैः शुभैः । अपर्युषितनिश्छिद्रैः कृमिकेशादिवर्जितैः ॥ ३३ ॥
[1]सर्वैरेतैः कृतं यच्च पत्रैश्चैव तथाविधैः । [2]श्रेष्ठमभ्यर्चनं प्रोक्तं [3]कृष्णैः पुष्पैर्विना कृतम् ॥३४॥
मध्यमं यजनं प्रोक्तं सितरक्तैस्तु कन्यसम् । पुष्पाणि तानि वक्ष्यामि श्वेतादीनि यथाक्रमम्॥

[श्वेतपुष्पाणि[4]]

सितपद्मं सितार्कं च मन्दारं करवीरकम् । नन्द्यावर्तं च [5]पुन्नागं मल्लिका जातिरेव च ॥ ३६ ॥
[6]माधवी कुरवं [7]चैव [8]द्रोणं धुत्तूरमेव च । बकपुष्पं च भद्रा च [9]गिरिकर्णी तथैव च ॥ ३७ ॥
श्रीपुष्पं वकुलं चैव लोध्रपुष्पं तथैव च । [10]सिन्धुवारं[11] शमीपुष्पं सितान्युक्तानि तानि तु॥३८

[रक्तपुष्पाणि[12]]

[13]रक्तपद्मं पलाशं च [14]हयमारं च [15]पाटली । [16]रक्तार्कं बृहती चैव [17]पिण्डीतकमतः परम् ॥३९
पट्टिका [18]चोत्पलं रक्तं मुनिपुष्पं तथैव च । कदम्बं [19]चेति रक्तानि पीतानि च ततः शृणु॥४०

---

[1] A : सर्वरक्तैः
[2] A : श्रेष्ठमभ्यर्चितं
[3] B : कृतैः pour कृष्णैः
[4] Cf. *Kāmikāgama*, I, 5, 40-43 :
श्वेतपद्मं च पुन्नागं शङ्खपुष्पं च मल्लिका । नन्द्यावर्तं श्रियावर्तं मन्दारं बहुकर्णिका ॥
द्विकर्णि कुरवं जाती लक्ष्मीश्च वकुलं तथा । श्वेतार्कमालतीद्रोणमतसीश्वेतलोध्रकम् ॥
विषका सीसकुसुमं भद्रा च महती च सा । व्याघ्री चम्पकपुष्पं च करवीरमशोकजम् ॥
हालिका शतपुष्पं च उन्मत्तं कुशपुष्पकम् । एतानि श्वेतपुष्पाणि मुख्यामुख्यत्वभाञ्जि हि ॥
[5] D : पुन्नागमल्लिका
[6] D : माधवं
[7] B, C, D, E : चापि pour चैव
[8] A : द्रोणधूर्ध्रूरमेव च
[9] C, D : गिरिकर्ण
[10] B omet les *śloka* 38b à 41a
[11] C : सिन्दुवारं
[12] Cf. *Kāmikāgama*, I, 5, 44-45 :
रक्तपुष्पं पलाशं च रक्तोत्पलं च पाटली । मौसली चैव धुत्तूरं बृहती करवीरजम् ॥
व्याघ्री च रक्तमन्दारं पट्टिका वैजिका तथा । मुनिपुष्पं च तद्रक्तं रक्तान्येतानि निर्दिशेत् ॥
[13] A : रक्तपुष्पं
[14] A : हयमनं ; C : हमसारं
[15] C : पाटलम्
[16] B, C, D, E : अर्कं च pour रक्तार्कं
[17] A : पिण्डितं च ततः परम् ; D : पिण्डीतः क्रमतः परम्
[18] E : पाटला चोत्पला रक्तं
[19] E : श्वेत pour चेति

[[1]पीतपुष्पाणि कृष्णपुष्पाणि च]

चम्पकं कर्णिकारं च तथारग्वधमेव च । [2]हेमधुत्तूरकं चैव कुरण्डं गोक्षुरं तथा ॥ ४१ ॥
[3]असनं शिखिनी चैव [4]पीतपुष्पं [5]प्रकीर्तितम् । नीलोत्पलं [6]विष्णुक्रान्तिरतमीपुष्पमेव च॥४२
[7]कुरण्डं कृष्णवर्णं च [8]कृष्णपुष्पं प्रकीर्तितम् ।

[पत्राणि[9]]

पत्राण्यर्चनयोग्यानि समासाच्छृणु साम्प्रतम् ॥ ४३ ॥
विल्वं शमी मयूरं च [10]तुलसीपत्रमेव च । [11]हरिताङ्कोलकं चैव [12]धुत्तूरं करवीरकम् ॥ ४४ ॥
नन्द्यावर्तं च मल्ली च द्रोणं चापि [13]तपस्विनी । [14]सहादेवी च दूर्वा च कुशा [15]भद्रा तथैव च॥
[16]गोक्षुरं [17]शङ्खिनी चैव [18]सिन्धुवारं तथैव च । [19]वकुलारग्वधद्रूणां पल्लवं चाप्युदुम्बरम् ॥४६
विष्णुक्रान्त्येकपत्रं च धातकी [20]दान्तमेव च । यवाङ्कुरार्कपत्रं च [21]पत्रमेवं हि कीर्तितम्॥४७॥

---

[1] Cf. *Kāmikāgama*, I, 5, 46-47a :
शौनक्यं कर्णिकारं च चम्पकं हेमधुत्तुरम् । आरग्वधं च कोदण्डं शैरीषं गिरिकर्णिका ॥
एतानि पीतपुष्पाणि कृष्णे नीलोत्पलं वरम् ।

[2] A : हेमधुर्धूरकं चैव

[3] A, C : आमनं pour असनं

[4] B, E : पीतं पुष्पं

[5] A : तथैव च pour प्रकीर्तितम्

[6] A : विष्णुकान्तितामसीपुष्पमेव च : C : विष्णुक्रान्तमतसीपुष्पमेव च

[7] A : करण्डं pour कुरण्डं

[8] B, E : कृष्णवर्णं

[9] Cf. *Kāmikāgama*, I, 5, 47b-50 :
बिल्वपत्रं तपस्वी च महाभद्रा च धातकी । अपामार्ग कुशा दूर्वाः पञ्चविल्वाः शमी तथा ॥
तुलसी चन्द्रपो दान्तो जम्बुको नागनन्दिका । एकपत्रारविन्दं च विष्णुक्रान्तिस्तथैव च ॥
सहकारस्तथा कृष्णतुलसी गन्धपत्रिका । एवमादीनि पत्राणि पुत्रवृद्धिकराणि च ॥
उशीरह्रीबेरादिकुलानि शुभदानि हि ।

[10] C, D, E : तुलसीपुष्पमेव च

[11] A : हरितारं गोलकं चैव

[12] A : धूर्धूरं pour धुत्तूरं

[13] D : तपस्विनम्

[14] C : महादेवी ; D : महादेवा

[15] C : भद्रं

[16] D : गोक्षीरं

[17] A : कविनी pour शङ्खिनी : E : शङ्खकं

[18] C, D : सिन्दुवारं

[19] B, D : वकुलारग्वधाम्राणां ; E : वकुलाश्वत्थपत्राणां

[20] A : धातमेव च ; C : धान्तमेव च

[21] A : प्रातरेव हि

[प्रातरादिकालेषु देयानि पुष्पाणि[1]]

पुष्पैः पत्रैर्यथालाभैः पूजयेत्परमेश्वरम् । [2]कनकानि कदम्बानि जातीपुष्पं तथैव च ॥ ४८ ॥
रात्रौ दद्याच्छिवे शेषं [3]दद्याद्देवे दिवानिशम् । नन्द्यावर्तं [4]भवेत्प्रातर्मध्याह्ने द्रोणमेव च॥४९॥
[5]जातिः साये विशेषेण दातव्या स्याच्छिवाय वै ।

[वर्ज्याणि पुष्पाणि पत्राणि च[6]]

निर्गन्धान्युग्रगन्धानि पुष्पाण्यन्यानि वर्जयेत् ॥ ५० ॥
[7]अङ्कोलनिम्बवानीरयवधान्यादिसंभवैः । पिशाचक्षीरवृक्षोत्थैर्वाकुचीनीलिकोद्भवैः[8] ॥ ५१ ॥

---

[1] Cf. *Suprabhedāgama*, I, 7, 11 :
नन्द्यावर्तं तु पूर्वाह्णे मध्याह्ने करवीरकम् । साये तु मल्लिका प्रोक्ता ह्यर्धरात्रौ द्विकर्णिका ॥
cf. *Kāmikāgama*, I, 5, 58-59a :
कनकानि कदम्बानि रात्रौ देयानि शंकरे । दिवा शेषाणि पुष्पाणि दिवा रात्रौ च मल्लिका ॥
प्रहरार्धे स्मृता जाती करवीरमहर्निशम् ।
voir aussi *Rauravāgama*, vol. I, II, 9, 6-7a :

[2] E : कनकादि pour कनकानि

[3] A : दद्याद्देवनिवेशनम् ; B, C, D : दद्यादेवं दिवानिशम्

[4] B, C, D, E ; भवेत्प्रातर्द्रोणं मध्यंदिने तथा [5] A : साये जातविशेषेण दातव्यं

[6] Cf. *Suprabhedāgama*, I, 7, 16-20 :
करञ्जं शाल्मली चैव शिरीषं केतकी तथा । लाङ्गली च विभीतं च बन्धूकं चैव दाडिमी ॥
किंशुकं मदयन्ती च कुमुदानि च वर्जयेत् । अतिपक्वैरपक्वैर्वा नार्चयेच्छिवमव्ययम् ॥
केशकीटापविद्धानि लूतसूत्रावृतानि च । स्वयं पतितपुष्पाणि त्यजेत्पर्युषितानि च ॥
शमीबिल्वमपामार्गं कुशदूर्वासहास्तथा । नागनन्दी रुद्रपर्णी धातकीपत्रमेव च ॥
भद्री चैव महाभद्री द्रोणपत्रं तथैव च । उग्रगन्धैस्तु निर्गन्धैर्नार्चयेत्तु विशेषतः ॥
cf. *Kāmikāgama*, I, 5, 54b-57 et 59b-60 :
केतकी चातिमुक्तं च यूथी च नवमल्लिका । शिरीषसर्जबन्धूककुसुमानि विवर्जयेत् ॥
अङ्कोलपत्रकुसुमं त्यजेन्नृपतरूद्भवम् । वैभीतकानि पत्राणि कुसुमानि विसर्जयेत् ॥
निर्गन्धान्युग्रगन्धानि कुसुमानि विसर्जयेत् । गन्धवन्त्यपवित्राणि कुसुमानि विसर्जयेत् ॥
गन्धहीनमपि ग्राह्यं पवित्रं यत्कुशादिकम्...... । केशकीटापविद्धानि शीर्णपर्युषितानि च ॥
स्वयं पतितपुष्पाणि त्यजेदुपहतानि च । मुकुलैर्नार्चयेद्देवमपक्वं न निवेदयेत् ॥

[7] A : आकुलीनिम्बवारीररथवान्यत्रसंभवैः ; B : कुलीनीरम्बयाधीरयविधाद्यत्रसंभवैः ; C : आकुलीनिम्बवानीरयवयाद्यत्रसंभवैः ; D : आकुलीनिम्बनीवारधवधाद्यत्रसंभवैः

[8] A : वाकुचीतिलकोद्भवैः pour वाकुचीनीलिकोद्भवैः ; C : गुलूचीनीलिकोद्भवैः

एरण्डार्जुनसंभूतैः [1]पल्लवैर्नार्चयेच्छिवम् । जपाकिंशुकबन्धूकैः[2] श्लेष्मातककरञ्जकैः ॥ ५२ ॥
[3]भल्लातपारिभद्रोत्थैः कुसुमैश्च तथा भवेत् । पुष्पमेवं समाख्यातं [4]ततो धूपविधिं शृणु ॥५३॥

[धूपः[5]]

कृष्णागरु [6]सकर्पूरं श्रेष्ठं धूपार्थमुच्यते । चन्दनागरुनिर्यासैरीषत्कर्पूरसंयुतैः[7] ॥ ५४ ॥
[8]मध्यमस्तु भवेद्धूपः [9]कन्यसो गुग्गुलोद्भवः । एवं [10]धूपः समाख्यातस्ततो दीपविधिं शृणु ॥५५

[दीपः[11]]

गोघृतेनोत्तमं [12]दीपं मध्यमं [13]चाजमाहिषैः । [14]तिलतैलादिभिः स्नेहैः कन्यसं दीपमुच्यते॥५६

[दीपसंख्या[15]]

अष्टोत्तरशतं दीपमुत्तमोत्तममुच्यते । क्रमाद् द्वादशहीने[16] तु द्वादशं कन्यसाधमम् ॥ ५७ ॥
एवं नवविधं प्रोक्तं दीपं तु शिवमन्दिरे । [17]सदा ज्वलत्प्रयोक्तव्यं यावदष्टोत्तरं शतम्॥५८॥
[18]एकमारभ्य [19]दीपं तु यथाविभवविस्तरम् । चन्दनागरुकर्पूरचूर्णयुक्तं तु [20]यद्भवेत् ॥ ५९ ॥

---

[1] C : पल्लवैनार्चयेच्छिवम्
[2] B : धुत्तूरैः pour बन्धूकैः
[3] A : भल्लादि pour भल्लात
[4] B, C, D, E : अथो pour ततो
[5] Cf. *Kāraṇāgama*, I, 31, 93-95 :
कृष्णलोहं च निर्यासं चन्दनं च क्रमेण तु । व्योमपक्षाश्विर्नाभागमीषत्कर्पूरमिश्रितम् ॥
उत्तमं धूपमाख्यातं मधुना च परिप्लुतम् । चन्दनोशीरसंयुक्तं लघुयुक्तं मधुप्लुतम् ॥
भागं तु पूर्ववत्प्रोक्तं मध्यमं धूपमुच्यते । गुग्गुलु घृतसंयुक्तमधमं धूपमुच्यते ॥
[6] D : सकर्पूरश्रेष्ठधूपार्थमुच्यते
[7] E : मिश्रितैः pour संयुतैः
[8] A : मध्यमं तु भवेद् धूपं
[9] A : कन्यसं गुग्गुलोद्भवम् ; C : कन्यसो गुग्गुलुर्भवेत्
[10] A : धूपं समाख्यातं ततो
[11] Cf. *Kāraṇāgama*, I, 31, 97-98 :
कपिलाघृतेन दीपं स्यात् सितरक्तासितासु वा । अजाघृतमलाभे तु शुद्धतैलेन वा पुनः ॥
कपिलाया घृतं श्रेष्ठमन्यासां मध्यमं भवेत् । अधमं स्यादजासर्पिः शुद्धतैलं तु कन्यसम् ॥
[12] Le mot दीप se trouve au neutre au lieu du masculin dans ce texte ; voir *Rauravāgama*, vol. I, p. **69** note **6**.
[13] A : त्वजमाहिषम्
[14] C : तिलदेहादिभिः
[15] Cf. *Kāmikāgama*, I, 5, 71b-74a :
एकादि दशपर्यन्तं दीपाः स्युरधमाधमाः । शतादि स्युः सहस्रान्ता अयुतं लक्षसीमकाः ॥
प्रयुताः कोटिसंख्याताश्चायुताद्यर्बुदान्तकाः । दीपाः स्युरेकसंख्यायां रात्रौ तद्द्विगुणं भवेत् ॥
अनिर्वाणप्रदीपाः स्युस्तदर्धाः स्युस्तदर्धकाः । एवं संख्या प्रदीपादौ संख्यैषा परिकीर्तिता ॥
[16] A : हान्या pour हीने ; C : हानात् ; D : हान्यां
[17] A : क्रमाद् pour सदा
[18] B, C, E : एकाद् pour एकम्
[19] E : दीपान्तं pour दीपं तु
[20] A : तद् pour यद्

[1]कार्पासतूलं तेनैव वर्तिं कृत्वा [2]युगाङ्गुलाम् । [3]पात्रस्थया तया दद्याद्दीपं वै गोघृताक्तया ॥६•
[4]कर्पूरवर्तिः श्रेष्ठा स्यान्मध्यमागरुवर्तिका । [5]या तु चन्दनचूर्णेन कृता सा कन्यसा भवेत्[6]॥६१

[वस्त्रम्[7]]

एवं दीपं समाख्यातं [8]वस्त्रयोग्यमतः शृणु । देवाङ्गमुत्तमं प्रोक्तं मध्यमं [9]क्षौममुच्यते ॥ ६२ ॥
कार्पासतन्तुजं वस्त्रमधमं परिकीर्तितम् ।

[ माला ]

[10]एकवर्णकृता माला श्रेष्ठेति परिकीर्तिता ॥ ६३ ॥
बहुवर्णैस्तथा पुष्पैर्मध्यमा परिकीर्तिता । [11]पत्रपुष्पैः कृता माला कन्यसेति प्रकीर्तिता ॥ ६४ ॥

[ भूषणानि ]

[ तत्र [12]सुवर्णपुष्पं, जटामकुटं च ]

[13]लक्षणं भूषणादीनामथ वक्ष्ये जनार्दन । मूर्ध्नि पुष्पं [14]तु कुर्वीत पद्माकारं तु शोभनम् ॥६५॥

---

[1] A : कार्पासं तलतेनैव ; B : कार्पासकुलनेनैव ; D : कार्पासकूलं तेनैव

[2] E : दशाङ्गुलम्

[3] A : पात्रस्थाया तथा ; B : पात्रस्थायातया

[4] A : कर्पूरवर्ती:

[5] B, C : धातु pour या तु

[6] Cf. *Sūkṣmāgama*, 4, 65-66a :

" पद्मकार्पासतूलिकाम् । अथवा चित्रवस्त्रेण वर्तिनीं कारयेद् बुधः ॥
कर्पूरवर्तिकां कुर्यात्संसिद्धमृगनाभिकाम् ।

[7] Cf. *Kāmikāgama*, I, 5, 24b-26a :

सुवर्णमूर्णसूत्रोत्थं कार्पासोऽथ दुकूलकम् । देवालंकारयोग्येन प्रमाणेन समन्वितम् ॥
देवांशु उत्तमं प्रोक्तं मध्यमं क्षौममुच्यते । कार्पासतन्तुजं वस्त्रमधमं परिकीर्तितम् ॥

[8] B, C, D : वस्त्रयोग्यमथोच्यते ; E : वस्त्राणां क्रममुच्यते

[9] E : क्षौद्रम् pour क्षौमम्

[10] A : एवं कण्ठकृता माला ; B, E : एकवर्ण तथा माला

[11] C, D, E : पुष्पपत्रै:

[12] Cf. *Dīptāgama*, 98, 373-374 :

" सौवर्ण पुष्पमुच्यते । वस्वङ्गुलं तु विस्तारं तस्याप्यर्धार्धमेव वा ॥
मध्यमे कर्णिकायुक्तं दलाष्टकसमन्वितम् । नानारत्नसमायुक्तं सौवर्णं पुष्पमेव च ॥

[13] E : लक्षणं वै भूषणानामथो वक्ष्ये

[14] E : प्रकुर्वीत pour तु कुर्वीत

कर्णिकाष्टदलोपेतं दलैर्वा [1]षोडशैर्युतम् । चतुरङ्गुलमानेन स्वयंभूते च[2] [3]गाणपे ॥ ६६ ॥
दैविके [4]चार्षके लिङ्गे मानुषे चापि [5]दैववत् । एकहस्तादिलिङ्गानां [6]नवानामपि तद्भवेत् ॥ ६७ ॥
एकाङ्गुलविवृद्ध्या तु [7]कर्णपुष्पैस्तथैव हि । अथवा मूर्ध्नि कुर्वीत [8]जटामकुटमुत्तमम् ॥ ६८ ॥
गङ्गाचन्द्रसमायुक्तं [9]शिरोनाहेन संयुतम् । ऊर्ध्वमूर्ध्नि युगाङ्गुल्यं सर्वरत्नविचित्रितम् ॥ ६९ ॥

[ हारम्, उपवीतम्, उत्तरीयं च[10] ]

हारं यज्ञोपवीतं च सोत्तरीयं प्रकल्पयेत् । हारं लिङ्गोच्छ्रयसमं नानारत्नविचित्रितम् ॥ ७० ॥
त्रिगुणं [11]तूपवीतं स्यान्मौक्तिकं तद्वरं भवेत् । सौवर्णं वापि कुर्वीत [12]वेद्यन्तं [13]प्रविलम्बितम् ॥
उत्तरीयं तथा [14]प्रोक्तमर्धाङ्गुलसुविस्तृतम् । अर्धाङ्गुलविवृद्ध्या तु पूर्ववत्तत्प्रकल्पयेत् ॥ ७२ ॥

[पट्टम्[15], कटिसूत्रं च ]

चतुरङ्गुलविस्तारं लिङ्गनाहसमन्वितम् । [16]हस्तलिङ्गेऽपि [17]पट्टं स्याद् द्विहस्ते [18]त्र्यङ्गुलं भवेत् ॥

---

1 B, E : षोडशैस्तु वा
2 C, D, E : अथ pour च
3 A, E : गाणवे pour गाणपे
4 C, E : चार्षलिङ्गे च
5 A : देवराट् ; C, D, E : देववत्
6 A : देवानामपि
7 C, D : कर्णपुष्पौ तथैव हि
8 C : जटामकुटमूर्ध्नितः ; D, E : जटामकुटमूर्ध्वतः
9 C : शिरोनाथेन
10 Pour उपवीत voir *Śaivāgamasāra*, p. 99 :
चामीकरमयं वापि वरं कार्पासजं तु वा । त्रिवृतं शुक्लपीतं वा पट्टवस्त्रादिनिर्मितम् ॥
यज्ञोपवीतं देवाय दत्त्वा वेदान्तगो भवेत् । ब्रह्मसूत्रमिति ख्यातम् ''
pour उत्तरीय voir *Dīptāgama*, 98, 279-280 :
उष्णीपार्श्वे परिग्राह्य द्वौ पुच्छौ बन्धयेत्क्रमात् । यज्ञोपवीतवद्धार्यमुत्तरीयं विचक्षणैः ॥
अग्निदग्धं ततो जीर्णं छिन्नं तत्र तु वर्जयेत् । उत्तरीयमिति ख्यातम् ''
11 E : च pour तु
12 A : वेद्यान्तं ; B, E : वेद्यन्तः
13 B, E : परिसेवितम् ; C, D : परिलम्बितम्
14 C : प्रोक्तमध्याङ्गुलसुविस्मृतम्
15 Cf. *Makuṭāgama*, 3, 26-27 :
व्याघ्राजिनमयं श्रेष्ठं मध्यं कृष्णाजिनात्मकम् । अथवा तन्तुना कार्या त्रिविधा योगपट्टिका ॥
विस्तारस्त्र्यङ्गुलं तस्य मानं स्यादुपवीतवत् । योगपट्टविधि. प्रोक्त.''
cf. *Dīptāgama*, 98, 375a : पट्टं पञ्चाङ्गुलं तारं लिङ्गनाहं च दैर्ध्यकम् ।
16 E : हस्तलिङ्गादि
17 A : पट्टिः pour पट्टं
18 B, C, D, E : तु त्रियङ्गुलम् pour त्र्यङ्गुलं भवेत्

[1]एवमेकैकवृद्ध्या तु [2]नवहस्तान्तमिष्यते । अथवान्यप्रकारेण पट्टलक्षणमुच्यते ॥ ७४ ॥
[3]त्रिद्व्येकाङ्गुलविस्तारनाहे च [4]चतुरंशके । [5]त्र्यंशकैर्द्व्यंशकैर्वापि कुर्याज्जाम्बूनदेन तत् ॥ ७५ ॥
मालाद्वयं गुणाङ्गुल्यं [6]लिङ्गोच्छ्रायार्धमायतम् । पद्मबन्धं विधातव्यं [7]विस्तारेऽङ्गुलवृद्धिदम्[8] ॥
प्रतिहस्तं यथापूर्वं नानारत्नविचित्रितम् । कटिसूत्रं तथा कुर्याल्लिङ्गमूलगतं यथा ॥ ७७ ॥
अर्धाङ्गुलं स्याल्लिङ्गस्थं वेद्यामग्न्यङ्गुलं[9] भवेत् । पादाङ्गुलाङ्गुलाद् वृद्धिः [10]पूर्ववच्चाङ्गयोर्द्वयोः॥७८॥
लिङ्गनाहेन तन्नाहं कल्पयेद्देशिकोत्तमः ।

[ अंशुकम् ]

लिङ्गतारसमायाममंशुकस्य[11] प्रकीर्तितम् ॥ ७९ ॥
पादाधिकं तु मध्यं स्याच्छ्रेष्ठमर्धाधिकं भवेत् । पार्श्वयोश्च षडङ्गुल्यं विस्तारं [12]च प्रकीर्तितम् ॥
मध्ये [13]गुणाङ्गुलं चापि विस्तारं [14]पद्ममण्डितम् । सर्वरत्नविचित्रं च पार्श्वयोस्तस्य मध्यमे ॥८१
अर्धाङ्गुलेन [15]पादेन वृद्धिः पूर्ववदिष्यते । एवं [16]हेमांशुकं प्रोक्तं लम्बांशुकमथोच्यते ॥८२॥
[17]वेद्यर्धमानमुच्छ्रायं विस्तारं चतुरङ्गुलम् । विस्तारशरभागैकं [18]मध्यभागस्य विस्तृतम् ॥ ८३॥
[19]विस्तारेऽङ्गुलवृद्धिं च यथापूर्वं प्रकल्पयेत् ।

[ प्रभा ]

प्रभाशोभं च सौवर्णं यन्त्रारूढं तु कारयेत् ॥ ८४ ॥

---

[1] C, D : एकम् pour एवम्
[2] A, E : नवहस्तादिरिष्यते
[3] A : द्वित्र्येकाङ्गुल pour त्रिद्व्येकाङ्गुल
[4] A : चतुरङ्गके
[5] A : त्रियंशैर्द्व्यंशकैर्वापि ; B, E : त्रिंशकैर्दशकैर्वापि
[6] A : लिङ्गोच्छ्रायसमायतम्
[7] A, B, C : विस्तारो pour विस्तारे
[8] B : वृद्धिमत् pour वृद्धिदम् ; C : वृद्धितः ; D : वृद्धिदः
[9] C : अर्धाङ्गुलं pour अग्न्यङ्गुलं ; E : व्यह्यङ्गुलं
[10] A : पूर्वत्रचाङ्गुलद्वयोः
[11] A : अंकुशस्य pour अंशुकस्य
[12] B, D, E : तस्य कीर्तितम् pour च प्रकीर्तितम्
[13] D : गुणाङ्गुलायामं विस्तारं
[14] A : पद pour पद्म
[15] A : पद्मेन वृद्धिः; B : वृद्धिः स्याद्वृद्धिः
[16] A : होमांशुकं
[17] A : वेद्यर्धगात्रमुच्छ्रायं विस्तारं ; D : वेद्यर्धमानमुच्छ्रायविस्तारं
[18] B, C, D, E : अधो पद्मस्य pour मध्यभागस्य
[19] A : विस्ताराङ्गुलवृद्धिं च

प्रभायां [1]पद्मपुष्पं स्यादुत्पलं वा हिरण्यजम् । पार्श्वयोर्मूर्ध्नि [2]चास्य स्याद्विवरं च षडङ्गुलम्॥८५॥

मध्योर्ध्वे तस्य कुर्वीत सौवर्णं [3]चाम्रपल्लवम् । अधोभागे [4]तु कुर्वीत [5]मुक्तालम्बमनोहरम्॥८६॥

[6]शुभं पञ्चगुणं [7]कुर्यात्त्रिगुणं वा चतुर्गुणम् । शिरस्पर्शि[8] [9]भवेद्यद्वत्तथा [10]लिङ्गस्य कारयेत् ॥८७

[11]सौवर्णां तां प्रभां कुर्यादथवा [12]तोरणात्मिकाम् ।

[ गोलका[13]]

[14]लिङ्गवद्गोलकां कुर्याच्छुद्धजाम्बूनदेन तु ॥ ८८ ॥

लिङ्गस्य परितस्तस्या[15] विवरं द्वियवं भवेत्[16] । [17]लिङ्गोर्ध्वे विवरं चापि कुर्यादङ्गुलमानतः॥८९॥

पूर्वे च[18] दक्षिणे तस्याः[19] पश्चिमे चोत्तरे तथा । ऊर्ध्वे च[20] [21]बन्धयेद्रत्नं पुरुषादिमुखेषु वै ॥ ९० ॥

---

[1] A : पद्द pour पद्म

[2] B : चाप्यर्थाद्विवरं ; D : चाढ्यं स्याद्विधिरं ; E : चाप्यर्धाविवरं

[3] C : चात्र पल्लवम्

[4] E : प्रकुर्वीत pour तु कुर्वीत

[5] C, D : मुक्तालम्बमनोरमम् ; E : मुक्ताहारं मनोहरम्

[6] C, D : इमं pour शुभं

[7] E : प्रोक्तं द्विगुणं वा चतुर्गुणम्

[8] C : स्पर्षि pour स्पर्शि

[9] B : भवेद्यद्वा तथा ; E : भवेच्चैव तथा

[10] C : लिङ्ग स pour लिङ्गस्य

[11] A : सौवर्णानां प्रभां

[12] E : तोरणान्तिकाम्

[13] Cf. *Dīptāgama*, 98, 371-373a :
यावल्लिङ्गस्य विस्तारं पूजाभागोच्छ्रयं तथा । अर्धाङ्गुलप्रवृद्धया तु कुर्यान्मानेन गोलकाम् ॥
कुर्यात्पूर्वोक्तवत्सूत्रं सूत्राग्रे सुषिरत्रयम् । नानारत्नसमायुक्ता गोलका लिङ्गवत्कृता ॥
गोलकालक्षणम् प्रोक्तम्"

[14] A : लिङ्गस्यागोलकां

[15] B, D, E : तस्य pour तस्याः

[16] B, E : विवरद्वितयं भवेत्

[17] B, D : लिङ्गोर्ध्वविवरं चापि

[18] E : वा pour च

[19] C, D, E : तस्य pour तस्याः

[20] E : अपि pour च

[21] A : बध्नीयात्तत् ; E : पञ्चकं रत्नं

पूर्वे [1]माणिक्यमेवोक्तं महानीलं तु दक्षिणे । [2]मुक्ताफलमधश्चापि [3]सद्योजाते तु बन्धयेत् ॥९१॥
प्रवालमुत्तरे [4]विष्णो स्फटिकं चोर्ध्वदेशतः[5] । पिण्डिकायां [6]च कुर्वीत गोलकां [7]रजतेन वै ॥
अग्रभागेऽथवा कुर्याद्यथापीठ[8]व्यवस्थितम् । [9]एवमाभरणं प्रोक्तं हविरत्र निगद्यते ॥ ९३ ॥

[ हविषे योग्यानि धान्यानि[10] ]

गोधूमो [11]गन्धशाली च [12]यवः कलम एव च । व्रीहयस्तु सिताश्चान्ये क्रमाच्छ्रेष्ठा उदाहृताः॥

[ धान्यानां मानम्[13] ]

व्रीहीणां [14]पञ्चविंशद्भिः [15]शतद्वयसमायुतैः । पूरितं शुक्तिरित्युक्तं मानं तेनैव कल्पयेत् ॥९५॥
तद्द्वयं [16]तलमित्युक्तं [17]प्रकुञ्चः स्यात्तलद्वयम् । [18]प्रसृतिस्तद्द्वयं प्रोक्तं [19]कुडवं प्रसृतिद्वयम्॥९६

---

[1] E : माणिक्कम् pour माणिक्यम्

[2] C : मुक्ताफलमयं चापि

[3] B, E : सद्योजातेन पूजयेत्

[4] B, C : विष्णोः pour विष्णो

[5] B, C, D, E : देशके pour देशतः

[6] B, E : प्रकुर्वीत pour च कुर्वीत

[7] B, E : राजतेन वा

[8] B : पीठं pour पीठ

[9] B : सर्वस्याहरणं ; E : सर्वस्याभरणं

[10] Cf. *Kāraṇāgama*, I, 33, 3-6 :
हेमशाली महाशाली रक्तशाली तथैव च। सितशाली कृष्णशाली सौगन्धिकस्तथोत्तमम् ॥
वैणवं च यवं चैव इषच्छाली च माधुरी । कुस्तुम्बरी च नीवारं मध्यमं चेति कीर्तितम् ॥
विलाली मारिणी व्रीहिरीपत्कृष्णं च षष्टिकम् । तथा वै सूकरी व्रीहिर्हूस्ववक्त्री च कन्यसम् ॥
एतेषां तण्डुलं श्रेष्ठं नैवेद्याय शिवस्य तु ।

[11] A : गन्धशालीश्च

[12] C, D : यवनीकल एव च

[13] Cf. *Kāraṇāgama*, I, 33, 8-10a :
द्विशतैः पञ्चविंशत्या व्रीहिभिः शुक्तिरुच्यते । तलं प्रकुञ्चं प्रसृतिः कुडवं च तथाञ्जलिः ॥
प्रस्थं पात्राढकौ शतं द्रोणं खारि क्रमेण तु । शुक्त्यः च गणयेन्मन्त्री द्विगुणं तु पृथक् पृथक् ॥
खारित्रयं तु भारं स्यादेवं हि परिमाणकम् ।

Pour le tableau concernant les différents noms des unités de poids ou capacité utilisées pour mesurer les grains etc., voir *Rauravāgama*, vol. I, en face de la page 49.

[14] D : पञ्चविंशं हि

[15] A : एते pour शत

[16] A : नीलम् pour तलम्

[17] A, D : प्रकुञ्चं pour प्रकुञ्चः

[18] A : तद्वत्प्रसृतिस्तत्प्रोक्तं

[19] A : कुडुवं pour कुडवं ; D : कुडबं ; E : कुडपं

अञ्जलिस्तद्द्वयं प्रोक्तं [1]प्रस्थः स्यादञ्जलिद्वयम् । चरु प्रस्थद्वयं प्रोक्तमाढकं [2]तद्द्वयं भवेत् ॥ ९७ ॥
तद्द्वयं शिवमित्युक्तं द्रोणं विद्याच्छिवद्वयम् । द्रोणद्वयं [3]भवेत्खारी भारं [4]खारीत्रयं भवेत् ॥ ९८

[ हविःप्रमाणम्[5] ]

उत्तमोत्तममित्युक्तं हविरष्टोत्तरैः[6] शतैः । [7]प्रस्थैराद्वादशान्तं स्याद् द्वादशैर्द्वादशैः क्रमात् ॥ ९९ ॥
ह्रासे तु कल्पिते तत्र नवधा दृश्यते हविः । [8]अभावेऽन्यप्रकारेण हविरेवं[9] प्रकल्पयेत् ॥ १०० ॥
[10]आढकं तु समारभ्य [11]यावत्स्यात्तन्नवाढकम् । आढकाढकवृद्ध्या [12]तु नवधा परिकल्पयेत् ॥
[13]न भवेदाढकाद्धीनं हविर्लिङ्गस्य केशव । चरु प्रस्थद्वयं तच्च होमकर्मणि कल्पयेत् ॥ १०२ ॥
अधमं तद्भवेद्धोमे द्विगुणं मध्यमं भवेत् । त्रिगुणं चोत्तमं प्रोक्तं नवपात्रे प्रकल्पितम् ॥ १०३ ॥
प्रस्थं [14]कुडवसंयुक्तं [15]पिशाचाद्येषु दापयेत् ।

---

[1] A : आढकं तद्द्वयं भवेत्   [2] A : तेन द्वयं pour तद्द्वयं
[3] A, B : भवेत्खारि   [4] A, B : खारित्रयं
[5] Cf. *Kāraṇāgama*, I, 33, 10b-19a :
नित्यं नैमित्तिकं काम्यं नैवेद्यं त्रिविधं भवेत् । नित्यं नवविधं प्रोक्तं तथा नैमित्तिकं नव ॥
यथेष्टं काम्यमित्युक्तं तेषां भेदस्तथोच्यते । आढकेनैव नैवेद्यमधमाधममुच्यते ॥
कनिष्ठमध्यमं शैवं द्रोणं स्यादधमोत्तमम् । खारि मध्याधमं चैव सार्धार्धमथ मध्यमम् ॥
मध्यमोत्तममित्युक्तं चतुर्द्रोणैः कृतं हविः । उत्तमाधममित्युक्तं पञ्चद्रोणैः कृतं हविः ॥
षड्द्रोणैस्तण्डुलैः सिद्धं भवेदुत्तममध्यमम् । उत्तमोत्तममित्युक्तमष्टद्रोणैस्तु तण्डुलैः ॥
एवं विशेषतः प्रोक्तं नित्यं नवविधं तथा । अष्टद्रोणमथारभ्य यावद्वृद्ध्या नवोदिताः ॥
यावद्द्वादशभारान्तमधमादि त्रयं त्रयम् । नैमित्तिके तु नैवेद्यं नवधा समुदाहृतम् ॥
प्रार्थितं यत्प्रमाणेन तत्प्रमाणं तु काम्यकम् । ततः कुडवयुक् प्रस्थं पैशाचाशनमुच्यते ॥
पात्रं तु चरुरित्युक्तमाढकं हविरुच्यते । न कल्पयेत्तु नैवेद्यमाढकार्धं न तण्डुलैः ॥
[6] A : अष्टोत्तरं pour अष्टोत्तरैः   [7] B, E : प्रस्थैश्च द्वादशान्तं
[8] C, E : अलाभे pour अभावे   [9] B, C, E : एव pour एवं
[10] C : आसनं pour आढकं   [11] A : समारभ्यात् pour यावत्स्यात्
[12] B, C, D, E : च pour तु   [13] A : नवमेदाढकाद्धीमन्; B : न भवेदाढकासीनं
[14] A : कुडुव pour कुडव ; D : कुडुम्ब ; E : कुडुप
[15] A : पिशाचाद्येषु पाचयेत् ; B, E : पिशाचान्येषु संयुतम्

[ पञ्च हवींषि[1] ]

शुद्धान्नं [2]पायसं गौलं मुद्गान्नं कृसरं तथा ॥ १०४ ॥
[3]हवींषि पञ्चवर्णानि तेषां लक्षणमुच्यते । शुद्धान्नं तु हविः शुद्धैस्तण्डुलैरेव कल्पितम् ॥१०५॥
तण्डुलेन समे क्षीरे [4]पाचितं पायसं भवेत् । तण्डुलार्धेन पयसा तदर्धेन गुलेन [5]च ॥ १०६ ॥
पाचितं गौलमाख्यातं मुद्गान्नमधुनोच्यते । [6]तण्डुलेन समैर्वार्धैर्मुद्गैर्मुद्गान्नमुच्यते ॥ १०७ ॥
[7]शुद्धान्ने पूर्ववत्सिद्धे तिलसर्षपयोः क्षिपेत् । [8]दग्धं यत्सूक्ष्मचूर्णं तु तण्डुलात्षोडशांशयोः॥१०८॥
तयोः पादमितं तत्र [9]मरीचं [10]जीरकेण [11]युक् । [12]तदर्धं रजनीचूर्णं [13]पाकान्ते तु विनिक्षिपेत्
कृसरान्नमिति प्रोक्तं ; ॥ १०९ ॥

---

[1] Cf. *Kāraṇāgama*, I, 33, 25b-35a :

[ शुद्धान्नम् ]

केशकीटापविद्धं च शर्करातुषकम्बुयुक् । अतिपक्वमपक्वं च नैवेद्यं परिवर्जयेत् ॥
भेद्यं तु वर्णगन्धाद्यैः शीतलं न निवेदयेत् । केशेन मरणं विद्धि कीटेन रिपुवर्धनम् ॥
शर्करा सस्यहानिः स्यात्तुषेण ग्रामनाशनम् । कम्बुना ज्वरपीडा चाप्यतिपक्वैर्दरिद्रता ॥
अपक्वेन प्रजानाशः शीतलेन धनक्षयः । अत्युष्णेन भवेद् दुःखं भिस्सटा सर्वनाशनम् ॥
अत्युष्णाद्यष्टहीनं यत्तदन्नं परिकल्पयेत् । शुद्धौदनक्रमो ह्येवम् ''

[ पायसान्नम् ]

'' पायसान्नं ततः शृणु । तण्डुलत्रिगुणं क्षीरं क्षीरार्धं तोयमाहरेत् ॥
तोयार्धं मुद्गभिन्नं हि घृतयुक् पायसान्नकम् ।

[ कृसरान्नम् ]

तण्डुलार्धं समाख्यातं मुद्गसारं तु निर्मलम् । पक्वान्नं लवणोपेतं मरीचस्य तु चूर्णयुक् ॥
तिलचूर्णकमिश्रं तत्कृसरान्नमिति स्मृतम् ।

[ मुद्गान्नम् ]

तण्डुलस्य त्रिभागैकं मुद्गसारविमिश्रितम् । मुद्गान्नं पक्वमित्युक्तम् ''

[ गौलान्नम् ]

'' प्रागुक्तपयसान्वितम् । क्षीरार्धं गुलखण्डं तु गुलार्धं घृतमिश्रकम् ॥
कदलीफलमत्रैव संमिश्रं तद्गुलौदनम् । एवं पञ्चहविः प्रोक्तं नैवेद्याय प्रजापते ॥

[2] B : पायसान्नं च pour पायसं गौलं

[3] A : हविर्वा pour हवींषि

[4] A : पायसं पाचितं

[5] C : वा pour च

[6] E : तण्डुलात्षोडशांशं तु मौद्गं श्रेष्ठमुदाहृतम्

[7] E : कृसरान्नं हवि.सिद्धे

[8] B, C, D, E : गन्धयेत् pour दग्धं यत्

[9] A : मरीची pour मरीचं ; E : मरीचि

[10] C : जीर्णकेन pour जीरकेण

[11] B, E : यत् pour युक् ; D : तु

[12] E : मरीचीजीरिकाचूर्णं

[13] A : प्रातःकाले pour पाकान्ते तु

[ व्यञ्जनानि[1] ]

उच्यन्ते व्यञ्जनानि च । [2]तण्डुलात्षोडशांशं तु मौद्गं [3]श्रेष्ठमुदाहृतम् ॥
तस्मात्पादार्धहीनं तु[4] मध्यमन्त्यं च[5] कल्पयेत् । कृष्णमुद्गकुलत्थं[6] च [7]मसूरं तुवरी तथा ॥
सतुषं वितुषं चापि पूर्ववत्परिकल्पयेत् । कदलीं बृहतीं चापि कूष्माण्डोर्वारुकं तथा ॥ ११२ ॥
अलाबूं [8]कर्करीं चैव पनसं नालिकेरकम् । [9]तिन्त्रिणीं चाम्रकं चैव कारवल्लीद्वयं तथा ॥ ११३ ॥
[10]क्षुद्रां व्याघ्रीं च निष्पावं यथालाभं समाहरेत् । [11]कन्दानि [12]भक्ष्यपर्णानि व्यञ्जनानि प्रकल्पयेत् ॥

[ व्यञ्जनानां मानम्[13] ]

उत्तमं तु प्रतिप्रस्थं व्यञ्जनं स्यात्पलत्रयम् । द्विपलं मध्यमं प्रोक्तं पलं कन्यसमुच्यते ॥ ११५ ॥

---

[1] Cf. *Kāmikāgama*, I, 6, 44-47a :
"प्रवक्ष्याम्युपदंशकान् । मुद्गमाषकुलुत्थांश्च शिम्बानिष्पावमेव च ॥
राजमाषाढकं चैव वितुषं सतुषं तथा । कूश्माण्डं पनसालाबुकालिङ्गं बृहतीद्वयम् ॥
त्रपुषं कर्करीं चैव सतुषं वितुषं तथा । कदलीं कारवीं व्याघ्रीं आम्रमुर्वारुकं तथा ॥
वल्लीमूलं तथा कन्दं मूलमन्यद्रसैर्युतम् ।

[2] E : तण्डुलं pour तण्डुलात्

[3] E : श्रेष्ठं प्रकीर्तितम्

[4] A : वा pour तु

[5] B, C : अन्यच्च pour अन्त्यं च

[6] A : कुलस्थं pour कुलत्थं ; B, E : कुलुत्थं

[7] A : मयूरं चरितं तथा

[8] B : चर्करीं

[9] C, D : तिन्त्रिणीमात्रकं चैव ; E : तिन्त्रिणीमात्रकं चैव

[10] A : क्षुद्रां व्याघ्रं च ; C : क्षुद्रव्याघ्रीं च

[11] E : अन्नानि pour कन्दानि

[12] A : भक्ष्यवर्णानि ; B, E : भक्ष्यपूर्णानि

[13] Cf. *Kāmikāgama*, I, 6, 47b-56 :
एकैकमुपदंशानां प्रस्थस्यैकपलं भवेत् । प्रत्यग्राणि पवित्राणि सर्वदोषोरिथतानि च ॥
घृष्टं घृतेन संयुक्तं नालिकेरफलादिभिः । मरीचजीरकाद्यैस्तु सत्कृतं तत्प्रशस्यते ॥
लवणाज्ययुतानि स्युरुपदंशानि तानि हि । आम्लसंस्कारयुक्तानि मरीचादियुतानि च ॥
विंशत्पलं स्याल्लवणं प्रस्थं प्रस्थं समीरितम् । त्रिचतुर्थांशमानेन मरीचः परिकीर्तितः ॥
सर्पिषो द्विगुणं मानं मरीचात्तु प्रशस्यते । कलांशो मुद्गभिन्नस्तु तदर्धं वा तु तण्डुलात् ॥
मुद्गभिन्नं समं प्रोक्तमधिकं गुणमेव वा । कल्कसंस्कारयुक्तानि मरीचादियुतानि च ॥
सिद्धार्थकल्कयुक्तानि रसवन्ति च पाचयेत् । तान्येवापूपखण्डैश्च संस्कृतानि च कानिचित् ।
कुलुत्थधान्यचूर्णं च मरीचं प्रोषितं क्रमात् । निक्षिप्य मथिते श्लक्ष्णं पाचयेन्मृदुवह्निना ॥
गुलेन सह संयोज्य रसवन्ति फलानि च । एवं तु पाचयेत्सूपमन्यदेवंविधं तु यत् ॥
विविधानि चापूपानि योग्यद्रव्यैः कृतानि च ।

चत्वारिंशत्पलानां तु [1]कुडवं लवणं क्षिपेत् । [1]कुडवं मरीचकं चापि [2]श्रेष्ठकं तु पलं स्मृतम् ॥
तदर्धं मध्यमं प्रोक्तं तदर्धमधमं भवेत् । तदर्धं जीरकं प्रोक्तमाज्यमानमतः[3] शृणु ॥ ११७ ॥
द्वात्रिंशदंशकं सर्पिस्तण्डुलस्योत्तमं भवेत् । तदर्धं मध्यमं प्रोक्तं तदर्धमधमं भवेत् ॥ ११८ ॥
[4]आढकस्य पलं श्रेष्ठं तदर्धं मध्यमं भवेत् । गुलं तदर्धमधमं यथालाभं [5]सिता भवेत् ॥ ११९ ॥
अर्धांशं [6]तण्डुलाच्छ्रेष्ठं [7]दधि मध्यं [8]तदर्धतः । तदर्धमधमं प्रोक्तं नैवेद्यं परिकल्पितम् ॥ १२० ॥
कदलीपनसाम्राणां यथालाभं फलानि च । व्यञ्जनानि [9]पवित्राणि [10]जन्तुवर्ज्यानि कल्पयेत् ॥
[11]उक्तान्येतानि सर्वाणि शुष्काण्यार्द्राणि चाहरेत् । उपदंशानि रम्याणि शिवाय परमात्मने ॥
भक्त्याथ[12] मूलशाकाद्यं स्वादु भक्ष्यं च शोभनम् । दद्यात्सुसंस्कृतं सम्यङ् नैवेद्येन समन्वितम् ॥

[ पचनम्[13] ]

सर्वदोषविनिर्मुक्तांस्तण्डुलाञ्शुद्धपात्रगान्[14] । भाण्डेषु प्रक्षिपेत्तेषु [15]प्रतिमानां पृथक् पृथक् ॥ १२४ ॥
आढकं तु शिवं वापि द्रोणं [16]वा प्रोक्ष्य पात्रकम् । पञ्चधा वा चतुर्धा वा त्रिधा वा क्षालनं भवेत् ॥ १२५ ॥
अस्त्रेण क्षालनं कुर्यात्सद्येन प्रक्षिपेज्जलम् । तण्डुलेन समं पश्चाद्वामदेवेन [17]चोद्धरेत् ॥ १२६ ॥

---

[1] B : कुडुम्बं ; E : कुडुपं

[2] B, E : श्रेष्ठं शतपलं ; C, D : श्रेष्ठांशं तु पलं

[3] C, E : अथ pour अत:

[4] B : आढकं तु पलं श्रेष्ठं

[5] C : विना pour सिता

[6] A : तण्डुलं श्रेष्ठं

[7] B : दधिमर्धं

[8] B, C : तदर्धकम्

[9] E : विचित्राणि

[10] A : गरुडादीनि

[11] E : उक्तानि तानि

[12] B, E : यद् pour अथ ; D : अयं

[13] Cf. *Kāmikāgama*, I, 6, 29-36a :
प्रागुक्तविधिना पूर्वं स्नात्वाथ परिचारका: । शुक्लवस्त्रधराश्चैव शुक्लयज्ञोपवीतिन: ॥
पवित्रपाणय: कुर्युश्चरुपाकं यथा तथा । वस्त्रपूतैश्च तोयैश्च जलद्रोणीं प्रपूरयेत् ॥
पात्रशुद्धिं तत: कृत्वा क्षालयेत्तण्डुलान्हृदा । जलेनैव तु षट्कृत्वो निष्पीड्य च मुहुर्मुहु: ॥
षडङ्गै: क्षालनं कृत्वा सद्येन प्रक्षिपेज्जलम् । ज्ञात्वा तु युक्तित: सम्यगघ्यर्धं जलमेव वा ॥
स्थालीं मध्यमयीं ध्यात्वा दर्भान्कण्ठे तु बन्धयेत् । प्रलिप्ते गोमयाद्यैस्तु प्रोक्षितेऽत्र महानसे ॥
धर्माधर्मभुजां चुल्लीं तण्डुलेनार्चयेद्धृदा । उद्धृत्य वामदेवेन रोपयेद्धृदयेन तु ॥
विन्यस्याग्निमघोरेण अस्त्रेणाग्निं प्रदीपयेत् । पिपीलिकादिसंजुष्टै: कोटरक्रिमिसंयुतै: ॥
विस्फुलिङ्गयुतैश्चापि काष्ठैरग्निं न दीपयेत् ।

[14] A : पात्रकात् pour पात्रगान्

[15] B, C, D, E : प्रतिमासु

[16] B, E : वाप्येकपात्रके ; C, D : वाप्येकमात्रकै:

[17] A : चोनरे pour चोद्धरेत्

[1]घोरेण चुल्लीमारोप्य हेतिना चेन्धनं क्षिपेत् । [2]घोरेणाग्निं च संदीप्य पाचयित्वा नरेण तु ॥
अवतार्य मृजेत्सर्वानस्त्रेणैवार्द्रपाणिना[3] ।

[ पात्राणि[4] ]

मृद्भाण्डानि नवान्येव हविषां[5] पूजितानि हि[6] ॥ १२८ ॥
लोहपात्रमपि श्रेष्ठमयःपित्तलवर्जितम् । [7]मृद्भाण्डमधमं प्रोक्तमसकृत्पात्रतां गतम् ॥ १२९ ॥
मासि मासि त्यजेद्भाण्डं [8]मार्त्तिकं सर्वमेव हि । [9]निर्माल्यसंकरादौ तु सद्य एव परित्यजेत् ॥

[ निवेदनम्[10] ]

[11]एवं हविः समापाद्य [12]ततो देवान्तिकं नयेत्[13] । [14]परिचारस्तु तत्काले [15]बद्धोष्णीषः सदा भवेत् ॥ १३१ ॥

---

[1] B : अघोरे चुल्लिनारोप्य ; D : घोरेण चुल्लिका रोप्य  [2] B, C, D : अघोरेणाग्निं संदीप्य

[3] A : अस्त्रपाणिना pour आर्द्रपाणिना ; C : अग्रपाणिना

[4] Cf. *Kāmikāgama*, I, 6, 27-28 :
स्थाली प्रतिदिनं शुद्धा पक्षमासावसानिका । श्रेष्ठमध्याधमास्तद्वद्विधिनाद्य विधीयते ॥
सुवर्णतारताम्रादिपात्रं शुद्धं लयान्तिकम् । नवमृद्भाण्डकं वापि प्रतिसंध्यं प्रकल्पयेत् ॥

[5] A : हविषा pour हविषां  [6] D : च pour हि  [7] C, D : मृद्भाण्डमध्यमं प्रोक्तम्

[8] A : मान्तिकं ; B, E : मौक्तिकं ; D : मार्दिकं  [9] A : निर्माल्यं संकरादौ तु

[10] Cf. *Kāmikāgama*, I, 6, 51-71 :
शङ्खध्वनिसमायुक्तं छत्रदीपादिसंयुतम् । नैवेद्यमुपदंशाढ्यं सुसिद्धमवतारयेत् ॥
प्रलिप्ते भूतले शुद्धे पञ्चचूर्णैरलंकृते । तत्राभिघारमाज्येन पवित्रैः परिकल्पयेत् ॥
शीताभिघारमङ्गैस्तु घृतेनैवाहुतित्रयम् । पात्राणि शोधयेत्तोयैस्त्रिपुण्ड्रं परिकल्पयेत् ॥
त्रिपाद्युपरि विन्यस्य शुद्धवस्त्रावृतानि च । शङ्खध्वनिसमायुक्तं छत्रदीपादिसंयुतम् ॥
निरुद्धावृतकक्ष्यास्थजने मार्गेऽम्भसा क्षिपेत् । पात्राण्युद्धृत्य सर्वाणि विन्यसेन्मुखमण्टपे ॥
पानीयमप्यनेनैव स्थानात्संग्राहयेत्क्रमात् । करणाध्यायसंसिद्धलक्षणैर्लक्षितेषु च ॥
स्थलिकादिषु वा शुद्धकदलीपत्रकादिषु । न्यस्तेषु शुद्धवस्त्रोर्ध्वे दर्व्या लक्षणयुक्तया ॥
न्यसेत्संपूर्णचन्द्राभमोमिति त्र्यक्षरं जपेत् । उपदंशानि सर्वाणि नैवेद्योपरि विन्यसेत् ॥
प्रत्यग्रगोघृतं खण्डशर्करारसवत्फलम् । बालचूतफलं चापि दध्यादिकमनिन्दितम् ॥
शिवाग्रे मण्डपे शुद्धे शुभ्रवस्त्रादिविस्तृते । त्रिपाद्युपरि विन्यस्य स्थालिकादिगतं हविः ॥
पेयं लेह्यं च शोष्यं च युक्तियुक्तं तु विन्यसेत् । संप्रोक्ष्य हृदयेनैव शोधयित्वा तु हेतिना ॥
अमृतीकृत्य गोस्तन्या नैवेद्ये कुसुमं न्यसेत् । निवेद्य दक्षिणे हस्ते दद्यात्पानीयमुत्तमम् ॥
अन्तरावृतिसंस्थानां देवानां तु पृथक्पृथक् । कृत्वा हविश्चतुर्थांशमूर्ध्वांशं तु शिवाय च ॥
तदधस्त्वग्निकार्यार्थमधस्ताद्बलिकर्मणे । यदंशं पात्रसंश्लिष्टं पूजकाय प्रदापयेत् ॥
अग्निकार्यावशिष्टं च बलिशिष्टं च यद्धविः । तत्सर्वं पूजकायैव प्रोक्तमत्र यथाधुना ॥

[11] A : भावं हविः समात्रं तु ; D : एवं बहिः समाप्याद्य

[12] A : तत्तद्दोषान्तिकं ; C : ततो देवान्तिके ; D : ततो देवान्तिको  [13] D : यजेत्

[14] A : परिचारकस्तु ; C, D : परिचारकं तु  [15] E : बन्धोर्णाष. समं भवेत्

तस्यानयनकाले तु [1]पटाद्याच्छादितं तु [2]तत् । [3]अभ्युक्ष्य पुरतः कृत्वा शङ्खध्वनिसमायुतम्[4]॥
हेमादिनिर्मिते पात्रे प्रोक्तद्रव्यैस्तु [5]शोधिते । [6]प्रोक्षिते तु [7]शिवास्त्रेण [8]निक्षिपेत्प्रणवं स्मरन् ॥
सर्वोपदंशसंयुक्तं यथोक्तं तन्निवेदयेत् । हविर्भाण्डेष्वधोभागे चतुर्भागैकभागकम्[9] ॥ १३४ ॥
[10]न्यस्य बलिप्रदानाय तत्र किंचित्समाहरेत्[11] । शेषं तु परिचाराणां भोजनाय प्रकल्पयेत् ॥ १३५

[ ताम्बूलम्[12] ]

ततो देवाय ताम्बूलं दद्यात्तल्लक्षणं शृणु । प्रतिप्रस्थं तु गृह्णीयात्क्रमुकस्य फलद्वयम् ॥ १३६ ॥
[13]एकं वापि तदर्धं वा [14]पर्णानां [15]च चतुष्टयम् । [16]त्रितयं मध्यमं प्रोक्तं [17]द्वितयं त्वधमं भवेत् ॥

[ मुखवासः[18] ]

[19]लवङ्गत्रुटिजातीनां चूर्णं तक्कोलजं तथा । कर्पूरेण समायुक्तं पञ्च [20]सौगन्धिकं स्मृतम् ॥ १३८

---

[1] B, C, D, E : पिच्छ pour पट
[2] B, C, D, E : यत् pour तत्
[3] C, D, E : अभ्युक्षणं पुरस्कृत्वा
[4] E : समन्वितम् pour समायुतम्
[5] A : शोभिते pour शोधिते
[6] B, E : प्रोक्षितेन pour प्रोक्षिते तु ; C, D : प्रोक्षितैस्तु
[7] A : शिखास्त्रेण
[8] E : निक्षिपेद्धृदयं
[9] A : भागिकम् pour भागकम्
[10] A : न्यस्त्वा pour न्यस्य
[11] E : समाचरेत् pour समाहरेत्
[12] Cf. *Kāraṇāgama*, I, 33, 146–147 :
ताम्बूलं दापयेच्छम्भोः प्रत्येकं प्रस्थसंख्यया । फलाच्चतुर्गुणं पत्रं जिह्वाघ्राणविवर्जितम् ॥
अश्मचूर्णसमायुक्तं क्रमुकस्य फलद्वयम् । तद्विश्रतैलसंमिश्रं दापयेत्तु शिवाय च ॥
cf. *Sakalāgamasārasaṃgraha*, p. 103 :
कमलालये—पूगमेकं प्रतिप्रस्थं द्विगुणं त्रिगुणं तु वा । अथादितः क्रमेणैव पत्रं तत्त्रिगुणं भवेत् ॥
शैलचूर्णं शङ्खचूर्णं कर्पूरेण च मिश्रितम् ।
[13] A : एवं pour एकं
[14] C : वर्णानां
[15] C, D : तु pour च
[16] A : तृतीयं pour त्रितयं
[17] A : द्वितीयं pour द्वितयं
[18] Cf. *Kāraṇāgama*, I, 31, 104b-105a :
एलालवङ्गकर्पूरं जातीतक्कोलचूर्णकम् । मधुषट्खण्डसंमिश्रं मुखवासमिहोच्यते ॥
cf. *Sakalāgamasārasaṃgraha*, p. 103 :
शिवधर्मे—पञ्चसौगन्धिकोपेतं ताम्बूलं यो निवेदयेत् । ................
cf. *ibid.* मातुलुङ्गफलादीनि सुपक्वानि निवेदयेत् ।
[19] C : लवाङ्गं तु द्विजातीनां
[20] C : संग्रन्थिकं ; E : सौगन्धकं

[1]मुखवासं तु तच्छ्रेष्ठं कर्पूरेणैव मध्यमम् । लवङ्गेनाधमं प्रोक्तमेवं[2] सौगन्धिकं [3]त्रिधा ॥१३९॥
मातुलुङ्गफलं पक्वं नालिकेरफलं तथा । [4]संस्कृत्य सम्यक् ताम्बूलसहितं तन्निवेदयेत् ॥ १४० ॥
चूर्णं [5]प्राण्यङ्गजं वापि [6]ताम्बूले न तु दूष्यते । [7]यथा प्राण्यङ्गजं [8]मुक्ताशङ्खादि शुचि दृश्यते ॥

[ भक्ष्यफलादिनिवेदनम् ]

अन्नाच्छतगुणं श्रेष्ठं पिष्टं तु घृतपाचितम् । [9]गुलखण्डेन संमिश्रं तस्मात्तच्च निवेदयेत् ॥१४२॥
फलानि च सुपक्वानि भक्ष्याणि विविधानि च । हविःप्रदानादूर्ध्वं तु [10]पुरा नित्योत्सवस्य तु ॥
हविषा सह वा नित्यं पृथक्पात्रे निवेदयेत् । [11]यथालाभं ततश्चापि ताम्बूलं [12]दापयेच्छिवे ॥१४४

[13]इत्यजिताख्ये [14]महातन्त्रे [क्रियापादे] [15]अर्चनाङ्गविधिर्नाम
द्वाविंशः पटलः ॥

---

[1] Le mot मुखवास se trouve au neutre au lieu du masculin dans ce texte ; cf. *Rauravāgama*, vol. I, p. 69. note 6

[2] C : एकं pour एवं

[3] C : क्रिया pour त्रिधा

[4] A : संस्कृत्य सहितं सम्यक् ताम्बूलसहितं तथा

[5] B : वाप्यङ्गजं pour प्राण्यङ्गजं

[6] A : ताम्बूलं तु तदिष्यते ; E : ताम्बूलेन तु तुष्यते

[7] C et E omettent ce demi-*śloka*

[8] A : मुक्तं pour मुक्ता

[9] B, E : गुलखण्डसुसंमिश्रं ; C : गुलखण्डसमं मिश्रं

[10] E : पूर्वं pour पुरा

[11] A : यथाभक्तजनैश्चापि

[12] B : दापयेत्ततः

[13] E : इत्यजिते pour इत्यजिताख्ये

[14] E omet महातन्त्रे

[15] A : अर्चनाङ्गविधिः त्रयोविंशतितमः पटलः ; B, E : अर्चनाङ्गविधिपटलः ; C : अर्चनाङ्गो नाम द्वात्रिंशत्पटलः ; D : अर्चनाङ्गो नाम द्वाविंशत्पटलः ग्रन्थं १४४.

## [त्रयोविंशः पटलः]

### आरात्रिकविधिः[1]

[ दीपपात्राणि[2] ]

आरात्रिकं [3]ततो वक्ष्ये सर्वदोषप्रशान्तये । नवदीपयुतं श्रेष्ठं [4]पञ्चदीपैस्तु मध्यमम् ॥ १ ॥

कन्यसं त्वेकदीपेन [5]युतं [6]पात्रं क्रमाच्चरेत् । दीपाधाराणि लोहानि कारयेत्पिष्टजानि वा ॥२॥

दीपाधारेषु सर्वेषु गोघृताक्तां[7] तु विन्यसेत् । [8]वर्तिमन्येषु पात्रेषु निम्बपत्रं[9] च सर्षपम् ॥ ३ ॥

कार्पासबीजं लवणं [10]चतुष्पलं च विन्यसेत् । [11]गौरीधाम्नस्तु तत्सर्वं यागमण्टपतोऽपि वा॥४॥

पुष्पमण्टपतो वापि समाहृत्य [12]समानयेत् । मण्टपाभ्यन्तरे वाथ तत्सर्वं परिकल्पयेत् ॥ ५ ॥

---

[1] Pour आरात्रिकविधि, voir *Kāraṇāgama* I, 32 et II, 52, *Cintyāgama* 19 et *Sūkṣmāgama* 9

[2] Cf. *Kāraṇāgama*, I, 32, 8-14 :

मण्डपस्येशदिग्भागे मण्डपं चतुरश्रकम् । कृत्वा तु भूतपात्राणि संगृह्यात्रैव विन्यसेत् ॥
सौवर्णं राजतं ताम्रं मृण्मयं कांस्यमेव च । विंशत्यङ्गुलविस्तारमोष्ठमेकाङ्गुलं भवेत् ॥
प्रोक्षयेत्पुरुषेणैव धेनुमुद्रां प्रदर्शयेत् । दीपाधारं ततः कुर्याच्छालिपिष्टमयेन तु ॥
चतुरङ्गुलविस्तारमुत्सेधं चाङ्गुलं भवेत् । ओष्ठमर्धाङ्गुलं प्रोक्तं पूर्णचन्द्रवदाकृतिः ॥
पञ्चदीपसमायुक्तमथवा चैकदीपकम् । तन्मध्ये निक्षिपेद्दीपं गोघृतेन समायुतम् ॥
विन्यसेद्दीपमेके तु तिलमेके तु निक्षिपेत् । सर्षपं चैकपात्रे तु राजिकालवणं तथा ॥
कार्पासबीजमेके तु निक्षिपेद्धृदयेन तु । दीपं संपूज्य विधिवदग्निबीजेन बुद्धिमान् ॥

[3] B, C, D, E : अथो pour ततो

[4] A : पञ्चदीपं तु

[5] E : युक्तं pour युतं

[6] B, C : पात्रं क्रमाद्धरेत् ; E : पात्रक्रमं चरेत्

[7] A : गोघृताक्तं

[8] A : वर्तिमध्ये तु; C : वर्तिमध्येषु

[9] C : पात्रं pour पत्रं

[10] A : चतुष्पादं च ; B : चतुष्पथं च

[11] A : हौर pour गौरी

[12] B, E : समाचरेत्

[1]रुद्रायतनयोषिद्भिरथवा[2] परिचारकैः । तानि सर्वाणि पात्राणि [3]वाहयित्वा [4]शिरोपरि ॥ ६ ॥
समानीय [5]शिवस्याग्रे कृत्वा तद्वर्तिदीपनम्[6] । त्रिपाद्यां तु शिवस्याग्रे विन्यसेत्पात्रपञ्चकम् ॥७॥
शिवस्याचमनं दत्त्वा संपूज्य शिवमन्त्रतः । ततो दीपार्चनं कुर्याद्गन्धपुष्पादिभिः क्रमात् ॥८॥

[ दीपाधिदेवताः[7] ]

[8]नवग्रहा नवानां तु पञ्चानां भूतपञ्चकम् । एकस्य वह्निरेवोक्तो [9]दीपानामधिदेवताः ॥ ९ ॥

[ दीपपूजा ]

[10]नवदीपेषु सूर्यं तु मध्ये दिक्षु समन्ततः । [11]गुरुशुक्रज्ञचन्द्रांस्तु भौममर्कसुतं तथा ॥ १० ॥
[12]राहुं केतुं च संपूज्य विदिक्षु क्रमशस्तथा[13] । [14]पञ्चस्वग्निं यजेन्मध्ये प्रागादिषु यथाक्रमम् ॥ ११ ॥

---

[1] Cf. *Kāraṇāgama*, I, 32, 27b-31 :
वाहयित्वा तु नारीभिः पात्राणि भूसुरैस्तु वा । सर्वालंकारसंयुक्तं सर्वातोद्यसमन्वितम् ॥
आलयं तु परिभ्राम्य परिवेषक्रमेण तु । पीठाग्रे वा ध्वजाग्रे वा प्राकाराणां तु बाह्यके ॥
निक्षिपेत्तत्र दीपं तु तिलं चैव तु सर्षपम् । राजिकालवणं चैव कार्पासबीजसंयुतम् ॥
दीपाग्निना दहेत्तत्राप्यग्निबीजेन बुद्धिमान् । लोकोत्पत्तिस्थितिकरं सर्वसंपत्करं वरम् ॥
पादप्रक्षालनं कृत्वा प्रविशेदालयं प्रति ।

[2] A : आर्वायतनयोषिद्भिरथवा ; B, E : रुद्राय तनवे षड्भिरथवा

[3] C : वाहयित्वाग्निनोपरि

[4] Le mot शिरस् se trouve quelquefois terminé par अ sous la forme शिर ; cf. शिरोपस्थान, शिरोपनिषद् etc.

[5] E : शिवाग्रे तु कृत्वा

[6] A : दीपकम् pour दीपनम्

[7] Cf. *Kāraṇāgama*, I, 32, 38-40a :
नीराजनस्य पात्रे तु वृत्ते स्यात्सूर्यमण्डलम् । मध्ये च वह्निदैवत्यमारात्रिके तथैव च ॥
नवदीपे नवशक्ति सप्तदीपे च मातरः । पञ्चमे पञ्चभूतं स्यात्तत्त्वत्रयं त्रिदीपके ॥
स्वाहादेव्येकदीपे च पूजयेत्तु स्वनामतः ।

[8] A : नवग्रहानां पञ्चानां

[9] B, C, D, E : तत्तत्स्वनाममन्त्रतः

[10] B : पात्राद्ये सूर्यमभ्यर्च्य ; C, D : गन्धाद्यैः सूर्यमभ्यर्च्य ; E : पात्रादौ सूर्यमभ्यर्च्य

[11] A : गुरुशुक्रबुधं चन्द्रभौमावर्कसुतं तथा ; B : गुरुशुक्रेन्दुचक्रांस्तु भौममर्कसुतं तथा ; C, D, E : गुरुशुक्रेन्दुचन्द्रांस्तु भौममर्कसुतं तथा ।

[12] A : राहुकेतू च

[13] A : ततः pour तथा

[14] C : पञ्चस्वनं pour पञ्चस्वग्निं ; D : पञ्चस्वरं ; E : पञ्चदीपे

आकाशं च [1]तथा [2]वायुमपः पृथ्वीं च पूजयेत् । [3]वह्निमेवैकदीपे तु [4]प्रोक्षयेचास्त्रमन्त्रतः॥१२॥
नाराचास्त्रप्रयोगेण दिक्षु चास्त्रं प्रयोजयेत् । बध्वा तु सुरभिं पश्चाद्दीपस्योपरि दर्शयेत्॥ १३ ॥
उद्धृत्योपरि देवस्य त्रिः परिभ्रामयेद्धृदा[5] ।

[द्रव्यपात्र-भ्रामणम्[6]]

अन्यानि द्रव्यपात्राणि भ्रामयेच्च पृथक् पृथक् ॥ १४ ॥
अथवा तेषु पात्रेषु [7]किंचित्किंचिद्विगृह्य च[8] । तत्तद्द्रव्यं समस्तं तु गृहीत्वा दक्षमुष्टिना ॥१५॥
अस्त्रेण भ्रामयित्वा तु निक्षिपेद्दीपपात्रके ।

[भस्मभ्रामणम्[9]]

ततो भस्म सुसंगृह्य कर्पूरादिसुगन्धितम् ॥ १६ ॥

---

[1] C, D, E : यथा pour तथा
[2] E : वायुरापः
[3] A omet les *śloka* 12b et 13
[4] B : प्रोक्षयेदस्त्रमन्त्रतः ; C : प्रोक्षयेच्छस्त्रमन्त्रतः
[5] C : तदा pour हृदा
[6] Cf. *Sūkṣmāgama*, 9, 7b-8a :
सर्षपं च तिलं निम्बपत्रं कार्पासबीजकम् । लवणेन समायुक्तं भ्रामयेल्लिङ्गमूर्धनि ॥
cf. *Kāraṇāgama*, II, 52, 19b-21a :
सर्षपं च मरीची च कार्पासं बीजमुच्यते । शुष्कगोमयमेवोक्तं निम्बपत्रं विभूति च ॥
पृथक् पृथक् मुष्टिमात्रान्वेष्टयेत्त्रिः प्रदक्षिणम् । अग्निपात्रेषु निक्षिप्य भस्म चैव ततः शृणु ॥
[7] E omet le passage qui va de किंचित्किंचिद्विगृह्य च à प्रक्षिपेद्दीपपात्रे तु (śl. 17b) et lit अथवा तेषु पात्रेषु ततो लिङ्गस्य मूर्धनि
[8] C, D : किंचिद्ग्राह्य विचक्षणः
[9] Cf. *Kāraṇāgama*, I, 32, 18-26a :
भस्मानि दापयेच्छम्भोर्दिग्बन्धं चास्त्रमन्त्रतः । ललाटे नयनभ्योर्ध्व उष्णीषे पट्टबन्धके ॥
वर्तुलं चोर्ध्ववक्त्रे च त्रिपुण्ड्रं पूर्ववक्त्रके । त्रिशूलं दक्षिणे वक्त्रे पश्चिमे चतुरश्रकम् ॥
उत्तरे दीपमेवं तु सर्वाङ्गोद्धूलनं कुरु । मूर्ध्नि चैव ललाटे च कर्णे च हृदये तथा ॥
बाहुद्वये च नाभौ च पादद्वये च दापयेत् । गङ्गाचन्द्रमपस्मारं नागकूर्मं तु दापयेत् ॥
सर्वाङ्गं लेपयित्वा तु बृहत्सामेति मन्त्रतः । दर्पणं दर्शयेदन्ते तदन्ते छत्रदर्शनम् ॥
तदन्ते चामरं चैव तदन्ते व्यजनं तथा । व्यञ्जनं चाष्टपुष्पं च स्तोत्रं चैव निवेदयेत् ॥
अथवा द्रव्यवर्जं तु दीपमेकं प्रयोजयेत् । तद्भस्म च समादाय स्वल्पं चण्डेश्वरस्य तु ॥
ततो भक्तजनेभ्यश्च दद्याद्देशिकपूर्वकम् ।

गृहीत्वा मुद्रया [1]मृग्या भ्राम्य लिङ्गोपरि त्रिधा । प्रक्षिपेद्दीपपात्रे तु ततो लिङ्गस्य मूर्धनि ॥
अस्त्रेण विन्यसेद्दिक्षु[2] दक्षिणेतरयोस्ततः । पार्श्वयोर्हृदये चैव विन्यसेद्ब्रह्म मन्त्रवित् ॥ १८ ॥

[दीपदानकाले वाद्यघोषादि[3]]

अथवा [4]द्रव्यवर्जं तु दीपमेव प्रयोजयेत् । तत्काले तु प्रयुञ्जीत स्तोत्रमङ्गलवादनम्[5] ॥ १९ ॥
जयशब्दं सशङ्खं च [6]वेदध्वनिसमायुतम् । विसर्जयेत्ततः सर्वं दीपादिद्रव्यसंचयम् ॥ २० ॥
विसर्जनं महापीठे [7]लिङ्गे वाथ प्रकल्पयेत् । एवमारात्रिकं दत्त्वा [8]दद्यादाचमनीयकम् ॥ २१ ॥
[9]ताम्बूलं दापयेन्मन्त्री मुखवाससमन्वितम् ॥ २२ ॥

[10]इत्यजिताख्ये महातन्त्रे [क्रियापादे] [11]आरात्रिकविधिर्नाम
त्रयोविंशः पटलः

---

[1] A : भृत्य pour मृग्या
[2] B, C, D, E : ईषद् pour दिक्षु
[3] Cf. *Kāraṇāgama*, I, 32, 15-17 :
शङ्खदुन्दुभिनिर्घोषैस्ततो मङ्गलवाचकैः । स्तोत्रध्वनिसमायुक्तं वेदध्वनिसमन्वितम् ॥
पाद्यं दद्यात्पुरास्त्रेण नेत्रेणाचमनं ददेत् । द्रव्याण्यथ क्रमेणवाप्यात्रल्यात्तलिङ्गके ॥
दीपेनैव त्रिधा भ्राम्य शिखामन्त्रेण बुद्धिमान् । नीराजनं तु कर्तव्यं क्रमेण देशिकोत्तमः ॥
[4] B, E : द्रव्यवर्त्यादि pour द्रव्यवर्जं तु
[5] A : वादिनम् pour वादनम्
[6] D : घण्टा pour वेद
[7] A : जले वाथ pour लिङ्गे वाथ ; C : लवो यथा
[8] A : दत्त्वा च pour दद्याद्
[9] D : यथालाभं ततश्चापि मुखवाससमन्वितम्
[10] Le colophon manque dans les manuscrits A, B, D et E
[11] C : आरात्रिकविधिपटलः

## [चतुर्विंशः पटलः]

## [नीराजनविधिः[1]]

[2]नीराजनविधिं[3] वक्ष्ये [4]काम्यं नैमित्तिकं च तत्। आत्मजक्षेत्रवित्तादि[5] [6]काम्यमत्र प्रकीर्तितम्॥ १॥
[7]उत्पातपरचक्रादि निमित्तं स्याज्जनार्दन। पूर्ववत्कल्पिते पात्रे दीपाधारे सुशोभने॥ २॥

[दीपाधारपात्रम्[8]]

[9]हेमरूप्यादिसंसिद्धे [10]कुष्ठचन्दनजेन वै। क्षोदेन शालिगोधूमयवमाषोद्भवेन वा॥ ३॥
[11]पिष्टेन कुर्यात्सुव्यक्तं दीपस्य परितः क्रमात्। [12]त्रिशूलवज्रशङ्खाब्जश्रीवत्सस्वस्तिकान् क्रमात्॥
छत्रचामर[13]संयुक्तानष्टदिक्षु क्रमेण वै। गोमयं श्वेतसिद्धार्थं यवं कृष्णतिलं तथा॥ ५॥
दधि [14]गोरोचनां बिल्व[15]वटपिप्पलसंभवान्। [16]प्रवालान्विकिरेत्पात्रे [17]सुगन्धिकुसुमानि च॥
गोघृताक्तां ततो वर्तिं दीपाधारेषु योजयेत्। कर्पूरागरुचूर्णेन युक्ता वर्तिः प्रशस्यते॥ ७॥

---

[1] Pour नीराजनविधि, voir *Kāmikāgama* II, 7, *Kāraṇāgama* I, 143 et *Dīptāgama*, 92

[2] Cf. *Kāraṇāgama*, I, 143, 1-3 :
अथ वक्ष्ये विशेषेण नीराजनविधिक्रमम्। सर्वकृत्रिमनाशार्थं सर्वलोकहितावहम्॥
नित्यं नैमित्तिकं चैतद् द्विविधं तदुदाहृतम्। रात्रौ लिङ्गाय नृत्तान्ते कर्तव्यं नित्यमुच्यते॥
अन्ते च मङ्गले कार्ये चोत्सवे परिवेष्टके। रात्रौ बिम्बाय कर्तव्यं नैमित्तिकमिति स्मृतम्॥

[3] C : नीराजनविधि

[4] B, C, E : काम्ये नैमित्तिके च तत्

[5] D : चित्तादि pour वित्तादि ; E : व्यक्त्यादि

[6] A, E : काम्यमन्त्रं pour काम्यमत्र

[7] A : उत्पाद pour उत्पात

[8] Cf. *Kāmikāgama*, II, 7, 11b-15a :
एकत्र तिलमन्यत्र सर्षपं लवणं तथा। कार्पासबीजमन्यत्र गोमयं पिष्टमेव वा॥
वर्णैभक्ष्यहविष्यं च वटाश्वत्थदलानि च। चतुर्दिक्षु च कोणेषु क्रमेण परिकल्पयेत्॥
मध्यमे दीपपात्रं तु पद्मं वा परिकल्पयेत्। गन्धमर्घ्यं च पुष्पं च भस्म चाग्नेयकोणतः॥
सर्वत्र दीपान्वा कुर्यान्नवसंख्यान् समुज्ज्वलान्। घृताद्यैस्तैलसंयुक्तान् "

[9] E : हेमरौप्यादिसंसिध्यै

[10] A : कुष्ठं pour कुष्ठ

[11] E : पिष्टे कुर्यात्सुसंव्यक्तं

[12] A : त्रिशूलवज्रशङ्खाद्यं श्रीवत्सं स्वस्तिकं क्रमात्

[13] A : संयुक्तम् pour संयुक्तान्

[14] A : गोरोचना pour गोरोचनां

[15] A : विट pour वट

[16] C : प्रवालान् विकर्षयेत्पात्रे ; D : प्रवालान् कर्षयेत्पात्रे

[17] C, D, E : सुगन्ध pour सुगन्धि

[नीराजनप्रकारः[1]]

[2]नवदीपमिदं प्रोक्तं [3]नीराजनविधिं प्रति । [4]इति संपादितं पात्रं शिवाग्रे स्थण्डिलोपरि ॥८॥
पद्ममष्टदलं [5]कृत्वा तत्र [6]पात्रं निधाय च । पुण्याहं वाचयित्वा तु [7]दीपानारोप्य तत्र वै॥९॥
पूर्ववत्पूजयित्वाथ शङ्खदुन्दुभिनिस्वनैः । स्नानकाले प्रयुञ्जीत शिवस्योपरि पूर्ववत् ॥ १० ॥
भस्मादिकं [8]तथान्यच्च [9]तत्र तत्परितो यजेत् । विसर्जनं च तस्यापि पूर्ववत्परिकल्पयेत् ॥११॥

---

[1] Cf. *Kāraṇāgama*, I, 143, 4-22a :
प्रासादस्याग्रतः कुर्यान्मण्टपं चतुरश्रकम् । संप्रोक्ष्य हृदयेनैव पात्रं तत्रैव विन्यसेत् ॥
पूर्वोक्तलक्षणोपेतं नीराजनाय पात्रकम् । संप्रोक्ष्य पुरुषेणैव दीपमारोपयेत्ततः ॥
रन्ध्राधारे शराधारे चैकाधारे तथैव च । कपिलाज्येन दीपं तु छिन्नवर्णसमायुतम् ॥
रोपयेद्धृदयेनैव चाग्निबीजेन बुद्धिमान् । दर्शयेत्पद्ममुद्रां च शूलमुद्रां तथैव च ॥
दीपपात्रं समुद्धृत्य प्रविशेद्गर्भगेहकम् । देवेशं गन्धपुष्पाद्यैः पूजयित्वा विशेषतः ॥
लिङ्गस्य मूर्ध्नि दीपैश्च त्रिधा संभ्राम्य वर्मणा । दर्शयेल्लिङ्गमुद्रां च बीजमुद्रां तथैव च ॥
नित्यमेवं समाख्यातं नैमित्तिकमथ शृणु । प्रासादाग्रे तु कर्तव्यं मण्टपं चतुरश्रकम् ॥
पात्राणि शुद्धतोयैश्च संप्रोक्ष्य हृदयेन तु । विन्यसेन्मण्टपे मध्ये नीराजनाय पात्रकम् ॥
गन्धपात्रं तथाग्नौ तु नैर्ऋते त्वर्घ्यपात्रकम् । वायव्ये पुष्पपात्रं तु ईशाने भस्मपात्रकम् ॥
दीपं चारोपयेत्पश्चादग्निबीजेन पूजयेत् । रुद्रस्य गणिकाभिर्वा ब्राह्मणैर्वा विशेषतः ॥
वाहयित्वा तु पात्राणि सर्वातोद्यसमायुतम् । स्वस्तिसूक्तसमायुक्तं तेषां मङ्गलवाचकैः ॥
हर्म्यप्रदक्षिणं कृत्वा प्रविश्यास्थानमण्टपम् । विज्ञाप्य देवदेवाय देवस्याग्रे विशेषतः ॥
स्थापयेद्दीपपात्रादि पूजयेन्मण्डपोपरि । पाद्यं दत्त्वा तु सद्येन हृदा चाचमनं ददेत् ॥
गन्धं दद्यात्तु शिरसा चार्घ्यमीशेन दापयेत् । पुष्पं तु शिखया दद्याद्धूपं नेत्रेण दापयेत् ॥
अस्त्रमुद्रां च शूलाख्यां पद्ममुद्रां प्रदर्शयेत् । पुनराचमनं दत्त्वा दिग्बन्धं चास्त्रमन्त्रतः ॥
पात्रेण दीपमादाय देवस्य तु शिरोपरि । परिगृह्य त्रिधा मन्त्री शिखामन्त्रमनुस्मरन् ॥
तदन्ते दापयेद्भस्म नेत्रमन्त्रं समुच्चरन् । दर्पणं दर्शयेत्पश्चात्प्रणम्य विधिपूर्वकम् ॥
ताम्बूलं दापयेत्तस्मै मुखवाससमन्वितम् । पीठाग्रे वा स्थलाग्रे वा दीपं चैव विसर्जयेत् ॥
एवं यः कुरुते मर्त्यः स पुण्यां गतिमाप्नुयात् ।

[2] C, D, E : नैकं दीपमिह प्रोक्तं
[3] C : नीराञ्जन pour नीराजन
[4] D : इति स्म पादितं पात्रं
[5] A : प्रोक्तं pour कृत्वा
[6] B, C, D, E : पात्रे pour पात्रं
[7] A : दीपाधारोऽपि तत्र वै
[8] A : तथाभ्यर्च्य
[9] A, C, D : तत्र तत्परियोजयेत्

अष्टम्यां च चतुर्दश्यां पञ्चदश्यां च पक्षयोः । [1]आर्द्रायामर्कवारे [2]च योजयेत्काम्यसिद्धये॥१२
अद्भुतादिषु सर्वेषु [3]दृष्टमात्रेषु योजयेत् ॥ १३ ॥

[4]इत्यजिताख्ये [5]महातन्त्रे [क्रियापादे] [6]नीराजनविधिर्नाम
चतुर्विंशः पटलः[7] ॥

[1] D : आद्रायाम् pour आर्द्रायाम्

[2] A : तु pour च

[3] E : दृष्टमात्रं तु योजयेत्

[4] E : इत्यजिते pour इत्यजिताख्ये

[5] E omet महातन्त्रे

[6] A : आरात्रिकविधिश्चतुर्विंशः पटलः ; B, D : नीराजनविधिपटलः ; C : नीराजनविधिः समाप्तः

[7] D ajoute ग्रन्थं १३

## [पञ्चविंशः पटलः]

### [1]नित्योत्सवविधिः[2]

[3]अथ नित्योत्सवं[4] वक्ष्ये सर्वारिष्टनिवारणम् । [5]लोकपुष्टिप्रदं [6]सम्यङ् नित्यार्चाङ्गं तथैव च॥१॥
तस्मान्नित्योत्सवं शास्त्रे [7]त्रैसंध्यमिति कीर्तितम् । [8]नवप्रकारमेतत्स्यात् तत्प्रकारमतः[9] शृणु॥२॥

[नित्योत्सवे नव प्रकाराः]

विनायकं ततो [10]देवं देवीं पाशुपतेश्वरम् । बलिपात्रस्थितं [11]चास्त्रं [12]गोलकां लिङ्गमेव वा [13]॥३॥
पादुके वृषराजं[14] च चण्डेशं च यथाक्रमम् । शिरसा वाहयित्वा तु क्रियते [15]यत्र नित्यशः॥४॥
[16]नवभिः प्रथमं चाहुरुत्तमोत्तमसंज्ञितम् । [17]चण्डं हित्वाष्टभिर्देवैर्भवेदुत्तममध्यमम्[18] ॥ ५ ॥

---

[1] Pour नित्योत्सवविधि, voir *Aṃśumad* 73, *Acintyaviśvasādākhya* 61, *Kāmika* II, 5, *Kāraṇa* I, 140, *Raurava*, vol. I, II, 16, *Vīra* 40, *Suprabheda* I, 13 et *Sūkṣma* 8

[2] Dans le manuscrit de KîLvelûr (A) le महोत्सवविधिपटल se trouve après le नीराजनविधिपटल. Nous avons cependant suivi les autres mss. B, C, D et E qui donnent le नित्योत्सवविधिपटल après le नीराजनविधिपटल, et le महोत्सवविधिपटल ensuite. Le नित्योत्सव fait partie du rite quotidien du temple et il convient qu'il soit décrit après le नित्यार्चन et les rites qui sont en relation avec ce dernier, avant le महोत्सवविधि qui est un rite occasionnel (नैमित्तिक).

[3] Cf. *Vīrāgama*, 40, 2-3 :
श्रूयतामभिधास्यामि नित्योत्सवं विशेषतः । सर्वपापहरं पुण्यं सर्वलोकसुखावहम् ॥
सर्वशान्तिकरं चैव सर्वारिष्टविनाशनम् । नित्यं नित्यार्चनान्ते तु नित्योत्सवमथाचरेत् ॥

[4] Le mot नित्योत्सव (ou उत्सव) se trouve au neutre au lieu du masculin dans ce texte ; voir *Rauravāgama*, vol. I, p. 69 note 6.

[5] C, D : लोकपुष्टि प्रदं

[6] C, D : रम्यं pour सम्यङ् ; E : प्रोक्तं

[7] A : त्रिसन्ध्यामिति

[8] D, E : नवप्रकारः सोऽपि स्यात्

[9] B, E : ततः pour अतः ; E : अथ

[10] C, D : देवदेवीं pour देवं देवीं

[11] D : शास्त्रं pour चास्त्रं

[12] A : गोलका ; B, E : गोलकं

[13] A : वा pour च

[14] B : रज्जुं pour राजं

[15] A : यस्तु pour यत्र

[16] A : नवसु प्रथमं चामुरुतमोतमसंज्ञिताम् ; B, C, D, E : नवभिः प्रथमेऽपि स्यादुत्तमोत्तमसंज्ञितम्

[17] C omet les *śloka* 5b et 6

[18] E : मध्यमः pour मध्यमम्

चण्डं पाशुपतेशं च हित्वा स्यादुत्तमाधमम् । चण्डपाशुपताभ्यां तु [1]हित्वा विघ्नेशमेव हि ॥ ६ ॥
[2]तद्भवेन्मध्यमश्रेष्ठं त्रिभिस्तैर्गोलकां[3] विना । [4]मध्यमध्यमिदं ज्ञेयं [5]तैश्चतुर्भिश्च पादुके ॥ ७ ॥
[6]हित्वा यत्क्रियते [7]तत्तु [8]मध्यमाधममिष्यते । [9]पूर्वोक्तैस्तैर्वृषं हित्वा [10]कृतं स्यात्कन्यसोत्तमम् ॥
[11]पूर्वोक्तैस्तैरुमां हित्वा [12]भवेत्कन्यसमध्यमम् । उमामहेश्वराभ्यां [13]वा कुर्यादधममध्यमम् ॥९॥
एकासनस्थयोर्भेदः शिवयोरत्र नेष्यते । पूर्वोक्तैस्तैर्महेशं च हित्वा केवलमस्त्रतः ॥ १० ॥
[14]अधमाधममेवं तु [15]प्रोक्तं नवविधोत्सवम्[16] । अग्निकार्ये कृते कुर्यान्नित्योत्सवमतन्द्रितः[17] ॥
हित्वा वा नित्यहोमं तु नित्योत्सवमथाचरेत् । [18]महोत्सवं तु कुर्वीत विना वा नित्यमुत्सवम् ॥
[19]अतोऽर्चनक्रमो ह्येषां सर्वेषामभिधास्यते । [20]पूजकः कृतहोमस्तु प्रविश्याभ्यन्तरं ततः ॥१३॥
गन्धपुष्पादिभिः सम्यग् देवान्विघ्नेश्वरादिकान् । क्रमेण पूजयेन्मन्त्री सर्वांश्च स्वस्वमन्त्रतः ॥

[ पाशुपतास्त्रम्[21] ]

स्थलिकाकर्णिकामध्ये यजेत्पाशुपतास्त्रकम् । [22]त्रिनेत्रं चतुर्भुजं चैव [23]श्लक्ष्णपिङ्गोर्ध्वकेशकम् ॥ १५ ॥

---

[1] B : विघ्नं हित्वा तु यः कृतः ; D : विघ्नं हित्वा तु यत्कृतम्

[2] B, E : सो pour तद्

[3] B : गोलकं pour गोलकां

[4] B : मध्ये मध्ये स जुष्टः ; C, D : मध्ये मध्ये समुद्दिष्टः ; E : मध्ये मध्यः स जुष्टस्तैः

[5] E : चतुर्भिस्तैश्च पादुके

[6] B : हित्वातः pour हित्वा यत् ; C : हित्वाधः ; D : हित्वा यः ; E : हित्वा तत्

[7] B, C, D, E : सोऽत्र pour तत्तु

[8] B, C, D, E : मध्यमाधम इष्यते

[9] A : पूर्वोक्ते वृषभीं

[10] B, C, D : भवेदधम उत्तमः

[11] A : पूर्वोक्तस्थैरुमां ; B : पूर्वोक्तैस्तैरिमां

[12] B, E : भवेदधममध्यमम्

[13] A : तु pour वा

[14] B, C, D : कृतोऽधमाधमः प्रोक्तः ; E : कृतोऽयमधमं प्रोक्तं

[15] B, C, D, E : ह्येवं नवविधोत्सवः

[16] voir p. 294 note 4

[17] D : अतन्त्वतः pour अतन्द्रितः

[18] A : महोत्सवस्य विधिना न कुर्यान्नित्यमुत्सवम

[19] A : अतोऽर्चनक्रमा ह्येषा ; B, E : अतो बलिक्रमो ह्येषां

[20] A : पूर्वकं कृतहोमं तु

[21] Cf. *Suprabhedāgama*, I, 13, 16b-18a :
अस्त्रं पाशुपतं न्यस्त्वा रूपं तत्र विचिन्तयेत् । त्रिणेत्रं चतुर्भुजं रौद्रं शिखाकोटिमुज्ज्वलम् ।
वरदाभयदं हस्तं वामं सव्याक्षशूलधृत् । एवं पाशुपतं ध्यात्वा बलिलिङ्गे सुपूजयेत् ॥

[22] B, C, D, E : त्रिणेत्रं

[23] A : कृष्ण pour श्लक्ष्ण ; B, C : श्लक्ष्णं

वरदाभयहस्तं च वाममन्याक्षशूलधृत्[1] । एवं पाशुपतं ध्यात्वा [2]बलिलिङ्गे समर्चयेत् ॥ १६ ॥
[3]पूर्वाह्णे [4]पुष्पलिङ्गं स्यान्मध्याह्ने चान्नलिङ्गकम् । [5]सायाह्नेऽक्षतलिङ्गं स्यादाढकार्धप्रकल्पितम् ॥
[6]पुष्पलिङ्गं तु वा प्रोक्तं रात्रावपि तदुत्सवे । गोलकायां [7]भवेदेवं [8]पादुकाद्वितये यजेत् ॥१८॥
धर्मयज्ञौ [9]तु संपूज्य महाघण्टां तु ताडयेत् ।

[उत्सवः[10]]

पुत्रकैस्तु ततो देवाञ्शुचिभिः[11] सुसिताम्बरैः[12] ॥ १९ ॥

---

[1] A : धृक् pour धृत्

[2] A : बलिमंगे pour बलिलिङ्गे ; B : बलि लिङ्गे ; C, D : बहिर्लिङ्गे

[3] Cf. *Kāmikāgama*, II, 5, 11b-12a et 22-23a :
त्रिकालमन्नलिङ्गं वा प्रातर्मध्याह्नयोस्तु वा । मध्याह्ने वाथ पूर्वाह्णे पुष्पलिङ्गमुदाहृतम् ॥
प्रदोषेऽक्षतलिङ्गं स्यात्तत्र पाशुपतं यजेत् । ...............
सपीठे गोलकाकारे पीठे वाथ समर्चयेत् । अन्नलिङ्गप्रमाणे तु मूलाग्रसमविस्तरे ॥
हस्तावधिप्रमाणान्ते सर्वलक्षणलक्षिते ।
voir aussi *Rauravāgama*, vol. I, II, **16**, **1-2**

[4] A : पुष्पलिङ्गस्य मध्याह्ने

[5] B, D, E : साये चाक्षतलिङ्गं

[6] A et D omettent ce demi-*śloka*

[7] B, C, E : भवेद्देवं

[8] A : पादुकद्वितये ; C : पादुकं द्वितयोः ; D, E : पादुकानां तयोः

[9] B, C, E : सुसंपूज्यौ ततो घण्टां

[10] Cf. *Kāmikāgama*, II, 5, 29b-42a :
रथे वा शिबिकायां वा परिचारकमूर्धनु । आरोप्यालंकृतं नो चेद्वितानेन समन्वितम् ॥
छत्रचामरसंयुक्तं नानाध्वजसमन्वितम् । गीतनृत्तसमायुक्तं वाद्यध्वनिसमन्वितम् ॥
धूपदीपसमायुक्तं प्रदक्षिणं समाचरेत् । आद्यं प्रदक्षिणं कुर्यान्मिङ्गिणीतालसंयुतम् ॥
वृषभस्य ब्रह्मतालं स्यादग्नेस्तालं तु भृङ्गिणी । मातॄणां चण्डवाद्यं स्याद्विघ्नराजस्य ढक्करी ॥
षण्मुखस्योद्घट्टं चैव ज्येष्ठायाः कुञ्चितालकम् । तटप्रहारं दुर्गाया विषमं छिन्नं चण्डके ॥
ग्रामे वा नगरे वापि तथा प्राकार एव वा । द्वितीयभ्रमणं ह्येतन्महापीठप्रदक्षिणम् ॥
एकं वापि द्वयं वापि त्रयं स्याच्छबरीयुतम् । अथवा बलिपीठं तु ब्रह्मतालसमन्वितम् ॥
गणतालेन संयुक्तं द्वयं कुर्यात्प्रदक्षिणम् । पैशाचे त्वेकमेवं स्याच्छबरीतालसंयुतम् ॥
गोपुरे वाद्यहीनं वा शङ्खध्वनिसमन्वितम् । इन्द्रस्य समतालं स्याद् गान्धारस्वरसंयुतम् ॥
बद्धापणं भवेदग्नेः कोलिगानसमन्वितम् । दक्षिणे भृङ्गिणीतालं कौशिकेन समन्वितम् ॥
मल्लतालं समाख्यातं नैर्ऋत्यां नट्टभाषया । पश्चिमे नवतालं तु कामरध्वनिसंयुतम् ॥
वायव्यां बलितालं तु तक्केशीस्वरसंयुतम् । सौम्यायां कोटिकः प्रोक्तस्तर्करागसमन्वितः ॥
शालापाणिसमायुक्तं शांकरे ढक्करी मता । एवं प्रदक्षिणं कृत्वा तृतीयं धाम संविशेत् ॥

[11] A : चञ्चुभिः pour शुचिभिः

[12] A : सविताम्बरैः ; B : सुस्थिताम्बरैः

[1]सोष्णीषैः सोत्तरीयैश्च सपवित्रकरैस्तदा[2] । कृत[3]त्रिपुण्ड्रकैश्चैव [4]मालादिभिरलंकृतैः ॥ २० ॥
वाहयेच्च ततो देवान्क्रमेणानेन देशिकः । पूर्वं विनायकं [5]चाग्रे देवं [6]तदनु वाहयेत् ॥ २१ ॥
देवीं [7]तद्वामभागे तु ततः पाशुपतेश्वरम् । ततोऽस्त्रं बलिपात्रस्थं वितानेन समन्वितम्[8] ॥२२॥
गृहीत्वा वाहयेद्धस्ते [9]दक्षिणे हस्तसंमितम् । वैणवं वेत्रजं वापि दण्डं खण्डादिवर्जितम् ॥ २३ ॥
गोलकामानयेत्पश्चात्पादुके च[10] ततो नयेत् । [11]वृषं [12]तदनु तस्यानु चण्डेशं च समानयेत् ॥२४॥
शङ्खदुन्दुभि[13]निर्घोषैर्धूपदीपसमाकुलम् । छत्रचामरसंयुक्तं पिञ्छध्वजसमायुतम् ॥ २५ ॥
गीतनृत्तसमायुक्तं [14]मङ्गिणीतालसंयुतम् । आद्यं प्रदक्षिणं कृत्वा [15]विनिष्क्रम्य बहिस्ततः ॥२६॥
निःशब्दं गोपुरे कृत्वा ततो बाह्ये प्रदक्षिणम् । [16]गत्वा [17]बाह्यमहापीठं [18]कृत्वा तत्र प्रदक्षिणम् ॥
[19]कारयेत्त्रयमेकं वा यातुधानादि[20]गीतये[21] । ततः प्रविश्य निःशब्दं [22]द्वारि कृत्वा [23]पुनः क्रमात् ॥ २८ ॥

---

[1] A : सोष्णीषः सोत्तरीयश्च सपवित्रकरस्तदा
[2] E : मुदा pour तदा
[3] A : त्रिपुण्ट्र pour त्रिपुण्ड्र
[4] A : मालादिभिरलंकृतम ; C, D, E : वस्त्रादिभिरलंकृतैः
[5] C, E : त्वग्रे pour चाग्रे
[6] A : तदनुभावयेत्
[7] B, C, D, E : तु pour तत्
[8] Cf. *Vīrāgama*, 40, 34b-37a :
स्थलिकां चैव चोद्धृत्य हृदयेन तु मन्त्रतः । शिरोमन्त्रेण संयुक्तं तस्यां शिरसि निक्षिपेत् ।
जपेत्पाशुपतास्त्रं च शनैर्गच्छेत्प्रदक्षिणम् । न तिष्ठन्वै न शीघ्रं च गच्छेत्पदे पदे ततः ॥
पुरस्तात्प्रतिमा गच्छेल्लिङ्गं तु तदनुव्रजेत् । आयान्तु पृष्ठतो वापि पादुका च व्रजेत्ततः ॥
[9] B : दक्षिणेन तु संमितम
[10] C, D : पादुकेन pour पादुके च
[11] D : प्रेषं pour वृषं
[12] A : तदनुगम्यानु
[13] B, C, D, E : निर्घोषं pour निर्घोषैः
[14] C : मङ्गलं pour मङ्गिणी ; D, E : अङ्गिणी
[15] C : विनिष्कृत्य
[16] B, C, D, E : कृत्वा pour गत्वा
[17] B, E : बाह्यं pour बाह्य
[18] B, C, D, E : गत्वा pour कृत्वा
[19] C : कारयेत्तत्रमेकं वा
[20] C, D, E : गीयते pour गीतये
[21] Cf. *Vīrāgama*, 40, 4-5 :
राक्षसाश्चासुराश्चैव पिशाचा ब्रह्मराक्षसाः । उच्छिष्टाश्चैव वेतालाः कूष्माण्डाहतथागताः ॥
तथा मारग्रहाश्चैव भूताश्चान्ये मरुद्गणाः । निर्घोषमवश्य शब्दांश्च श्रुत्वा गर्जन्ति तत्र वै ॥
[22] A : द्वारं pour द्वारि
[23] E : बहिः pour पुनः

[1]अन्तः प्रदक्षिणं कुर्यात्तालैरेतैः [2]समन्वितम्[3] । [4]इन्द्रस्य समतालं [5]स्यादग्नौ बद्धावणं भवेत् ॥२९॥
यमस्य भृङ्गिणीतालं नैर्ऋत्यां मल्लितालकम् । [6]वारुण्यां नवतालं तु [7]वायोश्च बलितालकम् ॥
सोमे तु [8]कोटिशिखरमैशान्यां टङ्कगी तथा । [9]एतानष्टौ तदा तालान्दिक्षु सर्वासु वादयेत् ॥
ततः प्रवेशयेद्देवान्वृष[10]तालसमन्वितम् । वाहनानां तु सर्वेषां [11]पादं प्रक्षालयेत्तदा[12] ॥ ३२ ॥
प्रविष्टेषु [13]च देवेषु पूर्ववत्पूजयेत्सुधीः । [14]अस्त्रं [15]च बलिपात्रस्थमभ्यर्च्यादाय मन्त्रतः ॥३३॥
लिङ्गस्य दक्षिणे पार्श्वे योजयेत्तेन मन्त्रतः । [16]आसारे[17] महति प्राप्ते प्राप्ते वा चण्डमारुते॥३४॥
परचक्रभयादौ च केवलास्त्रेण चोत्सवम् । कारयेद्देशिको धीमानन्तर्गर्भगृहेऽपि वा ॥ ३५ ॥

---

[1] A : एवं pour अन्तः  [2] A : समन्विताः pour समन्वितम्

[3] Cf. *Vīrāgama*, 40, 48-50a :
इन्द्रस्य बलितालं तु अग्नेर्मध्यवर्णं भवेत् । यमस्य भृङ्गिणीतालं नैर्ऋत्यां मल्लतालकम् ॥
वारुण्यां नवतालं तु वायव्यां नागतालकम् । सौम्ये च कोटिका प्रोक्ता ऐशान्यां ढंकरी तथा ॥
एवमेव क्रमेणैव प्रासादं त्रिः प्रदक्षिणम् ।

[4] B et E omettent les *śloka* **29**b, 30 et 31a

[5] A : स्यादग्नेमावरणं भवेत् ; D : स्यादग्नौ बद्धवणं भवेत्

[6] C, D : वरुणे pour वारुण्यां  [7] A : वायव्यां चपुटं तथा

[8] A : कोदरं प्रोक्तमैशान्यां  [9] A : एतान्यष्ट हि तालानि

[10] A : नृप pour वृष  [11] A : पादौ pour पादं

[12] Cf. *Rauravāgama*, vol. I, II, 16, 18b-22a :
द्वारान्तिके तु संप्राप्ते पादप्रक्षालनं कुरु । आलयाभ्यन्तरं गत्वा विष्टरे तु निधापयेत् ॥
पादुकां विन्यसेदग्रे वृषमन्त्रेण पूजयेत् । पाद्यमाचमनं चार्घ्यं गन्धं पुष्पं मधुपर्कम् ॥
दीपं चैव तु ताम्बूलं हृदयेन प्रदापयेत् । अस्त्रेण चास्त्रराजं च पुनरालयमाविशेत् ।
प्रतिमापादुकादीनि पूर्वस्थाने निधापयेत् । गर्भागारेऽस्त्रराजं चाप्यस्त्रस्थाने सुयोजयेत् ॥

[13] B, E : जनान् देवान् pour च देवेषु  [14] D : अत्र pour अस्त्रं

[15] B, C, E : तद् pour च

[16] Cf. *Rauravāgama*, vol. I, II, 16, **29-30**a :
वर्षाकाले महावाते स्थानकं वायुमाचरेत् । वर्षे छत्रसमायुक्तमस्त्रमुख्यैवमुत्सवम् ॥
अथवा लिङ्गमात्रस्य विना पीठप्रदक्षिणम् ।

[17] A : आधारे pour आसारे ; C : आस्थाने

पादुकाभ्यां विनाभूते तस्मिन्नित्योत्सवे[1] सुधीः । अन्तः प्रविष्टे देवे तु [2]पूर्वाभिमुखसंस्थिते ॥
गोमयालेपिते देशे तस्याग्रे [3]पादुके न्यसेत् । [4]तत्र देवं समभ्यर्च्य [5]पूर्वोक्तं मन्त्रवित्तमः॥३७॥
देवं पाद्यादिभिर्यष्ट्वा[6] [7]प्रविश्यान्तर्गृहं ततः । उपवेश्यासने देवं देवाग्रे पादुके न्यसेत् ॥३८॥

[8]इत्यजिताख्ये [9]महातन्त्रे [क्रियापादे] [10]नित्योत्सवविधिर्नाम[11]
पञ्चविंशः पटलः ॥

---

[1] C : निन्योत्सवं pour नित्योत्सवे

[2] B, C, D, E : पूर्वाभिमुखमाश्रिते [3] A : पादुकं

[4] C et D omettent les *śloka* 37b et 38a

[5] A : पूर्वोक्त pour पूर्वोक्तं ; E : पूर्वोक्तौ

[6] La forme grammaticale correcte est दृष्ट्वा

[7] A omet les passages प्रविश्यान्तर्गृहं ततः et उपवेश्यासने देवं et lit : देवं पाद्यादिभिर्यष्ट्वा देवाग्रे पादुकं न्यसेत्

[8] E : इत्यजिते pour इत्यजिताख्ये [9] E omet महातन्त्रे

[10] A : निन्योत्सवविधिः षड्विंशतितमः पटलः ; B, E : निन्योत्सवविधिपटलः

[11] C et D omettent नाम

[षड्विंशः पटलः]

[मुद्रालक्षणविधिः[1]]

[2]मुद्राया लक्षणं वक्ष्ये तया सर्वार्थसिद्धये । [3]यया सिध्यति मन्त्राणां फलं सर्वमभीप्सितम् ॥ १ ॥

[ मुद्राशब्दनिर्वचनम्[4] ]

मुदं ददाति देवानां द्रावयत्यसुरानपि । मोदद्रावण[5]धर्मित्वं मुद्राशब्देन[6] कथ्यते[7] ॥ २ ॥

[ चत्वारिंशन्मुद्राः[8] ]

शोधनी [9]कालकर्णी च मुकुली शशकर्णिका । [10]निष्ठुरा पद्ममुद्रा च [11]नमस्कारा मनोरमा ॥ ३ ॥
[12]शान्ता च लिङ्गमुद्रा च ध्वजा चावाहनी[13] तथा । स्थापनी [14]रोधिनी चैव [15]संनिधीकरणी तथा ॥
गायत्री च तथा नेत्रा [16]चास्त्रा चैव [17]तथापरा । सुधा पञ्चमुखी चैव संहाराख्या तथैव च ॥ ५ ॥
वज्राख्या [18]शक्तिमुद्रा च दण्डा खड्गा[19] तथैव च । [20]पाशमुद्राङ्कुशाख्या च [21]गदा शूला तथैव च ॥
पद्माख्या चक्रमुद्रा च द्रव्याख्या [22]करकच्छपी । नाराचास्त्रा मृगी चैव महामुद्रा तथापरा ॥ ७ ॥

---

[1] Pour मुद्रालक्षणविधि, voir *Kāraṇa* I, 28, *Kālottara* 13, *Kiraṇa* II, 3, *Dīpta* 70, *Mṛgendra, kriyāpāda* 5, *Yogaja* 8, *Raurava* vol. I, *vidyāpāda* 5, *Vīra* 33, *Suprabheda* I, 9 et *Svāyambhuva* 13

[2] B C, D, E : मुद्राणां pour मुद्राया [3] A : यथा सिध्यन्ति

[4] Cf. *Kāraṇāgama* I, 28, 1-2a :
अथ वक्ष्ये विशेषेण मुद्राणां लक्षणं परम् । मुदं करोति देवानां द्रावयत्यसुरांस्तथा ॥
मोदनाद् द्रावणाच्चैव मुद्रेयं संप्रकीर्तिता ।

[5] C : धर्मत्वाद् [6] D : शब्देति pour शब्देन [7] B, C, E : शब्द्यते pour कथ्यते

[8] Cf. *Kāraṇāgama*, I, 28, 2b-7a :
लिङ्गमुद्रा नमस्कारा तालाख्या शङ्खमुद्रिका । सुरभी मुकुली चैव वाराही चैव निष्ठुरा ॥
बीजाख्या पञ्चवक्त्री च द्रव्यमुद्रा शिखाख्यका । संहारमुद्रिका चैव सादाख्या चैव मुद्रिका ॥
आसनी च महेशाख्या वज्राख्या शक्तिमुद्रिका । दण्डमुद्रा तथा खड्गा पाशमुद्राङ्कुशाख्यका ॥
गदामुद्रा च शूलाख्या पद्ममुद्रा तथैव च । चक्रमुद्रा तथा टङ्का महामुद्रा तथैव च ॥
घण्टामुद्रास्त्रमुद्रा च शरमुद्रा धनुस्तथा । मुद्राणामुच्यते चैव द्वात्रिंशल्लक्षणं परम् ।

[9] B : कालकण्ठी [10] C : निष्करा ; E : नैष्ठुरा [11] E : नमस्कारं

[12] E : कान्ता [13] E : आवाहिनी [14] B, C, D, E : रोधनी

[15] A : संनिधीकरिणी [16] D : या चास्त्रा वै [17] A : तथा परम्

[18] B, E : शक्तिमुद्राख्या [19] C : खण्डा pour खड्गा

[20] E omet ce demi-*śloka* [21] A, E : गदशूले pour गदा शूला

[22] A : करकश्चवी ; B, E : करकच्छला ; C : करकच्छवि:

शङ्खमुद्रा [1]तालमुद्रा [2]वाराही [3]त्रासिनी तथा । शिवयागे समुद्दिष्टाश्चत्वारिंशदिमाः[4] क्रमात् ॥८॥
[ [5]शोधनी, कालकर्णी, मुकुली, शशकर्णी च ]

[6]मणिबन्धौ तु [7]संलग्नौ [8]पार्णी कृत्वा जनार्दन । हृद्देशे त्वथ विन्यस्य ताडयेच्च [9]परस्परम् ॥९॥
शोधनी तु भवेदेषा मुद्रा शोधनकर्मणि । कराभ्यां मुष्टिमाबध्य योजयेन्मणिबन्धकौ ॥१०॥
[10]मुष्टी कृत्वा ततोत्ताने [11]ततो नाङ्गुलि योजयेत् । [12]अङ्गुष्ठाग्रौ च संलग्नौ कृत्वा स्यात्कालकर्णिका॥
[13]कालकर्णी प्रयोक्तव्या द्रव्यलक्षणकर्मणि । कराभ्यामञ्जलिं कृत्वा मध्ये तु सुषिरं नयेत् ॥१२॥
सरोजमुकुलाकारा [14]मुकुली [15]द्रव्यसंचये । [16]तर्जन्यौ कुञ्चिते कृत्वा [17]त्वङ्गुष्ठाभ्यां समाक्रमेत्॥
शेषा ऋज्वीर्घनाः कृत्वा [18]मणिबन्धे नियोजयेत् । [19]शशकर्णीति विज्ञेया सर्वेषामृद्धिकारिणी॥
१४ ॥

---

[1] C, D : नालमुद्रा
[2] A : चावाही pour वाराही
[3] A, C : त्रासनी
[4] D : इति pour इमाः
[5] Cf. *Yogajāgama*, 8, 1a : हस्ताभ्यां ताडयेत्तालं शोधयेच्छोधिनी भवेत् ।
cf. *Suprabhedāgama*, I, 9, 9 :
पाणिमूले तु संलग्नौ हृद्देशे तु परस्परम् । कृत्वैवं ताडयेत्पाणी मुद्रेयं शोधनी भवेत् ॥
[6] A lit मणिबन्धौ तु संलग्नौ हृद्देशे तु परस्परम् । कृत्वैव ताडयेत्पाणि मुद्रेयं शोधनी भवेत् au lieu des *śloka* 9 et 10a
[7] E : संलग्नोपरि कृत्वा जनार्दन
[8] B पार्रीकृत्वा : C, D : पार्णि कृत्वा
[9] B : ततः क्रमात् ; E : ततः परम्
[10] C, D, E : मुष्टिं pour मुष्टी
[11] Les mss. corrompus ; corrigé après *Suprabhedāgama*, I, 9, 33 ; A : तत गुलि योजयेत् ; B, E : ततनङ्गुलि योजयेत् ; C : तानङ्गुलिं योजयेत् ; D : ततनङ्गुलि योजयेत्
[12] E omet les *śloka* 11b, 12 et 13a
[13] Cf. *Suprabhedāgama*, I, 9, 33 :
कृत्वा मुष्टिं ततोत्ताने तदा नाङ्गुलियोजिते । अङ्गुष्ठाग्रौ च संलग्नौ कालकर्णी तु दर्शयेत् ।
[14] Cf. *Kāraṇāgama*, I, 28, 12b-13a :
संयोज्यं तेन हस्ते तु चान्तरे सुषिरं तयोः । बिसिनीमुकुलाकारा स्मानान्ते तु प्रदर्शयेत् ॥
cf. *Vīrāgama*, 33, 11 :
द्वौ हस्तावेकदा कृत्वा मध्ये सुषिरमुच्यते । सरोजमुकुलाकारं मुद्रेयं मुकुली भवेत् ॥
cf. *Svāyambhuvāgama*, 13, 6 :
द्वौ हस्तावेकतः कृत्वा मध्ये च सुषिरं तयोः । सरोजमुकुलाकारां मुकुलीं तु प्रदर्शयेत् ॥
[15] A : यद्द्रव्यसंचये
[16] A : तर्जनी कुञ्चितौ कृत्वा
[17] A omet तु
[18] C : मणिबन्धेन योजयेत्
[19] Cf. *Suprabhedāgama*, I, 9, 18-19 :
तर्जन्यौ कुञ्चिते चैव तयोरग्रे निधापयेत् । द्वयोरङ्गुष्ठयोरसि तेषां मध्यघनाः समाः ॥
कृत्वा तु मणिबन्धे तु वामे सव्यं तथा न्यसेत् । मुद्रेयं शशकर्णी तु विज्ञेया योगकर्मणि ।

[ निष्ठुरा[1], पद्मा च ]

[2]मणिबन्धे च संविष्टौ करौ कृत्वा ततस्तयोः । [3]अङ्गुष्ठौ गर्भगौ[4] कृत्वा मुष्टिबन्धे कृते सति ॥
निष्ठुरेयं भवेन्मुद्रा सर्वेषां तु निरोधने । [5]पूर्वोक्तमुकुली या तु सा हृद्देशे निवेशिता ॥ १६ ॥
[6]व्याकोचकमलाकारा[7] [8]विश्लिष्टप्रसृताङ्गुलिः । [9]पद्ममुद्रा भवेदेषा [10]प्रोक्ता [11]ह्यामनकल्पने॥१७॥

[ [12]नमस्कारा, मनोरमा च ]

हस्ताभ्यामञ्जलिं कृत्वा [13]हृद्देशे तु समाश्रिताम् । अङ्गुष्ठेन तु सव्येन वामाङ्गुष्ठं तु पीडयेत्॥१८॥
नमस्कारा भवेदेषा सर्वेषां वन्दनोचिता । [14]अङ्गुलीवलनं[15] कृत्वा हस्तयोरुभयोरपि ॥ १९ ॥
[16]कनिष्ठिके तु संयुक्ते [17]कृतोत्ताने तथा बहिः । [18]वामे कृत्वा तले [19]लग्नं [20]कृत्वा चानामिकाद्वयम्॥

---

[1] Cf. *Kāraṇāgama*, I, 28, 14b-15a et *Yogajāgama*, 8, 8 :
मुष्टिं कृत्वा तु हस्तौ तु करपृष्ठे तु योजयेत् । कनिष्ठौ विसृतौ दीर्घौ निष्ठुरा संनिरोधने ॥

[2] B, C, D. E : मणिबन्धौ सुसंश्लिष्टौ

[3] Les *śloka* 15b à 35 manquent dans le ms. D

[4] D : अङ्गुष्ठगर्भगौ

[5] B, C : पूर्वोक्ता मुकुली

[6] A : व्याकोश pour व्याकोच

[7] E : आकारौ pour आकारा

[8] B : विसृष्टाः pour विश्लिष्ट ; C : विश्लिष्टा

[9] Cf. *Kāraṇāgama*, I, 28, 37b-38 :
उत्तानौ तु करौ कृत्वा त्वेणीबन्धं तु कारयेत् । मध्यमे कुञ्चिताङ्गुष्ठौ शेषाः प्रविरलास्तथा ॥
पद्ममुद्रा भवेदेषा ”
cf. *Svāyambhuvāgama*, 13, 10 :
पूर्वोक्तमुकुली या तु हृद्देशे निस्सृताङ्गुलिः । व्याकोचकमलकारां पद्ममुद्रां प्रदर्शयेत ॥

[10] C : प्रोक्तं pour प्रोक्ता

[11] B : ह्यासनकल्पने

[12] Cf. *Kāraṇāgama*, I, 28, 8b-9a :
मणिबन्धौ तु संयोज्य चाङ्गुल्योश्चोर्ध्वगाः क्रमात् । संनिवेश्य हृदि स्थाने नमस्कारेति चोच्यते ॥
cf. *Suprabhedāgama*, I, 9, 35-36a :
सतताङ्गलिसंलग्नौ हस्तौ हृद्देशमाश्रितौ । सर्वेषां बन्धनं कार्यं वामाङ्गुष्ठनिपीडनम ॥
नमस्कारेति विज्ञेया सर्वकर्मणि कारयेत् ।

[13] A : हृद्देशेषु

[14] Cf. *Suprabhedāgama*, I, 9, 24b-27a :
वलितं हस्तयोः कार्यमुत्तानौ तु कनिष्ठकौ । तयोर्वामावलिर्ज्ञेया वलिते मध्यमेऽपि च ॥
कुञ्चितेऽनामिकाग्रे च स्वपाणितलयोजिते । दर्शिन्यौ प्रसृतौ कृत्वा तयोरग्रे नियोजयेत् ॥
अङ्गुष्ठौ मूलपर्वस्थौ तयोरेव हि कुञ्चितौ । मनोरमेति विख्याता शिवसायुज्यदायिका ॥

[15] A : चलनं pour वलनं

[16] E : कानिष्ठिके

[17] C : कृतोत्तानेन यो बहिः : E : कृतोत्तानो तयो त्वभिः

[18] A : वामां pour वामे

[19] A : लग्नौ

[20] E : कृत्वा कुर्यान्मनोरमाम्

मध्यमे प्रसृते युक्ते कृत्वा [1]तद्देशिनीद्वयम्[2] । अङ्गुष्ठमूलपर्वस्थं[3] कृत्वाङ्गुष्ठद्वयं [4]तथा ॥ २१ ॥
अनामिकापृष्ठलग्नं[5] कृत्वा कुर्यान्मनोरमाम् । पूजकेन प्रयोक्तव्या शिवसायुज्यकर्मणि॥ २२ ॥

[ शान्ता[6] ]

कुर्यादङ्गुष्ठलग्नाग्रां[7] तर्जनीं[8] हस्तयोर्द्वयोः । एषा शान्तेति विख्याता मन्त्रस्थापनकर्मणि ॥२३॥

[ लिङ्गमुद्रा[9] ]

शिथिलं [10]दक्षिणां मुष्टिं बध्वा तस्योदरे[11] क्षिपेत् । [12]वामाङ्गुष्ठं ततोऽङ्गुष्ठं दक्षिणं चोच्छ्रितं नयेत्॥
वामहस्ताङ्गुलीभिश्च सव्यमुष्टिं च वेष्टयेत । [13]लिङ्गमुद्रा भवेदेषा लिङ्गस्थापनकर्मणि ॥ २५ ॥

[ ध्वजा[14] ]

[15]वामहस्ततले [16]हस्ततलमन्यं प्रयोजयेत् । वामहस्ताङ्गुलीभिस्तु तत्पृष्ठमभिवेष्टयेत ॥ २६ ॥
अङ्गुष्ठं वामहस्तस्य[17] [18]दक्षिणेनाथ पीडयेत् । दक्षिणस्याङ्गुलीरन्याः[19] श्लिष्टास्तिर्यगवस्थिताः[20]॥
चालयेद् ध्वजसंज्ञैषा[21] मुद्रा वायोः प्रियावहा ।

[ आवाहनी[22] ]

हस्ताभ्यामञ्जलिं कृत्वा संमुखं तु तयोः पुनः ॥ २८ ॥
[23]कनिष्ठामूलगे तत्तदङ्गुष्ठाग्रे च कारयेत् । आवाहनी [24]भवेदेषा मुद्रावाहनकर्मणि ॥ २९ ॥

---

[1] B, E : तद्दर्शनी [2] E : स्वयम pour द्वयम् [3] E : सर्वस्थं pour पर्वस्थं
[4] B, E: ततः pour तथा [5] A : संलग्नं pour लग्नं
[6] Cf. *Suprabhedāgama*, I, 9, 23a : तर्जन्यङ्गुष्ठलग्नाग्रा शान्तेयं संप्रकीर्तिता
[7] A : लग्नाग्रा pour लग्नाग्रां ; B : लग्नान्तं ; E : लग्नं तत् [8] A : तर्जनीहस्तयोरपि
[9] Cf. *Kāraṇāgama*, I, 28, 7b-8a :
अङ्गुष्ठं चोर्ध्वगं मुष्टिं कृत्वा वामेन वेष्टयेत् । लिङ्गमुद्रा तु विख्याता प्रच्छन्नेति प्रदर्शयेत् ॥
[10] B, E : दक्षिणामुष्टिं [11] B. E : उत्तरे pour उदरे
[12] A : वामाङ्गुष्ठा ततोङ्गुष्ठं [13] E omet ce demi-*śloka*
[14] Cf. *Rauravāgama*. vol. I, p. 175, 41. 8b-9a et note 4.
[15] E omet ce *śloka* 26 [16] C : हस्ततलमन्यत्प्रयोजनम
[17] A : हस्ताभ्यां pour हस्तस्य [18] A : दक्षिणे पीडयेत्ततः
[19] B, E: रम्याः pour अन्याः [20] B, C, E : व्यवस्थिताः pour अवस्थिताः [21] A: संज्ञेया pour संज्ञैषा
[22] Cf. *Suprabhedāgama*, I, 9, 23b-24a :
हस्तावुत्तानकौ कृत्वा कन्यसेऽङ्गुष्ठकौ न्यसेत । मूलपर्वे समौ कृत्वा मुद्रैषावाहनी स्मृता ॥
cf. *Kiraṇāgama*, II, 3, 6b-7a :
उत्तानौ तु करौ कृत्वा अङ्गुष्ठौ तलमध्यगौ । आवाहिनी त्वियं ख्याता मुद्रावाहनकर्मणि ॥
[23] A : कनिष्ठमूलगौ [24] A : भवेन्मुद्रा वेश्यावाहनकर्मणि ; B : भवेत्तेषां मुद्रावाहनकर्मणि

[ [1]स्थापनी, निरोधिनी च ]

स्थापनी [2]सैव निर्दिष्टा प्रयुक्ताधोमुखं [3]यथा । [4]शोधिनी [5]निष्ठुरैव स्यात्सर्वेषां तु [6]निरोधिनी ।।

[ संनिधीकरणी[7] ] ३० ।।

[8]शोधिनी [9]सैव संश्लिष्टोच्छ्रिताङ्गुष्ठा यदा भवेत् । सैव स्यात्संनिधानी च संनिधीकरणोचिता ।।

[ गायत्री[10] ] ३१ ।।

[11]करयोः सुषिरोपेता मुष्टिबन्धे कृते सति । [12]गायत्रीयं भवेन्मुद्रा [13]गायत्र्यां [14]तां प्रयोजयेत् ।।

[ नेत्रा[15] ] ३२ ।।

या शान्तेति पुरा प्रोक्ता सैव [16]नेत्रा त्वधोमुखी । दर्शने तु प्रयोक्तव्या सर्वेषां तु जनार्दन ।।

[ अस्त्रा[17] ] ३३ ।।

[18]करयोः शिथिलां मुष्टिं [19]कृत्वाङ्गुल्यः प्रसारिताः । सहसा तु [20]भवेदेषा मुद्रास्त्रा [21]चास्त्रकर्मणि ।।

---

[1] Cf. *Kiraṇāgama*, II, 3, 9b : मुष्टिं बध्वोर्ध्वनोऽङ्गुष्ठौ कृत्वेयं स्थापिनी भवेत् ॥

[2] B, C, E : सर्व pour सैव

[3] B, E : तथा pour यथा

[4] C, E : शोधनी pour शोधिनी

[5] C : निष्करैव

[6] A : निरोधनी

[7] Cf. *Mudrānighaṇṭu*, Ś1. 27 : उच्छ्रिताङ्गुष्ठमुष्ट्योश्च संयोगात्संनिधापनी ।

[8] C, E : शोधनी pour शोधिनी

[9] B, E : सर्व pour सैव

[10] Cf. *Suprabhedāgama*, I, 9, 31-32 :
अन्योन्यान्तरगाः सर्वाः करपृष्ठाग्रयोजिताः । अङ्गुष्ठाङ्गुलयः कुर्यात्सुषिरं तत्करान्तरे ॥
पूजाकर्मणि गायत्रीं गायत्र्यां तु प्रयोजयेत् ।

[11] A : कारयेत् pour करयोः

[12] A : गायत्री त्रितयं त्वेवं

[13] A, B, E : गायत्र्या pour गायत्र्यां

[14] A : तत् pour तां

[15] Cf. *Dīptāgama*, 70, 50 :
उत्तानौ तु करौ कृत्वा तर्जन्यङ्गुष्ठसंयुतौ । शेषा ऋजुघनाश्चैव नेत्रमुद्रेति कीर्तिता ॥
cf. *Vīrāgama*, 33, 28-29a :
उत्तानौ तु करौ कृत्वा मणिबन्धं तु कारयेत् । तर्जनीं मध्यमां चैव अधोमुखं तु कारयेत् ॥
अङ्गुष्ठौ द्वौ तु संगोप्य नेत्रमुद्रा प्रकीर्तिता ।

[16] A : नेत्रमधोमुखी

[17] Cf. *Kāraṇāgama*, I, 28, 43b-44a :
उत्तानौ तु करौ कृत्वा हस्तयोस्तत्परस्परम् । अङ्गुष्ठतर्जनीभ्यां तु स्फोटनं चास्त्रमुद्रिका ॥
cf. *Vīrāgama*, 33, 29b-30a :
द्वौ हस्तौ च प्रसार्याथ कनिष्ठाङ्गुष्ठकान्वितौ । अस्त्रमुद्रा भवेदेषा सर्वशत्रुविमर्दिनी ॥
cf. *Suprabhedāgama*, I, 9, 5 :
द्वौ मुष्टी संहतीकृत्वा शीघ्रं हस्तौ प्रसारयेत् । अस्त्रमुद्रेति विख्याता सर्वेषां तु भयंकरी ॥
cf *Svāyambhuvāgama*, 13, 23 :
द्विमुष्टिं सहितं कृत्वा शीघ्रं हस्तौ प्रसारयेत् । अस्त्रमुद्रेति विख्याता सर्वेषां तु भयंकरी ॥

[18] A : कारयेत् pour करयोः

[19] A : कृत्वाङ्गुल्यप्रसारितः

[20] B : भवेत्तेषां

[21] B, E : शस्त्र pour चास्त्र

[ मुधा, अथवा धेनुः[1] ]

[2]द्वयोस्तु [3]वलिताः कृत्वाङ्गुलीः[4] सर्वाः परस्परम् । कनिष्ठानामिके ऊर्ध्वं [5]देशिनी मध्यमे तथा॥
[6]अङ्गुष्ठौ मध्यगौ कृत्वा मुद्रेयं धेनुसंज्ञिता । अमृतीकरणे योग्या द्रव्याणां यज्ञकर्मणि॥३६॥

[ पञ्चमुखी [7]]

वलिताः पृष्ठतः [8]सर्वाश्चाङ्गुल्यस्तु परस्परम् । [9]अङ्गुष्ठाभ्यां कनिष्ठाग्रान्त्क्रामे मध्यमे तथा॥३७॥
तर्जनीभ्यां समाक्रम्यानामिके [10]चोछ्रिते उभे । एषा पञ्चमुखी ख्याता वक्त्रकल्पे प्रयोजिता

[ [11]संहतिः, वज्रा च ] ३८ ॥

[12]विश्लिष्टाङ्गुलिके हस्ते क्रमादङ्गुष्ठमूलगाः[13] । कनिष्ठानामिकामध्यातर्जन्यः [14]संहतिर्भवेत॥३९॥

[1] Cf. *Kāraṇāgama*, I, 28, 11-12a :
मणिबन्धं ततः कृत्वा चाङ्गुष्ठौ तलमध्यगौ । तर्जनीमध्यमे लग्ने कनिष्ठाभ्यामनामिके ॥
मुद्रेयं सुरभिः ख्याता द्रव्यशुद्ध्यर्थकारिणी ।
cf. *Kiraṇāgama*, I, 3, 4-5a :
अङ्गुल्यश्च मिथः कृत्वा कन्यकेऽनामिके युते । मध्यमे तर्जनीयुक्ते अङ्गुष्ठौ मूलपर्वगौ ॥
कृत्वेयं धेनुमुद्राख्या दिव्या चामृतवर्षिणी ।
cf. *Kālottarāgama*, 13, 75b-76 :
उत्तानौ तु करौ कृत्वा समौ श्लिष्टौ परस्परम । मध्यमा तर्जनीगोप्या कनिष्ठानामिका तथा ॥
अङ्गुष्ठौ द्वौ प्रसार्याथ सुरभिमुद्रा प्रकीर्तिता ।

[2] A omet les *śloka* 35 et 36 [3] C : वलितां ; E : चलितां
[4] E : अङ्गुल्यः pour अङ्गुली: [5] E : देशिनी मध्यमा तथा
[6] C : अङ्गुष्ठौ मध्यमौ ; E : अङ्गुष्ठमध्यगौ
[7] Cf. *Kāraṇāgama*, I, 28, 16b-17 :
द्वौ हस्ततलिकौ योज्य मध्याङ्गुल्यग्रसंयुतौ । तर्जन्यानामिके योज्ये चाङ्गुष्ठाभ्यां कनिष्ठके ॥
इयं पञ्चमुखी ख्याता दर्शयेद्वक्त्रकर्मणि ।
cf. *Kiraṇāgama*, II, 3, 2-3 :
कृत्वान्योन्यगताङ्गुल्यो: पृष्ठतो हस्तयोर्द्वयो: । तिर्यक्स्थौ कन्यसौ कृत्वा ह्यङ्गुष्ठाभ्यां समाक्रमेत ॥
देशिनीमध्यमे मद्ध्येऽनामिके चोच्छ्रितेऽङ्गुले । कृत्वा पञ्चमुखी ख्याता मुद्रेयं शंकरस्य तु ।
[8] B : सर्वा अङ्गुल्यस्तु ; C : सर्वमङ्गुल्यास्तु
[9] B : अङ्गुष्ठानां pour अङ्गुष्ठाभ्यां ; C : अङ्गुष्ठाग्राभ्यां
[10] A omet च dans चोच्छ्रिते
[11] Cf. *Vīrāgama*, 33, 16b-17a :
प्रसार्य दक्षिणं हस्तमङ्गुष्ठं चोर्ध्वसंयुतम् । मुष्टिं कृत्वा तु विप्रेन्द्र एषा संहार उच्यते ॥
cf. *Suprabhedāgama*, I, 9, 10
प्रसार्य दक्षिणाङ्गुल्यस्त्वङ्गुष्ठं मूर्ध्नि संस्थितम । मुष्टिवत् सततं कृत्वा ह्येषा संहारिणी स्मृता ।
[12] A : विशिष्ट pour विश्लिष्ट [13] A : मूलका pour मूलगा: [14] A : सहृदिर्भवेत

[1]विसर्जने तु सर्वेषां योक्तव्या मन्त्रवित्तमैः । [2]कनिष्ठां [3]करयोस्तत्तदङ्गुष्ठाभ्यां समाक्रमेत् ॥ ४० ॥
[4]शेषाश्चैव स्थिराः [5]श्लिष्टाः कृत्वा तन्मणिबन्धकौ । [6]वामेतरावधोर्ध्वस्थौ[7] तिर्यक्स्थौ च प्रकल्पयेत् ॥
वज्रमुद्रा भवेदेषा [8]वज्रकल्पौ प्रयोजिता ।

[ शक्तिः[9], दण्डा, खड्गा च ]

[10]सैवोक्ताङ्गुलिविश्लेषाच्छक्तिमुद्रा प्रकीर्तिता ॥ ४२ ॥
[11]शक्तिमुद्रा भवेदेषा [12]वह्नेः प्रीतिकरी सदा । [13]उद्धते दक्षिणे मुष्टौ[14] [15]तर्जन्यन्तरिते कृते ॥ ४३ ॥
[16]दण्डाख्या सा यमस्यैषा सदा प्रीतिकरी [17]स्मृता । [18]पाणी [19]परस्परं श्लिष्टौ कृत्वा सर्वाङ्गुली-
युतौ[20] ॥ ४४ ॥

---

[1] A : विसर्जनेषु सर्वेषु
[2] Cf. *Kāraṇāgama*, I. 28, 28-29a :
उत्तानौ तु करौ कृत्वा कनिष्ठाङ्गुष्ठसंयुतम् । तर्जन्यनामिका मध्या प्रसृता च तथा भवेत् ॥
मध्योपरि स्थिता या च वज्रमुद्रा प्रकीर्तिता ।
cf. *Vīrāgama*, 33, 34 :
उत्तानौ तु करौ कृत्वा कनिष्ठाङ्गुष्ठपीडितौ । उभौ परस्परं हस्तौ वज्रमुद्रा "
[3] A : कारयेतत्र अङ्गुष्ठाभ्यां [4] A : तेषां चैव pour शेषाश्चैव [5] D : शिष्टाः pour श्लिष्टाः
[6] A : वामेकारायवौर्ध्वस्तौ ; B, D : वामेतरावधोर्ध्वस्थौ
[7] La forme grammaticale correcte est अध ऊर्ध्वस्थौ pour अधोर्ध्वस्थौ
[8] A : यज्ञ pour वज्र
[9] Cf. *Kāraṇāgama*, I, 28, 29b-30 :
उत्तानौ तु करौ कृत्वा चाङ्गुष्ठौ तलमध्यगौ । शेषाः परस्परं श्लेष तर्जनी प्रसृतौ युतौ ।
शक्तिमुद्रेति विख्याता "
cf. *Suprabhedāgama*, I, 9, 20 :
तर्जनीं कुञ्चयेदेकामङ्गुष्ठं तु तथा पुनः । शक्तिमुद्रेति विख्याता शक्तीनां च प्रकल्पयेत् ॥
[10] B : सैवोक्ताङ्गुलशेषाच [11] E : शक्तिमुद्राकरी ह्येषा [12] A : वह्नौ तु प्रीतिकारिणी
[13] Cf. *Kāraṇāgama*, I, 28, 30b-31a :
" मुष्टिं कृत्वा तु दक्षिणम् । तर्जनी प्रसृतौ दीर्घौ दण्डेयं परिकीर्तिता ॥
[14] A : मुष्टिः pour मुष्टौ [15] A : तर्जन्यान्तरिते
[16] A : दण्डाख्यायां तु मुद्रैषा [17] A : शुभा pour स्मृता ; E : सदा
[18] Cf. *Lipṭāgama*, 70, 37b-38a :
उत्तानौ तु करौ कृत्वा युभौ श्लिष्टौ परस्परम् । प्रसार्य तर्जनी द्वौ तु शेषा मुष्टिस्त्वसिर्मता ॥
cf. *Vīrāgama*, 33, 37b-38a :
उत्तानौ तु करौ कृत्वा तर्जनी द्वे च तिष्ठतः । शेषा मुष्टिं तु संबध्वा खड्गमुद्रा स्मृता ततः ॥
cf. *Kāraṇāgama*, I, 28, 31b-32a :
पताकादक्षिणं कृत्वा बाह्योच्चचलनं तथा । खड्गमुद्रेति विख्याता पूजादौ तु प्रदर्शयेत् ॥
[19] C, D : परस्परश्लिष्टौ ; E : परस्परौ श्लिष्टौ [20] A : युतम् pour युतौ

[1]दक्षिणस्योन्नतश्लिष्टौ तर्जनीमध्यमे [2]उमे । खड्गमुद्रा भवेदेषा छेदने निर्ऋतिप्रिया ॥४५॥

[ पाशाख्या[3], अङ्कुशाख्या, गदा च ]

हस्तयोस्तर्जनीयुग्ममङ्गुष्ठाभ्यां तु वेष्टयेत् । [4]शेषाः प्रसारयेत्सर्वा [5]त्रिश्लिष्टाः पाशसंज्ञिता॥४६॥

बन्धने तु प्रयोक्तव्या वरुणप्रीतिदा सदा । [6]मुष्टिबन्धे कृते हस्ते [7]दक्षिणे तु [8]समुद्धृते ॥४७॥

[9]विसृज्योर्ध्वस्थिते कृत्वा तर्जनी मध्यमे [10]उभे । [11]श्लिष्टाभ्यां कुञ्चयेत्ताभ्यां तर्जनीमङ्कुशा[12] भवेत्॥

एषा [13]ह्याकर्षणे प्रोक्ता वायुप्रीतिकरा सदा । [14]उच्छ्रिते दक्षिणे हस्ते मुष्टिबन्धे कृते सति॥४९॥

तिर्यक्चलनसंयोगान्मुष्टेर्मुद्रा गदा भवेत्[15] । सोमप्रीतिकरी मुद्रा सर्वाप्यायनकर्मणि ॥५०॥

[ शूलमुद्रा[16] ]

हस्ताभ्यामञ्जलिं कृत्वा [17]कुञ्चितेऽथ कनिष्ठके । वामाङ्गुष्ठं समाक्रम्य [18]दक्षिणेनेतराः समाः॥५१॥

---

[1] A : दक्षिणस्योन्नतं श्लिष्टौ ; E : दक्षिणस्योन्नते श्लिष्टौ [2] A : शुभे pour उभे

[3] Cf. *Dīptāgama*, 70. 38b-40a :

उत्तानौ तु करौ कृत्वा मुष्टिं बध्वा विशेषत. । प्रसार्याङ्गुष्ठतर्जन्यौ बध्वा चोर्ध्वे प्रदर्शयेत् ॥
इतराङ्गुष्ठतर्जन्याविनराङ्गुष्ठयोगत: । पाशमुद्रा भवेदेषा पाशच्छेदनहेतुना ॥

cf. *Kāraṇāgama*, I, 28, 32b-34a :

उत्तानौ तु करौ कृत्वा मुष्टिं बध्वा विशेषत: । प्रसार्य चाङ्गुष्ठतर्जन्यावधश्चोर्ध्वं प्रयोजयेत् ॥
इतराङ्गुष्ठतर्जन्यावितराङ्गुष्ठयोगत: । पाशमुद्रा भवेदेषा पाशच्छेदनहेतुका ॥

[4] A : शेषान् प्रसारयेत्सर्वान्

[5] A : त्रिश्लिष्टामपसंज्ञिता ; C : त्रिश्लिष्टा: पादसंज्ञिताम् ; D : त्रिश्लिष्टा: पादसंमितम्

[6] Cf. *Dīptāgama*, 70, 40b-41a :

उत्तानौ तु करौ कृत्वा तर्जनी कुञ्चिता भवेत् । शेषा ऋजुघनाश्चैव स्याङ्कुशाख्या उदाहृता ॥

cf. *Kāraṇāgama* : I, 28, 34b-35a :

उत्तानौ तु करौ कृत्वा कुञ्चिता वामतर्जनी । प्रसार्य तर्जनीं सव्यां न्यस्य वा मुष्टिं यथाङ्कुशा ॥

[7] A : दक्षिणां तु [8] B . समुच्छ्रिते

[9] C, E : विसृज्योर्ध्वं स्थिते [10] A : शुभे pour उभे

[11] D : शिष्टाभ्यां pour श्लिष्टाभ्यां [12] A : अङ्कुशो pour अङ्कुशा

[13] C : व्याकर्षणे pour ह्याकर्षणे ; D : वाकर्षणे

[14] Cf. *Kāraṇāgama*, I, 28, 35b-36a :

उत्तानौ तु करौ कृत्वा मध्यमौ प्रसृतौ युतौ । अन्या वक्रा: समायुक्ता गदाख्येयं प्रकीर्तिता ॥

[15] A : मुष्टिमुद्रा कृता भवेत्

[16] Cf. *Kāraṇāgama*, I, 28, 36b-37a :

द्विहस्ताङ्गुलयश्चोर्ध्वं मध्यतर्जन्यनामिका: । कनिष्ठाङ्गुष्ठकालग्नौ मुद्रेयं शूलसंज्ञका ॥

cf. *Vīrāgama*, 33, 35 :

दक्षिणे च प्रसार्यान्या: कनिष्ठाङ्गुष्ठगोपिता । शूलमुद्रा भवेदेषा सर्वशत्रुविमर्दनी ॥

[17] D : कुञ्चितेति [18] A : दक्षिणेन तरा: समा:

तर्जन्यनामिकामध्याः[1] संयुक्तास्तु परस्परम् । [2]विश्लिष्टाः [3]शूलमुद्रेयं सर्वदुष्टभयंकरी ॥५२॥

[चक्रा[4]]

बध्वा तौ पद्मवत्पाणी चक्रा [5]स्यादृक्रमणात्तयोः । सेनास्तम्भे प्रयोक्तव्या विष्णुप्रीतिकरी[6] सदा॥

[पद्माख्या] ५३ ॥

पद्ममुद्रेति [7]या प्रोक्ता [8]पद्माख्या सैव कीर्तिता । सृष्टिकर्मणि निर्दिष्टा ब्रह्मप्रीतिकरी[9] सदा॥

[द्रव्यमुद्रा[10]] ५४ ॥

अनामिकामूलपर्वे[11] कृत्वा चाङ्गुष्ठसंगतिम् । द्रव्यमुद्रा भवेदेषा [12]हीनद्रव्यस्य पूरणी ॥५५॥

[करकच्छपिका[13]]

वाम[14]पाणितलोर्ध्वे तु दक्षहस्तं तु योजयेत् । तिर्यक्स्थं संपुटं कृत्वा [15]सर्वाङ्गुल्यः सुसंगताः॥५६॥
करशुद्धौ विधातव्या [16]करकच्छपिका सदा ।

---

[1] E : मध्य pour मध्याः [2] D : विशिष्टा pour विश्लिष्टाः [3] A : कुल pour शूल

[4] Cf. *Kāraṇāgama*, I, 28, 38b-39a :

"तलोपरि तलं न्यसेत् । कनिष्ठाङ्गुष्ठमुव्यक्तौ चक्रमुद्रा प्रकीर्तिता ॥

cf. *Mudrānighaṇṭu*, śl. 40-41a :

हस्तौ तु संमुखौ कृत्वा सन्नतप्रोत्थिताङ्गुली । तलान्तमिलिताङ्गुष्ठौ सभुग्नौ सुप्रसारितौ ॥
कनिष्ठाङ्गुष्ठकौ लग्नौ मुद्रैषा चक्रसंज्ञका ।

cf. *Mudrāvidhi*, p. 32 :

वामहस्ततले दक्षिणहस्तमूलं संनिवेश्य कराग्राणि विरलीकृत्य प्रसारयेदिति चक्रमुद्रा प्रतिष्ठादौ दुष्टोच्चाटने च सर्वदोषनिवारणे च"

[5] C : स्याद्धरणात्तयोः [6] A : करा pour करी [7] B : वा pour या

[8] A : पद्मात्रा pour पद्माख्या ; C, D : पद्मात्र ; E : पद्मा सैव प्रकीर्तिता

[9] A : करा pour करी

[10] Cf. *Suprabhedāgama*, I, 9, 15 :

कृत्वाञ्जलिं कराभ्यां तु अङ्गुष्ठानामिकान्वितम । प्रसारयेत्ततः सैषा मुद्रेयं द्रव्यरूपिणी ॥

[11] B : पूर्वे pour पर्वे [12] A : हीनं द्रव्यप्रपूरणी

[13] Cf. *Tantrasāra* (cité dans le *Śabdakalpadruma* sous कूर्ममुद्रा) :

वामहस्तस्य तर्जन्यां दक्षिणस्य कनिष्ठया । तथा दक्षिणतर्जन्यां वामाङ्गुष्ठेन योजयेत् ॥
उन्नतं दक्षिणाङ्गुष्ठं वामस्य मध्यमादिकाः । अङ्गुलीर्योजयेत्पृष्ठे दक्षिणस्य करस्य च ॥
वामस्य पितृतीर्थेन मध्यमानामिके तथा । अधोमुखे च ते कुर्याद्दक्षिणस्य करस्य च ॥
कूर्मपृष्ठसमं कुर्याद्दक्षपाणिं च सर्वतः । कूर्ममुद्रेयमाख्याता देवताध्यानकर्मणि ॥

[14] B, C, D, E : पाद pour पाणि

[15] B, C : सर्वाङ्गुल्या सुसंहताः ; D : सर्वाङ्गुल्या तु संहताः

[16] A : करकश्चिका ; B : करकच्छविधा ; E : करकच्छलिका

[नाराचास्त्र[1]]

कृत्वा दक्षिणहस्तेन मुष्टिं दृढतरं [2]तथा ॥ ५७ ॥
अङ्गुष्ठाग्रेण तर्जन्याः[3] सम्यगग्रं निपीड्य च । [4]प्रक्षिपेत्तर्जनीं [5]भेदे यथा [6]शब्दोदयो भवेत्॥५८॥
[7]नाराचास्त्रमसमाख्येयं मुद्रा दिग्बन्धकर्मणि ।

[मृगी[8]]

दक्षिणाङ्गुष्ठशिरसि मध्यमानामिके उभे ॥ ५९ ॥
संयोज्य दर्शयेन्मुद्रां [9]मृगी गोवृद्धिकारिणी ।

[महामुद्रा[10]]

अधोमुखाभ्यां [11]पाणिभ्यामापादान्मस्तकान्तकम् ॥ ६० ॥
[12]क्रमात्संस्पर्शनादेषा महामुद्रा प्रकीर्तिता[13] ।

[शङ्खमुद्रा[14]]

अपसव्यं पुटं कृत्वा दक्षिणस्य करस्य तु ॥ ६१ ॥

---

[1] Cf. *Mudrānighaṇṭu*, śl. 35 :
नाराचमुष्ट्युद्धृतबाहुयुग्मकाङ्गुष्ठतर्जन्युदितो ध्वनिस्तु । विघ्नविपक्षः कथितास्त्रमुद्रा ''
cf. *Mudrāvidhi*, p. **49** :
दक्षिणाङ्गुष्ठेन तर्जनीमध्यमे समाक्रम्य पुनर्मध्यमामोक्षणेन नाराचमुद्रा, दुष्टरिपुनिग्रहे प्रतिष्ठायां दृग्दोष-निवारणे च ''

[2] A : ततः pour तथा [3] A : तर्जन्या pour तर्जन्याः

[4] A : निक्षिपेत् pour प्रक्षिपेत् [5] B, E : श्वेते pour भेदे [6] A : शब्दोदये pour शब्दोदयो

[7] A : नाराचास्त्रं समाख्या या ; B, E : नाराचास्त्रमसमाख्यैवं

[8] Cf. *Mṛgendrāgama*, *kriyāpāda*, comm. de Bhaṭṭanārāyaṇakaṇṭha, p. 79 :
" उन्मुखकनिष्ठतर्जनीका पिण्डितमध्यानामिकाङ्गुष्ठा मृगी "
Cf. *Mudrānighaṇṭu*, śl. 74 :
मिलितानामिकाङ्गुष्ठे मध्यमाग्रं तु योजयेत् । शिष्टाङ्गुल्युच्छ्रिते कुर्यान्मृगमुद्रेयमीरिता ॥

[9] C : मृदं pour मृगी ; D : मुदं

[10] Cf. *Kāraṇāgama*, I, 28, 41 et *Dīptāgama*, **70, 54** :
हस्ताभ्यां संस्पृशेद्धीमान्कादिपादान्तकं यथा । एषा मुद्रा महामुद्रा करसंस्कारकर्मणि ॥
cf. *Suprabhedāgama*, I, 9, **8** :
हस्ताभ्यां संस्पृशेत्पादौ द्वौ हस्तौ मस्तके न्यसेत् । एषा मुद्रा महामुद्रा करसंस्कारपश्चिमे ॥

[11] A : पाणिभ्यां पादादामस्तकान्तकम् [12] E : कामात् pour क्रमात्

[13] Les *śloka* **61b** à **66** de cet *paṭala* et les *śloka* 1 à 35 de *paṭala* suivant (मड्होत्सवविधिपटल) manquent dans le ms. D.

[14] Cf. *Kāraṇāgama*, I, 28, 10 :
तर्जनीमूलपर्वस्थावङ्गुष्ठावञ्जलीकृतौ । एषा हि शङ्खमुद्रा स्यात्स्नानकाले प्रदर्शयेत् ॥

देशिन्यन्तं कनिष्ठायां [1]योजयेन्निम्नमङ्गुलीः । शङ्खमुद्रा भवेदेषा [2]त्वभिषेकविधौ परा [3]॥ ६२ ॥

[ तालमुद्रा[4] ]

दक्षिणाङ्गुलिभिर्वामहस्तस्य तलताडनात्[5] । अङ्गुष्ठवर्जिताभिः [6]स्यात् तालमुद्रा तु शुद्धिदा॥ ६३ ॥

[ वाराही[7] ]

मध्यानामिकयोरग्रे दक्षिणस्य करस्य तु । [8]अङ्गुष्ठोदरमायोज्य तर्जनीं च कनिष्ठिकाम् ॥ ६४ ॥
[9]उन्नमेच्च वराहाख्या मुद्रेयं शुद्धिकर्मणि ।

[ त्रासिनी[10] ]

तर्जनीमध्यमाभ्यां तु श्लिष्टाभ्यां दक्षिणस्य तु[11] ॥ ६५ ॥
वामहस्ततले कुर्यात्ताडनं[12] सकृदेव हि । [13]त्रासिनी स्यादियं मुद्रा त्रासने [14]परियोजिता॥ ६६ ॥

[15]इत्यजिताख्ये [16]महातन्त्रे [क्रियापादे] [17]मुद्रालक्षणविधिर्नाम
षड्विंशः पटलः ॥

---

[1] B, C, E : भाजयेद् pour योजयेद्  [2] A omet तु  [3] A : विधे पुरा pour विधौ परा

[4] Cf. *Kāraṇāgama*, I, 28, 9b : हस्ताभ्यां ताडयेत्तालमुद्रां कुर्यात्तु शोधने ।

[5] B : ताडनम् pour ताडनात्  [6] B, E : तु pour स्यात्

[7] Cf. *Mudrānighaṇṭu*, śl. 59-60 :
दक्षोपरि करं वामं कृत्वोत्तानमधः सुधीः । भ्रामयेदिति संप्रोक्ता मुद्रा वाराहसंज्ञिका ॥
दक्षहस्तं चोर्ध्वमुखं वामहस्तमधोमुखम् । अङ्गुल्यग्रं तु संयुक्तं मुद्रा वाराहसंज्ञिका ॥

[8] A : अङ्गुष्ठो मध्यमां योज्य : E : अङ्गुष्ठोदरमाविश्य

[9] A, C : उन्नमे च pour उन्नमेच्च

[10] Cf. Bhojadeva, cité dans le commentaire (*prabhā*) du *Kriyākramadyotikā*, p. 49 :
" बद्धमुष्टेर्दक्षिणहस्तस्य प्रसारिततर्जन्या वामहस्तताडनरूपा त्रासनी "

[11] B, C, E : च pour तु

[12] A : त्रासनं pour ताडनं  [13] B, C, E : सा त्रासिनी स्याद्धे मुद्रा

[14] B, C : परियोजयेत  [15] E : इत्यजिते pour इत्यजिताख्ये

[16] E omet महातन्त्रे

[17] A : मुद्रालक्षणविधिः सप्तविंशतितमः पटलः ; B, E : मुद्रालक्षणपटलः ; C : मुद्रालक्षणं नाम षड्विंशति-पटलः समाप्तः ।

## [सप्तविंशः पटलः]

## [[1]महोत्सवविधिः[2]]

[उत्सवशब्दार्थः[3]]

अथोत्सवविधिं वक्ष्ये सर्वलोकहितावहम् । [4]सवः कल्याणमित्युक्तं [5]सर्वजन्तुसुखावहम् ॥ १ ॥
[6]उद्भूतस्तु सवो [7]यस्मात्तस्मादुत्सव उच्यते[8] । नवप्रकारस्तस्यायं[9] क्रमाद्भेदो विधीयते ॥ २ ॥

[उत्सवभेदाः[10]]

[11]शैवो [12]गौणोऽथ भौतश्च [13]प्रथमत्रितयं भवेत् । भौवनश्च चतुर्थश्च [14]शाक्तः पञ्चम एव च ॥
रौद्रः षष्ठस्तथा सौरः सप्तमः परिकीर्तितः । अष्टमो मानवः प्रोक्तो नवमः पक्ष एव हि ॥ ४ ॥

---

[1] Pour le उत्सवविधि, voir *Kāmika* II, 6, *Kāraṇa* I, 141 et II, 24, *Candrajñāna* 21, *Dīpta* 83 à 97, *Makuṭa* 5, *Yogaja* pp. 171-243, *Raurava* vol. I, II, 18, *Vīra* 51, *Sahasra* 6, *Suprabheda* I, 14, *Sūkṣma* 13 et *Svāyambhuva* 37.

[2] Dans le ms. A, ce *paṭala* se trouve après le नीराजनविधिपटल (*paṭala* 24); voir page 294 note 2

[3] Cf. *Kāraṇāgama*, I, 141, 1-2a :
उत्सवस्य विधिं वक्ष्ये सर्वसिद्धिप्रदं शुभम् । सव इत्युच्यते सृष्टिस्तदुत्स्याच्छब्दभाषितम् ॥
उद्भूतसृष्टिकारत्वादुत्सवः कथितो मया ।

[4] A : सर्व pour सवः

[5] A : सर्वलोकहितावहम्

[6] A : उद्भूतस्तत्सवो ; B : उद्भूतस्तद्भवो

[7] B : प्रष्टात् pour यस्मात्

[8] E : उत्सवमुच्यते

[9] E : तत्प्रोक्तो pour तस्यायं

[10] Cf. *Sūkṣmāgama*, 13, 14 :
शैवं गौणं भौतिकं च भौवनं दैविकं तथा । पैतृकं चैव कौमारं सावित्रं चान्द्रमेव च ॥
cf. *Kāraṇāgama*, II, 24, 45b-47a :
"साकल्यं नवभेदकम् । सौरोत्सवं तु प्रथमं चान्द्रोत्सवं द्वितीयकम् ॥
सावित्रं चैव कौमारं दैविकं भौवनं स्मृतम् । भौतिकं गौणमित्युक्तं शैवं नवविधं भवेत् ॥
voir aussi *Rauravāgama*, vol. I, II, 18, 7-8 et note.

[11] A lit शैवो गौणोऽथ भौतश्च भौवनः शाक्त एव च । रौद्रः सौरस्तथा चैव मानवः पक्ष एव हि ॥ au lieu des *śloka* 3 et 4

[12] B : गौणकभूतश्च ; C : गुणोऽथ भूतश्च ; E : गौणं च भूतश्च

[13] B : प्रथमं त्रितयं भवेत्

[14] B : शक्तिः pour शाक्तः ; C : शक्तः

[1]एकाहस्तु[2] भवेच्छैवस्त्रियहो[3] गौण उच्यते । पञ्चाहो [4]भौत उद्दिष्टः सप्ताहो भौवनः स्मृतः ॥५॥
नवाहः [5]शाक्त इत्युक्तो रौद्र एकादशाहकः । [6]द्वादशाहस्तु सौरः स्यान्मानवः स्याच्चतुर्दश॥६॥
पक्षः पञ्चदशाहस्तु[7] नामान्येतानि [9]योगतः । [10]तीर्थार्थमुत्सवारम्भस्तस्मात्तीर्थर्क्षमुच्यते ॥ ७ ॥

[ तीर्थयोग्यानि नक्षत्राणि तिथयश्च[11] ]

चैत्रे [12]त्वाष्ट्रमुद्दिष्टं वैशाखे [13]शूर्पमुच्यते । ज्येष्ठे मूलमथाषाढे वैश्वदेवमिति स्मृतम् ॥ ८ ॥
श्रावणे तु[14]श्रविष्ठा स्यात्प्रोष्ठपदे त्वजैकपाद्[15] । [16]अश्विनी चाश्वयुङ्मासे[17] कार्तिके मासि कृत्तिका॥
[18]मार्गशीर्षे तथा मासे रौद्रनक्षत्रमुच्यते । बार्हस्पत्यं भवेत्पुष्ये माघे [19]पैत्रमिति स्मृतम्॥१०॥
फाल्गुने मासि चार्यम्णो नक्षत्रं [20]तीर्थभं भवेत् । मासर्क्षाण्येवमुक्तानि तीर्थार्थं तु जनार्दन॥११॥

---

[1] Cf. *Sūkṣmāgama*, 13, 15-17a :
शैवमेकाहमित्युक्तं त्रियहं गौणमुच्यते । पञ्चाहं भौतिकं प्रोक्तं सप्ताहं भौवनं स्मृतम ॥
नवाहं दैविकं प्रोक्तं रुद्राहं पैतृकं तथा । त्रयोदशाहं कौमारं पक्षं सावित्रमेव च ॥
चान्द्रं सप्तदशाहं स्यादुत्तमादिक्रमादिह ।
cf. *Kāmikāgama*, II, 24, 47b-49 :
सप्तविंशद्दिनं सौरं चान्द्रं सप्तदशाहकम् । पक्षं सावित्रमित्युक्तं कौमारं तु त्रयोदशम ।
नवाहं दैविकं प्रोक्तं सप्ताहं भौवनं स्मृतम । पञ्चाहं भौतिकं प्रोक्तं त्र्याहं गौणमुच्यते ॥
एकाहं शैवमित्युक्तमुत्तमादिक्रमान्तिकम् ।
voir aussi *Rauravāgama*, vol. I, II, 18, 9-10a :

[2] B, E : एकाहं तु

[3] La forme grammaticale correcte est त्र्यहो (pour त्रियहो).

[4] C : भूत pour भौत

[5] C : शक्त pour शाक्त

[6] B, C, E : द्वादशाहं तु

[7] B, E : पञ्चदशाहं तु

[9] A : कथ्यते pour योगतः

[10] A : तीर्थान्तम् pour तीर्थार्थम

[11] Cf. *Sūkṣmāgama*, 13, 9-11 :
पुष्यमासे तु पुष्यान्तं माघमासे मघान्तकम् । फाल्गुने चोत्तरान्ते तु चैत्रे चित्रान्तमुच्यते ।
वैशाखे तु विशाखान्तं मूलान्तं ज्येष्ठमासके । आषाढे चोत्तराषाढा श्रावणे श्रवणान्तिकम ॥
भाद्रे तन्मासऋक्षं तु चाश्वान्तश्चाश्वमासके । कार्तिके कृत्तिकान्तं हि शैवान्तं मार्गशीर्षके ॥
voir aussi *Rauravāgama*, vol. I, II, 18, 1-6 et note

[12] A : त्वाष्ट्रगमुद्दिष्टं ; E : त्वाष्ट्रम उद्दिष्टः

[13] C : धूपमुच्यते ; E : शूर्प उच्यते

[14] B : श्रविष्ठं ; C : श्रविष्ठः

[15] A : पूर्वाषाढे जपादिकम् ; C : पूर्वाषाढे जपादहम् ; E : पूर्वाषाढेऽजपादिकः

[16] A : अश्विनः pour अश्विनी ; C, E : अश्विनं

[17] E : मासि pour मासे

[18] A : मार्गशीर्षकमासे तु

[19] B, C : पैतृकमीरितम

[20] B : तीर्थदं pour तीर्थभं

[1]पूर्णमासीयुतान्येव[2] नक्षत्राणि [3]भवन्ति हि । वियुक्तेष्वपि [4]भेष्वेषु नद्यादौ तीर्थमुच्यते॥१२॥
[5]युक्ते वाथ वियुक्ते वा मासर्क्षेण [6]तु पर्वणि । समुद्रतीर्थमुद्दिष्टं सर्वपापप्रणाशनम् ॥ १३ ॥
[7]चैत्रादि[8]सर्वमासेषु रौद्रर्क्षं तीर्थभं भवेत् । [9]षष्ठी माघे तथा ज्येष्ठे चाष्टमी[10] कृष्णपक्षके॥ १४ ॥
[11]तीर्थार्थे तु [12]तिथी प्रोक्ते [13]सर्वकामफलप्रदे । उभयोः पक्षयोश्चापि [14]पर्व तद्वच्चतुर्दशीम्॥१५॥
सर्वमासेषु तीर्थार्थं कल्पयेत्कल्पवित्तमः । यजमानस्य जन्मर्क्षं ग्रामादीनां तथैव च ॥ १६ ॥
लिङ्गस्थापननक्षत्रं [15]तथा चैवायनद्वयम् । [16]विषुवद्वयं जन्मर्क्षं भूपतीनां विशेषतः ॥ १७ ॥
[17]नक्षत्रतीर्थं संकल्प्य [18]तिथ्यादिषु न कारयेत् । नक्षत्रं मुख्यमेवं स्यात्तिथ्यादि[19] गौणमेव च॥
तस्मान्नक्षत्रसंकल्पे [20]तिथ्यादितीर्थकं न हि । यदि मोहाच्च कुर्वीत [21]तत्कर्तुः सर्वदोषकृत्॥१९॥
[22]तीर्थर्क्षद्वयसंप्राप्तौ[23] [24]चैकमासे परस्परम् । ध्वजारोहादितीर्थान्तमेकमासे प्रशस्यते ॥ २० ॥

---

[1] Cf. *Kāraṇāgama*, II, 24, 57b-59a :
पर्वयुक्तमयुक्तं वा मासऋक्षं प्रधानकम् । .........पर्वं प्रधानं सामुद्रे अन्ये ऋक्षप्रधानकम् ॥
[2] E : पूर्णिमासंयुतान्येव
[3] A : तथैव pour भवन्ति
[4] C : भेदेषु pour भेष्वेषु
[5] E : युक्तो वाथ वियुक्तो वा
[6] A : च pour तु
[7] Cf. *Kāmikāgama*, II, 6, 3b-5 :
मासभं तीर्थनक्षत्रमार्द्रान्तं सर्वमासके । राज्ञां जन्मावमानर्क्षमभिषेकर्क्षमेव वा ॥
माघमासे तु षष्ठ्यन्तं पर्वान्तं सर्वमासके । विषुवाद्ययनपर्यन्तं ग्रहणान्तं तु तीर्थभम् ॥
भूताष्टम्यन्तमन्येषां स्वस्वतीर्थावसानकम् ।
cf. *Sūkṣmāgama*, 13, 12b-13 :
चतुर्दश्याममावास्यां षष्ठ्यष्टम्योर्विशेषतः । राजाभिषेकजन्मर्क्षे युद्धारम्भावसानके ।
अन्यपुण्यदिनान्तेषु चोत्सवं संप्रकल्पयेत् ।
[8] A : चित्रादि pour चैत्रादि
[9] A : षष्ठमासे pour षष्ठी माघे
[10] A : अष्टमे pour अष्टमी
[11] A : तीर्थान्ते pour तीर्थार्थे
[12] A : तिथिप्रोक्ते ; C : तिथिप्रोक्ता
[13] B : सर्वकामप्रदो भवेत् ; C : सर्वकामफलप्रदा
[14] voir p. 134 note 3 ; A : सर्व pour पर्व
[15] A : यथा pour तथा
[16] A : विषुवद्वयजन्मर्क्षं ; B, C : विषुवद्वयं च जन्मर्क्षं
[17] B : नक्षत्रतीर्थसंकल्पे ; C : नक्षत्रतिथिसंकल्पे ; E : नक्षत्रतीर्थं संकल्पे
[18] A : तीर्थादिषु ; B : तीर्थमानं ; E : तिथिमानं
[19] A, E : तीर्थादि pour तिथ्यादि
[20] A : तीर्थादितीर्थकं न हि
[21] B : तत्कर्तृसर्वदोषकृत् ; E : तत्कर्ता सर्वदोषकृत्
[22] Cf. *Kāraṇāgama*, II, 24, 58 :
ध्वजारोपादि तीर्थान्तमेकमासे प्रशस्यते । द्विमासे चोत्सवं कुर्यान्मध्यमं परिकीर्तितम् ॥
[23] A : तीर्थद्वये तु संप्राप्ते
[24] A omet च

[1]यागारम्भादि मध्यं [2]स्यादन्यतीर्थाच्च केवलात् ।

[नवविधोत्सवस्वरूपम्[3] ]

उत्सवेषु [4]नवस्वेषु [5]शैवाद्यैस्तु भवेत्त्रिभिः ॥ २१ ॥
अधमत्रितयं पश्चाद्भौवनाद्यै[6]स्त्रिभिस्तथा । मध्यमत्रितयं प्रोक्तमथ सौरादिभिस्त्रिभिः ॥ २२ ॥
उत्तमत्रितयं तेषु प्रथमत्रितयस्य तु । न ध्वजारोहणं [7]प्रोक्तमन्ययोरेव कल्प्यते[8] ॥ २३ ॥
प्रथमत्रितयस्यापि पञ्चाहत्रियहोत्सवम् । [9]मध्यमत्रितयस्यापि [10]सप्ताहं वा नवाहकम् ॥ २४ ॥
[11]अङ्कुरानर्पयित्वादौ भेरीं संताड्य चारभेत् । [12]एकाहमारभेद्धीमान्भेरीताडनपूर्वकम् ॥२५॥

[ पुनरुत्सवानां त्रिधा विभागः[13] ]

[14]भौवनात्पक्षपर्यन्तं ये स्युरत्र महोत्सवाः । ध्वजारोहणपूर्वाश्च भेरीताडनपूर्वकाः ॥ २६ ॥
अङ्कुरार्पणपूर्वाश्च त्रिविधास्ते भवन्ति हि । त्रैविध्यं तेषु यत्प्रोक्तं [15]तदिदानीं विविच्यते ॥२७॥

[ ध्वजारोहणपूर्वविधिः[16] ]

षण्णामप्युत्सवानां तु प्रोक्तानां तीर्थभं[17] तु यत् । [18]विगणय्य ततः पूर्वे त्रिगुणेऽहनि निश्चिते॥

---

[1] B : प्रागारम्भादि [2] A : स्यादन्तितीर्थान्तु

[3] Cf. *Sūkṣmāgama*, 13, 17b-18 :
शैवं गौणं भौतिकं चाप्युच्यते कन्यसत्रयम् । भौवनं दैविकं चैव पैतृकं मध्यमत्रयम् ॥
कौमारं चैव सावित्रं चान्द्रं चैवोत्तमत्रयम् ।

[4] A : नवेष्वेषु [5] B, E : शैवमाद्यैर्भवेत्त्रिभि.

[6] C : गौरवाद्यैः pour भौवनाद्यैः [7] A : प्रोक्तमध्ययोरथ ; C : प्रोक्तमनयोरेव

[8] Cf. *Dīptāgama*, 83, 18 :
उत्सवानां कनिष्ठानां केतुं नारोपयेद्बुधः । आरोपयेत्ततो धीमान्मध्यमे चोत्तमेऽपि वा ॥

[9] E omet ce demi-*śloka* [10] A : सप्ताहेऽथ नवाहके

[11] B, E : अङ्कुराण्यर्पयित्वादौ [12] B : एकाहं नारभेद् pour एकाहमारभेद्

[13] Cf. *Kāraṇāgama*, I, 141, 11 :
आरम्भं त्रिविधं तेषां केतुरोहणपूर्वकम् । भेरीताडनपूर्वं स्यादङ्कुरार्पणपूर्वकम् ।
cf. *Dīptāgama*, 83, 13 :
केतुरोहणपूर्वं तु भेरीताडनपूर्वकम् । अङ्कुरार्पणपूर्वं च त्रिविधं समुदाहृतम् ॥

[14] A : भौमवारात pour भौवनात् [15] A : तद्दिनाविधिरुच्यते

[16] Cf. *Kāraṇāgama*, I, 141, 12 :
पूर्वं तु ध्वजमारोप्य भेरीं तु ताडयेत्क्रमात् । ततोऽङ्कुरार्पणं चैव केतुरोहणपूर्वकम् ॥
cf. *Dīptāgama*, 8 , 14–15a :
ध्वजमारोपयेत्पूर्वं भेरीघोषमनन्तरः परम् । उत्सवस्यादिरात्रौ तु बीजनिर्वापमुच्यते ॥

[17] A : तीर्थाहं pour तीर्थभं

[18] A : द्विगुणार्य pour विगणय्य ; C : विगणाध्य ; E : द्विगुणार्थं

ध्वजमारोप्य तद्रात्रौ कृत्वा [1]भेर्यादिताडनम् । ततः प्राप्तदिने [2]रात्रावुत्सवारम्भ उच्यते॥२९॥

[ भेरीताडनपूर्वविधिः[3] ]

ध्वजारोहणपूर्वोऽयं प्रोक्तोऽथ विधिरुच्यते । [4]भेरीताडनपूर्वस्य पूर्ववन्निश्चिते सति ॥ ३० ॥
द्विगुणीकृत्य दिवसं [5]तद्रात्रौ ताडनं पुरा । [6]भेर्याः कृत्वा ध्वजारोहं कारयेत्तदनन्तरम्॥३१॥
ततः प्राप्तदिने [7]रात्र्यामुत्सवारम्भ उच्यते । भेरीताडनपूर्वश्च प्रोक्त एवं जनार्दन ॥ ३२ ॥

[ अङ्कुरार्पणपूर्वविधिः[8] ]

[9]अङ्कुरार्पणपूर्वे तु प्रोक्ताहस्यादिमे निशि । [10]अङ्कुरानर्पयित्वाथ[11] ध्वजमारोप्य ताड्य च ॥३३॥
[12]भेरीं सदेवताह्वानमारभेदुत्सवं ततः । अङ्कुरार्पणपूर्वश्च प्रोक्त एव [13]विधिर्मया ॥ ३४ ॥
ध्वजस्योत्थापनं भेर्यास्ताडनं चाङ्कुरार्पणम् । सर्वेषामुत्सवानां स्याद्व्यत्यासोऽत्र विवक्षितः ॥

[ उत्सवारम्भकालः[14] ]

एकाहस्यादिमे रात्रौ त्र्यहस्य चतुर्थके । पञ्चाहस्योत्सवस्यापि निशि षष्ठे जनार्दन ॥ ३६ ॥
भौवनस्याष्टमे रात्रौ [15]शाक्तस्य दशमे निशि । रौद्रस्य द्वादशाहे तु सौरस्यापि त्रयोदशे ॥३७॥
चतुर्दशस्य तत्पूर्वे निशि पञ्चदशे भवेत् । पक्षस्य षोडशाहे तु [16]निश्यारम्भ उदाहृतः ॥ ३८ ॥
रात्रावेवोत्सवारम्भो दिवावभृथ उच्यते ।

---

[1] C : भेर्यां च ताडनम् [2] B : रात्रम pour रात्रौ

[3] Cf. *Kāraṇāgama*, I, 141, 13 :
भेरीमादौ समुत्ताड्य ध्वजारोहणमारभेत् । अङ्कुराण्यर्पयेत्पश्चाद्भेरीताडनपूर्वकम ॥
cf. *Dīptāgama*, 83, 15b–16a :
भेरीं नु ताडयेत्पूर्वं ध्वजमारोपयेत्ततः । अङ्कुराण्यर्पयेत्पश्चाद्भेरीपूर्वकमात्कृतम ॥

[4] A omet les *śloka* 30b, 31 et 32a

[5] E : तत्रादौ pour तद्रात्रौ [6] C : भेर्या pour भेर्याः

[7] C : रात्रौ pour रात्र्याम

[8] Cf. *Kāraṇāgama*, I, 141, 14 :
पूर्वेऽङ्कुरार्पणं कुर्यात्पश्चाद्भेरीं तु ताडयेत् । ध्वजमारोपयेत्पश्चात्कुर्वेषं प्रथमे निशि ॥

[9] B : अङ्कुरार्पणपूर्वं तु प्रोक्तं तस्यादिमे निशि [10] E : अङ्कुराणि pour अङ्कुरान्

[11] A : च pour अथ [12] A : भेरी pour भेरीं

[13] A : विधो मया ; B, E : विधौ मया

[14] Cf. *Dīptāgama*, 83, 27b-29 :
शैवादि चोत्सवादीनां यावत्संख्या विधीयते । तत्पूर्वरात्रिमारभ्य कारयेदुत्सवं बुधः ॥
प्रतिष्ठां चोत्सवं यागं सायादिदिनमारभेत् । प्रातःकाले ह्यवभृथं सायंकाले समारभेत् ॥
रात्रिः सायं दिवा प्रातरिति शास्त्रस्य निश्चयः ।

[15] B : शक्ते च pour शाक्तस्य ; C : शाक्ते च ; E : शक्तौ च

[16] C : नित्यारम्भ pour निश्यारम्भ

[ बलिसंख्या[1] ]

[2]पक्षे त्रिंशद्बलिः प्रोक्तो मानवे चाष्टविंशतिः[3] ॥ ३९ ॥
सौरे बलिश्चतुर्विंशो रौद्रे द्वाविंश एव हि । [4]शाक्तेऽष्टादश उद्दिष्टा भौवने स्युश्चतुर्दश ॥ ४० ॥
भौते दशबलिं विद्धि[5] गौणे षड्बलिरुच्यते । शैवे बलिद्वयं चैव निशि [6]चाह्नि प्रकल्पयेत् ॥

[ ध्वजवस्त्रम्[7] ]

एवं त्रैविध्यमत्रोक्तम्; ध्वजादिविधिरुच्यते । उत्तमं दशहस्तं स्यान्मध्यमं नवहस्तकम् ॥४२॥
अधमं [8]चाष्टहस्तं स्याद्वस्त्रं प्रोक्तं ध्वजाय वै[9] । चतुःपञ्च[10]षडंशैकविस्तारं स्यात्सुदैर्घ्यकात् ॥४३॥
[11]श्रेष्ठमध्यकनिष्ठं तद्विस्तारार्धं [12]शिरो भवेत् । पार्श्वयोस्तु [13]शिरोमानात्कल्पयेत भुजद्वयम् ॥४४॥
[14]विस्तारेण समं पादं त्रिपादं [15]चार्धमेव वा[16] । जयदं शान्तिदं चैव पुष्टिदं च क्रमाद्भवेत् ॥

---

[1] Cf. *Dīptāgama*, 83, 30-32 :
पक्षोत्सवविधाने तु त्रिंशद्बलिं समाचरेत् । अष्टाविंशच्चतुर्दश्यां षड्विंशत्स्यात्त्रयोदशे ॥
द्वादशाहे चतुर्विंशन्नवाहेऽष्टादशाहरेत् । चतुर्दश स्यात्सप्ताहे पञ्चाहे दश एव च ॥
त्र्यहे च षड्बलिं दद्यादेकाहे द्वितयं बलिः । एतच्छैविकमित्युक्तम् ”

[2] A omet les *śloka* 39b à 42a

[3] La forme grammaticale correcte est अष्टाविंशतिः; mais cette forme ne s'accorde pas avec le mètre.

[4] D : शाक्तेऽष्टादशभिर्दिष्टो

[5] B : बलिर्वीची pour बलिं विद्धि : E : बलिश्चैव

[6] B : चाह्न pour चाह्नि ; E : चाह्नः

[7] Cf. *Dīptāgama*, 83, 12-14a :
सप्तहस्तध्वजपटमधमं परिकीर्तितम् । अष्टहस्तपटं मध्यमुत्तमं नवहस्तकम् ॥
आयाममेवमाख्यातं पञ्चभागैकविस्तृतम् । विस्तारेण समं पुच्छं पुच्छार्धं शिखरं भवेत् ॥
सुस्थिरं सूक्ष्मसुश्लक्ष्णं पटं कार्पाससंयुतम् ।

cf. *Kāmikāgama*, II, 6. 7-10a :
पञ्चहस्तादिविश्रान्तं ध्वजदैर्घ्यं प्रकल्पयेत् । मानमेतत्समाख्यातं शिरःपुच्छान्तरे द्विजाः ॥
तत्संयुक्तं च वा ग्राह्यं चतुःसप्तसमावधि । भागं कृत्वैकभागेन पटविस्तार उच्यते ॥
विस्तारेण समः पुच्छस्त्रिपादो वार्धमुच्यते । विस्तारार्धं शिरो ज्ञेयं पुच्छद्वयसमन्वितम् ॥
वेत्रद्वयसमायुक्तं तन्मध्ये वृषभं लिखेत् ।

[8] C, D, E : चाष्टहस्तेन pour चाष्टहस्तं स्याद्

[9] A : च pour वै

[10] B : ०षडंशांशं pour ०षडंशैक० ; C, D : षडंशोऽशं

[11] C : श्रेष्ठमध्यकनिष्ठान्तं विस्तारार्ध ; E : श्रेष्ठं मध्यं कनिष्ठं च विस्तारार्धं

[12] A : शिरोदयम् pour शिरो भवेत् ; B, E : शिवो भवेत्

[13] A : शिरोमानं pour शिरोमानात्

[14] A : विस्तरेण

[15] B, E : पादमेव pour चार्धमेव

[16] A : च pour वा

पाद्योर्द्वितयं [1]कुर्यात्त्रितयं वा [2]यथेच्छया । कार्पाससूत्रनिष्पन्नं [3]सुश्लक्ष्णं सुदृढं सितम्॥४६॥
नातिस्थूलं [4]नातिसूक्ष्मं[5] केशवैवर्ण्यवर्जितम् । एवं निष्पाद्य वस्त्रं [6]तन्मध्ये च [7]विलिखेद् वृषम्॥

[ ध्वजवस्त्रे वृषलेखनम्[8] ]

[9]कलाङ्गुलसमुत्सेधमुत्तमोत्तममुच्यते । [10]अङ्गुलत्रितयह्रासाद्यावन्मन्वङ्गुले कृते ॥ ४८ ॥
[11]अधमाधममुक्तं स्यादुत्सेधं नवधा वृषे । [12]ककुद्मन्तमतिश्वेतं विधिना कारयेत्ततः ॥ ४९ ॥
[13]आस्यं शृङ्गे [14]खुराः कर्णौ सास्ना च [15]वृषणावपि । [16]ओष्ठौ च सर्वे रक्ता [17]स्युः श्वेतकृष्णे च लोचने॥
[18]वालः पीतनिभः प्रोक्तो रक्तपीतनिभं गुदम् । क्षुद्रघण्टामयीं मालां [19]पीतामस्य प्रकल्पयेत्॥
छत्रचामरसंयुक्तं पद्मविष्टरमास्थितम्[20] । शान्त्यै [21]शयानं पुष्ट्यर्थं [22]स्थितं दीपद्वयान्वितम्॥५२॥
पूर्णकुम्भसमायुक्तं मालादिभिरलंकृतम् । [23]कृताक्षिमीलनं चापि विधिना वृषभेश्वरम् ॥५३॥

---

1 E : कुर्याद्द्वितयं
2 C : यथोच्छ्रया
3 A : सुलक्षणं दृढं सितम्; C : सुश्लक्ष्णं सुदृढस्थितम्
4 A : न सूक्ष्मं च
5 Entre नातिस्थूलं नातिसूक्ष्मं et केशवैवर्ण्यवर्जितम्, le ms. A répète le passage qui va de भेरीताडनपूर्वकम् (25b) à भौवनस्याष्टमे (37a); les *śloka* 30b, 31 et 32a omis (voir page 315 note 4) se trouvent dans le passage ci-dessus.
6 C : तं तन्मध्ये pour तन्मध्ये च
7 B, E : लेखयेद् दृढम्; D : लेखयेद् वृषम्
8 Cf. *Dīptāgama*, 84, 14b-18a :
नेत्रद्वयसमायुक्तं घण्टानादविभूषितम् । दीपचामरचित्राढ्यं वृषभं लेखयेत्क्रमात् ॥
श्वेतं पीतं तथा रक्तं कृष्णं श्याममयं ध्वजम् । वृषं श्वेतमयं ख्यातं शृङ्गौ रक्तौ प्रकीर्तितौ ॥
रक्तवर्णाः खुराः सर्वे वालः पीतेन शोभितः । अक्षिणी श्वेतकृष्णे च कर्णौ रक्तमयौ बुधः ॥
मध्ये वृषभमालिख्य स्थितं वा शयितं तु वा । किङ्किणीमालया भूष्य पद्मपीठोपरि स्थितम् ॥
9 A : कलशंसे समुत्सेधम्; B, E : कलाङ्गुलतदुत्सेधम्; C : कलाङ्गुलं समुत्सेधम : D : तत्वाङ्गुलतदुत्सेधम्
10 A : अङ्गुलत्रितयोत्सेधो यावन्मन्वङ्गुलं कृते : B : अङ्गुलत्रितयं ह्रासो यावद्द्वाराङ्गुलाकृते ; D : अङ्गुलत्रितयह्रासो यावदर्काङ्गुले कृते
11 B, E : अथवा ममुक्तं स्याद्
12 A : कुङ्कुमाक्तमिति श्वेतं
13 A : तथ्यशृङ्गौ ; C, E : तस्य शृङ्गौ
14 E : खुरारन्ध्रौ
15 E : वृषणद्वयम्
16 A : ओष्ठे pour ओष्ठौ
17 A : स्यात् pour स्युः
18 A : वाला पीतनिभास्योक्ता : B, C : वालाः पीतनिभाः प्रोक्ताः
19 A : पीताभास्य
20 D : आसितम् pour आस्थितम्
21 A : शायन pour शयानं
22 B : स्थितपद्मं च पावितम् : E : स्थितपादद्वयान्वितम
23 A : ततश्चक्षुरुन्मीलनं चापि

[ ध्वजाधिवासः[1] ]

तमानीय शिवस्याग्रे दक्षिणे [2]चोत्तरेऽपि वा । मण्टपेऽलंकृते रम्ये विधिना स्थण्डिले कृते॥५४॥
तन्मध्ये विन्यसेत्कुम्भं [3]वृषदैवतमुत्तमम् । षोडशप्रस्थसंपूर्णं पक्वबिम्बफलप्रभम्[4] ॥ ५५ ॥
[5]शोधितं क्षालितं चैव सितसूत्रविचित्रितम् । गन्धोदपूरितं सम्यक सहिरण्यं सवस्त्रकम्॥५६॥
सकूर्चं सापिधानं च तदर्धपरिमाणकान्[6] । तादृशान्कलशानष्ट[7] [8]दलाग्रेष्वभितो न्यसेत्॥५७॥
[9]तदग्रे स्थण्डिलं कृत्वा ध्वजं तत्रैव विन्यसेत् । तदग्रे सैकतं कृत्वा स्थण्डिलं मुष्टिमात्रकम्॥५८॥
तत्र वह्निं [10]समाधाय शास्त्रदृष्टेन कर्मणा । पुण्याहं वाचयित्वादौ[11] वृषकुम्भे वृषं यजेत् ॥५९॥
परितो लोकपालांश्च यथास्थानं समर्चयेत् । मुद्गान्नं तु वृषेन्द्राय दत्त्वा कुम्भस्थिताय तु[12] ॥६०॥

---

[1] Cf. *Dīptāgama*, 84, 1-11 et 18b-22 :

अतः परं प्रवक्ष्यामि शृणु वह्ने विशेषतः । ध्वजारोहणपूर्वे तु निशायामधिवासयेत् ॥
शिवं संपूज्य विधिवद्विज्ञाप्योत्सवमुत्तमम् । वृषस्थानमलंकृत्य वितानध्वजचामरैः ॥
फलपुष्पादिभिश्चैव धूपदीपैरलंकृतम् । उत्तराभिमुखो भूत्वा स्वासीनो देशिकोत्तमः ॥
अङ्गन्यासं करन्यासं पूर्वोक्तविधिना कुरु । अर्चयित्वा वृषं सम्यग्गन्धपुष्पादिना बुधः ॥
दद्यान्मुद्गौदनं तस्मै विज्ञाप्य विधिपूर्वकम् । तस्याग्रे स्थण्डिलं कुर्यात्पञ्चतालप्रमाणकम् ॥
अष्टद्रोणैस्तदर्धैर्वा तदर्धैस्तण्डुलैरपि । आलिख्य मध्यमे पद्ममष्टपत्रं सकर्णिकम् ॥
तिलैः पुष्पैः कुशैस्तीर्य वृषं बीजेन पूजयेत् । तन्मध्ये तु न्यसेत्कुम्भं वारिरत्नसमन्वितम् ॥
पाद्यं पूर्वे तु संस्थाप्य यमे चाचमनीयकम् । पश्चिमे विन्यसेच्चार्घ्यं पञ्चगव्यं तथोत्तरे ।
शेषाणि शुद्धतोयेन मृत्कुम्भानि विन्यसेत् । वस्त्रेण वेष्टयेत्सर्वान्ससूत्रान्कुशसंयुतान् ॥
पूजयित्वा यथान्यायं नैवेद्यान्तं विशेषत । स्थण्डिलं कारयेत्पश्चाद्धस्तमात्रेण शालिना ॥
तन्मध्ये पद्ममालिख्य साष्टपत्रं सकर्णिकम् । तन्मध्ये विन्यसेद्धीमान्ध्वजं वै लक्षणान्वितम् ॥.. ...
ध्वजं संप्रोक्ष्य वामेन स्थण्डिलोपरि विन्यसेत् । पूजयित्वा वितानेन वृषगायत्रिमन्त्रत ॥
ओं तीक्ष्णशृङ्गाय विद्महे । वेदपादाय धीमहि । तन्नो वृषभः प्रचोदयात् ।
अभ्यर्च्य लोकपालांश्च परितः स्थण्डिलोपरि । तस्याग्रे स्थण्डिलं कुर्याद्वालुकैर्हस्तमात्रकम् ॥
शिवाग्निं जनयेद्धीमानग्निकार्योक्तमार्गतः । पञ्चब्रह्मषडङ्गैश्च वृषगायत्रिमन्त्रतः ॥
शतमर्धं तदर्धं वा जुहुयाद्देशिकोत्तमः ।

[2] A : वा pour च
[3] D, E : वृषदेवत pour वृषदैवत
[4] A : प्रदम् pour प्रभम् ; C : प्रभुम्
[5] A : शोभितं pour शोधितं
[6] A : परिमाणकान् pour परिमाणकान्
[7] C, E : अष्टौ pour अष्ट
[8] C : दलान्त्येषु pour दलाग्रेषु
[9] B et E omettent ce demi-*śloka*
[10] A : समादाय
[11] A : तु pour आदौ
[12] A : च pour तु

वृषमूलेन मन्त्रेण सर्वं तस्य प्रकल्पयेत् । वृषगायत्रिमन्त्रेण ध्वजं चाथ समर्चयेत्[1] ॥ ६१ ॥
[2]होमयेत्तु ततो मन्त्री विधिना तत्र पावके । [3]समिदाज्यचरूँल्लाजान्मुद्गमाष[4]कुलत्थकान् ॥ ६२
[5]तिलांश्च सर्षपान्मन्त्री प्रत्येकं जुहुयाच्छतम् । तदर्धं वा तदर्धं वा वृषमूलेन देशिकः ॥ ६३ ॥
समिदाज्य[6]चरून्वापि [7]होमयेत्तानथापि वा । सर्पिषा [8]च ततो मन्त्री वृषगायत्रिमन्त्रतः ॥ ६४ ॥
[9]होमं कृत्वाथ मूलेन दद्यात्पूर्णाहुतिं सुधीः । ततो वृषेन्द्रमग्रस्थमचलं चलमेव च[10] ॥ ६५ ॥
[11]संस्नाप्याभ्यर्च्य गन्धाद्यैर्हविस्तस्यापि दापयेत् । ततः प्रतिसरं [12]बेरे शूले वापि प्रयोजयेत् ॥
विशेषादर्चनं चाथ [13]तयोर्लिङ्गे च [14]कारयेत् । ध्वजाधिवासनं कृत्वा रात्रौ तस्योत्सवं ततः ॥ ६७

[ परेद्युः प्रातरुत्सवः[15] ]

प्रभाते विमले [16]धीमन् [17]विधिरेवं प्रदृश्यते । मालाभरणवस्त्राद्यैरलंकृत्य ध्वजं ततः ॥ ६८ ॥

---

[1] Cf. *Kāmikāgama*, II, 6, 16b-28 :

अभ्रतोयेन संप्रोक्ष्य शिवाग्रे मण्डपेऽपि वा । मनोरम्येऽन्यदेशे वा स्थण्डिलद्वयसंयुते ॥
स्थलिकोर्ध्वे न्यसेत्पात्रं त्रिपाद्युपरिसंस्थितम् । ध्वजं नवघटं वस्त्रहेमरत्नं सकूर्चकम् ॥
सापिधानं सवस्त्रं च मध्यमे वृषभाधिपम् । कलशैरष्टसंख्यातैः सापिधानैः सवस्त्रकैः ॥
सलोकपैः सकूर्चैस्तु वृतं वृषभपूर्वकम् । आधाराख्यमनन्तं च धर्माद्यं च चतुष्टयम् ॥
वृषासनपदं चोक्त्वा चतुर्थ्यन्तं हृदान्वितम् । प्रणवादिनमोऽन्तं च कृत्वोक्षासनमत्र हि ॥
वृकारं हृत्पुटं कृत्वा वृषमूर्तिं प्रकल्पयेत् । ऊर्ध्वे ब्रह्माणि विन्यस्य मूलं तत्कल्पितं न्यसेत् ॥
संकल्पितहृदादींश्च क्रमेण विनिवेशयेत् । तत्त्वतत्त्वेश्वरोपेतं मूर्तिमूर्तीश्वरान्न्यसेत् ॥
आवाहनादिकं पूर्वं प्रमुखं वृषमूलतः । कृत्वा वृषभगायत्र्या गन्धाद्यैः क्रमशोऽर्चयेत् ॥
मध्यकुम्भेऽपि संपूज्य लोकपान्परितो यजेत् । कुण्डे वा स्थण्डिले वापि पूर्ववत्परिकल्पिते ॥
निरीक्षणादिसंस्कारैः शिवाग्निं संप्रकल्पयेत् । तन्मध्ये वृषमावाह्य साङ्गं संतर्पयेत्तदा ॥
समिदाज्येन चरुणा शतेनाष्टोत्तरेण च । तत्त्वतत्त्वेश्वरादींश्च होमयेत्तदनन्तरम् ॥
पूर्णां दत्त्वा समूलेन सर्वकामप्रपूर्णाम् । संपूज्य गन्धपुष्पाद्यैर्मुद्रान्नं तु निवेदयेत् ॥
पटस्थाय घटस्थाय वृषायासनरूपिणे ।

[2] A : होमयेत्तत्ततो मन्त्री
[3] A : समिदाज्यचरुं लाजान्
[4] A : कुलथ्थकान
[5] A : तिलं च सर्षपं मन्त्री
[6] B : चरुं pour चरून्
[7] A : होमयेत्तु यथापि वा ; C : होमयेत्तु तथापि वा
[8] A : वा pour च
[9] B, C, D, E : होमयेद् वृषमूलेन
[10] E : चलं चाचलमेव वा
[11] B, E : संस्थाप्य pour संस्नाप्य
[12] A : बध्वा pour बेरे
[13] B, E : ततो लिङ्गे च
[14] B : दापयेत्

[15] Cf. *Kāmikāgama*, II, 6, 29-32 :

प्रातः संपूज्य गन्धाद्यैः पटं कुम्भं यथाक्रमम् । मुखवासनताम्बूलं वृषभाय निवेदयेत् ॥
पुनः पूर्णाहुतिं दत्त्वा सर्वमङ्गलसंयुतम् । सर्वातोद्यसमायुक्तं नृत्तवाद्यसमन्वितम् ॥
रङ्गे वा शिबिकायां वा समारोप्य वृषध्वजम् । त्रिशूलेन समायुक्तं देवेशेन युतं तु वा ॥
ग्रामप्रदक्षिणं नीत्वा प्रविशेदालयं प्रति । दण्डं संस्थापयेत्पश्चात्सर्वलक्षणसंयुतम् ॥

[16] A : धीमान् pour धीमन्
[17] A : विधि एष pour विधिरेवं ; B, C, D : विधिरेव

अर्चयित्वाथ[1] गन्धाद्यैरुत्सवार्थमतन्द्रितः । रथे वा शिबिकायां वा [2]समारोप्यानयेत्सुधीः ॥
अथवानयनं प्रोक्तं केवलं [3]परिचारकैः । [4]शूलमग्रे नयेत्तत्र सर्वालंकारसंयुतम् ॥ ७० ॥
बलिदानयुतं वाथ तस्यानु ध्वजमानयेत् । [5]ध्वजस्यानूत्सवेशं च सर्वालंकारसंयुतम् ॥ ७१ ॥
आनयेद्वाथ चण्डेशं [6]ग्रामादिषु यथाक्रमम् । गीतनृत्तसमायुक्तं सर्वातोद्यसमन्वितम् ॥ ७२ ॥
संप्रविश्यालयं [7]पश्चाद्ध्वजमारोपयेत्ततः । [8]आरोहणविधिश्चापि वक्ष्यते क्रमशोऽधुना ॥ ७३ ॥

[ ध्वजदण्डार्हवृक्षाः[9] ]

[10]सालस्तमालः क्रमुको मधूकः सचम्पकश्चैव[11] सवेणुकश्च ।
अशोकपुन्नागशिरीषबिल्वा दशाप्यमी स्युर्ध्वजदण्डयोग्याः ॥ ७४ ॥

[ तत्र वर्ज्या वृक्षाः ]

वक्राश्च दुष्टाः कृमिकोटराद्यैर्दुःस्थानजाता [12]स्वयमेव शुष्काः ।
[13]वज्रादिभग्नाः [14]प्रविदारिताश्च वृक्षास्तु सर्वे परिवर्जनीयाः ॥ ७५ ॥

[ ध्वजदण्डलक्षणम्[15] ]

[16]प्रासादसमदैर्घ्यं वा [17]शिखरावधिकं तु वा । नासिकावधिकं चापि गोपुरावधिकं तु वा ॥
[18]प्रस्तरान्तं गलान्तं वा ध्वजदण्डं प्रकल्पयेत् ॥ ७६ ॥

---

[1] A : तु pour अथ [2] A : समारोप्य नयेत्सुधीः [3] A : परिवारकैः
[4] A : शूलाग्रे नमयेत्तत्र [5] B, C, D, E : ध्वजं तथोत्सवेशं च [6] C : वामादिषु ; D : क्रमादिषु
[7] C, D : पश्चाद्ध्वजमारोप्य यत्नतः [8] B : आरोहं च विधिश्चापि ; E : आरोहस्य विधिश्चापि
[9] Cf. *Dīptāgama*, 85, 7b-9 :
"ध्वजदण्डमथ शृणु । चन्दनं क्रमुकं वापि खादिरं वैणवं तथा ॥
स्तम्भकं जातिबिल्वं च चम्पकं देवदारुकम् । त्वक्सारमन्तःसारं वा दण्डं संग्राह्य देशिकः ॥
गतवक्रग्रन्थिसंयुक्तकृमिकोटरवर्जितम् । voir aussi *Rauravāgama*, vol. I, p. 72
[10] A : शाल्वः pour सालः ; C : बालः [11] C, D, E : अपि pour एव
[12] A : अथ चैव pour स्वयमेव [13] A : वक्रादिभग्नाः ; B : वज्राभिभग्नाः
[14] A : प्रवितारिताश्च ; C, D : प्रविसारिताश्च
[15] Cf. *Dīptāgama*, 85, 10-17 :
प्रासादस्य समं वापि अध्यर्धद्विगुणं तु वा । त्रिगुणं चतुर्गुणं वापि अल्पप्रासादरूपकम् ॥
प्रासादग्रीवमानं वा वृषस्थलसमं तु वा । त्रितल द्वितलान्तं वा गोपुरग्रीवमानकम् ॥
विंशद्धस्तप्रमाणं वा द्वादशं दशहस्तकम् । आयामं ध्वजदण्डस्य प्रोक्तं मात्राङ्गुलेन तु ॥
सप्तत्रिंशाङ्गुलं नाहं ध्वजदण्डमथोत्तमम् । मध्यं तु वा चतुर्विंशद्द्वाविंशत्कन्यसं भवेत् ॥
वेणुयष्टिं ततो ग्राह्य षट्तालं पञ्चतालकम् । स्कन्धत्रयं तु दण्डाग्रे हस्तमानमथान्तरे ॥
सुषिरद्वयसंयुक्तं मध्यच्छिद्रमथैकतः । अष्टषट्पञ्चमात्रं वा वेणुदण्डस्य नाहकम् ॥
स्कन्धत्रयसमायुक्तं तत्संस्थं वेणुदण्डकम् । कृशामो ध्वजयष्ट्यग्रे यन्त्रमेकं निवेशयेत् ॥
मध्ये रज्जु च संप्रोक्तं द्विगुणं मूलमाश्रितम् । कनिष्ठाङ्गुलिपरीणाहं त्रिवृतं कारयेत्क्रमात् ॥
voir aussi *Rauravāgama*, vol. I, p. 73
[16] B, C, D, E : प्रासादस्य समं दैर्घ्यं [17] A : शिखरादधिकं तु वा [18] A : प्रस्तारान्तं

दिग्रुद्रसूर्यैर्ध्वजदण्डमानं हस्तैः क्रमात्कन्यसपूर्वमुक्तम्[1] ।
[2]द्वात्रिंशदङ्गुल्यममुष्य नाहं [3]मूलेऽधमे मध्यवरिष्ठयोश्च ॥ ७७ ॥

[4]द्विद्व्यङ्गुलाद् वृद्धिरथाग्रनाहं [5]तत्तत्त्रियंशेन मितं विदध्यात् ।
तत्रोपदण्डं[6] दृढवेणुजातं[7] [8]स्कन्धत्रयं संप्रतियोजयेच्च ॥७८ ॥

ध्वजदण्डोच्छ्र्ये [9]तस्मिंश्चतुःपञ्चषडंशकैः । एकांशेनोपदण्डं[10] तु कल्पयेत्कल्पवित्तमः ॥ ७९ ॥
सप्तषट्पञ्चमात्रं स्यादुपदण्डस्य नाहकम् । [11]तत्त्रिभागैकभागेन नाहमग्रे प्रकल्पयेत् ॥ ८० ॥

अश्वत्थचूतप्रभवं तु तस्य स्कन्धत्रयं [12]चापि मधूकजं वा ।
[13]दण्डोपदण्डप्रतिबन्धनाय न्यग्रोधजं वा पनसोद्भवं वा ॥ ८१ ॥

स्कन्धत्रयस्य चायामं विंशदङ्गुलमुत्तमम् । अङ्गुलाङ्गुलहानिः[14] स्यान्मध्यमे [15]चाधमेऽपि च ॥
विस्तारं तु भवेत्तस्य चायामे वह्निभागकम्[16] । नेत्रभागेन[17] तस्यापि घनं नेत्राङ्गुलं भवेत् ॥८३
[18]सरोजमुकुलाकारं स्कन्धत्रयमुदीरितम् । सुषिरं दण्डमानं स्याद्दण्डोर्ध्वे तत्स्थितिः समा ॥८४॥
दण्डपार्श्वेऽप्यधःस्कन्धेऽप्युपदण्डस्थितिर्भवेत्[19] । शेषयोस्तत्प्रवेशार्थं सुषिरं तत्प्रमाणतः ॥८५ ।
[20]उपदण्डाग्रदेशे तु हित्वा [21]वस्वङ्गुलं दृढम् । [22]आयसे वलये [23]बद्धे यन्त्ररज्जुं प्रवेशयेत्॥८६॥
ध्वजदण्डाग्रदेशे [24]स्यादथाधो वलयस्थितिः । वलयं सुदृढं कार्यमुपदण्डाग्रनाहतः[25] ॥ ८७ ॥

---

[1] B, E : पूर्वयुक्तं pour पूर्वमुक्तं
[2] B, E : भिन्नं शराङ्गुल्यममुष्य नाहं
[3] C : मूलेऽथ मध्ये परिनिष्ठयोश्च ; D, E : मूलेऽधमं मध्यवरिष्ठयोश्च
[4] A : द्विद्व्यङ्गुलं pour द्विद्व्यङ्गुलाद् ; B, D, E : द्विद्व्यङ्गुला ; C : द्वद्व्यङ्गुला
[5] B, C, D : तत्तत्त्र्यंशांशमितं ; E : तत्तत्त्र्यांशांशमितं
[6] A : दण्डाद् pour दण्डं
[7] A : बन्ध pour जातं
[8] B, D, E : स्कन्धत्रयस्थं प्रति योजयेद्वा ; C : स्कन्धत्रयस्थं प्रतियोजयेच्च
[9] D : तस्मिन तन्तु pour तस्मिंश्चतु.
[10] A : दण्डे pour दण्डं
[11] B, D, E : तत्र pour तत्त्रि
[12] C, D : वा pour च
[13] A : दण्डोपदण्डं प्रतिबन्धनाय
[14] B : हीनं pour हानिः
[15] C : वा pour च
[16] A : भागिके pour भागकम् ; E : भागके
[17] E : नेत्रभागेऽपि
[18] D : सरोजमुकुलाकारस्कन्ध०
[19] D : ०दण्डेऽथ तद्भवेत्
[20] C, D, E : उपदण्डस्य वेशार्थं
[21] C : स्वराङ्गुलं pour वस्वङ्गुलं
[22] A : आयसं वलयं
[23] A, C : बन्धे
[24] C : स्यादयोवलयसंस्थितिः ; E : स्यादधोवलयसंस्थितिः
[25] B : नाहकः pour नाहतः ; E : नाहकम्

कार्पासतन्तुजो[1] [2]रज्जुर्भवेद् दृढतरः समः । [3]तद्दण्डद्विगुणायामत्रिवृद्ग्रन्थि[4]विवर्जितः ॥८८॥
कनिष्ठानामिकाङ्गुष्ठनाहात्सोऽपि[5] त्रिधा स्मृतः । प्रदक्षिणक्रमेणैव वेष्टितं दर्भमालया ॥ ८९ ॥
[6]मालापल्लवसंयुक्तं [7]यन्त्ररज्जुसमन्वितम् । ध्वजदण्डं [8]तु संपाद्य सर्वलक्षणसंयुतम् ॥ ९० ॥

[ ध्वजस्थानम्[9] ]

प्रासादाग्रे [10]ततो धीमान्प्राकाराभ्यन्तरेऽपि वा[11] । पीठाग्रे गोपुराग्रे वा वृषाग्रे [12]वृषपृष्ठके ॥
पीठगोपुरयोर्मध्ये वृषगोपुरयोस्तु वा । मर्यादिमध्यमे वापि महामर्यादिमध्यमे[13] ॥ ९२ ॥

[ ध्वजदण्डस्थापनम्[14] ]

चतुस्तालमितं खात्वा [15]तस्मिन्कूर्मं वृषं तु वा[16] । हेमोद्भूतं हृदा न्यस्य दण्डं तस्योपरि क्रमात्॥
स्थापयेद्बलवद्भिस्तु [17]देवाभिमुखसंस्थितम् । तन्मूले वेदिकां कुर्याच्चतुस्तालप्रमाणतः ॥ ९४ ॥
[18]सा भवेदधमा पश्चाद् षड्षडङ्गुलवृद्धितः[19] । मध्यमामुत्तमां चैव कुर्यात्पक्वेष्टकामयीम् ॥९५

---

[1] A : तन्तुतो pour तन्तुजो ; C : तन्तुना

[2] Le mot रज्जु se trouve au masculin au lieu du féminin ; voir *Rauravāgama,* vol. I, p. 69 note 6

[3] B : तद्दण्डाद् pour तद्दण्ड

[4] B : ०आयामव्रतग्रन्थि pour ०आयामत्रिवृद्ग्रन्थि · E : ०आयामं व्रतग्रन्थि

[5] C : नाभासोऽपि pour नाहात्सोऽपि ; D : नाभात्सोऽपि

[6] A : एला pour माला [7] A : तत्र pour यन्त्र

[8] C, D, E : समापाद्य pour तु संपाद्य

[9] Cf. *Dīptāgama*, 85, 6-7 :
ध्वजस्थानमहं वक्ष्ये श्रृणु वह्ने विशेषतः । पीठगोपुरयोर्मध्ये पीठाग्रे वा वृषाग्रके ॥
मर्यादिमध्यमे वाथ महामर्यादिमध्यमे । ध्वजस्थानमिदं प्रोक्तम् ''
voir aussi *Rauravāgama*, vol. I, p. 71

[10] D : ममाधीमान् pour ततो धीमान् [11] A : तथा pour अपि वा

[12] B : वृषवाहके ; E : वृषवाह्यके [13] D : मध्यके pour मध्यमे

[14] *Suprabhedāgama*, I, 14, 30-33a :
भूमिं खात्वोरुमात्रं तु हैमं तत्रैव विक्षिपेत् । दण्डं संस्थाप्य पूर्वं तु दर्भमालाममात्रतम् ॥
चतुस्तालं तु विस्तारादुत्सेधं द्वितलान्तकम् । दर्पणोदरसंकाशं ध्वजपीठं विधीयते ॥
पञ्चतालं तु विस्तारमुत्सेधं तु त्रितालकम् । उत्तमोत्तमपीठस्य मध्यमस्योर्ध्वमूलतः ॥
तयोर्मध्येऽष्टधा भज्य ध्वजपीठा नव स्मृताः ।
voir aussi *Rauravāgama*, vol. I, p. 74

[15] B : तस्मिन् कूर्मं तु दैवतम् ; E : तस्मिन् कूर्मं च दैवतम्

[16] B, C, D et E ajoutent : तन्मध्ये विन्यसेद्धीमान् हेमकूर्मं वृषं तु वा

[17] B, C, D, E : देवाभिमुखमास्थितम् [18] A : स pour सा

[19] A : वित्रुद्धिदम् pour वृद्धितः ; B, D, E : वृद्धिदः ; C : वृद्धिदम्

अपक्काभिरलाभे [1]स्यादिष्टकाभिस्तु वेदिका । विस्तारार्धसमुच्छ्रायां[2] तत्त्रिभागाब्ज[3]मण्डिताम् ॥
शैलजां वा स्थिरां कृत्वा [4]तस्यां वा दण्डसंस्थितिः । गोमयेनोपलिप्याथ पुण्याहं तत्र कारयेत् ॥

[ ध्वजारोपणम्[5] ] ९७ ॥

तदग्रे [6]स्थण्डिलं कृत्वा शालिभिर्विमलैस्ततः । परिस्तीर्य कुशैः पश्चाद् ध्वजं तत्रैव विन्यसेत् ॥
[7]ध्वजपीठसमीपस्थे स्थण्डिले विन्यसेद् बुधः । [8]पूर्वाधिवासितं कुम्भं वृषराजाधिदैवतम् ॥९९॥
कर्णिकायां तु विन्यस्य परितः कलशान्न्यसेत् । उभयत्रापि संपूज्य पूर्ववद्देशिकोत्तमः ॥१००॥
कूर्चाम्भसा [9]घटस्थेन [10]वृषमूलमनुस्मरन् । [11]वृषेन्द्रे प्राणभूतं तं वृषमन्त्रं प्रयोजयेत् ॥१०१॥
तस्याङ्गानि यथास्थानं मन्त्ररूपाणि कल्पयेत् । [12]ततो ध्वजं समुद्धृत्य [13]बन्धयेद्यन्त्ररज्जुना ॥
क्षुद्रघण्टासमायुक्तं वृष[14]गायत्रिमुच्चरन् । सुमुहूर्ते सुलग्ने [15]तु सर्वातोद्यसमन्वितम् ॥ १०३ ॥
आरोपयेद् ध्वजं सम्यग्गीतनृत्तसमन्वितम् । [16]ततः प्रदक्षिणेनैव रज्जुना वेष्टयेत्सुधीः ॥१०४॥
आरोपितं च संपूज्य सर्वात्महृदयेन तु । नमस्कृत्वा महादेवं [17]वृषेन्द्रं कलशे ततः ॥ १०५॥

---

[1] B, E : स्युर् pour स्याद्
[2] E : समुन्सेधां pour समुच्छ्रायां
[3] B, E : अर्ध pour अब्ज
[4] C : तस्या वा : D : तस्य वा
[5] Cf. *Kāmikāgama*, II, 6. 75b-82 et 87b-91 :

पुण्याहं वाचयित्वा तु अस्त्रेणाभ्युक्ष्य वेदिकाम । दर्भैर्दण्डं समावेष्ट्य वृषकुम्भं च तत्पटम ॥
त्रिशूलेन समायुक्तं मङ्गलाङ्कुरशोभितम् । धाम्नः प्रदक्षिणवशान्नीत्वा दण्डस्य संनिधिम ।
आधाराख्यमनन्तं च कूर्मे तु विनिवेशयेत् । कोणमध्ये च धर्मादीनधर्मादीन्प्रकल्पयेत् ॥
दलेष्वष्टसु वामाद्याः कर्णिकायां मनोन्मनीम् । दण्डे सदाशिवं चेष्ट्वा गन्धपुष्पादिभिः क्रमात ।
त्रिवर्गसहिता सा च स्नपनोक्तविधानतः । बध्वा वृषपटं रज्ज्वा वृषगायत्रिमन्त्रतः ॥
क्षुद्रघण्टां समायोज्य शस्त्रमन्त्रमनुस्मरन् । कुम्भाद्बीजं समादाय वृषरूपं स्मरन गुरुः ॥
वृषेन्द्रहृदये न्यस्त्वा गन्धपुष्पादिभिर्यजेत् । आरोपयेद् वृषं शीघ्रं वृषमूलेन देशिकः ॥
आदौ स्पृष्ट्वा स्वयं चान्यं प्रेरयेद्रोहणाय वा । ...वृषकुम्भस्थतोयेन प्रोक्षयेद्दण्डमूलकम ॥
वृषं विद्येश्वरानष्टौ क्रमेण प्रोक्षयेद् गुरुः । गन्धपुष्पादिनाभ्यर्च्य मुद्राश्च विनिवेदयेत् ॥
पुण्याहं तत्समारभ्य यावन्नैवेद्यदानकम् । सर्वातोद्यसमायुक्तं गानध्वनिसमन्वितम ॥
चतुर्दिङ्नर्तनं कुर्याद्विशेषाच्छुद्धनर्तनम । अतः प्रभृति तीर्थान्तमवरोहावसानकम ॥
एककालं द्विकालं वा त्रिकालं पूजयेद् वृषम् ॥

voir aussi *Rauravāgama*, vol. I, p. 76

[6] A : स्थण्डिलौ pour स्थण्डिलं
[7] A omet les *śloka* 99 et 100a
[8] B : पूर्वाधिवासनं
[9] B : वृषस्तेन
[10] A : वृषं pour वृष
[11] A : वृषेन्द्रप्राणभूतान्तं
[12] B, C, D, E : ततो वै ध्वजमुद्धृत्य
[13] A : बन्धयेन्मन्त्ररज्जुना
[14] D : गायत्र pour गायत्रि
[15] A : च pour तु
[16] A : ततः प्रदक्षिणं कृत्वा : E : ध्वजं प्रदक्षिणेनैव
[17] A : वृषेण pour वृषेन्द्रं

कूर्चाम्भसा तु संप्रोक्ष्य ध्वजदण्डस्य मूलके । [1]दिगीशकलशाद्भिस्तु मन्त्रान्स्थानेषु योजयेत् ॥
अथवा ध्वजमूले तु [2]चण्डाष्टवसुदेवतान् । कलशान्पूर्ववत्स्थाप्य संपूज्याथ च मन्त्रवित्॥१०७॥
दण्डमूले च परितो विन्यसेदनुपूर्वशः[3] । [4]चण्डेशं दण्डमूले तु दण्डमध्ये ध्रुवं तथा ॥१०८॥
स्कन्धेषु सूर्यसोमाग्नीनुपदण्डेऽनिलं तथा । [5]ध्वजे च वृषभेन्द्रं तमर्चयित्वा क्रमेण तु ॥१०९॥
मुद्गान्नं [6]पायसान्नं वा वृषेन्द्राय निवेदयेत् । यन्निवेदितमन्नं [7]तद् वन्ध्यस्त्रीणां प्रदापयेत् ॥
अथवा ध्वजदण्डेन बध्वा संस्थाप्य पूजयेत् । एवमारोपयित्वाह्नि[8] रात्रौ भेरीं [9]तु ताडयेत् ॥

[ भेरीताडनम्[10] ] १११ ॥

प्रासादाग्रे ततो धीमान्मण्टपेऽलंकृतेऽथवा । ध्वजमूले तु संलिप्ते गोमयेन यथाविधि ॥११२॥
स्थण्डिलद्वितयं कृत्वा शालिभिर्विमलैस्ततः । लिङ्गस्याभिमुखं[11] तत्र ध्वजस्याभिमुखं तु वा ॥
अस्त्रराजं [12]समाधाय भेरीं तस्याग्रतो न्यसेत् । वेष्टयेन्नववस्त्रेण [13]भेरीं स्थण्डिलसंस्थिताम्॥११४॥
पुण्याहं वाचयित्वाथ[14] प्रोक्षयेत्तेन वारिणा । ततः शूलास्त्रपूजा स्यात्सापीदानीं[15] निगद्यते ॥

---

[1] A : दिगीशकलशेऽभ्यस्तमन्त्रान्
[2] A, E : दण्ड pour चण्ड
[3] D, E : आनुपूर्वशः pour अनुपूर्वशः
[4] E : दण्डेशं
[5] A : ध्वजेऽपि
[6] A : परमान्नं वा
[7] B, C, D, E : तत्स्त्रीणां पुत्रप्रदं भवेत्
[8] C : ह्नि pour अह्नि
[9] C : ह्नि pour तु
[10] Cf. *Kāmikāgama*, II, 6, 96-110 :
भेरीसंताडनं रात्रौ कर्तव्यं तु यथाविधि । स्थण्डिलद्वितयं कुर्याद् देवदेवस्य संनिधौ ॥
षडुत्थमासनं कुर्याच्छूले भेर्यां गुरूत्तमः । एकत्र विन्यसेच्छूलं भेरीं तत्संनिधौ न्यसेत् ॥
पूर्वापरायतं पूर्वस्थितं दक्षाननान्वितम् । पुण्याहं वाचयित्वादौ त्रिशूले देवता न्यसेत् ॥
मध्यपत्रे भवेद्रुद्रो ब्रह्मा दक्षिणपत्रके । वामे विष्णुः समावाह्यः पालिकायां तु पार्वती ॥
सेनानीः कुम्भदेशे तु तदास्ये विघ्नराजकः । दण्डाग्रे मदनो ज्ञेयो भास्करो दण्डमध्यमे ॥
दण्डमूले तु चण्डेशो लक्ष्मीः पूर्वदलाग्रके । मातरः सप्त दक्षे तु ज्येष्ठा पश्चिमदिग्दले ॥
कात्यायनी तु कौबेर्यां शूलमूले मता इमे । रुद्रार्कवसवोऽश्विन्यावष्टादशगणाश्च ये ॥
तानाहूयाशिषश्चोक्त्वा भेर्यां तद्देवता न्यसेत् । भेरीं वस्त्रेण संवेष्ट्य मध्ये रुद्रं समर्चयेत् ॥
ब्रह्माणं दक्षिणे वक्त्रे विष्णुं वाममुखे यजेत् । वलये दक्षिणे सूर्यमितरे चन्द्रमर्चयेत् ॥
सप्तकीलेषु मातॄश्च नवकीले नवग्रहान् । रुद्रांस्तत्संख्यके न्यस्त्वा चर्मसूत्रेषु वासुकिम् ॥
प्रहारे षण्मुखं पूर्वं मस्तकेऽभ्यर्चयेत्क्रमात् । गन्धपुष्पादिभिर्द्रव्यैर्नैवेद्यान्तैः पृथक्पृथक् ॥
भेर्याः संताडनं कुर्यादस्त्रमन्त्रमनुस्मरन् । एकप्रहारतः पूर्वं द्वितीयं द्विप्रहारतः ॥
तृतीयं त्रिः प्रहारेण त्रयं चैकप्रहारतः । संताड्य वादकं प्रोक्ष्य मन्त्रं पञ्चाक्षरं स्मरन् ॥
वस्त्रं गन्धं च माल्यं च सोत्तरीयं ससूत्रकम् । तद्धस्ते कुसुमं दद्यात्तन्मन्त्रं समनुस्मरन् ॥
भेर्यां पुष्पं विनिक्षिप्य देशिकानुज्ञया तदा । भेरीं स्कन्धे समारोप्य वादयेत्सर्वतालवित् ॥
voir aussi *Rauravāgama*, vol. I, p. 76
[11] A : अभिमुखे pour अभिमुखं
[12] A : समादाय
[13] B, C, D : भेरीमभिमुखस्थिताम्
[14] A : तु pour अथ
[15] A : सापिधानं pour सापीदानीं

[तत्र शूलपूजा]

शूलस्य मध्यमे पत्रे पूजयेत्तु महेश्वरम् । ब्रह्माणं दक्षिणे पत्रे वामे विष्णुं समर्चयेत् ॥ ११६ ॥
पालिकायां भवानीं च कुम्भे विघ्नेशमेव च । दण्डाग्रे षण्मुखं तत्र दण्डमध्ये रविं तथा॥११७॥
दण्डमूले शशाङ्कं च तदधश्चण्डमेव हि[1] । लोकपालान्यथास्थानं [2]शूलपीठे समर्चयेत् ॥११८॥
एवं गन्धादिभिः शूलं समभ्यर्च्य विधानतः । नैवेद्यं चापि ताम्बूलं दत्त्वा देवस्य मध्यमे ॥

[भेरीपूजा] ११९ ॥

[3]भेर्याश्च स्वार्चनं पश्चात्तद्विधिश्च निगद्यते । नन्दिनं [4]मध्यमे पूज्य दक्षिणेतर[5]पार्श्वयोः ॥१२०
सूर्याचन्द्रमसौ [6]पूज्य भेर्यां तत्र यथाविधि । कोणे चण्डं समभ्यर्च्य दिक्पालान्परितो यजेत् ॥
नैवेद्यं दापयेत्तत्र नन्दिने तु विशेषतः । ताम्बूलं च ततो [7]दद्याद् देवाह्वानं ततो भवेत् ॥
शिवादिसर्वदेवांश्च साष्टादशगणानपि[8] । [9]नक्षत्रादीन्नदीश्चापि समुद्रान्पर्वतानपि ॥ १२३ ॥
[10]द्वीपाँल्लोकान्सपातालान् समाहूय विशेषतः । [11]उत्सवावभृथौ पश्चाच्छ्रावयेत्सकलं जनम्[12] ॥
वाद्यकं च समाहूय [13]प्रोक्षयित्वा त्वनन्तरम् । तस्य हस्ते [14]तु सलिलं कुसुमं चापि दापयेत् ॥
सोऽपि पुष्पं [15]विनिक्षिप्य भेरीमुद्धृत्य वादयेत् । वादयित्वात्र दिक्तालान्गाननृत्तसमन्वितम् ॥
[16]वृषतालं ततश्चान्ते सर्वेषामपि वादयेत् । नृत्तं चैवाष्टदिग्भागे संस्थिताभिर्भवेदिह[17] ॥ १२७ ॥
शिवायतनयोपिद्भिः सर्वातोद्यसमन्वितम् । [18]चतुर्विधं [19]भवे दद्यादातोद्यमिति कीर्तितम् ॥

---

[1] B, C, D, E : च pour हि
[2] B : शूलं पीठे
[3] B, C, D, E : भेरीसमर्चनं पश्चात्
[4] A : मध्ये pour मध्यमे
[5] E : उत्तर pour इतर
[6] B, C, D : पूज्यौ pour पूज्य
[7] A, C, D, E : दत्त्वा pour दद्याद्
[8] A : गणैरपि pour गणानपि
[9] B : नक्षत्रं विग्रहांश्चापि ; C : नक्षत्राणि ग्रहांश्चापि ; D, E : नक्षत्राणि ग्रहांश्चापि
[10] A, E : द्वीपाँल्लोकांश्च पातालान
[11] A : उत्सवाग्रे स्थितं ; C : उत्सवावभृदं ; D : उत्सवाय प्रथं ; E : उत्सवाग्रे तु तान्
[12] C : सलिलं जनम् pour सकलं जनम् ; E : सकलान् जनान्
[13] C : प्रेषयित्वा pour प्रोक्षयित्वा
[14] B : फलं चैव pour तु सलिलं
[15] E : सुनिक्षिप्य
[16] B et E omettent les *śloka* 127 et 128a
[17] A : भवेद्दिशि pour भवेदिह
[18] Cf. *Nāṭyaśāstra*, 28, 1-2 :
ततं चैवावनद्धं च घनं सुषिरमेव च । चतुर्विधं तु विज्ञेयमातोद्यं लक्षणान्वितम् ॥
ततं तन्त्रीकृतं ज्ञेयमवनद्धं तु पौष्करम् । घनं तालस्तु विज्ञेयः सुषिरो वंश एव च ॥
cf. *Amarakośa*, I, 7, 4-5a :
ततं वीणादिकं वाद्यमानद्धं मुरजादिकम् । वंशादिकं तु सुषिरं कांस्यतालादिकं घनम् ॥
चतुर्विधमिदं वाद्यं वादित्रातोद्यनामकम् ।
[19] B, C, D : भवे दद्यादातोद्यमिति ; C, D : भवेदाद्यमातोद्यमिति

ततं च विततं चैव घनं सुषिरमेव च । ततं वीणादिकं प्रोक्तं विततं [1]मुरजादिकम् ॥ १२९ ॥
घनं च कांस्यतालाद्यं वंशादि सुषिरं स्मृतम् । एतैश्चतुर्भिः [2]संयुक्तैर्गीतैः [3]शब्दैस्तु तच्छ्रुतः ॥
[4]स हि पञ्चमहाशब्दः शिवप्रियकरः सदा । [5]त्रिसंध्यं कारयेत्तेन [6]चोत्सवेषु शिवालये ॥

[ बलिक्रिया[7] ]

भेरीमेवं तु संताड्य ग्रामादिष्वथ देशिकः । बलिप्रदानं कुर्वीत त्रिशूलेन समन्वितम् ॥ १३२ ॥
बेरेण सहितं वापि [8]बद्धप्रतिमरेण हि[9] । अन्नलिङ्गयुतं वापि सर्वालंकारसंयुतम् ॥ १३३ ॥
[10]ब्रह्मादीशानपर्यन्तदिक्पालेभ्यो बलिं ददेत् ।[11]तांश्चापि स्वस्वदिग्भागे स्थित्वा तु [12]स्तुतिपूर्वकम् ॥
आहूय तीर्थदिवसं श्रावयित्वा [13]जनार्दन । स्वस्वनाम[14]पदोपेतैर्मन्त्रैर्दद्याद्बलिं ततः ॥ १३५ ॥
[15]अथ चैकं बलिं दत्त्वा दिक्पालाह्वानवर्जितम्[16] । देवालये प्रयुञ्जीत [17]प्रोक्ता ह्येवं बलिक्रिया ॥

[ अङ्कुरार्पणम्[18] ]

१३६ ॥

उत्सवारम्भकालस्य सायाह्ने तु विशेषतः । विघ्नेशं सर्वविघ्नानां शान्त्यर्थमभिपूज्य च ॥ १३७ ॥
मालाभरणवस्त्राद्यैर्भूषयित्वा विनायकम् । रथे वा शिबिकायां वा समारोप्य च भक्तितः ॥

---

[1] A : मुरवादिकम्
[2] E : संयुक्त pour संयुक्तैर्
[3] B : शब्दैस्तु तच्छ्रुतः ; C, D : शब्दस्ततः शृणु : E : शब्दैस्तु तच्छ्रुतम्
[4] A : स हि पञ्चमहाशास्त्रशब्दप्रियकरः सदा
[5] E : त्रिसंधि pour त्रिसंध्यं
[6] A omet च dans चोत्सवेषु
[7] Cf. *Kāmikāgama*, II, 6, 111-114a :
गान्धारादिस्वरोपेतं सप्ततालादितालकम् । गीतनृत्तसमायुक्तमन्नलिङ्गसमायुतम् ॥
प्रतिमासहितं वापि चण्डेश्वरयुतं तु वा । संगृहीत्वास्त्रराजानं वितानच्छत्रसंयुतम् ।
धूपदीपसमायुक्तं घण्टास्वनसमन्वितम् । प्रविश्य नगराद्यं तु ब्रह्मस्थानादितः क्रमात् ॥
इन्द्रस्थानादितो वापि बलिं दद्यात्स्वनामतः ।
[8] A : बन्ध pour बद्ध
[9] B, C, D, E : तु pour हि
[10] B, C, D, E : ब्रह्मादीशानपर्यन्तं दिक्पालानां बलिं हरेत्
[11] E : ततं चापि स्वदिग्भागे
[12] A : स्थिति pour स्तुति
[13] B, C, D, E : जनानपि pour जनार्दन
[14] A : पदैस्तैर् pour पदोपेतैर्
[15] A : अथवान्नबलिं दत्त्वा
[16] B, D, E : दिक्पालानपि वर्जितम्
[17] A : प्रोक्तं ह्येवं बलिक्रमात् ; E : प्रोक्तान्येवं बलिक्रमात्
[18] Cf. *Dīptāgama*, 87, 1-3a et 11b-31 :
अतः परं प्रवक्ष्यामि मङ्गलाङ्कुरमुत्तमम् । उत्सवे स्नपने चैव स्थापने प्रोक्षणे तथा ॥
अन्ये च मङ्गले कार्ये मङ्गलाङ्कुरमुत्तमम् । प्रथमं ध्वजाङ्कुरं प्रोक्तं द्वितीयं चोत्सवाङ्कुरम् ॥
तीर्थाङ्कुरं तृतीयं स्यादुत्सवस्य विधीयते । .... सर्वेषु यागपूर्वं तु नवमे सप्तमेऽथवा ॥
पञ्चमेऽह्नि शिवं पूज्य सर्वबीजानि वापयेत् । बीजानामधिपश्चन्द्रस्तस्माद्धि निशि निर्वपेत् ॥
वास्तुप्रदक्षिणं कुर्यादुत्सवाद्यङ्कुरे क्रमात् । अन्येषां चैव सर्वेषां वर्जयेत्तु प्रदक्षिणम् ॥
प्राङ्मुखोदङ्मुखो वाथ निर्व्रजेत्सह देशिकः । सर्वदेवमयं शूलमलंकृत्य विशेषतः ॥

[1]ग्रामादावुत्सवं कुर्यात्सर्वालंकारसंयुतम् । तदग्रे [2]शूलमस्त्रेशमुत्सवेशं च पृष्ठतः ॥ १३९ ॥
[3]आनयेद्वा सचण्डेशं केवलं वा विनायकम् । विनायकानु मुद्गादिबीजद्रव्याणि [4]चानयेत् ॥
[5]अङ्कुरार्थं मृदं गृह्य चण्डेशं तदनु क्रमात् । [6]मृत्संग्रहणकं वक्ष्ये [7]तच्छृणु त्वं जनार्दन ॥१४१
[8]समुद्रसरितां तीरे [9]तटाकस्य च तीरके । पुष्करिण्यास्तटे वापि[10] वने [11]वोद्यानकेऽपि वा ॥
शुद्धस्थानमनुप्राप्य [12]शुद्धिं कृत्वाथ[13] भूतलम्[14]। संप्रोक्ष्यास्त्रेण[15] मन्त्रेण [16]भूमिं [17]यष्ट्वा स्वनामतः
खात्वा च पुनरस्त्रेण [18]खनित्रेणोक्षितेन च । कुशेन च [19]परिस्तीर्य प्राङ्मुखो वाप्युदङ्मुखः ॥

---

सोष्णीषः सोत्तरीयश्च धारयेच्छूलमुत्तमम् । तदन्ते पालिकादीनि धारयित्वा व्रजेदनु ॥
सर्वालंकारसंयुक्तं सर्वातोद्यसमाकुलम् । नानाध्वजसमायुक्तं नानापिञ्छसमन्वितम् ॥
नानाछत्रसमायुक्तं प्रतिमा तदनुव्रजेत् । एवं प्रदक्षिणं कृत्वा शुद्धस्थानं प्रवेशयेत् ॥
अभ्यर्च्य भूतलं सम्यग् हृदयेन तु मन्त्रतः । शस्त्रमभ्यर्च्य विधिना गन्धपुष्पादिना बुधः ॥
दर्शयेच्छूलमुद्रां च खड्गमुद्रां प्रदर्शयेत् । खानयेदस्त्रमन्त्रेण मृदं संग्राह्य वामतः ॥
मृदमभ्यर्च्य विधिना प्रविशेदालयं प्रति । प्रासादस्याग्रतो वाथ दक्षिणे चोत्तरेऽथवा ॥
गोमयालेपिते शुद्धे मण्डपे समलंकृते । स्थण्डिलं कारयेद्धीमानष्टद्रोणेन शालिना ॥
तस्य मध्ये लिखेत्पद्ममष्टपत्रं सकर्णिकम् । षोडशाङ्गुलमात्रेण मध्यमे कर्णिकां लिखेत् ॥
परितस्तत्समं भ्राम्य दलानष्टसमन्वितम् । तन्मात्रं दलमानं स्याद्दलाग्रं स्यात्तथैव हि ॥
स्थापयेत्कर्णिकामध्ये चन्द्रकुम्भं नवं शुभम् । सकूर्चं सापिधानं च सवस्त्रं वारिपूरितम् ॥
गन्धाद्यैरर्चयित्वा तु नैवेद्यं तु प्रदापयेत् । पालिका विन्यसेदष्टौ केसरेषु विशेषतः ॥
तद्बाह्ये घटिकाश्चाष्टौ दलमध्ये तु विन्यसेत् । न्यसेदग्रे शरावाणि पूर्वादिक्रमयोगतः ॥
दर्भाग्रैर्वा कुशाग्रैर्वा निश्छिद्रं सुषिरे न्यसेत् । वालुकैर्गोमयैर्मृद्भिः पालिकादीनि पूरयेत् ॥
पूजयित्वा यथान्यायं पुण्याहं तत्र कारयेत् ।
नीवारमुद्गतिलसर्षपमाषशिम्बुकुलस्थनिष्पावकसर्षपाणि । क्षीरेण संक्षाल्य हृदा बुधश्च निर्वापयेत्ताञ्शिवबीजमन्त्रैः ॥
आचार्यो वापयेद्बीजान्प्राङ्मुखोदङ्मुखोऽथवा । चन्द्रकुम्भोदकं ग्राह्य पालिकादीनि सेचयेत् ॥
वातातपविनिर्मुक्ते मूषिकादिविवर्जिते । देशे संस्थाप्य संरक्ष्य हरिद्राभ्युक्षणं कुरु ॥
यावद्विसर्जिता देवास्तावत्संपूजयेत् क्रमात् ॥

voir aussi *Rauravāgama*, vol. I, pp. 65-67

[1] C : ग्रामादिषूत्सवं

[2] B : शूलमस्त्रेण समुत्पश्चन्त पृष्ठतः ; C : शूलमस्त्रेशमुत्सवाचार्यं च पृष्ठतः ; D : शूलमस्त्रेशमुत्सवार्थश्च पृष्ठतः ; E : शूलमस्त्रेण समुत्सर्पश्च पृष्ठतः

[3] A : आनयित्वा सचण्डेशं ; B : पूजयेद्वा सचण्डेशं ; C, D : आनयेद्वाथ चण्डेशं

[4] B, C, D, E : दापयेत् pour चानयेत्

[5] B : अङ्कुरस्य तदर्थं च ; C, D : अङ्कुरस्य मुदार्थं च

[6] B, C, D, E : मृत्तिकाग्रहणं

[7] A : तच्छृणुष्व pour तच्छृणु त्वं

[8] B, C, D, E : समुद्रे सरितस्तीरे

[9] A : नदीतीरेऽथवा पुनः

[10] A : अथ pour अपि

[11] A : च pour वा

[12] A : अनुस्मृत्य pour अनुप्राप्य

[13] B : च pour अथ

[14] A : भूतले

[15] B, E : अस्त्रादि pour अस्त्रेण

[16] D : भूतिं pour भूमिं

[17] La forme grammaticale correcte est इष्ट्वा ; voir aussi page 218 note 3

[18] A : खात्वास्त्रेण क्षितेन च

[19] A : परिस्तीर्णा

मृत्तिकां वालुकां वापि पाणिभ्यां पुरुषेण तु । स्थाल्यां कुशोपरीशेन मन्त्रेणाहृत्य निक्षिपेत् ॥
पुनः [1]प्रोक्ष्य हृदा मन्त्री पुष्पं [2]तस्यां तु विन्यसेत् । शङ्खदुन्दुभि[3]निर्घोषैर्गीत[4]वाद्यसमाकुलैः ॥
एवं मृद्ग्रहणं कृत्वा [5]तथा चोत्सवमाचरेत्[6] । अथवा मृत्तिकामेनामुत्सवान्ते [7]समाहरेत् ॥
प्रविश्य भवनं पश्चाद् भक्ष्याद्यैस्तु विनायकम् । संपूज्य चाङ्कुरार्थं तु [8]बीजावापनमाचरेत् ॥
तीर्थार्थमङ्कुरं [9]कुर्यात्तत्स्थानं यागमण्टपे । शिवाग्रे मण्टपे [10]वा स्याद्दक्षिणे [11]वाथ चोत्तरे ॥
[12]तद्विधिप्रोक्तमार्गेण कुर्यात्सर्वमतन्द्रितः । [13]ततोऽधिवासनं कुर्याच्छिवयज्ञाय मण्टपे ॥१५०

[यागमण्टपः[14]]

[15]ऐशान्यामग्निदेशे [16]वा पार्श्वयोरुभयोस्तु वा । उत्तमं दशहस्तं स्यान्मध्यमं सप्तहस्तकम् ॥
अधमं पञ्चहस्तं तु [17]चतुरश्रं मनोरमम्[18] । चतुर्द्वारसमायुक्तं चतुस्तोरणभूषितम् ॥ १५२ ॥
षोडशस्तम्भसंयुक्तं [19]द्वादशस्तम्भकं तु वा । पङ्क्तित्रयसमायुक्तं [20]पङ्क्तिमानसमुच्छ्रयम्॥१५३

---

[1] E : पूज्य pour प्रोक्ष्य
[2] A : तस्यास्तु विन्यसेत्; E : तस्यां तु निक्षिपेत्
[3] B, C, E : घोषैश्च pour निर्घोषैर्
[4] B, C, D, E : नृत्त pour वाद्य
[5] A : यथा pour तथा
[6] Dans le ms. D l'ordre des *śloka* est le suivant : 147a, 149, 147b, 148, 150, etc.
[7] A : समारभेत्
[8] A : बीजावापं ततो भवेत्
[9] B, C, D, E : तस्य तत्स्थाने pour कुर्यात्तत्स्थानं
[10] B, E : वास्य pour वा स्याद्
[11] B, E : चोत्तरेऽथवा pour वाथ चोत्तरे
[12] A : तत्प्रोक्तं विधिना मार्गे
[13] A : ततो शिवासनं pour ततोऽधिवासनं
[14] Cf. *Kāmikāgama*, II, **6**, 133-142 :

यागशालां ततः कुर्यादग्रे वा त्वग्रपार्श्वयोः । वामेऽवामे तथा पञ्चशालानामिष्टदेशके ॥
मध्यागारे विशेषेण पञ्चहस्तप्रमाणतः । एकहस्तविवृद्धया तु निधिहस्तसमावधि ॥
पङ्क्तित्रयसमायुक्तां पञ्चपङ्क्तिसमन्विताम् । समानपङ्क्तयो वा स्युर्मात्रादेकांशवर्धनात् ॥
नवाङ्गुलान्तमानेन त्वधिकाः पञ्चपङ्क्तयः । एकपङ्क्तियुतां वापि चतुर्द्वारैर्महीयसीम् ॥
एकद्वारयुतां वापि मण्डपाकारसंस्थिताम् । शालाकूटनिभां वापि नवपञ्चाग्निसंयुताम् ॥
एकाग्निसहितां वापि वितानध्वजसंयुताम् । दर्भमालासमायुक्तां मुक्तादामप्रलम्बिताम् ॥
नालिकेरफलोपेतां सवमण्डनमण्डिताम् । मध्यमे वेदिकोपेतां वसुमात्रप्रमाणतः ॥
एकाङ्गुलविवृद्धयाष्टाविंशत्यङ्गुलावधि । वेदिकोत्सेध उद्दिष्टो विस्तारस्य त्रिभागतः ॥
अथवा पङ्क्तिमानेन चोपवेदीसमन्विताम् । मुष्टिरत्निमितं कुण्डं करमानं तु वा भवेत् ॥
युगाश्रं वर्तुलं वापि त्रिमेखलसमन्वितम् । मण्डपे मालिकादौ वा कुर्याद्यागाधिवासनम् ॥

voir aussi *Rauravāgama*, vol. I, p. 77
[15] E : ईशे वाप्यग्निदेशे
[16] A : च pour वा
[17] B : चतुरश्र pour चतुरश्रं
[18] D : मनोहरम् pour मनोरमम्
[19] A : द्वादशस्तम्भमेव वा
[20] B : पङ्क्तिमानसमुच्छ्रितम् ; C : पङ्क्तिमानस्ततोच्छ्रयम्

तन्मध्ये वेदिकां कुर्यान्नवभागैकभागतः[1] । विस्तारार्धसमुत्सेधां[2] दर्पणोदरसंनिभाम्[3] ॥१५४॥
परितश्चाष्टकुण्डानि चतुरश्राणि दिक्षु वै । विदिक्षु वृत्तरूपाणि पद्मकुण्डं प्रधानकम्[4] ॥१५५॥
ईशानशक्रयोर्मध्ये तस्य देश उदाहृतः । [5]उत्तमत्रितयस्यैवं[6] ह्युत्सवस्य[7] विशेषतः ॥ १५६ ॥
मध्यमत्रितयस्यापि[8] पञ्चाग्निविधिरुच्यते । दिक्षु चत्वारि कुण्डानि [9]पद्ममीशे प्रधानकम्॥१५७॥
अधमत्रितयस्याथ[10] कुण्डमेकं विधीयते । यथेष्टदेशे [11]कर्तव्यमाशासु चतसृष्वपि ॥ १५८ ॥
उत्सवानां तु सर्वेषामेको[12] वा [13]होम उच्यते । गोमयेनोपलिप्याथ [14]मण्डपं वेदिकुण्डयुक् ॥
वितानाशाध्वजैर्युक्तं दर्भमालाभिवेष्टितम् । मुक्तादामसमायुक्तं फलपल्लवशोभितम् ॥ १६० ॥
मङ्गलाङ्कुरसंयुक्तं मङ्गलाष्टकशोभितम्[15] । [16]द्वारकुम्भसमायुक्तं [17]द्वारशोभासमन्वितम् ॥ १६१ ॥
स्तम्भवेष्टनसंयुक्तं कृत्वा [18]तन्मण्डपं सुधीः । पुण्याहं वाचयित्वादौ[19] कृत्वा वै वास्तुहोमकम् ॥

[ स्थण्डिलकल्पनम्, देवताभ्यर्चनं च[20] ]

वेदिकायां ततः कुर्यात्स्थण्डिलं शालिभिः समम् । अष्टद्रोणैर्भवेच्छ्रेष्ठं तदर्धैर्मध्यमं भवेत्॥१६३॥

---

[1] E : भागकम् pour भागतः [2] A, B, D : समुत्सेधं pour समुत्सेधां

[3] A, B, D : संनिभम् pour संनिभाम्

[4] Dans le ms. D, l'ordre des *śloka* est le suivant : 155b, 158a, 156, 157, 158b, 159 etc.

[5] B et E omettent les *śloka* 156b et 157

[6] C, D : अपि pour एवं [7] A : ह्युत्सवश्च विशेषतः

[8] C, D : मध्यमं त्रितयस्यापि [9] A : पदम् pour पद्मम्

[10] B, C, D, E : अपि pour अथ [11] A : कर्तव्यं महाशासु चतुर्ष्वपि

[12] A : एकं pour एको [13] A : होममुच्यते [14] A : मण्टपं pour मण्डपं

[15] Pour les détails d'*aṣṭamaṅgala* voir *Rauravāgama*, vol. I, p. 79, note 9.

[16] C : मङ्गलाङ्कुरसंयुक्तं द्वारशोभासमन्वितम् [17] A : सर्व pour द्वार

[18] B : तु मण्डपं ; C. D, E : तु मण्टपं [19] A : तु pour आदौ

[20] Cf. *Kāmikāgama*, II, 6, 143b-153a et 180-187 :
पुण्याहं वाचयित्वान्ते वास्तुहोमं समाचरेत । भूपरिग्रहकं वापि सर्वाध्वरशिरोयुतम् ॥
स्थण्डिलं वेदिकामध्ये कुर्याल्लक्षणसंयुतम । द्रोणाद् द्रोणविवृद्ध्या तु नवद्रोणावसानकम् ॥
तदर्धतण्डुलोपेतं तदर्धतिलसंयुतम् । तद्वल्लाजसमोपेतं मध्यमे नलिनं लिखेत् ॥
विचित्रकर्णिकोपेतं प्रज्वलद्दलशोभितम् । तिललाजादिरेखाढ्यं दर्भवेष्टनसंयुतम ॥
पञ्चाद्येकविवृद्ध्या तु तत्त्वदर्भान्तसंख्यया । तन्मध्ये स्थापयेत्कुम्भं शिवाख्यं वर्धनीयुतम् ॥
अष्टविद्येश्वरोपेतं कुम्भावरणसंयुतम् । सर्वे ससूत्रवस्त्राढ्या हेमपङ्कजभूषिताः ॥
सापिधानाः सकूर्चाश्च पक्वबिम्बफलप्रभाः । स्नपनाध्यायसंसिद्धप्रमाणेन समन्विताः ॥

तदर्धैरधमं चापि तन्मध्ये पद्ममालिखेत् । कर्णिकाष्टदलोपेतं तण्डुलैः समलंकृतम् ॥ १६४ ॥
तिलैर्लाजैः कुशैश्चापि[1] शोभितं सुमनोहरम् । कर्णिकायां [2]तु संपूज्य गन्धाद्यैस्तु मनोन्मनीम् ॥
[3]वामादिशक्तीः शक्रादिदलेष्वष्टसु पूजयेत् । अन्तस्तम्भचतुष्के तु[4] [5]धर्मादीन्परितो यजेत् ॥
वेदिकायां भुवं पूज्य परितश्चाष्टमङ्गलम्[6] । पूर्वादिदिक्षु संपूज्य [7]स्वनाम्ना देशिकोत्तमः॥१६७॥
द्वारकुम्भेषु पूर्वादि वसूनष्टौ तु पूजयेत् । [8]कुण्डेषु परितश्चाथ प्रागादिषु यथाक्रमम् ॥ १६८ ॥
भवादिकांस्तु संपूज्य प्रधाने तु शिवं यजेत् । [9]पञ्चहोमविधाने तु पञ्चब्रह्माण्यनुक्रमात् ॥१६९॥
पुरुषं पूर्वकुण्डे तु दक्षिणेऽघोरमेव च । सद्यं पश्चिमकुण्डे तु[10] वामदेवं तथोत्तरे ॥ १७० ॥
ईशानं च[11] प्रधाने च पूजयेत्तु विधानतः । एकहोमविधाने तु [12]शिवमेकत्र पूजयेत् ॥ १७१ ॥
भद्राख्यं विजयं चैव [13]विजृम्भं लोहितं तथा । पूर्वादि[14]तोरणेष्वेतानर्चयेत्तु यथाक्रमम् ॥ १७२॥
वैकर्तनादिकान्बाह्ये यजेत्स्तम्भेषु[15] पूर्वतः । विताने [16]चन्द्रमभ्यर्च्य लोकपालान्ध्वजेष्वथ ॥
वासुकिं दर्भमालायां संपूज्य च विधानतः । एवमभ्यर्च्य देवांस्तु कलशस्थापनं [17]ततः॥१७४॥

---

शिवाख्ये नवरत्नं स्याद्वर्धन्यां पञ्चरत्नकम् । लोकेशादिषु हेमानि क्षिपेद्वाह्यघटेष्वपि ॥
आढ्यैनैवं प्रकनव्यं वस्त्रयुग्मं च मध्यमे । तोरणद्वारकुम्भांश्च लोकपालघटानपि ॥
हित्वा विद्येशसहितशिवं शक्तिसमन्वितम् । मङ्गलाष्टकसंयुक्तं दशास्त्रं विनिवेशयेत् ॥ .......
देशिको मूर्तिपैः सार्धं सकलीकृतविग्रहः । द्वारपूजां तत कृत्वा यागशालां प्रविश्य च ॥
ब्रह्मेष्टिं भूतशुद्धिं च सकलीकरणं पुनः । पाद्यादित्रितयं कृत्वा प्रोक्षयेदर्घ्यवारिणा ॥
यागशालां ततः कृत्वा स्थण्डिले तु शिवासनम् । कृत्वा शिववटे मूर्तिं मूर्तिमन्त्रेण कल्पयेत् ॥
पञ्चब्रह्माणि विन्यस्य कल्पयेत्तत्कलामयम् । विद्यादेहं च संकल्प्य प्रणवं विन्यसेच्छिवम् ।
हृदयादीनि विन्यस्य पाद्याद्यैरर्चयेत्ततः । एवं मनोन्मनीं न्यस्त्वा शक्तिमन्त्रेण पूजयेत् ॥
विद्येशान्परितश्चेष्ट्वा लोकपालान्प्रपूजयेत् । तदस्त्राणि च संपूज्य दर्पणादीनि पूजयेत् ॥
तानि वा वेदिकाबाह्ये स्थण्डिलोर्ध्वे स्थलेऽपि वा । अष्टदिक्षु च वा पूज्य महादिक्षु द्वयं द्वयम् ॥
तदन्ते वास्तुराजानमष्टदिक्स्थण्डिले स्थितम् । एवं क्रमेण संपूज्य ''

voir aussi *Rauravāgama*, vol. I, pp. 78-79

[1] A : एव pour अपि　　　　[2] A : सुसंपूज्य pour तु संपूज्य

[3] A : वामादिशक्तिचक्रं तु दलेष्वष्टसु　　　　[4] E : चतुष्केषु pour चतुष्के तु

[5] A, B, E : शक्रादीन् pour धर्मादीन्　　　　[6] A ajoute : पूर्वादिदिक्षु संपूज्य परितश्चाष्टमङ्गलम्

[7] B et E omettent le passage qui va de स्वनाम्ना देशिकोत्तमः à भवादिकांस्तु संपूज्य (169a) et les donnent la lecture पूर्वादिदिक्षु संपूज्य प्रधाने तु शिवं यजेत् ।

[8] A : कुण्डे तु परिवाराणि　　　　[9] D : पञ्चहोमविधानेन

[10] B : वा pour तु ; E : च　　　　[11] A : तत्प्रधानेन pour च प्रधाने च

[12] A : शिवमेकं प्रपूजयेत्　　　　[13] A : विष्कम्भं pour विजृम्भं

[14] A : तोरणेष्वेवं pour तोरणेष्वेतान्　　　　[15] A : कुम्भेषु pour स्तम्भेषु

[16] C : वज्रम् pour चन्द्रम्　　　　[17] A : तथा pour ततः

[ कुम्भस्थापनम् ]

[1]सौवर्णान्राजतान्वापि ताम्रजान्मृण्मयांस्तु वा । निर्दोषान्सर्वतो रम्यान् कलशांस्तु [2]समाहरेत् ॥
षोडशप्रस्थसंपूर्णं शिवाख्यं कलशं स्मृतम्[3] । [4]तदर्धपरिमाणः स्याच्छक्तिकुम्भो जनार्दन ॥
[5]शेषाश्च तत्समा ज्ञेयास्ते च विद्येश्वरात्मकाः । [6]क्षालितान्शोधितांश्चैव प्रोक्षितान्कुशवारिणा ॥
सूत्रेण वेष्टितान्सम्यक् [7]पुनरभ्युक्षितान्हृदा । गन्धोदपरिपूर्णांश्च [8]सहिरण्यान्सवस्त्रकान् ॥ १७८ ॥
सकूर्चान्सापिधानांश्च गन्धचन्दनचर्चितान् । सर्वानेकत्र [9]संसाध्य सर्वात्मानं समुच्चरन् ॥ १७९ ॥
शिवकुम्भं न्यसेन्मध्ये शक्तिकुम्भं [10]च दक्षिणे । दलेष्वष्टसु पूर्वादि विद्येशकलशान्न्यसेत्[11] ॥
एवं विन्यस्य कुम्भांस्तु ततो देवान्समर्चयेत् । [12]पश्चिमाभिमुखं स्थाप्य वेदीमध्ये विशेषतः ॥
ध्यात्वा सदाशिवं देवं शिवकुम्भे समर्चयेत् । आदिशक्तिं च तत्कुम्भे विद्येशान्परितो यजेत् ॥
[13]गन्धादिभिः समभ्यर्च्य नैवेद्यान्तं विशेषतः । लोकपालान्यथास्थाने [14]सास्त्रान्सर्वान्समर्चयेत् ॥

[ होमः[15] ]

ततोऽग्निं विधिवत्स्थाप्य देशिकः शान्तमानसः । सर्वकुण्डेषु होमार्थं [16]मूर्तिपानादिशेत्ततः ॥
सोष्णीषः सोत्तरीयश्च नववासो बहिःशुचिः । [17]देशिकस्तादृशाः सर्वे साधका वात्र पुत्रकाः ॥

---

[1] A : सौवर्णं राजतं वापि ताम्रं वा मृण्मयं तु वा    [2] C : समाचरेत्

[3] B, C : मतम् pour स्मृतम् ; D : नवम् ; E : तत:

[4] A : तदर्धपरिमाणं स्याच्छक्तिकुम्भं ; B : तदर्धपरिमाणस्य शक्तिकुम्भो ; C : तदर्धपरिमाणं स्याच्छक्तिकुम्भे

[5] A : तेषां च pour शेषाश्च    [6] A : क्षालितं च विधानं च

[7] A : पुनरभ्युक्ष्य तान हृदा    [8] E : संरब्धवस्त्रवर्णकान्

[9] A : संसाद्य    [10] A : तथोत्तरे pour च दक्षिणे

[11] B : यजेत् pour न्यसेत्    [12] A, C et D omettent ce demi-*śloka*

[13] A omet ce *śloka* 183    [14] C : शास्त्रान् pour सास्त्रान्

[15] Cf. *Kāmikāgama*, II, 6, 187b-195 :

"यायात्कुण्डान्तिकं गुरुः । संस्कृत्य विधिना कुण्डं शिवाग्निं विधिना नयेत् ॥
नवधा पञ्चधा कृत्वा स्वस्वकुण्डे स्थादिग्गतम् । न्यस्त्वावाह्य शिवं साङ्गं मन्त्रब्रह्माङ्गं च तर्पयेत् ॥
चतुर्दिक्षु नराद्याः स्युर्हृदयाद्या विदिक्षु वै । स्वस्वमन्त्रं प्रधाने तु सर्वैर्मन्त्रैश्च तर्पयेत् ॥
वेणुबिल्वयवा वापि सक्तुक्षीरयवं गुलम् । तिलसर्षपमुद्गा वा होमकर्मणि संस्थिताः ॥
व्रीहिशालियवा वापि माषशालियवैः सह । तिलसर्षपमुद्गाश्च सक्तुवेणुगुलं मधु ॥
चतुर्थेवं समाख्यातं होमद्रव्यं मुनीश्वराः । समिदाज्यान्नलाजांस्तु चतुर्वर्गेषु होमयेत् ॥
शतमष्टोत्तरं होमं शिवेनाङ्गैर्दशांशतः । प्रधाने त्वन्यकुण्डेषु कलार्धं जुहुयुः क्रमात् ।
द्रव्यभेदेन मन्त्रास्तु क्वचिदुक्ताः शिवागमे । तत्र भेदेन मन्त्राणां भेदो नात्र विधीयते ॥
होमान्त्ये तु हविर्दद्याद्धोमादौ वा हविर्भवेत् ।

voir aussi *Rauravāgama*, vol. I, p. 80

[16] A : मूर्तिपानां विशेषतः ; B : मूर्तिपांश्चादिशेत्ततः

[17] A : देशिकस्तादृशान सर्वान् साधकान् वात्र पुत्रकान

अष्टौ वा [1]चतुरो वाथ होतारस्ते भवन्ति हि । [2]प्रधाने स्वयमेव स्यादेकहोमविधावपि॥१८६॥
[3]अध्येतृभिश्चतुर्भिश्च प्रागादिक्रमयोगतः । ऋगादिसामपर्यन्तं [4]कुर्यादध्ययनं ततः ॥१८७॥
होमयेच्च ततो धीमान्मूर्तिपैः [5]साधकैः सह । अग्निकार्य[6]विधिप्रोक्तं कृत्वा कर्माखिलं बुधः ॥
समिदाज्यचरूँल्लाजान्सर्षपांश्च यवांस्तिलान् । मुद्गशालिसमायुक्तान्वेणुमाषांश्च होमयेत्॥१८९॥
अश्वत्थोदुम्बर[7]प्लक्षवटाः पूर्वादितः क्रमात् । शमीबिल्वखदिरार्का[8] विदिक्षु परिकल्पिताः ॥
[9]समिदर्थे पलाशस्तु प्रधानस्य प्रकीर्तितः । तैस्तैः परिधयः प्रोक्ताश्चत्वारो [10]विष्टराः समाः ॥
सर्वत्रौदुम्बरी वात्र [11]समिद् ग्राह्या विचक्षणैः । पञ्चब्रह्मषडङ्गैस्तु समिदादीन्क्रमेण तु॥१९२॥
ईशानादिशिरोऽन्तं [12]स्यात्सप्तद्रव्यहुतं क्रमात् ।मद्यादि[13]हेतिपर्यन्तैर्होमयेन्मन्त्रवित्तमः॥१९३॥
प्रतिद्रव्यावसाने तु[14] [15]व्याहृत्या जुहुयात्ततः । सहस्रं वा तदर्धं वा तदर्धार्धमथापि वा॥१९४॥
[16]अष्टोत्तरशतं वापि तदर्धं वापि होमयेत् । उत्तमत्रितये सर्वैः[17] मध्यभिर्मध्यमत्रये ॥ १९५ ॥
अधमत्रितये [18]षड्भिर्द्रव्यैर्होमोऽत्र कथ्यते । [19]उत्तमे ब्रह्ममूलाङ्गैर्होमं कुर्याद्विचक्षणः ॥ १९६ ॥
मध्यमे मूलपूर्वैस्तु[20] होममग्रे प्रकल्पयेत् । कन्यसे [21]ब्रह्मभिस्तद्वत्समिदादिक्रमेण तु ॥ १९७ ॥
ततः पूर्णाहुतिं दद्याच्छिवमन्त्रेण देशिकः । [22]ततो वह्निं समभ्यर्च्य [23]परिषिच्य [24]समापयेत् ॥

---

[1] La forme grammaticale correcte est चत्वारः mais cela ne conviendrait pas au mètre

[2] A : प्रधानः स्वयमेवं स्यादेकहोमविधायकः

[3] A : मध्ये त्रिभिः pour अध्येतृभिः ; E : अध्वर्युभिः

[4] La forme कुर्याद् est utilisée ici au sens du causatif कारयेद्

[5] B : सर्पकैः pour साधकैः

[6] B, C, D : विधौ pour विधि

[7] A : प्लक्षा वटाः pour प्लक्षवटाः

[8] A : खरार्कश्च pour खदिरार्काः

[9] C : समिद्धेन पलाशं तु ; B, E : समिधस्तु पलाशस्य ; D : समिदिर्थं पलाशस्तु

[10] B, C, D, E : विष्टरैः pour विष्टराः

[11] A : समिदगृह्य विचक्षणः

[12] E : स्यात्पञ्चद्रव्याहुतिं क्रमात्

[13] E : होम pour हेति

[14] A : अवसानेषु pour अवसाने तु

[15] B, E : व्याहृतिं pour व्याहृत्या ; C, D : व्याहृती

[16] B, C, D : शतमष्टोत्तरं वापि

[17] A : सर्वे pour सर्वैः

[18] A : षड्भिर्द्रव्यहोमोऽत्र

[19] B, C, D, E : उत्तमत्रितये चैव संहितामन्त्रमुच्चरन्

[20] A : वा pour तु

[21] A : ब्रह्मभिर्मन्त्र pour ब्रह्मभिस्तद्वत्

[22] Le ms. D omet les *śloka* 198b à 243

[23] E : होमकर्म pour परिषिच्य

[24] B, C, E : समाप्य च

[ कौतुकबन्धनम्[1] ]

ततः शूलं समानीय शांकरे वाथ मारुते । स्थण्डिले स्थाप्य तं देवं [2]पूज्य गन्धादिभिस्तदा[3]॥
बन्धयेत्कौतुकं [4]मन्त्री विधिस्तस्य च[5] कथ्यते । शूलाग्रे स्थण्डिलं कृत्वा शालिभिर्विमलैस्तथा[6]॥
[7]तन्मध्ये पद्ममालिख्य स्थालीं तत्रैव विन्यसेत् । पूरयित्वा ततः स्थालीं तण्डुलैराढकैस्ततः ॥
[8]तत्र पद्मं समालिख्य [9]हैमं वा राजतं तु वा । कार्पासतन्तुजं वापि सूत्रं तत्रैव विन्यसेत् ॥
भस्म चापि [10]ततस्तत्र विन्यसेद्देशिकोत्तमः । पुण्याहं वाचयित्वाथ[11] [12]शूलं संपूज्य पूर्ववत् ॥
कौतुकं च हृदाभ्यर्च्य सर्वात्मानमुदाहरन्[13] । [14]अस्त्रमध्यमपत्रस्य मूले तद्बन्धयेत्सुधीः॥२०४॥
अस्ति चेत्प्रतिमा तत्र [15]तद्धस्ते दक्षिणे भवेत् । भस्म [16]चाप्यस्त्रमन्त्रेण बन्धिते कौतुके न्यसेत्॥
[17]उत्सवप्रतिमायां च तद्वदेव प्रबन्धयेत् । [18]विशेषेष्वपि बेरेषु [19]यदा येनोत्सवं भवेत्॥२०६॥
तस्मिंस्तस्मिंस्तदा बेरे पूर्वमेव प्रबन्धयेत् । देवीनां गौरिगायत्र्या[20] भवेत्कौतुकबन्धनम्[21] ॥२०७॥
लवणोपरि तासां तु विन्यसेद्वाथ[22] कौतुकम् । अन्येषां स्वस्वनाम्नैव प्रोक्तः [23]प्रतिसरे विधिः ॥

---

[1] Cf. *Dīptāgama*, 93,4b-11 :

"रात्रौ तु कौतुकबन्धनम् । हैमैर्वा राजतैर्वापि क्षौमैः कार्पासकैस्तु वा ॥
रक्षाबन्धं हृदा दत्त्वा शूलयागेन मूर्तिनः । कौतुकं तु ध्वजे चास्त्रे बन्धयेद्धृदयेन तु ॥
आलयस्याग्रतः कुर्याद्गोमयालेपनं क्रमात् । स्थण्डिलं कारयेत्तत्र शालिभिश्चतुरङ्गुलम् ॥
तण्डुलैः पूरयेत्पात्रं तन्मध्ये कौतुकं न्यसेत् । शिवगायत्रिमन्त्रेण गन्धपुष्पादिनार्चयेत् ॥
गायकैर्वाद्यकैश्चैव नर्तकगणिका सह । सर्वालंकारसंयुक्तं कुर्याद् ग्रामप्रदक्षिणम् ॥
आलयं वा परिभ्राम्य दीपैश्च बहुभिः सह । आस्थानमण्डपं गत्वा रक्षासूत्रं तु बन्धयेत् ॥
शूलस्य मध्यमे पत्रे बन्धयेदस्त्रमन्त्रतः । यागेशं च ध्वजं चास्त्रं बन्धयेत्स्वस्वमन्त्रतः ॥
भस्म दत्त्वा हृदा मन्त्री यजमानाय दापयेत् ।

[2] C : पूजा pour पूज्य
[3] A : तु नाः pour तदा
[4] E : कर्म pour मन्त्री
[5] A : तस्यैव pour तस्य च
[6] B, C, E : ततः pour तथा
[7] A omet ce *śloka* 201
[8] C omet ce *śloka* 202
[9] E : हेमं pour हैमं
[10] B : च तत्तन्त्रं pour ततस्तत्र ; E : च तद्यन्त्रं
[11] A : तु pour अथ
[12] A : सूत्रान pour शूलं
[13] A : उदाहरेत् pour उदाहरन्
[14] A : अस्त्रं मध्यमपद्मस्य
[15] C : बन्धयेद्दक्षिणे तथा ; E : बन्धयेद्दक्षिणेतरे
[16] A : संजाप्य मन्त्रेण बन्धयेत्कौतुकं न्यसेत्
[17] A : उत्सवं प्रथमायाश्च
[18] C omet les demi-*śloka* 206b et 207a
[19] E : येन येनोत्सवे नयेत्
[20] E : गायत्री pour गायत्र्या
[21] E : बन्धने pour बन्धनम्
[22] A : वायु pour वाथ
[23] E : प्रतिसरो विधिः

[ बलिविधिः[1] ]।

बन्धनान्ते च सर्वेषां [2]विधिना बलिरुच्यते । ततो बलिप्रदानं स्यात्तद्विधिश्चात्र कथ्यते॥२०९॥
[3]अस्त्रराजादिशस्त्राणि सेश्वराणि यजेत्क्रमात् । [4]तत्तद्दिशोत्तमाङ्गस्थान्यथवा केवलानि च॥२१०॥
[5]लोहानि वा सवृक्षाणि तानि कृत्वा यथाविधि । [6]बल्यर्चयापि वा सार्धं कुर्यात्तां च बलिक्रियाम्
[7]ततश्चाप्यन्नलिङ्गं तु कारयेत्तु [8]विचक्षणः । अन्नेन शालिसिद्धेन दध्याज्याभ्यां प्लुतेन च[9] ॥
उक्तलक्षणसंयुक्तं[10] [11]स्थलिकामध्यसंस्थितम् । द्वादशाङ्गुलविस्तीर्णमुत्तमं तद्भवेदिह ॥ २१३ ॥
[12]अङ्गुलाङ्गुलहान्या तु[13] मध्यमं चाधमं भवेत् । विस्तारेण समोत्सेधं[14] [15]मूलादग्रे क्रमात्कृशम् ॥
[16]तत्र पाशुपतं देवं सर्वदोषनिकृन्तनम् । [17]त्रिनेत्रं [18]चतुर्भुजाकारं शिखाकोटिसमुज्ज्वलम् ॥
वरदाभयहस्तं च वामसव्याक्षशूलधृत्[19] । एवं ध्यात्वा समभ्यर्च्य गन्धपुष्पादिभिः क्रमात् ॥
२१६॥

---

[1] Cf. *Kāraṇāgama*, I, 141, 124b-133a et 156b-160:
सायं प्रातर्बलिं दद्याद्धोमान्ते विधिना पुरा । द्रोणं वापि तदर्धं वा बल्यर्थं तण्डुलं पचेत् ॥
कटाहं स्थालिकं वापि पात्रं प्रक्षाल्य निक्षिपेत् । तत्पात्रे निक्षिपेदन्नमन्नद्रव्यसमायुतम् ॥
पात्रतण्डुलकं पक्वमन्नलिङ्गाय बुद्धिमान् । बलिपात्रं समादाय प्रोक्षयेदस्त्रमन्त्रतः ॥
तेन चान्नेन लिङ्गं तु कारयेल्लक्षणान्वितम् । द्वादशाङ्गुलमायामं नाहं तु द्विगुणं भवेत् ॥
अग्रे पक्षाङ्गुलं तारमापूर्य कुशलस्तथा । तल्लिङ्गस्थं ततो ध्यात्वा रौद्रं पाशुपतं यजेत् ॥
परिचारान्समाहूय सुस्नाताञ्शुक्लवस्त्रकान् । सोष्णीषः सोत्तरीयश्च पवित्रपाणिकः शुचिः ॥
शूलास्त्रं चान्नलिङ्गं च बलिपात्रं तथायुधान् । गन्धपुष्पादिभिश्चैव धूपदीपसमाकुलम् ॥
यन्त्रोपरि नयेद्वाथ वाहयित्वा गलैरपि । वितानछत्रसंयुक्तं पिच्छचामरसंयुतम् ॥
तालकाहलसङ्घैश्च वाद्यैर्ध्वजैश्च संयुतम् । ध्वजादिबलिपीठान्तं बलिं दद्याद्विशेषतः ॥
ब्रह्माद्यैशानपर्यन्तमिन्द्रादीशानमेव वा । तत्तत्स्थानेषु सर्वेषु विघ्नराजादिमन्त्रकैः ॥
अर्चयित्वा तु पूर्वोक्तमिन्द्रस्यैवं बलिं क्षिपेत् । प्रणवादिचतुर्थ्यन्तं स्वनामपदमध्यमम् ॥
स्वाहान्ते बलिनिर्देशः सर्वेभ्य इति योजयेत् । सर्वदेवालयाग्रेषु बलिं दद्याद्विशेषतः ॥
एवं बलिक्रमं कुर्याद्बलिपीठे बलिं क्षिपेत् । यागशालां प्रविश्याथ अस्त्रादीन्स्थापयेत्क्रमात् ॥
लिङ्गमूर्तिं विसृज्यान्नलिङ्गं चैव क्षिपेज्जले ।
voir aussi *Rauravāgama* vol. I, pp. 80-81 (बलिविधिः)

[2] C, E : विशेषाद्विधिरुच्यते
[3] E : अस्त्रराजेति शस्त्राणि
[4] A : तत्तदीशोत्तमं स्थानमथवा केवलानि च
[5] C, E : लोहं वाप्यथ वृक्षाणि
[6] A : बल्यर्चा यापि वा सार्थं
[7] A : ततः स्थाप्यान्नलिङ्गं तु
[8] C : विचक्षणैः
[9] E : युतेन वा pour प्लुतेन च
[10] C : संयुक्त pour संयुक्तं
[11] E : स्थालिका pour स्थलिका
[12] E : अङ्गुल्या pour अङ्गुल
[13] E : हीनात्तु pour हान्या तु
[14] C : समोत्सेधे
[15] E : मूलाग्रे च pour मूलादग्रे
[16] E : ततः pour तत्र
[17] C, E : त्रिणेत्रं
[18] A : चतुर्भुजं रूपं
[19] C, E : धृक् pour धृत्

अर्चितांस्तु ततो देवान्सर्वांस्तान्परिचारकैः । [1]सोष्णीषैः सोत्तरीयैश्च सपवित्रकरैस्तथा[2]॥२१७॥
[3]धृत[4]त्रिपुण्ड्रकैश्चापि[5] वाहयित्वा क्रमेण तु । सोष्णीषः सोत्तरीयश्च बलिदानाय साधकः ॥
अस्त्रस्य [6]पुरतो गच्छेदर्घ्यहस्तः समाहितः । [7]वज्राद्यैः सास्त्रदेवैस्तु [8]परितश्च क्रमात्ततः॥२१९॥
[9]तेषां [10]पृष्ठेऽस्त्रलिङ्गं च प्रोक्तलक्षणलक्षितम्[11] । वितानध्वजसंयुक्तं पिञ्छचामरसंयुतम्॥२२०॥
धूपदीपसमायुक्तं सर्वातोद्यसमन्वितम् । आनयेद्बलिदानार्थं [12]बल्यन्नमपि वक्ष्यते ॥ २२१ ॥
शुद्धतण्डुलसंसिद्धं[13] [14]शिवं वापि तदर्धकम् । हेम[15]रूप्यादिपात्रस्थमुक्तद्रव्यसमन्वितम्॥२२२॥
[16]पिधाय तद्विधानेन वस्त्रेण सुमितेन च । साधकस्तु समाहृत्य गन्धपुष्पादिसंयुतम् ॥२२३॥
पार्श्वे [17]समानतं तस्य सोऽपि [18]मौनव्रतस्थितः । [19]ततो बलिं पुरा दद्यान्दित्यवन्मन्त्रवित्तमः॥
[20]तत्तद्दिशाधिपानां च महापीठे [21]बलिं क्षिपेत् । गन्धपुष्पादिभिः सम्यक् कुक्कुटाण्डप्रमाणतः॥
अथवा [22]तद्दिनेशानां समाप्तौ वा बलिक्रियाम् । ग्रामादिषु ततो दद्याद् ब्रह्मादीशान्तमेव च[23]॥
[24]बलिपीठेऽथवा शुद्धे भूपृष्ठे वा बलिक्रियाम् । बलिदानविधौ तत्र ये देवा [25]वीथिपार्श्वगाः॥
तेषामग्रे बलिं दद्यात् स्वनामपदमन्त्रतः । अथवा [26]वीथिमध्ये तु तानुद्दिश्य प्रदापयेत्॥२२८॥
चतुष्पथे पिशाचेभ्यस्त्रिपथे[27] रक्षसां भवेत् । सभास्थाने सरस्वत्यै ज्येष्ठायास्तु जलाशये॥२२९॥
न्यग्रोधे क्षेत्रपालस्य विघ्नेशस्यापि पिप्पले । चैत्यवृक्षे गुहस्यापि कूपे कुम्भोदरस्य च[28]॥२३०॥
गोस्थाने चण्डरुद्रस्य भीमरुद्रस्य गोपुरे । एवं [29]बलिविधिः प्रोक्तो दिनेशानप्यथ शृणु॥२३१॥

---

[1] A : सोष्णीषं सोत्तरीयं च
[2] E : ततः pour तथा
[3] C, F : कृत pour धृत
[4] A : त्रिपुण्टकैः pour त्रिपुण्ड्रकैः
[5] E : एव pour अपि
[6] A : पुरतोऽश्वश्च pour पुरतो गच्छेद्
[7] A : शुक्राद्यैश्चैव देवैस्तु ; E : वस्त्राद्यैः शस्त्रदेवैस्तु
[8] E : परतश्च
[9] E : तथा pour तेषां
[10] C : पृष्ठेन लिङ्गं च
[11] E : लक्षितः pour लक्षितम्
[12] A : बल्यर्थमपि
[13] A : संयुक्तं pour संसिद्धं
[14] A : अथवापि pour शिवं वापि
[15] E : रौप्यादि pour रूप्यादि
[16] A : विधाय तद्विनानेन
[17] C, E : समानतेनस्य
[18] C : मौनव्रते स्थितः
[19] C, E : अन्तर्बलिं pour ततो बलिं
[20] A : तत्तर्दीशाधिपानां च ; E : तत्तदाशाधिपानां च
[21] A : प्रकल्पयेत्
[22] C : तद्दिनेशानसमाप्तौ
[23] C, E : वा pour च
[24] A, E : गन्ध pour बलि
[25] A : वीथिपार्श्वके ; C : विधिपार्श्वगाः ; E : वीथिपार्श्वकाः
[26] A : काममध्ये ; C : विधिमध्ये
[27] C : स्त्रीपदे pour त्रिपथे
[28] C, E : तु pour च
[29] A : बलिकर्म प्रोक्तं

[ दिनाधिपाः, बलिद्रव्याणि च[1] ]

एकाहस्य शिवो देवो ब्रह्मविष्णुमहेश्वराः । त्रियहस्याथ पञ्चाहे मूर्तयः पञ्च [2]चैव हि ॥२३२॥
उत्सवानां [3]तथान्येषां वक्ष्ये देवान्दिनेश्वरान् । सर्वेषु प्रथमाहस्तु [4]विघ्नेशस्य प्रकीर्तितः॥२३३॥
अन्तिमस्तु शिवस्य स्यात्तत्पूर्वो रक्षसो[5] भवेत् । उत्सवस्य तु [6]निर्दिष्टो भौवनस्य जनार्दन ॥
द्वितीयाहस्तु वैरिञ्चस्तृतीयो [7]भौत उच्यते । [8]गान्धर्वस्तु चतुर्थश्च पञ्चमः [9]शाक्र उच्यते ॥
भौवने देवताः प्रोक्ताः [10]शाक्ते चाथ महोत्सवे । षष्ठस्य सप्तमस्यापि मुनयो विष्णुरेव च॥२३६॥
[11]पूर्वोक्तैः सह निर्दिष्टा दिनानामधिपाः क्रमात् । [12]रौद्रस्याप्याधिके चाह्नि चाष्टमे नवमेऽपि वा॥
[13]वसवो मरुतश्चैव क्रमाद्देवाः प्रकीर्तिताः । [14]सौरे चाप्यधिके चाह्नि चन्द्रो देव उदाहृतः॥२३८॥
[15]मानवस्योत्सवस्याथ [16]यौ दिनावधिकौ तु तौ[17] । [18]एकादशद्वादशयो रुद्रा रवय एव च ॥
ततः पञ्चदशाहस्य यो दिनस्त्वधिको भवेत् । [19]त्रयोदशाहस्तस्यापि पितरो देवताः स्मृताः ॥

---

[1] Cf. *Kāmikāgama*, II, 6, 219-232 :

मुद्गान्नं लड्डुकं सर्पिः कदलीगुलसंयुतम् । प्रथमेऽहनि दातव्यं विघ्नमन्त्रमनुस्मरन् ॥
रक्तान्नं मांससंयुक्तं कृसरापूपसंयुतम् । घृतमत्स्यसमायुक्तं जपाकुसुमसंयुतम् ॥
द्वितीयेऽहनि दातव्यं पैशाचं मन्त्रमुच्चरन् । पायसं सक्तुपूपं च पद्मपुष्पसमन्वितम् ॥
तृतीयेऽहनि दातव्यं ब्रह्ममन्त्रमनुस्मरन् । कृसरान्नं घृतं सक्तुलड्डुकैश्च समन्वितम् ॥
चतुर्थेऽहनि दातव्यं गान्धर्वं मन्त्रमुच्चरन् । इन्द्रवल्लीहरिद्रान्नं सघृतं लाजसंयुतम् ॥
पञ्चमेऽहनि दातव्यं भूतमन्त्रमनुस्मरन् । गुलान्नं घृतसंयुक्तं नालिकेरफलान्वितम् ॥
षष्ठेऽहनि प्रदातव्यं स्कन्दमन्त्रमनुस्मरन् । कुशाग्रं घृतसंयुक्तं शुद्धान्नं दधिसंयुतम् ॥
सप्तमेऽहनि दातव्यमृषीणां मन्त्रमुच्चरन् । क्षीरान्नं शालिपिष्टं च इक्षुखण्डसमन्वितम् ॥
अष्टमेऽहनि दातव्यं नागमन्त्रमनुस्मरन् । दधिकान्नं गुलोपेतं मातुलुङ्गफलं तथा ॥
नवमेऽहनि दातव्यमैन्द्रमन्त्रमनुस्मरन् । गुलान्नमाज्यसंयुक्तं कदलीफलसमन्वितम् ॥
दशमेऽहनि दातव्यं विष्णुमन्त्रमनुस्मरन् । रक्तान्नं मांससंयुक्तमपूपं तिलचूर्णयुक् ॥
एकादशाहे दातव्यं रक्षसां मन्त्रमुच्चरन् । शाल्यन्नं दधिसंयुक्तं गुलखण्डसमन्वितम् ॥
द्वादशेऽहनि दातव्यं शिवमन्त्रमनुस्मरन् । सप्ताहे वाथ पञ्चाहे त्रिदिने व्योमरात्रिके ॥
पूर्वं त्यक्त्वा परं प्रोक्तं दिनद्रव्याश्च देवताः । दिनदेवबलिद्रव्यं कथितं मुनिसत्तमाः ॥

voir aussi *Rauravāgama*, vol. I, ii, 18, 91b-101a et les notes (pp. 81-83)

[2] A omet च dans चैव
[3] D : अथ pour तथा
[4] A : विघ्नेशस्तु
[5] A : पूर्वं राक्षसा pour पूर्वो रक्षसो
[6] A : निर्दिष्टौ
[7] A : ह्रोतमुच्यते
[8] A : गन्धर्वास्तु चतुर्थस्य
[9] A : शक्र pour शाक्र
[10] A : शाक्रे pour शाक्ते
[11] A : पूर्वोक्त pour पूर्वोक्तैः
[12] A : रौद्रस्याथमथोरह्नौ
[13] A : पशवो pour वसवो
[14] A : सौरे चाप्यथ कस्याह्नौ ; C : सौरे चाप्यधिकस्याह ; E : सौरे चाप्यधिकस्याह्नौ
[15] A : दानवस्य pour मानवस्य
[16] A : ये pour यौ
[17] A : यौ pour तौ
[18] A : एके द्वादश यो रुद्रा
[19] A : त्रयोदशाहं तस्यापि

एवं दिनाधिपा देवाः क्रमेण परिकीर्तिताः । एकाहस्य तु शैवस्य शुद्धमन्नं ततः परम्॥२४१॥
[1]हारिद्रं कृसरान्नं च गौणे यवभवं तथा । [2]मुद्गमाषकुलत्थान्नं [3]वेणुनिष्पावजं तथा ॥ २४२ ॥
भौतोत्सवस्य निर्दिष्टं क्रमेण दिनपञ्चके । अपूपयवगोधूम[4]तिलखण्डाज्यमेव च ॥ २४३ ॥
[5]आढकी च क्रमाद् द्रव्यं भावनाहेतु सप्तसु । प्रियङ्गुवरकौ[6] चापि शाक्तस्याप्यधिकौ मतौ ॥
[7]रौद्रस्य गुलनीवारावधिकौ तु ततः परम् । सक्तुः सौरेऽधिकः प्रोक्तस्ततः पनसलाजकौ ॥
[8]मानवेऽप्यधिके द्रव्ये पक्षे स्याच्च पयोऽधिकम् । शुद्धतण्डुलसंसिद्धे [9]सर्पिषान्ने परिप्लुते ॥
[10]यद्यद्द्रव्यं दिनेषूक्तं तत्तन्निक्षिप्य दापयेत् । सायं प्रातर्बलिं दद्यादथवापि[11] मधुप्लुतम् ॥

[उत्सवक्रमः[12]] २४७ ॥

एवं द्रव्यं समाख्यातमुत्सवक्रम उच्यते[13] । [14]ग्रामादौ यत्र देवानां दीयते बलिकर्म तत् ॥

---

[1] A : हरिद्रं pour हारिद्रं [2] E : मुद्गान्नमपि कुस्थान्नं [3] A : वर्ण pour वेणु
[4] A : त्रिखण्डानि च तत्र वै pour तिलखण्डाज्यमेव च [5] C, E : आढकं च
[6] A : वरको pour वरकौ [7] E : रुद्रस्य pour रौद्रस्य [8] A : मानव्येऽप्यधिकौ द्रव्यौ
[9] E : सर्पिषा च pour सर्पिषान्ने [10] A : अन्यद्द्रव्यं pour यद्यद्द्रव्यं
[11] A : अथवा च pour अथवापि ; C : दधिना च
[12] Cf. *Kāraṇāgama*, I, 141, 163b-179a :

संमार्जनविधिं कृत्वा प्रोक्षयेच्छुद्धवारिभिः । कदलीक्रमुकैश्चैव सफलैः पूर्णकुम्भकैः ॥
मुक्तादामैश्च दीपैश्च भवनं प्रति भूषयेत् । ध्वजैश्च विविधैश्चैव पताकाभिस्तथैव च ॥
नानादीपैः समायुक्तं व्रजेयुस्तद्भटाः पुरा । तदन्ते वारणारूढास्तदन्ते वाजिवाहनाः ॥
वाजियन्त्रास्तदन्ते तु डोलायन्त्रास्तदन्तके । दीपयन्त्रास्तदन्ते तु नृत्तयन्त्रास्तदन्तके ॥
नानातोद्यसमायुक्तं नृत्तगेयसमाकुलम् । छत्रैः पिञ्छैश्च विविधैश्चामरव्यजनैर्युतम् ॥
रथे वा रङ्गके वापि शिबिकां रोप्य बिम्बकान् । नानावस्त्रसयायुक्तान्नानापुष्पोपशोभितान् ॥
पुष्पप्रभासमायुक्तान्सर्वालंकारसंयुतान् । कौतुकशक्तियुक्सौधमन्ते गच्छेच्छनैः क्रमात् ॥
प्रतिमाष्टादशानां तु एकं वापि द्वयं तु वा । त्रयं वाप्यथवा सर्वं यथावित्तानुसारतः ॥
महाशैवास्तदन्ते तु तदन्ते भूसुरास्तथा । सर्वेषां पृष्ठतो गच्छेत्तथा चण्डेश्वरस्तथा ॥......
चातुर्वर्णोद्भवा भक्ता व्रजेयुश्च क्रमेण तु । ये तत्रैवानुगच्छन्ति भक्तियुक्ता महाजनाः ॥
प्राप्नुवन्त्यश्वमेधस्य फलमेवं न संशयः । कृत्वा प्रदक्षिणां ह्येवं प्रविश्यास्थानमण्टपम् ॥
देशिकः सव्यभागे तु स्वासने वासके नृपः । तयोः पृष्ठप्रदेशे तु शिष्यभृत्याश्च संस्थिताः ॥
महाशैवद्विजाश्चैव सव्यभागे तु संस्थिताः । देवस्याग्रे विशेषेण नृत्तं कुर्यात्सगेयकम् ॥
सर्वालंकारसंयुक्तं कारयेत्तु विशेषतः । पटं तत्रापनीयाथ शङ्खघोषसमन्वितम् ॥
तत्काले चात्मतत्त्वं च पूजयेत्प्रतिमन्त्रतः । नीराजनं ततः कुर्यात्तद्रात्रौ परिवेष्टके ॥
ततो नैवेद्यकं पश्चात्ताम्बूलं दापयेद् बुधः । सायं प्रातः क्रमेणैव बल्यन्ते तु दिनं प्रति ॥

voir aussi *Rauravāgama*, vol. I, pp. 83-84 (यात्रा)

[13] C : उत्सवं तु समुच्यते pour उत्सवक्रम उच्यते ; E : यानमुत्सवमुच्यते
[14] A : ग्रामान्ते pour ग्रामादौ

तत्रैवोत्सवयानं स्यात्सर्वालंकारसंयुतम् । [1]वीथीनां शोधनं [2]पूर्वं [3]मार्जनं चापि कारयेत् ॥२४९॥
[4]शुद्धतोयेन [5]सर्वापि वीथीः सर्वत्र सेचयेत् । [6]गृहश्रेण्यां च सर्वत्र बध्नीयाद्विविधान्[7] ध्वजान् ॥
सभास्थानेऽपि विधिना [8]बध्नीयाद्वा वृषध्वजान् । पूर्णकुम्भं प्रतिद्वारं मङ्गलाङ्कुरसंयुतम्[9]॥२५१॥
[10]दीपयुक्तं समायोज्य दर्भमालावलम्बनैः[11] । रथे वा शिबिकायां वा प्रतिमां बद्धकौतुकाम् ॥
सर्वाभरणसंयुक्तां[12] [13]चित्रहृद्यांशुकैर्युताम् । मालापुष्पप्रभायुक्तां सर्वालंकारसंयुताम् ॥२५३॥
छत्रचामरसंयुक्तं[14] पिञ्छध्वजसमन्वितम्[15] । [16]धूपदीपसमायुक्तं[17] सर्वातोद्यसमन्वितम्[18]॥२५४॥
गीतनृत्तसमायुक्तं[19] [20]ग्रामादावानयेच्छनैः । चण्डेशं च तथाभूतं [21]तस्याश्वानु समानयेत् ॥
[22]डोलादीनि च यन्त्राणि [23]वृषाश्वगजयन्त्रकान् । गायकान्नर्तकांश्चैव[24] तथा [25]वन्दिजनानपि॥
[26]मालाभरण[27]हृद्याङ्ग[28]शिवायतनयोषितः । शैवांश्चतुर्विधांश्चापि देशिकांस्तथैव च ॥२५७॥
[29]ब्राह्मणांश्च स्वकर्मस्थान्क्षत्रियादींस्तथैव च । भक्तानन्यान्बहूंश्चापि सेवार्थं तत्र कल्पयेत्॥२५८॥
उत्सवान्ते प्रविश्यान्तः संस्थाप्यास्थानमण्टपे । वितानध्वजसंयुक्ते स्तम्भवेष्टनसंयुते ॥२५९॥
पाद्यमाचमनं चार्घ्यं [30]हृच्छिरश्चूलिकाणुभिः । [31]दत्त्वा देवस्य देव्याश्च ततः स्नपनमाचरेत्[32]॥

---

[1] C, D : वीथीनां pour वीथीनां [2] A : पूर्वे pour पूर्वं [3] C : आर्जनं pour मार्जनं
[4] A : शुद्धतोयेन संग्रामभक्तैः सर्वकुशोशये
[5] La forme grammaticale correcte est सर्वा अपि
[6] A : ग्रहशेषं च [7] A : विधिना pour विविधान्
[8] C : वध्नीयाद्वृषभध्वजम्; E : बध्नीयाद्वा वृषध्वजम् [9] C, E : शोभितम् pour संयुतम्
[10] A : उपयुक्तं pour दीपयुक्तं [11] A : अवलम्बितम् pour अवलम्बनैः
[12] A : संयुक्तं pour संयुक्तां [13] A : द्विग्रहाद्यंशुकं तथा
[14] D, E : संयुक्तां pour संयुक्तं [15] E, D : समन्विताम् pour समन्वितम्
[16] E omet ce demi-*śloka* [17] C, D : समायुक्तां pour समायुक्तं
[18] C, D : समन्विताम् pour समन्वितम् [19] C, D, E : समायुक्तां pour समायुक्तं
[20] A : ग्रामादौ वा नयेच्छनैः [21] A, C, E : तस्य चानु pour तस्याश्वानु
[22] A : डोलादींश्चाथ यन्त्राणि ; C, D, E : डोलायन्त्रादियन्त्रांश्च
[23] C, D : वृषाश्व pour वृषाश्व [24] C, D : नृत्तकांश्चैव pour नर्तकांश्चैव
[25] A : वाद्य pour वन्दि; C : वादि [26] A : नाना pour माला
[27] A : वस्त्रादि pour हृद्याङ्ग; D : हृद्याङ्गः [28] A : संयुक्ताः शिवयोषितः pour शिवायतनयोषितः
[29] L'ordre des *śloka* dans le ms. C est le suivant : 257 ; 281 à 297 ; 272 à 280 ; les *śloka* 258 à 271 manquent
[30] E : हृच्छिरःशिखराणुभिः [31] A : तत्वा देवाश्च देव्याश्च [32] A : आरभेत् pour आचरेत्

शङ्खदुन्दुभिनिर्घोषैर्जयशब्दादिमङ्गलैः । ततः [1]सिंहासनाद्यो तु देवमारोप्य भक्तितः ॥२६१॥
पाद्यादीन्पूर्ववद्दत्त्वा गन्धाद्यैरर्चयेद्बुदा । वस्त्राभरण[2]माल्यादींस्तेन मन्त्रेण दापयेत् ॥ २६२ ॥
प्रभूतं च हविर्दत्त्वा मुखवाससमन्वितम् । ताम्बूलं च ततो दत्त्वा शङ्खध्वनिसमन्वितम्॥२६३॥
प्रच्छादनपटं चाथ देवाग्रे प्रेरयेत्तदा[3] । गीतनृत्तादिभिः [4]पश्चाद्विनोदं सम्यगाचरेत् ॥२६४॥
देशिकः सव्यभागे तु स्वासीनो वामके नृपः । तयोः [5]पृष्ठप्रदेशे तु [6]शिष्या भृत्याश्च संस्थिताः॥
[7]मृदङ्गाद्या महाशब्दा देवस्य पुरतः स्थिताः । पद्मपत्रवदाकारं शुद्ध[8]कांस्यमयेन तु ॥ २६६ ॥
[9]तालमध्येऽव्रटं कुर्यात्सुषिरे रज्जुयोजनम्[10] । ग्रन्थिपुच्छयुता रज्जुश्चैवं तालद्वयं कुरु॥२६७॥
तालहस्तयुतो [11]वामभागे [12]गान्धर्वसंस्थितेः । मद्दलं च मृदङ्गं वा [13]सव्ये पार्श्वे इति स्मृतम् ॥
नृत्तं गेयसमायुक्तं बिम्बाग्रे भरतोक्तवत्[14] । उच्चैर्यष्टिप्रदीपैस्तु[15] [16]रात्र्युत्सवमथाचरेत् ॥२६९॥
आरात्रिकं च कुर्वीत रात्रावास्थानमण्टपे । सर्वेष्वेषु दिनेष्वेवं[17] [18]कृत्वा बल्युत्सवक्रियाम् ॥

[मृगयात्रा[19]]

[20]तीर्थर्क्षादह्नि पूर्वे तु मृगयात्रा भवेत्ततः । [21]तत्पूर्वेऽह्नि न देवेशं नृत्तरूपं महेश्वरम्[22]॥२७१॥

---

[1] A : सिंहासने देवं देवीमारोप्य

[2] D, E : मालादीन् pour माल्यादीन्

[3] A : ततः pour तदा

[4] E : चैव pour पश्चाद्

[5] A : ब्रह्म pour पृष्ठ

[6] A : शिष्यभृत्याश्च

[7] D : मृदङ्गाद्यमहाशब्दं

[8] A : कंस pour कांस्य

[9] A omet les *śloka* 267 à 269a

[10] E : योजयेत् pour योजनम्

[11] E : वामे भागे

[12] C, D, E : गान्धर्वसंस्थितः

[13] C, E : सव्ये पारशवः स्मृतः

[14] A repéte ici les *śloka* 262b, 263 et 264a

[15] E : च pour तु

[16] D, E : रात्रावुत्सवमाचरेत्

[17] D : एषु pour एवं

[18] E : बल्युत्सवविधिं

[19] Cf. *Suprabhedāgama*, I, 14, 135b-136a :
ततस्तीर्थदिनात्पूर्वं मृगयात्रां समारभेत् । युद्धारम्भप्रभावेण ग्रामं गत्वा प्रदक्षिणम् ॥
voir aussi *Rauravāgama*, vol. I, pp. 84-85 (मृगयात्रा)

[20] D, E : तीर्थर्क्षाहनि पूर्वे तु

[21] A, E : तत्पूर्वे वह्निदेवेशं

[22] D : नृत्तरूपमहेश्वरम्

[1]कृष्णगन्धं समालिप्य कारयेच्च महोत्सवम् । व्यत्यासेनाथवा [2]चैते कल्पयेत्कल्पवित्तमः ॥

[तीर्थसंग्रहः[3]] २७२ ॥

तीर्थार्थं कौतुकं शूले प्रतिमायां यथाविधि । बन्धयेत्पूर्वमुत्सृज्य [4]तीर्थर्क्षस्यादिमे निशि ॥
प्रत्यूषे च[5] ततो धीमान्कुर्यात्तीर्थस्य संग्रहम्[6] । यागधाम्नि शिवाग्रे वा जलतीरेऽथवा सुधीः ॥
स्थण्डिलद्वितयं कृत्वा शालिभिर्विमलैस्तयोः[7] । पद्ममष्टदलं कृत्वा [8]तण्डुलैरुपशोभितम् ॥ २७५ ॥
परिस्तीर्य कुशैस्तत्र शूलमेकत्र विन्यसेत् । तदग्रे कलशान्सोदान्सर्वलक्षणलक्षितान् ॥ २७६ ॥
मध्यात्प्रभृति विन्यस्य नव तेषु समर्चयेत् । नवशक्तीस्तु[9] संपूज्य गन्धपुष्पादिभिः क्रमात् ॥
त्रिशूलं चाथ संपूज्य पूर्ववद्देशिकोत्तमः । ततस्तैः कलशैः शूलमभिषिच्य यथाक्रमम् ॥ २७८ ॥
अवगाह्य जले पश्चाच्छूलमभ्यर्च्य देशिकः । सर्वास्त्रैर्वा [10]समोपेतः संनिमज्य यथाविधि ॥
प्रविश्य यागगेहं तं [11]शूलं संस्थाप्य पूजयेत् । तीर्थार्थं कौतुके बद्धे तत्र वा कलशांस्तु तान् ॥
शूलेऽभिषिच्य कृत्वा तु[12] धाम चाथ प्रदक्षिणम् । यागधाम्नि ततः शूलं स्थाप्य सम्यक् समर्चयेत् ॥
एवं कौतुकतीर्थं [13]तदैककल्पिकमुदाहृतम् । प्रभाते दिवसे कृत्वा पूजाहोम[14]बलिक्रियाम् ॥ २८२ ॥

---

[1] A : गन्धमाप्यथमालिप्य ; D : गन्धमाहिपमालिप्य [2] A : चैतो ; D : चेते

[3] Cf. *Suprabhedgāama*, I, 14, 136b-142a :
कौतुकं बन्धयेद्धीमांस्तस्मिन् रात्रौ विशेषतः । सौवर्णं राजतं सूत्रमथ कार्पासमेव वा ।
स्थण्डिलोपरि संस्थाप्य त्रिशूलं स्थण्डिलोपरि । यागमण्डपमध्ये तु शूले कौतुकबन्धनम् ॥
हृदयेनैवं कृत्वा तु पुण्याहं तत्र कारयेत् । उत्सवप्रतिमां बध्वा कौतुकं हृदयेन तु ।
स्थण्डिलोपरि संस्थाप्य कलशान्नवसंख्यया । पिधानकूर्चवस्त्राढ्यान्दिव्यद्रव्यैरलंकृतान् ॥
गन्धादिभिः समभ्यर्च्य शूलं तैः स्नानमाचरेत् । नद्यां वाप्यां तटाके वा ह्रदे स्नानं समाचरेत् ॥
अथ नद्यादिषु स्नानं विना वा शेषमाचरेत् । होमवन्युत्सवान्प्रातः कृत्वा"
voir aussi *Rauravāgama*, vol. I, pp. 85-86 (तीर्थोत्सवः)

[4] A : तीर्थर्क्षेऽप्यादिमे निशि ; E : तीर्थस्यादिमके निशि

[5] E : तु pour च

[6] E ajoute : यद्यदुक्तं दिने पूर्णे तेषां निक्षिप्य दापयेत्

[7] A : ततः pour तयोः ; E : तथा

[8] C, D : तण्डुलैश्च शोभितम् ; E : तण्डुलैश्चोपशोभितम्

[9] A : च pour तु

[10] C, D, E : समोपेतं

[11] C : कुलं pour शूलं

[12] E : च pour तु

[13] A : तु pour तद्

[14] C, E : बलिं क्रमात् pour बलिक्रियाम् ; D : बलीन् क्रमात्

[चूर्णोत्सवः[1]]

उत्सवं च समाप्यैवं[2] चूर्णोत्सवमथाचरेत् । सुशुष्कां रजनीं [3]शुद्धां शुद्धपात्रे [4]विगृह्य च॥२८३
आस्थानमण्टपे तत्र शिवाग्रे वाथ [5]मण्टपे । स्थण्डिलद्वितयं कृत्वा [6]विधिना तत्र विन्यसेत् ॥
शूलं तदग्रे विन्यस्योलूखलं मुसलेन युक् । आवेष्ट्याहतवस्त्रेण शूलं संपूज्य पूर्ववत् ॥ २८५ ॥
[7]लूखलं मुसलं चैव हेतिना सम्यगर्चयेत् । [8]लूखले [9]रजनीं तत्र निक्षिपेद्धृदयेन तु ॥२८६॥
चूर्णयेन्मुसलेनैव [10]घोरमन्त्रं समुच्चरन् । यजमानादिभिः पश्चाच्चूर्णयेद्रजनीं [11]तदा ॥२८७॥
[12]ततश्चूर्णीकृतं सर्वं पात्रे स्वर्णादिनिर्मिते । निक्षिप्यास्त्रेण मन्त्रेण ततस्तच्च त्रिधा [13]भजेत् ॥
शिवलिङ्गाभिषेकार्थं [14]तथार्चाशूलयोरपि । [15]जनानामपि सर्वेषां भागमेकं[16] प्रकल्पयेत्॥२८९

---

[1] Cf. *Dīptāgama*, 95, 1-18:
अतः परं प्रवक्ष्यामि चूर्णोत्सवविधिक्रमम् । तीर्थसंग्रहणस्यान्ते प्रभाते समये पुनः ॥
पूर्वोक्तबलिदानं च प्रदक्षिणमथाचरेत् । पश्चाच्चूर्णोत्सवं कुर्याद् विधिदृष्टेन कर्मणा ॥
प्रासादस्याग्रतो वापि कौतुकस्याग्रतोऽपि वा । याम्ये वा पावके वाथ गोमयालेपनं कुरु ॥
स्थण्डिलं कारयेत्तत्र शालिभिर्विमलैस्तथा । अष्टद्रोणैस्तदर्धैर्वा तदर्धैस्तण्डुलैरपि ॥
तन्मध्ये पद्ममालिख्य साष्टपत्रं सकर्णिकम् । तस्याग्रे स्थण्डिलं कुर्यात्पूर्वोक्तविधिना सह ॥
शूलं तत्रैव संस्थाप्य अघोरेणासनोपरि । तस्याग्रे स्थण्डिलं स्थाप्योलूखलं वस्त्रवेष्टितम् ॥
दूर्वया सहदेव्या च बन्धयेल्लूखलं हृदा । यत इन्द्रेति मन्त्रेण पवमानमनन्वितम् ॥
लूखलं मुसलं चैव प्रोक्षयेत्तु शिवाम्भसा । गन्धाद्यैरर्चयेन्मन्त्रैः लूखलं मुसलं ततः ॥
शूलस्य दक्षिणे भागे उत्तराभिमुखो गुरुः । गन्धादिभिरथाभ्यर्च्य तत्तन्मन्त्रैः समाहितः ॥
घृतं शिरोऽर्पणं कुर्याद् हेमदूर्वाङ्कुरान्वितैः । लूखलस्य तु तन्मध्ये रजनीं निक्षिपेद्धृदा ।
सुशुष्कां रजनीं शुद्धां द्रोणं द्रोणार्धमेव वा । व्योमव्यापिनमुच्चार्य चूर्णयेद्देशिकोत्तमः ॥
ततो भक्तजनैः सार्धं चूर्णं गणिकागणैः । ततः शूर्पेण संप्रोक्ष्य गणिकाभिर्विशेषतः ॥
चूर्णमादाय विधिना मूलबीजं जपेद्गुरुः । चूर्णैः संस्नापयेद्देवमाचार्यः शिवमन्त्रतः ॥
आस्थानमण्डपं प्राप्य कौतुकाय निवेदयेत् । हस्तयन्त्रोद्भवं तैलं कौतुके शिरसि न्यसेत् ॥
चूर्णेन स्नापयेत्पश्चादुत्सवप्रतिमादयः । शूलस्य दापयेच्चूर्णमाचार्योऽस्त्रं समुच्चरन् ॥
चूर्णमादाय हृदिना यजमानाय दापयेत् । दद्याच्चूर्णं तु भक्तेभ्यः पर्यष्टिपरिचारकैः ॥
आचार्यं पूजयेत्तत्र सर्वातोद्यसमन्वितम् । ग्रामप्रदक्षिणं कुर्याद्द्याद् ग्रामजनस्य च ।
दद्याद्वै वास्तुदेवेभ्यो ग्रामादीनां प्रशान्तये । प्रविश्य भवनं पश्चात्तीर्थस्नानं समाचरेत् ॥
voir aussi *Rauravāgama*, vol. I, pp. 86-87 (चूर्णोत्सवः)

[2] C, E : एव pour एवं   [3] C, D, E : कृत्वा pour शुद्धां   [4] C, D, E : प्रगृह्य च
[5] C : मण्डले pour मण्डपे   [6] A : विधानेकत्र विन्यसेत्
[7] A, C, E : उलूखलं pour लूखलं ; voir *Rauravāgama*, vol. I, p. 86 note 17
[8] A, C : उलूखले pour लूखले   [9] A : रजनीचूर्णं pour रजनीं तत्र
[10] D : अघोर pour घोर   [11] A : ततः pour तदा   [12] C, D, E : ततश्चूर्णं तु तत्सर्वं
[13] A : भवेत् pour भजेत्   [14] E : ततश्च pour तथार्चा
[15] C omet les *śloka* 289b et 290a   [16] A : एवं pour एकं

अथवा रजनीचूर्णं तैलेन [1]च समन्वितम् । तीर्थकाले प्रयोक्तव्यं प्रतिमाशूलयोरपि ॥२९०॥
जनानामपि सर्वेषां तस्मिन्काले [2]प्रयोजयेत् ।

[तीर्थविधिः[3]]

आस्थानमण्टपे रम्ये शिवाग्रे वाथ मण्टपे ॥ २९१ ॥
[4]जलतीरेऽथ शुद्धे च निम्नोन्नतविवर्जिते । गोमयालेपिते [5]रम्ये शालिभिः स्थण्डिलद्वयम् ॥
कृत्वा तत्र त्रिशूलं तु स्थाप्यैकत्र [6]तदग्रके । स्थण्डिले कलशान् [7]रम्यान्पूर्ववत्संस्कृतानपि ॥
नवसंख्यान्समादाय [8]मध्यादीशान्तमेव च । ततस्त्रिशूलमभ्यर्च्य गन्धपुष्पादिभिः क्रमात् ॥
कलशेष्वथ सर्वेषु गङ्गाद्यास्तीर्थदेवताः[9] । पूजयेन्मध्यमारभ्य तासां नामाभिधीयते ॥२९५॥
गङ्गा च यमुना चैव नर्मदा च सरस्वती । सिन्धुर्गोदा च कावेरी [10]शोणा पुष्करमेव च ॥२९६

---

[1] D, E : एव pour च

[2] A : प्रदापयेत्

[3] Cf. *Dīptāgama*, 96, 1-19 :

अतः परं प्रवक्ष्यामि तीर्थकर्मविधिक्रमम् । प्रासादस्याग्रतं कुर्यान्मण्डपं शालिकामयम् ॥
तण्डुलैः शोभितं कुर्यात्तिलदर्भैः परिस्तरेत् । नव कुम्भान्समादाय सूत्रेण परिवेष्टयेत् ॥
पूरयेद्गन्धतोयेन वस्त्रकूर्चसमन्वितान् । स्थापयित्वा विशेषेण विद्येश्वरशिवात्मकान् ॥
पूजयित्वा यथान्यायं स्वस्वनाम्ना यथाविधि । संग्राह्य कलशांश्चैव चास्त्राणि चाष्टमङ्गलैः ॥
गन्धादिकं ततो ग्राह्य धूपदीपसमायुतम् । ततः शङ्खनिनादैश्च गीतनृत्तसमाकुलम् ॥
वितानच्छत्रसंयुक्तं पिञ्छचामरसंयुतम् । स्वस्तिमङ्गलवाग्भिश्च ब्रह्मघोषसमायुतम ॥
ग्रामप्रदक्षिणं कृत्वा शूलेन सह कौतुकम् । गच्छेद्भक्तजनैः सार्धं ततस्तीर्थं तु देशिकः ॥
समुद्रे वाथ नद्यां वा तटाके वा नदेऽपि वा । तीरे समतले सम्यक् प्रपां कृत्वातिसुन्दराम् ॥
तन्मध्ये विन्यसेद्देवं परिवेषक्रमान्वितम् । तस्याग्रे स्थण्डिले स्थाप्य कलशान्नवसंख्यया ॥
अर्चयेद्गन्धपुष्पाद्यैः शूलं वै कलशांस्ततः । गणानाहूय देवांश्च लोकपालांस्तथैव च ॥
गङ्गां च यमुनां चैव नर्मदां च सरस्वतीम् । सिन्धुं गोदावरीं चैव कावेरीं च विशेषतः ॥
आवाह्य मध्यमे चैव कलशे देशिकोत्तमः । विसृज्य कौतुकं सूत्रं शूलं वै स्नापयेत्ततः ॥
जलक्रीडां प्रकुर्वीत ततो भक्तजनैः सह । त्रिशूलेन सहैवात्र तीर्थं कुर्वन्ति ये नराः ॥
मुच्यन्ते सर्वपापेभ्यो रुद्रलोकं प्रयान्ति च । पूजयित्वा यथान्यायं गन्धपुष्पादिभिः क्रमात् ॥
ततो देवगृहं गत्वा स्वस्तिमङ्गलवाचकैः । यागस्थानं नयेत्पश्चाच्छिरः पूर्णाहुतिं हुनेत् ॥
अग्नौ स्विष्टाहुतिं हुत्वा शिवाग्निं च विसर्जयेत् । यागेशं पूजयेत्पश्चाद् गन्धपुष्पादिना बुधः ॥
साधिते वेदिकामध्ये कलशे स्थापयेच्छिवम् । स्नपनं कारयेत्तत्र पूर्वोक्तविधिना सह ॥
विशेषपूजनं कृत्वा शूलं वै कौतुकं तथा । दिनेष्वेतेषु सर्वेषु सर्वेषां च विभावसो ॥
दीपकैश्च हविर्भिश्च द्विगुणं त्रिगुणं तु वा । विशेषपूजनं कुर्याद् विभवस्यानुरूपतः ॥

[4] C, D, E : जलतीरे शुद्धदेशे

[5] E : देशे pour रम्ये

[6] C : तदाश्रके pour तदग्रके

[7] A : सम्यक् pour रम्यान्

[8] E : पूर्वाद् pour मध्याद्

[9] C, E : देवताम् pour देवताः

[10] A : गोणा pour शोणा

[1]प्रणवादिचतुर्थ्यन्तस्वनामपदमन्त्रकैः । देवताह्वानमप्यत्र कुर्याद्वा पूर्ववत्सुधीः ॥ २९७ ॥
ततः स्नानोचितं द्रव्यं सर्वं [2]शूलाय दापयेत् । दन्तकाष्ठं [3]च दत्त्वास्य हृन्मन्त्रेण विचक्षणः ॥
सुमुहूर्ते सुलग्ने तु [4]कलशैर्मध्यमक्रमात् । अभिषिच्यास्त्रराजानं[5] ततस्तीर्थेऽवगाह्य च ॥ २९९ ॥
अस्त्रराजं समभ्यर्च्य गन्धपुष्पादिभिः क्रमात् । [6]सास्त्रान्दिगीश्वरान्वापि परितस्तत्र पूजयेत् ॥
[7]आचार्यो मज्जनं कुर्यात्त्रिशूलेन समाहितः । [8]ये तत्र सह [9]मज्जन्ति जना भक्तिसमन्विताः ॥
ब्रह्महत्यादिभिः सर्वैर्मुच्यन्ते [10]पापराशिभिः । समुत्तीर्य जलात्पश्चात्[11] कृत्वा धामप्रदक्षिणम्॥

[पूर्णाहुतिः[12]]

[13]ततो यागगृहं गत्वा दद्यात्पूर्णाहुतिं [14]तदा । पूर्णाहुतिविधिं वक्ष्ये [15]ततः शृणु जनार्दन ॥
[16]अभ्युक्ष्य स्रुचमस्त्रेण सर्पिषापूर्य [17]तद्बिलम् । प्रणवेन ततः पुष्पं साक्षतं सकुशं स्रुचि[18]॥३०४
विन्यस्य [19]स्रुवमारोप्य तन्मध्ये चाप्यधोमुखम् । दण्डमूलाग्रयोः पश्चाद्गृहीत्वा [20]स्रुक्स्रुवौ च तौ
सव्येतराभ्यां पाणिभ्यां [21]विन्यस्यास्यं तु शङ्खवत् । ऋजुकायः समुत्थाय [22]स्थितः समपदान्वितः॥

---

[1] E : प्रणवाद्यैश्चतुर्थ्यन्तैः स्वनाम॰
[2] E : शूलास्त्रे
[3] C, D, E : तु pour च
[4] E : कलशान pour कलशैः
[5] La forme grammaticale correcte est अस्त्रराजं
[6] C : वज्रादीनीश्वरांश्चापि : D : वस्त्रादीनीश्वरांश्चापि : E : बध्वा दिनेश्वरांश्चापि
[7] A : आचम्य यजनं कुर्यात् : E : आचार्यो मार्जनं कुर्यात्
[8] A : एकत्र pour ये तत्र
[9] E : मज्जन्तः
[10] C, D : पातकादिभिः : E : किल्बिषादिभिः
[11] A : तस्मात् pour पश्चात्
[12] Cf. *Somaśambhupaddhati*, I, 4, 52b-57 :
घृतेन स्रुचि पूर्णे तु निधायाधोमुखं स्रुवम । स्रुगग्रे पुष्पमारोप्य पश्चाद्वामेन पाणिना ॥
पुरः सव्येन तौ धृत्वा शङ्खसंनिभमुद्रया । समुन्नतोर्ध्वकायश्च समपादः समुत्थितः ॥
नाभौ तन्मूलमाधाय स्रुगग्रन्यस्तलोचनः । ब्रह्मादिकारणत्यागाद्विनिःसृत्य सुषुम्नया ॥
वामस्तनान्तमानीय तयोर्मूलमतन्द्रितः । मूलमन्त्रमतिस्पष्टं वौषडन्तं समुच्चरन् ॥
तदग्नौ जुहुयादाज्यं यवसंयुतधारया । आचामं चन्दनं दत्त्वा ताम्बूलप्रभृतीनपि ॥
भक्त्या तद्भूतिमावर्त्य विदध्यात्प्रणतिं पराम् ।
[13] C omet ce demi-*śloka*
[14] D : ततः pour तदा ; E : तथा
[15] C, D, E : तच्छृणुष्व जनार्दन
[16] A, E : अभ्युक्ष्यास्त्रेण मन्त्रेण
[17] A : तद्बलिम्
[18] E ajoute : खण्डेन नारिकेलेन कदलीफलसंयुतम् । जम्बीरफलसंयुक्तं ताम्बूलेन समन्वितम् ॥
उशीरच्छदकाश्मीरगन्धद्रव्यसमायुतम् । ह्रीबेरचन्दनोपेतं सूक्ष्मक्षौमसमायुतम ॥
स्वर्णपुष्पसमायुक्तं सुगन्धकुसुमान्वितम ।
[19] D : स्रुचम् pour स्रुवम्
[20] D : स्रुक्स्रुवेण युक्
[21] A : विन्यस्याभ्यां तु शङ्खवत् : E : विन्यस्य शङ्खमुद्रया
[22] A : स्थितः पादसमो बुधः ; C, E : स्थितः संपन्नसत्त्ववित्

नाभिदघ्नं तयोः कृत्वा [1]मूलं तु करयोस्ततः । [2]दक्षिणेतरयोः कुर्यादुन्नत्यवनतिं तयोः[3]॥३०७॥
यथा [4]धाराग्निमध्ये तु [5]पततीत्येकधा सुधीः । [6]पूर्णाहुतिं तु मूलेन सम्यक्पश्चात्समापयेत् ॥
[7]होमान्ते तु पुरा दद्यादनेन विधिना गुरुः । शिवयोः कुम्भमुद्धृत्य कलशानितरानपि ॥३०९॥
स्कन्धे [8]संवाहयित्वाथ प्रासादे तु प्रदक्षिणम् । उपावृत्त्य प्रविश्याथ शिवमन्त्रमनुस्मरन्॥३१०॥
शैवेन [9]शिवलिङ्गं तु कुम्भेनैवाभिषेचयेत् । शक्तिकुम्भेन [10]पीठं तु तद्गायत्रीमुदाहरन्॥३११॥
[11]वेदिस्थैः कलशैः पश्चात् [12]कुर्याल्लिङ्गेऽभिषेचनम् । अथवाताननुद्धृत्य योजयित्वा शिवे घटे॥
शिवयोः कलशावेव समुद्धृत्याभिषेचयेत् । ततश्च स्नपनं कुर्यात्सहस्रादिषु संभवैः ॥ ३१३ ॥
[13]कलशैस्तु विधानेन ततो नैवेद्यमुत्तमम् । दत्त्वा देवस्य सर्वेषां सकलानां च देशिकः ॥३१४
स्नपनं च पृथक् कृत्वा नैवेद्यं च प्रदापयेत् । उत्सवेष्वेषु सर्वेषु कुर्यात्सर्वदिनेष्वपि ॥ ३१५॥
[14]सायं प्रातर्विशेषेण[15] शिवलिङ्गे जनार्दन । सकलानां [16]च सर्वेषां यथावित्तानुसारतः॥३१६

[ ध्वजावरोहणम्[17] ]

तस्मिन्निशि तृतीये वा पञ्चमे वाथ सप्तमे । ध्वजावरोहणं कुर्याच्चण्डयागसमन्वितम् ॥ ३१७ ॥

---

[1] A : तन्मूलं कारयेत्ततः ; D : शूलं तु करयोस्ततः ; E : मूलं तु कारयेत्ततः
[2] E : वामस्तनान्तं तं कुर्याद्
[3] C : उन्नम्य वरणं नयोः pour उन्नत्यवनतिं तयोः : D : उन्नम्यावनतं तयोः
[4] E : छाया pour धारा
[5] A : पतन्ती pour पतति
[6] A : पूर्णाहुतिं घृतेनैव दत्त्वा पश्चात्समापयेत्
[7] A : होमान्ते वा पुरा दद्याद् ; E : होमान्ते पुनराद्याद्
[8] D : संवादयित्वाथ
[9] E : शिवलिङ्गे तु
[10] C, D, E : पीठे च
[11] C, D, E विद्येशकलशैः
[12] E : कुर्याल्लिङ्गाभिषेचनम्
[13] A : कुशैस्तु pour कलशैस्तु
[14] Les *śloka* 316 à 336, et le *paṭala* 28 manquent dans le ms. D.
[15] C : विशेषार्चं pour विशेषेण ; E : विशेषाच्च
[16] C, E : तु pour च
[17] Cf. *Dīptāgama*, 97, 1-17 :
अतः परं प्रवक्ष्यामि ध्वजानामवरोहणम् । कृत्वा तीर्थं दिवाकाले रात्रौ ध्वजविसर्जनम् ॥
त्रिरात्रे पञ्चरात्रे वा सप्तरात्रेऽथवा पुनः । अवरोहणं प्रकर्तव्यं चण्डयागसमन्वितम ॥
चण्डप्रचण्डविक्रान्तचण्डेशाश्च चतुर्विधाः । महाज्वाला महाप्राज्ञा रुद्रा रुद्रसमप्रभाः ॥
युगे युगे क्रमाद्देह चण्डत्वं प्रापितास्तु मे । तस्मादीशप्रियार्थाय चण्डपूजां समाचरेत् ॥
चण्डस्याभिमुखे कुर्याच्छालिभिश्चतुरङ्गुलम् । तण्डुलैः शोभितं कृत्वा तिलदर्भैः परिस्तरेत ॥
प्रोक्षयेत्पुरुषेणैव कलशान्साधयेत्ततः । सकूर्चान्सापिधानांश्च सवस्त्रान्वारिपूरितान् ॥
लोकपालाधिदैवत्यांस्तन्मध्ये वृषदैवतान् । पूजयित्वा यथान्यायं कलशांश्च ध्वजं तथा ॥
वृषभं पूजयित्वा तु नैवेद्यान्तं विचक्षणः । ध्वजमूले स्थितान्कुम्भाञ्शिवांश्चैतो विसर्जयेत् ॥

चण्डयागमथो वक्ष्ये सर्वकामार्थसाधनम् । गणानामपि सर्वेषां चण्डानां नायकस्तु यः ॥
चण्डेशस्तु भवेत्सोऽयं तस्य पूजाप्रकल्पना । [1]चण्डयागः स्मृतः सोऽत्र समासेनाभिधास्यते ॥
धाम्नि चण्डेश्वरस्यार्चामभिषिच्य समाहितः । गन्धोदकेन तस्याग्रे कलशान्स्थण्डिलेऽथ वा[2] ॥
पूर्ववत्स्थापयित्वाऽथ तेषु मध्ये यजेत्सुधीः । चण्डेशमथ शेषेषु [3]वसूनष्ट यजेत्क्रमात् ॥३२१॥
गन्धादिभिः समभ्यर्च्य तैश्चण्डमभिषेचयेत् । हविर्दत्त्वाथ[4] ताम्बूलं [5]दद्याच्चण्डे समाहितः ॥
ध्वजान्तिकं ततो गत्वा [6]तन्मूले स्थण्डिलं ततः । शालिभिर्विधिना कृत्वा तत्र [7]संस्थापयेन्नव॥
कलशांस्तेषु मध्यस्थे वृषेन्द्रं देवमर्चयेत् । परितो लोकपालांश्च [8]ध्वजे वापि वृषं यजेत् ॥३२४॥
ततस्तैः कलशैः [9]सर्वैर्दण्डमूलेऽभिषेचयेत् । ततो वृषभदेवस्य मुद्रान्नं तु [10]निवेदयेत् ॥३२५॥
[11]ततश्चण्डेश्वरं चैव ध्वजस्थं वृषभेश्वरम् । [12]सूर्यसोमाग्निकांश्चैव क्रमेणैव जनार्दन ॥ ३२६ ॥
[13]पूजयित्वाथ गन्धाद्यैस्तत्तत्स्थानाद्विसर्जयेत् । ध्वजावरोहणं [14]कुर्यादस्त्रमन्त्रं समुच्चरन्॥३२७॥
ततश्चापि त्रिशूलेन सर्वातोद्यसमन्वितम् । ग्रामादिषु बलिं [15]दद्यात्संधिदेवान्विसर्जयेत्[16]॥३२८॥
प्रासादे वा बलिं दत्त्वा विना शूलं [17]विसर्जयेत् । शिवोत्सवेषु मातृणां बल्युत्सवविधिं सुधीः[18]॥

---

नृत्तगेयसमायुक्तं सर्वातोद्यसमन्वितम् । स्नपनं कारयेत्केतुवृषगायत्रिमन्त्रतः ॥
मुद्रान्नं दापयेत्पश्चाद् वृषबीजमनुस्मरन् । दिग्बलिं च ततः कृत्वा दिग्देवांश्च विसर्जयेत् ॥
हरिद्रादधिसंयुक्तं सोपदंशं बलिं ददेत् । सर्वाभरणसंपूर्णं ब्रह्मचारिव्रते स्थितम् ॥
चण्डेशं साधयेद्धीमानर्चनोक्तं विसर्जयेत् । अवरोहणं च तेनैव वृषस्थं तं विसर्जयेत् ॥
अस्त्रेणैव तु मन्त्रेण ध्वजवेदीं विसर्जयेत् । हरिद्रं बलिसंयुक्तं सोपदंशबलिं ददेत् ॥
प्रदक्षिणं ततः कृत्वा ग्रामं शूलसमन्वितम् । सन्धिदेवान् समभ्यर्च्य बलिं दद्यात्स्वनामतः ॥
विसर्जनं ततः कुर्याद् ब्रह्मादि परितः स्थितम् । प्रविश्य भवनं पश्चाद् बलिपीठे बलिं क्षिपेत् ॥
पादप्रक्षालनं कृत्वा गर्भगेहं प्रवेशयेत् । आचार्यं पूजयेत्तत्र वस्त्रहेमाङ्गुलीयकैः ।
भक्तानां परिचाराणां वस्त्रादीनि प्रदापयेत् । एवं यः कुरुते मर्त्य उत्सवं विधिपूर्वकम् ॥
कुलैकविंशत्युत्तार्य रुद्रलोके महीयते ।

Le mot निश् dans le *śloka* 317a se trouve au neutre ou au masculin au lieu du féminin

[1] A : चण्डयागाख्यतिस्तत्र
[2] A : स्थण्डिलेन वा pour स्थण्डिलेऽथवा
[3] E : वसूनष्टौ दिशि क्रमात्
[4] A : च pour अथ
[5] A : दत्त्वा चण्डं समाहितः
[6] A : तन्मध्ये pour तन्मूले
[7] A : संस्थाप्य नव ; E : संस्थापयेन्नवान
[8] C : यजेत्सोऽपि वृषध्वजे ; E : यजेच्चापि वृषध्वजे
[9] C : सर्वे pour सर्वैर्
[10] C, E : प्रदापयेत्
[11] A, E : ततश्चण्डस्रुवं चैव ; C : ततश्चण्डं स्रुवं चैव
[12] C : सूर्यसोमाग्निवच्चैव
[13] A : पूजयित्वा सुगन्धादि तत्तत्स्थानाद्विसर्जयेत्
[14] A : कृत्वा च pour कुर्याद्
[15] E : दत्त्वा pour दद्याद्
[16] C : विवर्जयेत् pour विसर्जयेत्
[17] E : समर्चयेत् pour विसर्जयेत्
[18] E : शृणु pour सुधीः

वर्जयेदन्यदेवानां [1]बल्युत्सवविधावपि । [2]यौगपद्यं तु शैवेन [3]भवेत्तत्र दिने दिने ॥ ३३० ॥
[4]शैवं प्राधानिकं कुर्याद्देशिकः शास्त्रचिन्तकः । देवताह्वानकाले तु भुक्त्वा [5]तीर्थदिनं जनः ॥
[6]यस्तीर्थसेवां नो [7]कुर्यात्तस्याधिव्याधिसंभवः । [8]कल्याणं देवकल्याणे न कुर्वीत तथा भवेत् ॥
[9]तस्मात्तौ परिहर्तव्यौ नरेण हितमिच्छता । एवं शिवोत्सवे सम्यङ् निर्वृत्ते [10]विधिना ततः ॥
दक्षिणां देशिकस्यापि विभवस्यानुरूपतः । होतॄणां जापिनां चैव[11] [12]दद्याद्वस्त्रादिभिस्तदा[13] ॥
शिवभक्तांश्च संपूज्य प्रीयतां मे सदाशिवः । इत्युक्त्वा प्रणमेद्भूयो भूयो [14]देवं सदाशिवम् ॥
इति यः कारयेन्मर्त्यः शिवोत्सवमनुत्तमम् । सर्वयज्ञफलं प्राप्य शिवेन सह मोदते ॥ ३३६ ॥

[15]इत्यजिताख्ये [16]महातन्त्रे [क्रियापादे] [17]महोत्सवविधिर्नाम
सप्तविंशः पटलः[18] ॥

---

[1] A : बल्युत्सवमुदीर्यते ; E : बल्युत्सवविधानकम्
[2] C : योगपद्याद्यशैवेन
[3] E : भवेदत्रादिमे दिने
[4] C : शैवं प्राथमिकं ; E : शैवप्रधानकं
[5] A : तत्तीर्थ यद्दिनम् ; C : तीर्थं जनं जनाः
[6] A : यत् pour यः ; E : ये
[7] E : कुर्युः pour कुर्यात्
[8] C : कल्याणदेविकल्याणे
[9] E : तस्मात्ते परिहर्तव्ये
[10] A : विधिनाद्यतः
[11] E : अपि pour एव
[12] E : दद्याद्वस्त्रादिकांस्तदा
[13] A : सदा pour तदा
[14] E : देवः सदाशिवः
[15] E : इत्यजिते pour इत्यजिताख्ये
[16] E omet महातन्त्रे
[17] C : उत्सवविधिर्नाम सप्तविंशतिः पटलः ; E : शिवोत्सवविधिपटलः
[18] Dans le ms. A le नित्योत्सवविधिपटल se trouve après ce *paṭala* ; dans C le स्नपनविधिपटल se trouve après ce *paṭala* ; le डोलोत्सवविधिपटल se trouve dans le ms. E seulement et est placé après ce *paṭala* ; nous avons suivi cet ordre dans notre édition.

# [अष्टाविंशः पटलः]

## [डोलोत्सवविधिः[1]]

### [डोलोत्सवफलम्]

[2]डोलोत्सवविधिं वक्ष्ये शृणु सम्यग्जनार्दन । आयुरारोग्यधनदं राजराष्ट्रविवर्धनम् ॥ १ ॥
ग्रामशान्तिकरं पुण्यं सर्वपापहरं शुभम् । मङ्गलार्थं जयार्थं च राज्ञां प्रीतिकरं शुभम् ॥ २ ॥
नित्यमारोग्यफलदं पुत्रपौत्रविवर्धनम् । धर्मार्थकाममोक्षार्थं [3]कुर्यान्मन्त्री यथाविधि ॥ ३ ॥

### [डोलोत्सवकालाः]

धनुर्मासे महाविष्णो डोलानां कर्म चोत्तमम् । आर्द्रानक्षत्रमुद्दिश्य तत्पूर्वे [4]व्रतमुत्सवम्[5] ॥४॥
पुष्ये वा कुम्भमासे वा झषे त्वाष्ट्रे वृषेऽथवा । याम्ये वाथ शुचौ विष्णो कुर्वीत श्रवणेऽपि वा॥
कुर्यात्प्रोक्तेषु मासेषु तत्तन्मासर्क्षकान्तकम् । पूर्णिमायामथान्तं वा भृताष्टम्यन्तमेव वा ॥ ६ ॥
राज्ञां त्रिजन्मनक्षत्रे यजमानदिनेऽपि वा । [6]प्रोक्ता मङ्गलदाः काला डोलारोहणकर्मणि ॥७॥

### [डोलोत्सवभेदाः]

गुणसंख्ये भूतसंख्ये ऋषिसंख्यदिनेऽपि वा । [7]नवाहे केवले रौद्रे कर्तव्यो मधुसूदन ॥ ८ ॥
पञ्चधा च [8]समाख्यातो डोलारोहो जनार्दन । एकत्रिपञ्चदिवसे चोत्सवे तु विना ध्वजम् ॥
सप्ताहे च नवाहे च ध्वजयुक्तं तु कारयेत् । अङ्कुरार्पणपूर्वं च भेरीताडनपूर्वकम् ॥ १० ॥

---

[1] Le डोलोत्सवविधिपटल se trouve dans les manuscrits B et E seulement ; quelques détails du डोलोत्सव se trouvent dans le *Kāmikāgama*, II, 9 et le *Kāraṇāgama*, II, 30 ; mais on ne trouve pas de description aussi longue, ni le traitement dans un *paṭala* séparé dans les autres *āgama* dont nous disposons.

[2] Les *śloka* 1 à 15 manquent dans le ms. B ; comme l'édition de ce passage est basée sur un seul manuscrit qui est corrompu, nous avons du faire quelques corrections ; les lectures du manuscrit sont données en note.

[3] E : कार्यं नन्त्री pour कुर्यान्मन्त्री [4] E : व्रत चोत्सवम्

[5] Cf. *Kāraṇāgama*, II, 30, 8b-11a :
उदयाद्युदयान्तं च आर्द्रानक्षत्रमेव वा । तीर्थं व्रतं च मध्याह्ने तद्रात्रौ स्नानदर्शनम् ॥
पूर्वरात्रं समारभ्य परे चास्तमनान्तकम् । आर्द्रर्क्षं प्रकुर्वीत पूर्वरात्राभिषेचनम् ॥
व्रतं परेऽहनि चैव मध्याह्ने तीर्थमाचरेत् । सायाह्ने डोलपूजां च चरेदार्द्रोत्सवं ततः ॥

[6] E : प्रोक्ता मङ्गलदास्य तड्डोलारोहणकर्मणि [7] E : नवाह कवल रुद्र कर्तव्यं [8] E : समाख्यातं डोलारोहं

ध्वजारोहणपूर्वं तु कुर्याच्छास्त्रोक्तवर्त्मना । उत्सवारम्भकालस्य सायाह्ने तु विशेषतः ॥ ११ ॥

[अनुज्ञाप्रार्थना]

विघ्नेशं सर्वविघ्नानां शान्त्यर्थं चार्चयेद् बुधः । आवाहनार्घ्यपाद्याद्यैः षोडशैरुपचारकैः ॥१२॥
विघ्नेशं पूजयेन्मन्त्री यथाशास्त्रं जनार्दन । विघ्नेश्वरस्य पूजान्ते मूललिङ्गस्य संनिधौ ॥ १३ ॥
संकल्पं चैव पुण्याहं ततो विज्ञाप्य पूजनम् । सामान्यार्घ्यं तु संकल्प्य सकलीकृतविग्रहः ॥
अष्टपुष्पार्चनान्ते तु प्रार्थयेत्परमेश्वरम् । भगवन् देवदेवेश सर्वदेववरप्रद ॥ १५ ॥
डोलोत्सवविधौ सम्यगनुज्ञां कुरु शंकर । प्रार्थयेत्परमेशानं ततो मृत्संग्रहाय वै[1] ॥ १६ ॥

[ मृत्संग्रहणम् ]

विघ्नेशं चास्त्रराजानं चण्डेशं चार्चयेद् गुरुः । वस्त्राभरणमाल्याद्यैर्भूषयित्वा[2] विनायकम्॥१७॥
[3]धूपं दीपं च नैवेद्यं ताम्बूलं च प्रदापयेत् । छत्रचामरसंयुक्तं [4]ध्वजपिञ्छसमन्वितम् ॥ १८ ॥
नृत्तगीतसमायुक्तं गणिकासंघसंयुतम्[5] । शङ्खकाहल[6]संनादभेरीघोषसमन्वितम् ॥ १९ ॥
उद्याने वा नदीतीरे पुष्करिण्यास्तटेऽपि वा । बिल्वमूले च मन्दारे तथा तुलसिमूलके॥२०॥
पिप्पले राजवृक्षे [7]वा पलाशे [8]यज्ञवृक्षके । तत्तद्वृक्षसमीपे तु [9]पुण्याहप्रोक्षणं हरे ॥ २१ ॥
हस्तमात्रप्रविस्तारं निम्नोन्नतविवर्जितम् । स्थण्डिलं कल्पयेद्धीमानष्टपत्रं [10]कुशेशयम् ॥ २२ ॥
ततोपरि[11] परिस्तीर्य चतुर्दिशि जनार्दन । मध्ये ब्रह्माणमभ्यर्च्यानन्तं[12] वै पूर्वदिग्गतम् ॥ २३
विजयं[13] चाग्निदेशे तु भद्रं याम्यप्रदेशके । [14]जयन्तं नैर्ऋते भागे [15]भ्रमरं वारुणे तथा ॥ २४
[16]वायव्ये प्रस्थितं चैव जृम्भकं सोमदेशके । ईशानं [17]शूलिनं चैव ब्रह्माद्यादि प्रपूजयेत्॥२५॥
शुद्धौदनबलिं दद्यात्तत्तन्नामपुरःसरम्[18] । ताम्बूलं दापयेत्पश्चाद्धूपदीपं जनार्दन ॥ २६ ॥
बलिं विसर्जयेद्धीमांस्तत्तद्दिशि [19]समर्चयेत् । पुनः प्रोक्ष्य हृदा मन्त्री कुशगोमयवारिणा ॥२७॥
आवाहयेत्ततो भूमिं गन्धाद्यैरर्चयेत्ततः । दिशां पतींस्ततश्चाष्टौ पूजयेत्पुरुषोत्तम ॥ २८ ॥

---

[1] B : च pour वै
[2] E : तोषयित्वा pour भूषयित्वा
[3] B : धूपदीपं च
[4] B : पिञ्छध्वज pour ध्वजपिञ्छ
[5] B : संयुक्तम् pour संयुतम्
[6] B : संनादं pour संनाद०
[7] E : च pour वा
[8] B : याज्ञ pour यज्ञ
[9] B : पुण्याहं प्रोक्षणं
[10] B : कुम्भे pour कुशे
[11] La forme grammaticale correcte est तत उपरि
[12] B : नन्दां pour अनन्तं
[13] B : विनन्दं pour विजयं
[14] B : जयन्तान् नैर्ऋते
[15] B : भ्रमरीं
[16] B : वायव्ये भ्रमरीं चैव प्रस्थिनां सोमदेशके
[17] B : जृम्भरी pour शूलिनं
[18] B : पुरःसरैः pour पुरःसरम्
[19] B : समुद्धरेत्

पूजितेन खनित्रेण [1]हैमपात्रे त्रिराहरेत् । श्वभ्रे हृदाहरेन्मृद्भिः पूरयेत्तु विचक्षणः ॥ २९ ॥
पुनः प्रोक्ष्य हृदा मन्त्री पुष्पकूर्चं तु निक्षिपेत् । पूर्ववद्धूपदीपं च[2] संछाद्य क्षौमवाससा॥३०॥
मालां तदुपरि न्यस्य शिष्यहस्ते प्रदापयेत् । गजस्योपरि [3]यानस्य धारयेच्छिष्य[4] एव च॥३१॥

[ अङ्कुरार्पणम् ]

गीतवाद्यैस्तथा दीपैश्छत्रचामरतूर्यकैः । वास्तुप्रदक्षिणं कृत्वा निशायामङ्कुरार्पणम् ॥ ३२ ॥

[ ध्वजारोहणम् ]

देवाग्रे स्थण्डिलं कृत्वा [5]चाष्टपत्रं सकर्णिकम् । [6]उक्षं च गोपतिं चैव भृङ्गिणं नन्दिनं तथा ॥
पशुपतिं गन्धवाहं[7] शङ्कुकर्णं महोदरम् । वृषेन्द्रं नवकुम्भेषु पूर्वादिषु दले[8] न्यसेत् ॥ ३४ ॥
सद्यो वृषाधिवासस्य गव्येन प्रोक्षणं कुरु । मण्टपं पूजयेत्पश्चात्पटस्याराधनं [9]हरे ॥ ३५ ॥
नयनोन्मीलनं पश्चाज्जलाधिवासनं तथा । विदध्यात्पश्चशयनं वेरशोषनकर्म च ॥ ३६ ॥
वृषस्य [10]स्थापितस्यैवं शृङ्गे प्रतिसरं कुरु । ततो होमं च नैवेद्यं देवतावाहनं तथा ॥ ३७ ॥
भेरीं संपूज्य विधिवत्तत्ताडनं [11]समाचरेत् । ध्वजमुद्धृत्य देवेशमस्त्रराजसमन्वितम् ॥ ३८ ॥
ग्रामप्रदक्षिणं कृत्वा संधिदेवान्समाह्वयेत् । [12]दण्डमूलं ततो गत्वा पुण्याहप्रोक्षणं कुरु ॥ ३९ ॥
दण्डमूलेऽभिषिच्याथ सपर्यां च नरोत्तम । कूर्चाम्भसा घटस्थेन पटस्य प्रोक्षणं [13]चरेत् ॥
देशिकः सुप्रसन्नात्मा [14]नृपतेर्दक्षिणां ददेत् । ततो ध्वजं समुद्धृत्य रोपयेद्देशिकोत्तमः ॥ ४१ ॥
[15]दण्डे [16]सव्यक्रमेणैव मूले रज्जुं सुबन्धयेत् । दिगीशकलशानष्टौ दण्डमूलेऽभिषेचयेत् ॥४२॥
[17]भवादिकाष्टमूर्तीनां दलाग्रेषु बलिं क्षिपेत् । धूपदीपं ददेत्पश्चाद्देशिको मन्त्रपुष्पकैः ॥ ४३ ॥

[ यागशाला ]

ततो [18]नीराजनं कृत्वा [19]देवदेवे शिवालये । ततो यागगृहं गत्वा मण्टपं समलंकुरु ॥४४॥
पूर्ववत्कल्पयेत्कुण्डं यथाविधि जनार्दन । पुण्याहं वाचयित्वा तु कृत्वा [20]वै वास्तुपूजनम् ॥

---

[1] E : हेम pour हैम

[2] Il nous semble bon d'ajouter कृत्वा après च, et हैमपात्रं avant संछाद्य pour obtenir un sens convenable.

[3] यानस्य peutêtre apposé à गजस्य ; il semble bon de corriger यानस्य en तन्न्यस्य

[4] B, E : शिष्यम् pour शिष्य: [5] B et E omettent च dans चाष्टपत्रं

[6] La forme grammaticale correcte est उक्षाणं [7] B ajoute च

[8] E : दलैः pour दले ; दले doit se comprendre comme s'il y avait दलेषु.

[9] B : हरेत् pour हरे [10] B : स्थापनस्यैव ; E : स्थापनस्यैवं [11] B : समारभेत्

[12] B : मूलदण्डे ; E : मूलदण्डं [13] B : हरेत् pour चरेत्

[14] नृपतेः doit être compris comme un ablatif, et ददेत् comme s'il y avait आददेत्

[15] E : दण्डं pour दण्डे [16] B : सर्व pour सव्य [17] B, E : भवादीनष्टमूर्तीनां

[18] B : नीराजनीं [19] B, E : देवदेवं [20] B : चैवास्तु pour वै वास्तु०

उत्सवाङ्कुरार्पणं [1]च तथा तीर्थाङ्कुरार्पणम् । पूर्ववच्छालिमानेन नलिनं [2]वेदिकां लिखेत् ॥
तिलतण्डुलरेखाश्च[3] लाजैः पुष्पैः परिस्तरेत् । मध्यमे शिवकुम्भं तु वर्धनीं वामपार्श्वके ॥४७॥
सकूर्चान्पल्लवोपेतान्सवस्त्रान्सापिधानकान् । मध्यमे [4]हेमनिष्कं तु वर्धन्यां[5] वा तदर्धकम् ॥
अष्टविद्येश्वरान्कुम्भान् प्राग्दलादिषु पूजयेत् । द्वारादिकलशान्स्थाप्य पूर्वादिषु यथाक्रमम्॥४९॥
पञ्च [6]चैकचतुस्त्रीणि [7]भूतदृक् च चतुस्त्रयः । [8]शान्तिनन्दिमहाकाला बलारातिश्च पूर्वके॥५०॥
इन्द्राग्न्योरन्तरे भानुराग्नेय्यामग्निपूजनम् । [9]विद्यां भृङ्गिगणेशौ च यमं याम्ये प्रपूजयेत्॥५१॥
विदिक्षु [10]निर्ऋतौ [11]विष्णो [12]वास्तुब्रह्म न्यसेत्क्रमात् । निर्ऋत्ं वृषभं स्कन्धं [13]वारुणे च हरिप्रियाम्
पवनं च गणेशं च पश्चिमोत्तरदिक्षु[14] वै । प्रतिष्ठां गौरिचण्डेशौ[15] धनदं सौम्यदेशके ॥५३
ऐशान्यामीशलोकेशगुरुपङ्क्तिं न्यसेत्क्रमात् । प्रागादीशानपर्यन्तमस्त्रराजं क्रमान्न्यसेत्[16]॥५४
नैवेद्यं दापयेत्पश्चाद्बटस्थाय निवेदयेत् । [17]पञ्चाग्निर्वाथ कर्तव्य एकाग्निं वापि[18] कारयेत्॥५५॥
ततो होमं प्रकुर्वीत यथाविधिपुरःसरम् । उत्सवेशं च संपूज्य [19]हेमनिष्कसकौतुकम् ॥ ५६ ॥
नैवेद्यं [20]दापयेद्धीमानपूपादिसमन्वितम् । ताम्बूलं दापयेद्धीमान्धूप[21]दीपपुरःसरम् ॥ ५७ ॥
यागवीक्षां[22] प्रकुर्वीत यथाविधि जनार्दन । ग्रामप्रदक्षिणं [23]कृत्वास्थानमण्डपसंस्थिते ॥५८॥
उत्सवेश्वरमारोप्य ततः सिंहासने कुरु । विनोददर्शनं चैव स्नापयेदुत्सवेश्वरम् ॥ ५९ ॥
वस्त्राभरणमाल्याद्यैरलंकृत्य जनार्दन । चित्रान्नापूपनैवेद्यं ताम्बूलं च प्रदापयेत् ॥ ६० ॥

---

[1] B : चैव pour च

[2] Le mot वेदिकां doit se comprendre comme s'il y avait वेदिकायां

[3] B : रेखायां pour रेखाश्च ; E : रेखां च

[4] B : हैम pour हेम

[5] B, E : वर्धनीं pour वर्धन्यां

[6] B et E omettent च

[7] B, E : भूतदृक् चतुरस्त्रयः

[8] B : शान्तिनन्दी महाकालौ बलारादिश्च पूर्वके

[9] B : विद्यां भृङ्गिगणेशं च ; E : विद्याभृङ्गिगणेशं च

[10] B, E निर्ऋति pour निर्ऋतौ

[11] E : विष्णु pour विष्णो

[12] E : वास्तुब्रह्मं

[13] B : वारुणं च

[14] Le mot दिक्षु doit se comprendre comme s'il y avait दिशि

[15] B : चण्डेशं pour चण्डेशौ

[16] B : अस्त्रराजक्रमान्न्यसेत् pour अस्त्रराजं क्रमान्न्यसेत्

[17] B : पञ्चाग्निमाथ कर्तव्यम् pour पञ्चाग्निर्वाथ कर्तव्यः ; E : पञ्चाग्निर्वाथ कर्तव्यम्

[18] B : अथ pour अपि

[19] B, E : हेमनिष्कलकौतुकम्

[20] B . दापयेद्धीमानापूपादिनि दापयेत्

[21] B : दीपौ pour दीप

[22] B : दीक्षां pour वीक्षां

[23] B : कुर्यात् pour कृत्वा

धूपदीपादिभिश्चैव पाद्यार्घ्यैरुपचारकैः । [1]सायाह्ने स्याद्धोमकर्माप्यस्त्रदेवं विचिन्तयेत् ॥ ६१ ॥
वाहनादि [2]यथादेवं तत्तद्देवान् सुपूजयेत् । होमान्ते यागवीक्षायां[3] डोलामण्टपसंनिधौ ॥६२॥

[ डोलामण्टपः[4] ]

मण्टपं कारयेद्धीमानायताश्रं[5] तु कल्पयेत् । द्वित्रिहस्तं समारभ्य षट्षड्ढस्तविवर्धनात् ॥६३॥
[6]स्यात्पञ्चदशहस्तान्तमायादिशोधनं कुरु । षड्विस्तारं [7]चतुर्भाग एकांशं तु धरातलम्॥ ६४ ॥
तत्समं तु त्रिपादं वाप्यधस्तात् सोमपीठकम् । [8]स्तम्भोच्चस्य विधिः सम्यगधिष्ठानत्रियंशकः[9] ॥
अधिष्ठानत्रिभागे तु[10] पञ्चभागेन चैव हि । [11]डोलास्तम्भस्य चोत्सेधं कल्पयेच्चैव केशव॥६६॥
[12]स्तम्भोच्चस्याष्टमे भाग एकभागेन विस्तृतम् । [13]विस्ताराद्दशहीनं तु [14]स्तम्भाग्रस्य त्रिशालकम्॥
एकांशमुत्तरोत्सेधं प्रपालंकृतं[15] माधव । तत्स्तम्भपञ्चभागे[16] तु त्रिभागं तोरणोदयम् ॥६८॥
व्यालहंसादिसंयुक्तं नासिकायां तु तोरणम् । स्वर्णं वा रजतं वापि ताम्रं वाप्यथ कल्पयेत् ॥
नानालंकारसंयुक्तं डोलानां मधुसूदन । तन्मण्टपमलंकृत्य वितानध्वजचामरैः ॥ ७० ॥
नानापिञ्छसमायुक्तं नाना[17]छत्रसमन्वितम् । पाटलैः कर्णिकारैश्च चम्पकैः केसरैस्तथा ॥ ७१ ॥

---

[1] B : सायाह्ने होमकर्म च अस्त्रदेशं विचिन्तयेत् [2] E : यथा देवान्

[3] B : दीक्षायां pour वीक्षायां

[4] Cf. *Kāmikāgama*, II, 9, 5-13:

डोलारोहं ततः कुर्यात्सायाह्नसमये द्विजाः । सर्वालंकारसंयुक्तं कृत्वा स्तम्भद्वयं तथा ॥
स्तम्भलक्षणसंयुक्तं तयोर्यष्टिं निवेशयेत् । तन्मध्ये विन्यसेद्डोलां चतुर्हस्तसमन्विताम् ॥
चतुर्बाहुसमायुक्तामूर्ध्वप्रच्छादनान्विताम् । नानालंकारसंयुक्तामथ बाहुद्वयान्विताम् ॥
एकहंसासनोपेतां पुण्याहप्रोक्षणान्विताम् । अस्त्रतोयेन संप्रोक्ष्य कल्पयेदासनं यथा ॥
फलकायां यजेद्धंसं हृदा हंसासने यजेत् । ब्रह्माणं दक्षिणे बाहौ वामबाहौ यजेद्धरिम् ॥
विष्टरे रुद्रमिष्ट्वा तु फलकोर्ध्वे शिवं यजेत् । वामे देवीं समभ्यर्च्य सेनानीं मध्यमे यजेत् ॥
गन्धाद्यैरथवा देवीमर्चयेत्फलकोपरि । नानागानसमायुक्तं नानानृत्तसमन्वितम् ॥
नानावाद्यसमोपेतं तदा संतोषयेद्धरम् । अन्यत्रापि च कर्तव्यं डोलारोहणमिष्टदम् ॥
प्रत्यहं वा विधेयं स्यात्सर्वकामार्थसिद्धये । डोलाचलनमिष्टं स्याद्धरस्यारोहणेन वा ॥

[5] B : अग्रं pour अश्रं
[6] B : पञ्चदशस्य हस्तान्तमायादिशोधनं कुरु
[7] B, E : चतुर्भागमेकांशं
[8] E : स्तम्भोच्चं तु विधिः
[9] E : क्रियांशकम् pour त्रियंशकः
[10] B : त्रिभागेन pour त्रिभागे तु
[11] B : डोलास्तम्भं तदुत्सेधं
[12] B : स्तम्भोच्चं चाष्टमे भागे
[13] B : विस्तारं दशहीनं तु
[14] B : स्तम्भाग्रं तु pour स्तम्भाग्रस्य
[15] B : अलंकृत pour अलंकृतं
[16] E : भागं pour भागे
[17] B : ध्वज pour छत्र

[1]भूपदीशिवमाल्यैस्तु[2] [3]पुन्नागमल्लिकैस्तथा । [4]मागधीकरवीरैश्च [5]हेमधुत्तूरकैस्तथा ॥ ७२ ॥
[6]कुशेशयप्रतीहासै रुद्रपुष्पकटीमुरैः । पूगीफलादिरम्भाम्रनारङ्गलिकुचैस्तथा[7] ॥ ७३ ॥
तन्मण्टपमलंकृत्य चाष्टद्रोणैश्च शालिभिः । [8]शाल्यर्धतण्डुलान्न्यस्य तण्डुलार्धतिलान्न्यसेत् ॥
[9]तिलार्धलाजा एवोक्ता दर्भैः पुष्पैः परिस्तरेत् । तत्र विघ्नेशपूजां च संकल्पं चैव बुद्धिमान् ॥
पुण्याहप्रोक्षणं कृत्वा [10]डोलामन्त्रेण देशिकः । तस्यामभ्यर्चयेच्चैवं[11] यथाविधि जनार्दन॥७६॥
धर्मं ज्ञानं च वैराग्यमैश्वर्यं चार्चयेद् गुरुः । पिनाकं विष्टरेऽभ्यर्च्य वलये कुण्डलीं तथा॥७७॥
ज्ञानशक्तिं क्रियाशक्तिमिच्छाशक्तिं तथैव च । डोलायां वलये [12]चैवाभ्यर्च्य कुण्डलिनीं तदा॥
शृङ्खलायां वृषं चैव बिन्दुं तद्वलये न्यसेत् । शुद्धविद्यां मनोन्मन्या फलकायां न्यसेत्क्रमात्॥७९॥

[डोलोत्सवः]

उत्सवेश्वरमारोप्य डोलोर्ध्वे तु [13]दृढं तथा । वामे शक्तिं समारोप्य धूपदीपादिनार्चयेत्॥८०॥
आरात्रिकं ततो [14]दद्याद्वेदविज्ञापनं कुरु । स्तोत्रध्वनिसमायुक्तं शङ्खध्वनिसमन्वितम् ॥ ८१ ॥
गीतवाद्यैश्च नृत्तैश्च [15]विज्ञाप्य तोषयेच्छिवम् । महाहविर्निवेद्याथ धूपदीपादिकं ददेत् ॥ ८२॥
ग्रामप्रदक्षिणं कृत्वा नीत्वा [16]देवं [17]शिवालयम् । देवं संस्नाप्य संपूज्य [18]नैवेद्यादीन्निवेदयेत्॥
मन्त्रपुष्पं ततो दद्यादुदकेन ददेद् बुधः । एवं प्रतिदिनं कुर्यात्सायं प्रातस्तु चोत्सवम्॥८४॥
[19]तीर्थाहात्पूर्वदिवसे नटेशस्नपनं कुरु । कौतुकं कृष्णगन्धैश्च [20]तत्तत्स्थाने न्यसेत्क्रमात्॥८५॥
नैवेद्यं धूपदीपं च ततो धामप्रदक्षिणम् । प्रदक्षिणाय [21]मागे तु [22]देवदेवे शिवालये ॥ ८६॥
[23]तद्दोपशमनार्थाय कर्पूरालेपनं हरे । मध्यहारे [24]निवेशश्च वेदगीतादिभिः सह ॥ ८७ ॥
धूपदीपं च नैवेद्यं देव्या सह निवेशनम् । प्रत्यूषे कौतुकं तीर्थमस्त्रराजस्य देशिकः ॥ ८८ ॥

---

[1] B : भूपति pour भूपदी
[2] E : मालां तु pour माल्यैस्तु
[3] B, E : पुन्नागं मल्लिका तथा
[4] E : मागधी करवीरं च
[5] E : हेमदुत्तूरकं तथा
[6] E : कुशेशयं प्रतीहासं क्षुद्रपुष्पकटी मुरा
[7] E : लिकुचं तथा pour लिकुचैस्तथा
[8] E : शाल्यर्धं तण्डुलं न्यस्य तण्डुलार्धं तिलान्न्यसेत्
[9] E : तिलार्धं लाजमेवोक्तं
[10] B : डोलामन्त्रेण
[11] B : एव pour एवं
[12] B : चैव कुण्डलाभ्यर्चनं तथा
[13] E : दृढा pour दृढं
[14] B : दद्याद्वेदविज्ञानसंयुतम्
[15] B : विज्ञप्तः pour विज्ञाप्य
[16] B : देश pour देवं
[17] B : शिवालये
[18] B : नैवेद्यादि pour नैवेद्यादीन्
[19] B : तीर्थाहपूर्वदिवसे
[20] E : तत्तत्स्थानं
[21] La forme grammaticale correcte est मार्गे : E : मार्गे तु
[22] E : देवदेवं
[23] E : तदुष्ण pour तद्दोष
[24] E : निवेशं

अरुणोदयवेलायां नटेशभ्रमणं हरे । देवस्य [1]दर्शनं वीथ्यां देव्याः क्रोधसमन्वितम् ॥ ८९ ॥
रम्भादण्डैश्च[2] क्रोधेन भक्तानां [3]प्रहरस्तथा । देव्याश्च क्रोधशान्तिः स्याद्देवयोश्च प्रदक्षिणम् ॥
[4]आरात्रिकं विधानेन प्रविश्य भवनं [5]कुरु । होमान्ते चैव कर्तव्यं पूर्वं वा बलिमारभेत्॥९१॥

[तीर्थकर्म]

सोमास्कन्देश्वरं देवमस्त्रेण सह देशिकः । ततो भक्तजनैः सार्धं [6]नद्यादौ स्नानमाचरेत् ॥९२॥
तीरे समतलं कृत्वा प्रपायामुत्सवेश्वरम् । स्नपनैः पञ्चगव्यैश्चाप्युत्सवेश्वरपूजनम् ॥ ९३ ॥
स्नानान्ते चैव कर्तव्यं कौतुकं मुच्य देशिकः । वस्त्राभरणमाल्याद्यैरलंकृत्य जनार्दन ॥ ९४ ॥
धूपदीपं निवेद्याथ ततो ग्रामप्रदक्षिणम् । प्रविश्य भवनं पश्चात्ततो यागगृहं गतः[7] ॥ ९५ ॥
यागादिकुम्भानुत्सृज्य पूर्णाहुतिमथाचरेत् । पादप्रक्षालनं कृत्वा पश्चादाचार्यमर्चयेत् ॥९६ ॥
हारकेयूरकटकैर्हैमयज्ञोपवीतकैः । गन्धपुष्पैश्च धूपैश्च यजमानोऽर्चयेद् गुरुम् ॥ ९७ ॥
वेद्यग्रे स्थापितान्कुम्भान्परिचारकमूर्धनि । [8]धामप्रदक्षिणं कृत्वा शुद्धवाद्यसमन्वितम् ॥९८॥
अर्धमण्टपे संस्थाप्य [9]त्रिपाद्युपरि तान्घटान् । सामान्यार्घ्यं तु संकल्प्य पुण्याहप्रोक्षणं कुरु ॥
मूललिङ्गेऽभिषिच्याथ स्नपनाद्यैर्विशेषतः । महाहविर्निवेद्याथ पाद्याद्यैरुपचारकैः ॥ १०० ॥
धाम्नि [10]चण्डेश्वरे प्रोक्तनैवेद्यादीनि दापयेत् । ध्वजदण्डान्तिकं गत्वा चण्डेशास्त्रसमन्वितम् ॥

[ध्वजावरोहणम्]

ध्वजावरोहणं कृत्वा चास्त्रमन्त्रं समुच्चरन् । अवतार्य [11]पटस्थं च योजयेद् वृषभं वृषे ॥१०२॥
चण्डेशं चास्त्रराजानं [12]ग्रामादिषु बलिं क्षिपेत् । बलिं विसर्जयेद्धीमाँल्लोकपालान्विसर्जयेत् ॥
प्रविश्य भवनं पश्चाद्बलिपीठे बलिं क्षिपेत् । पादप्रक्षालनं कृत्वा प्रविशेदालयं प्रति ॥१०४॥
इति यः कारयेन्मर्त्यो डोलोत्सवमनुत्तमम् । सर्वयज्ञफलं प्राप्य [13]शिवेन सह मोदते ॥१०५

[14]इत्यजिताख्ये [15]महातन्त्रे [ क्रियापादे ] [16]डोलोत्सवविधिर्नाम
अष्टाविंशः पटलः ॥

[1] B : दर्शिते pour दर्शनं
[2] B : दण्डस्य pour दण्डैश्च
[3] B : प्रहरं तथा
[4] E : आरात्रिकविधानेन
[5] E : तथा pour कुरु
[6] B : नद्यादिवासमाचरेत्
[7] B : कुरु pour गतः
[8] B : ग्राम pour धाम
[9] B : त्रिपादौ नादसंस्थितम्
[10] B : चण्डेश्वरं प्रोक्तं नैवेद्यादीनि
[11] B : घटस्थं pour पटस्थं
[12] B : ग्रामादीनां
[13] B : शिवलोके महीयते
[14] E : इत्यजिते pour इत्यजिताख्ये
[15] E omet महातन्त्रे
[16] E : डोलोत्सवविधिपटलः

## [एकोनत्रिंशः पटलः]

## [स्नपनविधिः[1]]

### [स्नपनफलम्[2]]

अतः परं [3]प्रवक्ष्यामि शिवस्य स्नपनं हरे । अकालमृत्युशमनं[4] सर्व[5]रोग[6]भयापहम् ॥ १ ॥
सर्वपापप्रशमनं शोकमोह[7]विनाशनम् । सर्वाभीष्टप्रदं [8]पुंसां सर्वारिष्टनिवारणम् ॥ २ ॥
आयुःश्रीकीर्तिजयदं[9] [10]तुष्टिपुष्टिप्रदं सदा । अवग्रहहरं[11] लोके सर्वोपद्रव[12]नाशनम् ॥ ३ ॥

### [स्नपनकालाः[13]]

विषुवायनकालेषु तथा विष्णुपदीषु[14] च । षडशीतिमुखाद्येषु[15] सूर्येन्दुग्रहणे तथा ॥ ४ ॥
अष्टम्यां च[16] चतुर्दश्यां पञ्चदश्यां च [17]पक्षयोः । आर्द्रायामर्कवारे च [18]तीर्थर्क्षेषूत्सवेषु च ॥
प्रतिष्ठान्ते पवित्रे [19]च कृत्तिकादीपरोहणे । नवनैवेद्यकाले तु घृतस्नानोत्तरे तथा ॥ ६ ॥
घृतकम्बलके चैव वसन्तोत्सवकर्मणि । प्रायश्चित्तेषु सर्वेषु जीर्णोद्धारविधौ तथा ॥ ७ ॥

---

[1] Pour स्नपनविधि, voir *Kāmika* II, 4, *Kāraṇa* I, 36-39 et 48, *Dīpta* 61 et 62, *Makuṭa* 9, *Raurava* vol. I, ii, 20-24, *Vīra* 77-85, *Sahasra*, *sahasra-snapana-paṭala*, *Suprabheda* I, 15, *Sūkṣma* 26 et *Svāyambhuva* 18-19.

[2] Cf. *Dīptāgama*, 61, 1-2a:
अतः परं प्रवक्ष्यामि महास्नपनमुत्तमम् । अपमृत्युप्रशमनमायुरारोग्यवर्धनम् ॥
दुःखत्रयनिवृत्त्यर्थं सर्वशत्रुविनाशनम् ।

[3] B, C, D, E : इदं वक्ष्ये pour प्रवक्ष्यामि
[4] C, D : मथनं pour शमनं
[5] D : लोक pour रोग
[6] A : भयावहम् pour भयापहम्
[7] C : निवारणम् pour विनाशनम्
[8] D : पुण्यं pour पुंसां
[9] C, D : विजयं pour जयदं
[10] C : तुष्टपुष्ट pour तुष्टिपुष्टि
[11] A : करं pour हरं
[12] A : उत्पात pour उपद्रव

[13] Cf. *Suprabhedāgama*, I, 15, 1-6 :
अथातः संप्रवक्ष्यामि स्नपनस्य विधिक्रमम् । पञ्चम्यां च नवम्यां च चतुर्दश्यां तु पर्वणोः ॥
संक्रान्तौ विषुवे चैवाप्ययने ग्रहणे तथा । पञ्चम्यादिग्रहणान्तं दशवृद्ध्युत्तरं वरम् ॥
दीक्षान्ते च प्रतिष्ठान्ते प्रोक्षणे चोत्सवान्तके । यागान्ते च सुनक्षत्रे कृत्तिकादीपकर्मणि ॥
कर्तव्यं जन्मनक्षत्रे मङ्गले मन्त्रसाधने । राजाभिषेकसमये मरणान्तेऽथ जन्मनि ॥
अतिवृष्टावनावृष्टौ दुर्भिक्षे दुर्निमित्तके । भूमिकम्पे दिशां दाहे ज्वरमार्यादिपीडने ॥
सर्वरोगे समुत्पन्ने शत्रुभिः पीडनेऽपि च । प्रायश्चित्तादिकालेषु शिवं संस्नापयेद् गुरुः ॥

[14] A : पदेषु pour पदीषु
[15] A, B, C, D : आस्ये तु pour आद्येषु
[16] B, C, E : तु pour च
[17] B, E : पर्वयोः pour पक्षयोः
[18] C : तीर्थक्षेत्रोत्सवेषु च
[19] A : वा pour च

[1]दिव्यान्तरिक्षभौमानामद्भुतानां च दर्शने । अवग्रहे च जन्तूनां [2]ज्वरमार्यादिवर्तने ॥ ८ ॥
[3]परचक्राद्भयोत्पत्तौ यज्ञारम्भे [4]द्विजन्मनाम् । विद्यारम्भे विवाहे च राज्ञां चैवाभिषेचने ॥
युद्धारम्भे पुरारम्भे कृषिवाणिज्ययोस्तथा[5] । शताभिषेककाले च गवां [6]रोगप्रदर्शने ॥ १० ॥
यौवराज्याभिषेके च [7]पुष्यस्नाने च भूभुजाम् । [8]गजाश्व[9]रोगसंभूताविदं स्नपनमारभेत् ॥

[स्नानमण्टपः[10]]

कलशस्थापनार्थाय मण्टपं कारयेत्पुरा । त्रयोदशकरैः[11] श्रेष्ठं मध्यं सप्तकरैरपि ॥ १२ ॥
अधमं पञ्चहस्तैश्च[12] चतुष्षष्ट्यङ्घ्रिसंयुतम् । [13]प्रथमं मध्यमन्त्यं च द्वादशस्तम्भसंयुतम् ॥१३॥
रुद्रतालोच्छ्रयाः [14]स्तम्भाः प्रथमस्य प्रकीर्तिताः । शेषयोर्नव[15]तालोच्चा [16]मण्टपानां तलोच्छ्रयम्
षोडशाङ्गुलमानं [17]स्याद्दर्पणोदरसंनिभम् । कलशस्थापने योग्यः प्रासादाग्रे तु [18]नो भवेत् ॥
मण्टपो यदि [19]तत्रासौ मण्टपानां विधिर्भवेत् । गोमयालेपिते[20] रम्ये सविताने [21]सदिग्ध्वजे ॥
यज्ञवृक्षैश्चतुर्दिक्षु द्वारस्थापिततोरणे[22] । मङ्गलाष्टकसंयुक्ते [23]दर्भमालाभिवेष्टिते ॥ १७ ॥

---

[1] A : दिव्यन्तरिक्षे pour दिव्यान्तरिक्ष० [2] C : त्वरमाद्यादि वर्तते
[3] A : परचक्रभयोत्पन्ने ; C : भयचक्रभयोत्पत्तौ; D : परचक्रभयोत्पत्तौ
[4] A : द्विजन्मने [5] A : तदा pour तथा [6] B,D, E : रोगप्रवर्तने; C : रोगः प्रवर्तते
[7] B : पुण्य pour पुष्य [8] A omet les *śloka* 11b et 12a [9] C, E : रोह pour रोग

[10] Cf. *Suprabhedāgama*, I, 15, 11-15 :
प्रासादस्याग्रतः कुर्यान्मण्टपं चतुरश्रकम् । त्रिंशश्च तिथिहस्तं च भानुदिक्करमेव च ॥
नवाष्टसप्तषट्पञ्चहस्तैर्नवविधं स्मृतम् । अष्टमाहस्तकं पादं नवानां मण्टपाः स्मृताः ॥
षट्त्रिंशद्गात्रसंयुक्तमुत्तमानां विधीयते । षोडशस्तम्भसंयुक्तं मध्यमानां तु कारयेत् ॥
द्वादशस्तम्भसंयुक्तमधमानां प्रकल्पयेत् । कूटं वा मण्टपं वापि कारयेत्स्वप्रमाणतः ॥
चतुर्द्वारसमायुक्तं चतुस्तोरणभूषितम् । वितानध्वजसंयुक्तं दर्भमालोपशोभितम ॥

[11] D : करं pour करैः [12] D : हस्तं च pour हस्तैश्च
[13] A : प्रथमं मध्यमन्त्यं च; B : प्रथमं मध्यमान्तं च; E : प्रथमान्मध्यमान्तं च
[14] A : हस्ताः pour स्तम्भाः [15] C, E : नन्द pour नव

[16] A omet le passage qui va de मण्टपानां तलोच्छ्रयम् à मण्टपो यदि तत्रासौ (16a) et lit: शेषयोर्नवतालोच्चं मण्टपानां विधिर्भवेत्

[17] C, D : वा pour स्याद् [18] D : ना pour नो
[19] C : तत्रासां pour तत्रासौ [20] D : आलेपने pour आलेपिते
[21] A : महध्वजे [22] C, D : तौरणैः pour तोरणम्

[23] A omet le passage qui va de दर्भमालाभिवेष्टिते à मङ्गलाङ्कुरसंयुक्ते (18a) et lit : मङ्गलाष्टकसंयुक्ते प्रोक्षयित्वा शिवाम्भसा

मङ्गलाङ्कुरसंयुक्ते प्रोक्षयित्वा शिवाम्भसा । [1]त्रिवृत्सूत्रेण [2]तत्रैव पिष्टाक्तेन प्रमाणतः ॥ १८ ॥
पुण्याहं वाचयित्वादौ[3] सूत्रपातं[4] प्रकल्पयेत् । नवप्रकारं [5]तत्प्रोक्तं [6]कलशैः स्नपनं हरे ॥१९

[स्नपनभेदाः[7]]

अष्टाधिकसहस्रैस्तु कलशैरुत्तमोत्तमम् । [8]साष्टाधिकसहस्रार्धैरुत्तमे मध्यमं भवेत् ॥ २० ॥
षोडशद्विशतैः[9] प्रोक्तमुत्तमस्याधमं तु यत्[10] । मध्यमोत्तममुद्दिष्ट[11]मष्टाधिकशतैरपि ॥ २१ ॥
[12]अष्टोत्तरचत्वारिंशन्मध्यमध्यममुच्यते । चतुर्विंशतिभिश्चैव मध्यमस्याधमं भवेत् ॥ २२ ॥
[13]षोडशैरधमे[14] श्रेष्ठमष्टभिर्हीनमध्यमम्[15] । चतुर्भिरधमं हीने[16] कलशैः स्नपनं भवेत् ॥ २३
शिवयोः कलशावेतौ सर्वत्राप्यधिकौ मतौ । नवानामपि [17]चैतेषां [18]स्नपनानां जनार्दन ॥२४
त्रैविध्यमिह[19] निर्दिष्टं कलशस्थापनं क्रमात् । उत्तमानां त्रयाणां स्याद्व्यूहेषु स्थापनं क्रमात्[20] ॥
पदेषु मध्यमानां च त्रयाणां परिकीर्तितम् । त्रयाणामपि चान्यानां[21] भवेत्पद्मदलेषु[22] च ॥

[ कलशलक्षणम्[23] ]

सर्वेषां स्थापनं वक्ष्ये [24]शृणु तत्त्वं जनार्दन । सौवर्णा राजता वाथ ताम्रजा मृण्मयास्तु वा ॥

---

[1] B : त्रिषु pour त्रिवृत्  [2] A : तेनैव  [3] A : तु pour आदौ
[4] C : पादं pour पातं ; D : पात्रं  [5] B, C, D, E : तस्योक्तं  [6] E : कलश pour कलशैः
[7] Cf. *Suprabhedāgama*, I, 15, 7-10a :
नवधा स्नपनं तत्र संक्षेपेण शृणु क्रमात् । पञ्चभिर्नवभिश्चैव पञ्चविंशतिभिस्तथा ॥
कन्यसत्रितयं त्वेषु शृणु मध्यमकत्रयम् । पञ्चाशन्न्यूनमेकं चाप्येकाशीतिम्नतः परम् ॥
शतमष्टोत्तरं ज्ञेयं मध्यमत्रितयं त्विह । षोडशद्विशतं चैवाप्यष्टोत्तरशतत्रयम् ॥
अष्टाधिकसहस्रं चेत्युत्तमादिषु चाधिकम् ।
[8] D, E : साष्टाभिस्तु pour साष्टाधिक०  [9] A : द्विशतं pour द्विशतैः
[10] A : अथ मध्यतः pour अधमं तु यत्  [11] A : इत्युक्त pour उद्दिष्ट
[12] B, C, E : अष्टोत्तरैश्चत्वारिंशैर्मध्यमे मध्यमुच्यते ; D : अष्टोत्तरैश्चत्वारिंशैर्मध्यमान्मध्यमुच्यते
[13] Les *śloka* 23 à 96a manquent dans le ms. D
[14] C : अधम pour अधमे  [15] C, E : अष्टहीनं तु मध्यमम् pour अष्टभिर्हीनमध्यमम्
[16] B, C, E : अधमे हीनं pour अधमं हीने  [17] A : वै तेषां
[18] B, C, E : स्नपनं तु  [19] A : इति pour इह
[20] B, C : स्थापनक्रमम् ; E : स्थापनं क्रमम्  [21] B, C, E : अन्तानां pour अन्यानां
[22] C, E : दलेन pour दलेषु
[23] Cf. *Suprabhedāgama*, I, 15, 16b-20
कलशानि ततो ग्राह्य साधयेदादिशैवकैः । सौवर्णं राजतं वापि तथा ताम्रमयैरपि ॥
शङ्खैर्वा शुक्तिकैर्वापि गवां शृङ्गैरथापि वा । अथवा मृन्मयैर्वापि सर्वलक्षणसंयुतैः ॥
सुपक्वैः सुस्वरैः स्निग्धैर्बिम्बप्रभसमन्वितैः । एतैर्लक्षणसंयुक्तैः स्नापयेत्परमेश्वरम् ॥
उत्तमं द्रोणसंपूर्णं मध्यमं तु तदर्धकम् । अधमं चाधमं प्रोक्तं सर्वेषामाढकं तु वा ॥
शङ्खशुक्तिकशृङ्गाणां स्वप्रमाणेन पूरयेत् ।
[24] B, C : तच्छृणु त्वं समाहितः ; E : तच्छृणुष्व समाहितः

वेदाग्निनयनप्रस्थैः[1] [2]संपूर्णाः स्युर्यथाक्रमम् । [3]श्रेष्ठमध्यकनिष्ठास्तु कलशाः स्नपनोचिताः ॥
सर्वेषां कलशानां तु [4]शिवकुम्भश्चतुर्गुणः । [5]शक्तिकुम्भश्च कलशद्विगुणः[6] स्यात्प्रमाणतः॥२९॥
शिवयोः [7]कुम्भकौ यत्र सौवर्णौ राजताः स्मृताः[8] । [9]कलशा यदि तौ स्यातां [10]राजतौ ताम्रजाः परे॥
[11]ताम्रजौ यदि तौ तत्र कलशा मृण्मयास्तदा[12]। [13]सर्वे वाथ शिवोमाभ्यां [14]कुम्भाभ्यामेकवस्तुना॥
मृण्मयास्तु विशेषेण कलङ्करहिताः शुभाः । पक्वबिम्बोपमाः सर्वे क्षालयेत्तान्विशेषतः॥ ३२ ॥
अस्त्रजप्तेन[15] तोयेन सूत्रेणाप्यथ[16] वेष्टयेत् । निर्दोषेण सितेनैव समेन क्षालितेन च ॥ ३३ ॥
त्रिगुणद्विगुणैकेन शिवोमारुद्रकुम्भकान् । दर्भोपरि [17]ततः सर्वान्विन्यस्याधोमुखान्सुधीः॥३४॥

[ गन्धोदकम्[18] ]

प्रोक्षयेद्धृदयेनाथ पूरयेद्गन्धवारिणा । नवमृद्भाण्डपूर्णेन शीतलेन सुगन्धिना ॥ ३५ ॥
नादेयेनाथ कौपेन शुचिना स्वच्छवारिणा । उशीरत्रुटि[19]ह्रीबेरचन्दनागरुकोष्ठजैः[20] ॥ ३६ ॥
जाति[21]तक्कोलजैश्चापि[22] निर्दोषैर्जन्तुवर्जितैः । [23]चूर्णैरालोलितं सर्वं [24]गन्धोदमिति संज्ञितम् ॥

[ स्थण्डिलम्[25] ]

कलशस्थापनार्थं तु [26]स्थण्डिलं शालिभिर्भवेत् । निर्दोषैः सुमितैश्चापि धान्यैः कृष्णविवर्जितैः॥

---

[1] A : प्रस्थं pour प्रस्थैः [2] A : संपूर्णं स्याद् pour संपूर्णाः स्युर् [3] C : ज्येष्ठ pour श्रेष्ठ
[4] A : शिवकुम्भं चतुर्गुणः ; B : शिवकुम्भं चतुर्गुणम्
[5] A : शक्तिकुम्भं च [6] A : द्विगुणं pour द्विगुणः
[7] A : कुम्भयोः pour कुम्भकौ [8] A : तु वा pour स्मृताः
[9] C : कलशायां दितौ स्यातां [10] B, E : राजताः pour राजतौ
[11] A : ताम्रजाः pour ताम्रजौ [12] C : तु ताः pour तदा ; E : तु वा [13] B,C,E : सर्वेषां च शिवाभ्यां तु
[14] A : कुम्भानामेव वस्तुना ; B : कुम्भाभ्यामेकवस्तुजः ; E : कुम्भाभ्यामेकवस्तुजम्
[15] C : शब्देन pour जप्तेन [16] B,C, E : अथ च pour अप्यथ [17] A : स्थितान् pour ततः
[18] Cf. *Suprabhedāgama*, I, 15, 68b-69 :
उशीरागरुकर्पूरचन्दनैश्च सुपुष्पितम् । शुद्धतोयेन संमिश्रमुपस्नानोदकं स्मृतम् ॥
उपस्नानानि तत्संख्या सप्ततीर्थानि यानि तु ॥
[19] C, E : चोचानां pour ह्रीबेर [20] C, E : कुष्ठकैः pour कोष्ठजैः
[21] A : तक्कोलकैः pour तक्कोलजैः [22] E : एव pour अपि
[23] C : गन्धैरालोलिताः सर्वे ; E : गन्धैरालोपिताः सर्वे
[24] C : गन्धादिर्मन्त्रसंज्ञितम् ; E : गन्धादिमन्त्रसंज्ञितम्
[25] Cf. *Suprabhedāgama*, I, 15, 23-24a :
स्थण्डिलं तत्र कुर्वीत शालिभिर्विमलैस्तथा । आढकं च तदर्धं वा कलशानां पृथक् पृथक् ॥
तदर्धं तण्डुलैर्भूष्य तदर्धं तिलसंयुतम् ।
[26] C, E : स्थापनार्थाय pour स्थापनार्थं तु

प्रत्येकं कलशानां तु द्विप्रस्थेन कृतं परम् । स्थण्डिलं मध्यमुद्दिष्टं सार्धप्रस्थेन [1]निर्मितम्॥३९॥
प्रस्थेनैवाधमं प्रोक्तं शिवाख्यस्य जनार्दन । [2]स्थण्डिलं द्विगुणं चापि त्रिगुणं च चतुर्गुणम्॥४०॥
कन्यसं मध्यमं श्रेष्ठं [3]तत्तदर्धमुमात्मके । [4]तत्तत्तुर्यांशकैश्चापि तण्डुलैः षोडशांशकैः ॥ ४१ ॥
तिलैश्चापि समायुक्तं शुभ्रलाजसमन्वितम् । दर्भैर्विकीर्णं सर्वत्र; तिथिसंख्यैः [5]कुशैरथ॥४२॥

[ कूर्चम् ]

[6]कूर्चं स्याच्छिवकुम्भस्य पञ्चविंशाङ्गुलायतैः[7] । दशभिर्मध्यमं [8]तद्वत्सप्तभिश्चाधमं भवेत्॥४३॥
नवभिः सप्तभिश्चैव पञ्चभिश्च यथाक्रमम् । गौरीकुम्भस्य [9]कूर्चं स्याच्छ्रेष्ठमध्यकनीयसम्॥४४॥
सप्तभिः पञ्चभिश्चैव [10]त्रिभिश्चापि क्रमेण तु । पूर्ववत्कूर्चमुद्दिष्टं कलशानां जनार्दन ॥ ४५ ॥

[पिधानम्]

विंशाङ्गुलं [11]स्याच्छक्तेस्तु [12]शेषं तिथ्यङ्गुलं भवेत् । [13]चतुरङ्गुलप्रमाणेन पिधानं स्याच्छरावकम्

[वस्त्रम्]

सप्तपट्पञ्चहस्तं स्यात्कुम्भवेष्टनवस्त्रकम् । पञ्चभागैकविस्तीर्णं नीरोमं सुसितं भवेत् ॥ ४७ ॥
[14]श्रेष्ठमध्यकनिष्ठं च क्रमेण परिकीर्तितम् ।

[रत्नानि]

[15]शिवकुम्भस्य रत्नाम्बुपञ्चकं श्रेष्ठमुच्यते ॥ ४८ ॥
चत्वारि त्रीणि रत्नानि मध्यमाधमयोरपि । माणिक्यं मुक्ता वैडूर्यमिन्द्रनीलं प्रवालकम् ॥ ४९
पञ्चरत्नमिति प्रोक्तं गौरीकुम्भे तु काञ्चनम् । अधमं माषमात्रं स्याद् द्विगुणं मध्यमं भवेत्॥५०
त्रिगुणं श्रेष्ठमित्युक्तं शेषेषु द्रव्यमेव हि । सर्वसाधारणं चैव साधनं परिकीर्तितम् ॥ ५१ ॥

[[16]अष्टोत्तरसहस्रस्नपनम्; तत्र सूत्रपातः[17]]

[18]अथो नवप्रकाराणां[19] वक्ष्यामि स्थापनं क्रमात् । पूर्वोक्तमण्टपे सम्यक् सूत्रपातं तु कारयेत् ॥

---

[1] B, E : संमितम्  [2] A : स्थण्डिलद्विगुणं  [3] C : तत्तदर्धकमात्मके ; E : तत्तदर्धकमात्मकम्
[4] E : तत्तु तुर्यांश्रकैश्चापि  [5] B : कुशैस्तथा
[6] A : कूर्चः pour कूर्चं  [7] A : आयतम् pour आयतैः
[8] A : तत्स्यात् pour तद्वत्  [9] C : कूर्चस्य pour कूर्चं स्यात्
[10] C : त्रिभिश्चाभिक्रमेण वै ; E : त्रिभिश्चापि यथाक्रमम्
[11] A : स्याच्छार्क्तैस्तु ; B : अशक्तैस्तु ; C : तच्छक्तेस्तु ; E : तु शक्तेस्तु
[12] C : शेषे तीर्थाङ्गुलं  [13] C : चतुरङ्गप्रमाणेन पिधानस्य शरावकम्  [14] B : श्रेष्ठं pour श्रेष्ठ
[15] Les *śloka* 48b à 51 manquent dans les mss. C et E
[16] Pour les détails d'*aṣṭottarasahasrasnapana* voir *Rauravāgama* vol. I, ii, 24
[17] Cf. *ibid.*, pp. 144-115, śl. 1b-9 et note 7
[18] E : अतो pour अथो  [19] C : प्रकारेण pour प्रकाराणां

सकूर्चौ [1]रत्नहेमाढ्यौ गन्धचन्दनचर्चितौ । [2]वस्त्रेणावेष्टितग्रीवौ सापिधानौ च साक्षतौ ॥ ६८ ॥
मालापल्लवसंयुक्तौ शिवयोः कुम्भकावुभौ । अस्त्रेण प्रोक्षयित्वाब्जं[3] कर्णिकायां शिवेन तु॥६९॥
गौरीमन्त्रेण [4]जाप्यौ तु स्थापयेत्स्थापकोत्तमः । शिवकुम्भोत्तरे[5] भागे [6]वर्धन्याः स्थानमुच्यते ॥
[7]उत्तराभिमुखां तस्या नासिकां परिकल्पयेत् । पाद्यमाचमनं चार्घ्यं पञ्चगव्यं कुशोदकम् ॥
क्षीरं दधि घृतं चैव दलाग्रेषु च विन्यसेत् । [8]चत्वारिंशत्सु चान्येषु [9]व्यूहेषु पुरतः क्रमात् ॥
प्रतिव्यूहं शतार्धार्धान्कलशान्स्थापयेत्सुधीः । क्षौद्रमिक्षुरसं चैव [10]यवं दर्भोदकं तथा ॥ ७३॥
तिलं कदलिकायास्तु फलं सर्षपमेव च । नालिकेरफलं रात्रिरजो वै [11]मातुलुङ्गकम् ॥ ७४ ॥
लामज्जं दाडिमीं [12]लाजचूर्णं पनसमेव च । भस्म [13]चाम्रफलं चैव [14]षोडशैतान्क्रमेण हि ॥ ७५
[15]पूर्वादि विन्यसेद्विष्णो स्वरावरणमध्यमे । [16]तेषामेतत्तथैवेह प्रथमावरणस्य च ॥ ७६ ॥
द्रव्याणि क्रमशो वक्ष्ये [17]तानि संक्षेपतः शृणु । काश्मीरं [18]रोचना कुष्ठं कर्पूरं च लवङ्गकम् ॥
[19]एला जातीफलं चान्यत्पत्रमष्टम[20]मुच्यते । प्रथमावरणस्योक्तं द्वितीयस्याधुनोच्यते ॥ ७८ ॥
सहा दूर्वा तथा लक्ष्मीर्भद्रा [21]विष्णुवधूयुता । इन्द्रवल्ली तथा काशं वाराही [22]भृङ्गमेव च॥७९
[23]गोक्षुरं च शमीपत्रं [24]तथैवाञ्जलिकारिका । अपामार्गद्वयं चैव [25]गिरिकर्णीद्वयं तथा ॥८०॥
षोडशैतानि [26]वस्तूनि द्वितीयेषूदके न्यसेत् । द्वितीयावरणेष्वेवं [27]स्वराणां परिकीर्तितम्॥८१
बाह्यस्यापि तृतीयस्य [28]मध्यस्थं वक्ष्यतेऽधुना । पद्मं नीलोत्पलं चैव [29]रक्तमुत्पलमेव च ॥८२

---

[1] B, C, E : हेमरत्नाढ्यौ [2] E : वस्त्रेण वेष्टितग्रीवौ [3] B : अग्नौ pour अब्जं ; E : अथ
[4] B, C, E : चांशौ pour जाप्यौ [5] C, E : देशे pour भागे [6] E : वर्धनी pour वर्धन्याः
[7] B, C, E : उत्तराभिमुखश्चैव [8] E : चत्वारिंशत्सुरान्येषु
[9] A : व्यूहः परिवृतः क्रमात् ; C, E : व्यूहेषु परतः क्रमात्
[10] A : यवदर्भोदकं ; E : यवोदश्चोदकं [11] A : मातुलङ्गकम्
[12] A : लाजाचूर्णं [13] B : चारुफलं
[14] A : षोडशैताः pour षोडशैतान् ; C, E : षोडशैते
[15] Les *śloka* 76 à 316 de ce *paṭala* manquent dans le ms. B
[16] A : तेषामेव तथैवेह [17] C, E : नाति pour तानि [18] E : रोचर्म
[19] A : लाजा तिलफलं ; B, C : एला जातिफलं ; E : एलं जातीफलं
[20] A : अष्टक pour अष्टम [21] C : विष्णुक्रियायुतौ ; E : अपराजिना तथा
[22] C, E : भृङ्ग pour शृङ्ग [23] E : गोक्षुरा
[24] C : तथैका pour तथैव [25] E : शिरीषं कर्णिकारकम्
[26] C : वस्त्राणि ; E : पत्राणि [27] A : स्वरावरणकीर्तिता ; C : नराणां परिकीर्तितम्
[28] E : द्रव्यं च pour मध्यस्थं [29] C : रक्तमुत्पलकं न्यसेत्

[1]एतैस्त्रिभिः समायुक्तं [2]ककारे पुष्पवारि तत् । तुलसीबिल्व[3]धुत्तूरपत्रैः[4] पत्रोदकं [5]खके ॥८३
पलाशाश्वत्थयोश्चापि कपित्थस्य च वल्कलैः । वल्कलोदकमुद्दिष्टं गकारपदमध्यमे[6] ॥ ८४ ॥
आम्राश्वत्थपलाशानां [7]पल्लवैः पल्लवोदकम् । [8]घकारे विन्यसे[9]त्तद्वद्ध्रीबेरोशीरमुस्तकैः ॥८५॥
मूलोदकं [10]ङकारस्थं [11]तदुक्तं पूर्वपञ्चकम् । नारङ्गलिकुचाम्राणां फलैर्युक्तं फलोदकम् ॥८६॥
चकारे विन्यसेच्छालि[12]नीवाराभ्यां[13] प्रियङ्गुना । बीजोदकं [14]छकारस्थं [15]विदार्युत्पलपद्मकैः ॥
कन्दैः कन्दोदकं [16]तच्च जकारे विन्यसेद् बुधः । चन्दनागरुकर्पूरैर्युक्तं[17] गन्धोदकं [18]तथा ॥८८
[19]झकारे[20] विन्यसेद्धीमान्गन्धोदकमिति स्मृतम् । [21]ञकारे तिलसिद्धार्थ[22]यवैः सिद्धोदकं[23] तथा[24]
[25]एवं याम्यगतं प्रोक्तं व्यूहानां पञ्चकं [26]पदम् । माणिक्यमुक्तावैडूर्यैष्टकारे रत्नवारि तत् ॥
ताम्ररूप्यसुवर्णैस्तु[27] युक्तं लोहोदकं भवेत् । ठकारे विन्यसेत्पश्चाड्डकारे[28] कान्तवारि च ॥९१॥
सूर्यकान्तमयस्कान्तं चन्द्रकान्तमिति [29]त्रिभिः । माक्षिकत्रयसंयुक्तं माक्षिकाम्भो [30]ढकारके ॥
[31]अभ्रकाम्भो णकारे तु युक्तं तत्त्रिभिरभ्रकैः[32] । सौराष्ट्राञ्जनतार्क्ष्यैस्तु[33] [34]तकारे क्षारवारि तत्
[35]धातूदकं [36]थकारे स्याद्धातुसिन्दूरगैरिकैः । रक्तचन्दनसंयुक्तं हरितालसमन्वितम् ॥ ९४ ॥
[37]मनश्शिलायुतं चापि दकारे [38]रक्तवारि तत् । सरित्पति[39]सरित्तीरक्षेत्रसंभवया मृदा ॥९५॥

---

[1] C : यद्वा एतैः pour एतैस्त्रिभिः ; E : एतैः पुष्पैः
[2] A : अकारे pour ककारे
[3] A : धुर्धूरं pour धुत्तूर
[4] A : पत्र pour पत्रैः
[5] A : कखम् pour खके ; C : खगम्
[6] A : मध्यमम् pour मध्यमे
[7] A : वल्कलैः pour पल्लवैः ; C : पल्वलैः
[8] A : वकारे ; C : मकारे
[9] A : तच्च pour तद्वद्
[10] A : द pour ङ
[11] C, E : उक्तं पूर्वस्य pour तदुक्तं पूर्व॰
[12] A : शालीं pour शालि
[13] E : नीवारं च pour नीवाराभ्यां
[14] A, C, E : च pour छ
[15] A : विन्दारी pour विदारी
[16] C : तद्वद् pour तच्च
[17] C : उक्तं pour युक्तं
[18] C : झकम् pour तथा; E : च तम्
[19] C et E omettent ce demi-*śloka*
[20] A : वकारे pour झकारे
[21] A : त्रं pour ञ; E : ञ
[22] A : सिद्धार्थं pour सिद्धार्थ
[23] C, E : यवशुद्धोदकं pour यवैः सिद्धोदकं
[24] C : भवेत् pour तथाः E : ञके
[25] C : एतदामगतः प्रोक्तं ; E : एतद्याम्यगतं प्रोक्तं
[26] C, E : पुनः pour पदम्
[27] E : च pour तु
[28] A : धकारे pour डकारे
[29] A : स्मृतम् pour त्रिभिः
[30] A : ढकारकान्
[31] A : अग्रकाम्भो
[32] A : अग्रकै pour अभ्रकैः
[33] E : तुन्थैस्तु pour तार्क्ष्यैस्तु
[34] A : क्ष pour त
[35] E : धातुत्रयं pour धातूदकं
[36] A : ध pour थ
[37] C, E : मनःशिलाया युक्तं च
[38] A : रक्तवारिदम् ; C, E : वारि रक्तकम्
[39] C : ॰सरित्क्षेत्रसंभवा या तथा मुदा : E : ॰सरित्क्षेत्रसंभवया तथा मृदा

युक्तं [1]मृद्म्भ इत्युक्तं [2]धकारे तत्समादिशेत् । त्रिफलासंयुतं [3]वारि कषायोदं नकारके ॥९६॥
पकारे विन्यसेत्क्षीरं फकारे दधि विन्यसेत् । [4]बकारे विन्यसेत्सर्पिर्भकारे [5]तैलमुच्यते ॥९७॥
बाह्यस्थेषु पदेष्वेवमुक्तद्रव्यं तु मध्यमे । [6]तदनन्तरमष्टानां [7]कथ्यतेऽत्र समासतः ॥ ९८ ॥
फेनं [8]च देवदारुश्च मांसी तालीसपत्रकम् । [9]कुष्ठं [10]वक्त्रं तथा [11]रास्ना नागकेसरमेव च ॥
प्रथमावरणस्यैतान्पूर्वादिक्रमशो न्यसेत् । चम्पकं जाति[12]पुन्नागमल्लिकाकरवीरकम् ॥ १०० ॥
श्वेतार्कं वकुलं चैव [13]चतुरङ्गुलसंयुतम् । माधवी कुरवं चैव केतकी पाटली तथा ॥ १०१ ॥
नन्द्यावर्तं च [14]बन्धूकजपाहेमाख्यमेव [15]च । प्रागादिक्रमशो[16] द्रव्यं षोडशेष्वपि विन्यसेत् ॥

[देवतान्यासः[17], होमश्च]

एवं द्रव्यं समाख्यातं शृणु देवानतः परम्[18] । द्रव्यन्यासावसाने तु [19]देवतान्यास उच्यते ॥
पुण्याहं वाचयित्वा तु प्रोक्षयेच्छिवमन्त्रतः । परितः शिवकुम्भस्य स्थण्डिले तु [20]विधानतः
समिदाज्यचरूँल्लाजांस्तिलांश्च[21] ब्रह्मपञ्चकैः । प्रत्येकं शतमर्धं वा तदर्धं वाथ होमयेत् ॥१०५॥
[22]पूर्णाहुतिं तु मूलेन सर्वत्र जुहुयात्ततः । होतारश्चैव[23] चत्वारः समकालं समुत्थिताः ॥१०६॥
स्पृशेयुर्दक्ष[24]हस्तेन [25]शिवकुम्भं मुखाणुभिः । ततः [26]शैवपदाभ्याशे [27]समासीनो [28]गुरूत्तमः ॥
[29]दक्षिणे मन्त्रविन्यासमुदग्वक्त्रः[30] प्रयोजयेत् । श्वेतं [31]त्रिलोचनं शम्भुं जटामकुटसंयुतम् ॥
चन्द्रावयवलक्ष्माणं सर्वाभरणभूषितम् । चतुर्भुजं प्रसन्नास्यं वरदाभयहस्तकम् ॥ १०९ ॥

---

1 C : मृदाम्भ  2 C : य pour ध
3 C, D, E : रुक्षा pour वारि  4 A : भ pour ब  5 D : तैलोदमुच्यते
6 A : तदनन्तरतोऽष्टानां ; C : तदन्तरतोऽप्यष्टानां ; D : तदन्तरन्तोऽप्यष्टानां
7 C : D : अधुना कथ्यते न वै ; E : कथ्यते चाधुना य वै
8 A : च देवदारुं च ; C, D : चन्दनदारुं च  9 A : अर्थवक्त्रं ; C : कथं वाकं ; D : कपित्थकं
10 Cf. *Vaidyakaśabdasindhu*, p. 846 : वक्त्रम्=तगरपुष्पम्
11 A : स्नानागारे रम्यमेव च  12 A : पुन्नागं pour पुन्नाग
13 Cf. *Vaidyakaśabdasindhu*, p. 380 : चतुरङ्गुल. =आरग्वधविशेष:
14 A : जम्बूकं pour बन्धूक  15 A : हि pour च  16 E : क्रमतो pour क्रमशो
17 Pour les détails du देवतान्यास voir *Rauravāgama*, vol. I, pp. 122-133, et p. 133, note 9
18 C, D : क्रमात् pour परम्  19 E : देवतान्यासपूर्वत:
20 E : विधिः क्रमात्  21 A : तिलं च pour तिलांश्च
22 A : पूर्णाहुतिस्तु सर्वत्र सर्वत्र  23 A : अपि pour एव
24 A : दश pour दक्ष  25 A : शिवकुम्भमुखाणुभि:
26 C : चैव pour शैव  27 A : समाधानो  28 C : गुरु: स्मृत:; D : गुरुस्मृत:
29 C : दक्षिगे मन्त्रं विन्यस्यम् ; D : विन्यस्य दक्षिगे मन्त्रम्
30 A : उदग्वक्त्रं pour उदग्वक्त्र:  31 A : त्रिलोचनांशं तु pour त्रिलोचनं शम्भुं

कृष्णापरशुसंयुक्तं ध्यात्वा चावाहनादिभिः । पूजयेद्गन्धपुष्पाद्यैर्नैवेद्यान्तं [1]स्वमन्त्रतः ॥११०
हेमवर्णां द्विनेत्रां च पूर्णचन्द्रनिभाननाम् । द्विभुजां सर्वहृद्याङ्गीं सर्वाभरणभूषिताम् ॥१११॥
वर्धन्यां तु यजेद्गौरीं स्वनामपदमन्त्रतः । [2]कालकर्णी ततो मुद्रां शिवयोः कुम्भयोरपि ॥११२
लिङ्गमुद्रां शिवे चाथ वर्धन्यां [3]च [4]मनोरमाम् । [5]उभयोः सुरभीमुद्रां दर्शयेद्देशिकोत्तमः ॥
पाद्यादिषु ततोऽष्टौ च[6] [7]विद्येशांश्च प्रपूजयेत् । स्वनामपदमन्त्रैस्तान् [8]स्वरस्थांस्तु ततोऽर्चयेत् ॥
[9]अकारव्यूहमध्ये तु शम्भुं गन्धादिभिर्यजेत् । देवदेवं महादीप्तं वरिष्ठं परमेष्ठिनम् ॥ ११५ ॥
[10]सत्यरूपमनन्तं च [11]परानन्दमनिन्दकम् । प्रथमावरणे तस्य कलशेष्वभितो यजेत् ॥११६॥
द्वितीये कामदं कालनाशनं कपिलाम्बरम् । [12]कपर्दिनं पुरारातिं [13]खगं [14]खड्गधरं विभुम् ॥
विबुधं [15]विबुधाधीशं ज्ञानं विज्ञानलोचनम् । [16]श्रीकण्ठमनघं वेद्यं [17]वेदाद्यमिति षोडश॥११८
तद्बाह्ये [18]षोडशस्वेतान्पूर्वादारभ्य पूजयेत् । रुद्रं चाथ महादेवं वामदेवं हरं शिवम् ॥ ११९ ॥
ईशानं गिरिशं शर्वं [19]सर्वज्ञममराधिपम् । कपर्दिनं करालाक्षं कालनाशनमव्ययम् ॥ १२० ॥
[20]त्रिनेत्रं च यजेद्धीमानाकारादिषु[21] मध्यमे । [22]अकारावरणे प्रोक्ता ये रुद्रास्तांस्तथैव च[23] ॥१२१
व्यूहेष्वेतेषु सर्वेषु [24]त्वकारादिक्रमाद्यजेत् । तृतीयावरणे पश्चात्पूर्वादिक्रमतो यजेत् ॥ १२२ ॥
[25]मनोजवं [26]यजेन्मध्ये ततोऽष्टसु यथाक्रमम् । अनन्तमतिरिक्तं च विरक्तं वेदलोचनम् ॥१२३
वेदान्तसारसन्दोहं विमलं विश्वभावनम् । विश्वेशं चैव पूर्वादिक्रमाद्रुद्रान्समर्चयेत् ॥ १२४ ॥
[27]द्वितीयावरणे पश्चात् [28]षोडशस्वभितः क्रमात् । स्थाणुं सहस्रबाहुं च धूर्जटिं ज्वलनद्युतिम् ॥

---

[1] C, E : समन्त्रित ; D : सुमन्त्रतः [2] A : कर्णिकायां pour कालकर्णी ; C, E : कालकण्ठीं
[3] C, D, E : तु pour च [4] E : मनोरथम्
[5] A : दर्शयेत्सुरभिं मुद्रामुभयोर्देशिकोत्तमः [6] C, D, E : अष्टासु pour अष्टौ च
[7] C : विद्येशानामपून्न्यसेत् ; D : विद्येशानामणून्न्यसेत् ; E : विद्येशनामभिर्न्यसेत् [8] D : स्वरगांस्तु
[9] L'ordre des *śloka* dans le ms. D est le suivant : 115a, 117, 115b, 116, 118 etc.
[10] C, D : तस्या रूपम् pour सत्यरूपम् ; E : सौम्यरूपम्
[11] C, D : परात्परमरिन्दमः ; E : परात्परमरिन्दमम्
[12] C, D : कन्दर्परिपुमारस्य ; E : कन्दर्परिपुमारस्य
[13] C, E : खंगं : D : खड्ग [14] C, E : खगरथं
[15] C, D, E : विबुधात्मीशं ज्ञानानां ज्ञानलोचनम्
[16] C, D, E : श्रीकण्ठमनसे विद्येशं [17] A : वेद्यावेद्यमिति षोडश
[18] C, D, E : षोडशेषु pour षोडशसु [19] A : सर्वात्मकम् pour सर्वज्ञम्
[20] C, D, E : त्रिगात्रं [21] A : नकारादिषु pour आकारादिषु
[22] C, E : अकारे वरणे ; D : अकारे वरुणे [23] E : हि pour च
[24] A : चकारादि pour त्वकारादि [25] C, D : मनोजयं ; E : मृत्युञ्जयं
[26] C, D : जयेन्मध्ये ततोऽष्टासु [27] E : तृतीय pour द्वितीय [28] C, D : षोडशेषु pour षोडशसु

[1]विद्युत्पिङ्गजटं भानुं[2] परमेश्वरमुद्धतम्[3] । [4]भर्गं भीमं [5]हिमाभं च सर्वगं च विभीषणम् ॥१२६॥
कृत्तिवासं समाराध्यं पूर्वगं च क्रमाद्यजेत्[6] । ततः [7]खकारव्यूहाच्च क्रमाद्रुद्रान्समर्चयेत् ॥१२७
तत्तन्मध्यगतानेतांस्तच्छृणु त्वं[8] समाहितः । महाकायं [9]गकारे तु शूलिनं तु [10]घकारके ॥
[11]ङकारे पूजयेद्भीमं [12]चकारेऽत्युग्रमेव च । छकारे [13]व्यग्रनामानं जकारे चेश्वरं तथा ॥१२९
[14]झकारे [15]पुरनाशं च पुराणं तु [16]ञकारके । [17]लोकसाक्षी टकारे स्याट्ठकारे त्र्यम्बको भवेत्[18]
गङ्गाधरं [19]डकारे तु [20]ढकारे चेन्दुमर्दनम् । [21]णकारे सर्वगः पूज्यः सर्वदस्तु [22]तकारके ॥१३१
[23]थकारे सद्गमश्चैव [24]दकारे शंकरो भवेत्। [25]धकारे शान्त इत्युक्तः [26]शर्मदस्तु [27]नकारके॥१३२
शाश्वतः स्यात् [28]पकारे तु [29]फकारे [30]शुचिरुच्यते।[31]बकारे भसितप्रीतं[32] [33]भकारे [34]वरदं तथा॥
[35]खकारे वृषवाहं च पूज्या रुद्राः प्रकीर्तिताः । [36]तेषामनन्तराष्टासु [37]षोडशस्त्वथ तद्बहिः॥१३४
पूर्वोक्तक्रमतो [38]रुद्रान् पूर्वोक्तान्पूर्ववद्यजेत्[39] । [40]सर्वत्र व्यूहमध्यस्थकलशानपि देशिकः॥१३५

---

[1] C : विद्यात् pour विद्युत्
[2] A : जटाभारं pour जटं भानुं ; E : जटिं भानुं
[3] A : उन्नतम् pour उद्धतम् ; C : उद्धृतम्
[4] A : गर्भं pour भर्गं
[5] C, D : हिमाभासं pour हिमाभं च ; E : महाभासं
[6] C, D, E : न्यसेत् pour यजेत्
[7] A : व pour ख ; C, D, E : य
[8] A : संश्रणुष्व pour तच्छृणु त्वं ; D : तान् श्रणु त्वं
[9] C, E : य pour ग : D : व
[10] A, D : द pour घ
[11] A : प pour ङ ; C, D, E : व
[12] C, D : लकारे रुद्रमर्चयेत् : E : ळकारे रुद्रमर्चयेत्
[13] A : अत्युग्र pour व्यग्र
[14] C : र pour झ
[15] A : पुनराशं च
[16] E : ङ pour ञ
[17] C omet les *śloka* 130b et 131
[18] D, E : टकारे लोकसाक्षी स्यात्पश्चादावरणक्रमात्
[19] D, E : ठ pour ड
[20] D, E : ड pour ढ
[21] D, E : ढ pour ण
[22] D, E : ण pour त
[23] C, D : स pour थ ; E : त
[24] C, D : त pour द ; E : थ
[25] C, D : श pour ध ; E : द
[26] A : सर्वदस्तु ; E : शर्वदं तु
[27] C, D : द pour न ; E : ध
[28] C, D, E : ध pour प
[29] C, D, E : न pour फ
[30] E : शुद्धि pour शुचि
[31] C : ऐ pour ब ; D : ह
[32] A : भसितं प्रीतं ; C, D, E : असितप्रीतिं
[33] C, D, E : क pour भ
[34] A : वदनं pour वरदं ; C, E : परतः ; D : वरत :
[35] A : म pour ख
[36] A : तेषामनन्तरेऽष्टासु ; C, D, E : तेषामनन्तरे चाष्टौ
[37] A : षोडशी चाथ तद्बहिः ; C, D, E : षोडशे वाथ तत्पुनः
[38] A : रुद्राः pour रुद्रान्
[39] C, D, E : न्यसेत् pour यजेत्
[40] A : पूर्वत्र pour सर्वत्र

वस्त्रेण वेष्टयित्वा तु ततो यजनमारभेत् । एवं [1]रुद्रान्समाराध्य कलशानां [2]सहस्रके ॥१३६॥

[अभिषेक:[3]]

वेदघोषसमायुक्तं शङ्खदुन्दुभिनिस्वनैः । शिवकुम्भं समुद्धृत्य वर्धन्या सह देशिकः ॥ १३७ ॥
[4]अभिषिच्य शिवं मन्त्री सर्वात्मानं समुच्चरन् । वर्धनीं पिण्डिकायां तु तद्गायत्र्याभिषेचयेत् ॥
[5]शिवयोः कुम्भयोः पश्चाद्विघ्नेशाद्यान्यजेत्क्रमात् । ततः सहस्रमपि तत् क्रमादुद्धृत्य सेचयेत् ॥
[6]न्यस्यैवं कलशे मन्त्रान् रुद्राणामपि केशव । अभिषेकं तु तैरेव कारयेत्क्रमशः पुरः ॥१४०॥
संवत्सरात्मकं मन्त्रमुच्चरन्वाभिषेचयेत् । [7]चत्वारिंशत्सु व्यूहेषु बाह्यस्थेषु यथाक्रमम् ॥१४१॥
स्थापिताः कलशा ये स्युः पञ्चविंशतिसंख्यया । [8]तेषामुद्धरणं चैव पूर्वादिक्रमयोगतः ॥१४२
पञ्चविंशेषु मध्यस्थं कलशं पूर्वमुद्धरेत् । ततश्चाष्ट[9] समुद्धृत्य[10] ततः [11]षोडश चोद्धरेत् ॥१४३॥
स्वरावरणमुद्धृत्य वर्गावरणमुद्धरेत् । [12]उद्धारे कलशानां तु प्रमादात्पतनादिके[13]॥ १३४ ॥
तत्रान्यं कलशं पूज्य समुद्धृत्याभिषेचयेत् । अभिषेकसमाप्तौ तु कृत्वा शुद्धोदसेचनम् ॥१४५॥
शालिपिष्टेन वा लिङ्गं माषचूर्णेन वा पुनः । आलिप्योद्वर्तनं कृत्वा बहुशश्च [14]सपीठकम् ॥१४६
[15]शुद्धिं [16]प्रक्षालनात्कृत्वा गन्धोदैरभिषेचयेत् । अर्चनोक्तं समभ्यर्च्य यथाविभवविस्तरम् ॥
प्रभूतं च हविर्दत्त्वा[17] [18]भारमानसमन्वितम् । मुखवाससमायुक्तं ताम्बूलमथ दापयेत् ॥१४८॥
ततः प्रदक्षिणं कृत्वा नमस्कृत्वा पुनः पुनः । क्षमस्वेति समुच्चार्य निर्गच्छेत्तदनन्तरम् ॥
दापयेद्देशिकादीनां दक्षिणां श्रद्धया [19]सह । इत्येवं स्नपनं प्रोक्तमष्टाधिकसहस्रकैः[20] ॥ १५०

---

[1] C, D, E : रुद्रांशनारभ्य
[2] C, D, E : सहस्रकैः
[3] Cf. *Rauravāgama*, vol I, ii, 24, 165-169
[4] C, D, E : अभिषिञ्चेच्छिवं
[5] C, D et E omettent les *śloka* 139, 140 et 141a
[6] A : न्यस्त्वा pour न्यस्य
[7] A : चत्वारिंशेषु pour चत्वारिंशत्सु
[8] A : तेषामुद्धारितं ; E : तेषामुद्धारणं
[9] C, D, E : अष्टौ pour अष्ट
[10] E : संख्यया च pour समुद्धृत्य
[11] A : षोडशमुद्धरेत् ; C : षोडश उद्धरेत्
[12] A : उद्धरेत् pour उद्धारे
[13] A : आदिषु pour आदिके
[14] E : सपीठिकम्
[15] A, C : शुद्धं pour शुद्धिं
[16] A : प्रक्षाल्नं pour प्रक्षालनात्
[17] C, D, E : दद्यात् pour दत्त्वा
[18] C, D : परनार्थं pour भारमान ; E : परमान्न
[19] A : ततः pour सह
[20] A : सहस्रकम् pour सहस्रकैः

[ अष्टाधिकसहस्रार्धस्नपनम् ; तत्र सूत्रपातः[1]]

अष्टाधिकसहस्रार्धस्नपनं प्रोच्यतेऽधुना । तदर्थं सूत्रपातं तु कुर्यान्मण्टपमध्यमे ॥ १५१ ॥
पट्टसूत्रैर्द्विगुणैश्चैव प्रागग्रैर्व्यूहपञ्चकम् । उदगग्रैस्तथा कुर्याद् व्यूहपञ्चकमेव च[2] ॥ १५२ ॥
[3]वीथीव्यूहप्रमाणं तु पूर्ववत्परिकल्पयेत् । एवं कृते तु [4]व्यूहानां भवेत्पञ्चकपञ्चकम् ॥१५३॥
तेषां मध्ये शिवव्यूहो[5] विद्येशानां तथाष्टकम् । समन्तात्षोडश [6]व्यूहाः स्वराणां परिकीर्तिताः[7]॥

[ स्थण्डिलम् ]

स्थण्डिलं तेषु कर्तव्यं पूर्ववच्च यथाक्रमम् । [8]पञ्चविंशेषु व्यूहेषु बाह्ये दिक्षु व्यवस्थितम् ॥१५५
चतुष्टयं तु व्यूहानां होमार्थं परिकल्पयेत् । तेषु च स्थण्डिलं कुर्यात्सिकताभिर्विचक्षणः ॥

[व्यूहेषु मन्त्रन्यासोऽक्षरन्यासश्च]

[9]शैवव्यूहे कृताब्जे तु प्रासादं मन्त्रमालिखेत् । बाह्येष्वष्टसु[10] मन्त्रांस्तु विद्येशानां समालिखेत्
[11]तद्बाह्ये षोडशव्यूहेष्वकारादीनि विन्यसेत् । बिन्दुनादयुतान्येव सर्वाण्यपि समालिखेत् ॥
पूजयेच्च ततः सर्वं प्रणवादि नमोऽन्तकम् । ततः स्थापनमेतेषु व्यूहेषु [12]क्रमशो भवेत्॥१५९॥

[ कुम्भस्थापनम् ]

शिवोमारुद्रकुम्भांस्तु सर्वानपि च केशव । पूर्ववत्संस्कृतान्सम्यग्गन्धतोयेन पूरयेत् ॥ १६० ॥
सर्वेषां मध्यमे कुम्भं [13]शैवं तत्रैव विन्यसेत् । [14]सकूर्चं सापिधानं च पञ्चरत्नसमायुतम्[15]॥
[16]वस्त्रयुग्मावृतं चैव तस्य कुम्भस्य चोत्तरे[17] । [18]गौरीबीजं तथाभूतं विन्यसेन्मन्त्रवित्तमः॥१६२
परितश्च तयोः पश्चात्पूर्वादिक्रमयोगतः । पाद्यमाचमनं चार्घ्यं पञ्चगव्यं कुशोदकम् ॥१६३॥

---

[1] Cf. *Kāmikāgama*, II, 4, 144-146 :
अष्टोत्तरसहस्रात्तु त्यजेद्बाह्यावृतिं गुरुः । तत्राग्नेयादिकोणस्थं चतुर्व्यूहं समाचरेत् ॥
अन्तःकोणचतुष्केषु शिवव्यूहस्य बाह्यतः । स्थापयेद्दिक्षु होमार्थमेतेषामन्तरालके ॥
तद्बाह्ये षोडशव्यूहाः पूर्ववत्संव्यवस्थिताः । अन्यत् सर्वं समानं स्यादष्टपञ्चाशतं भवेत् ॥

[2] C, D, E : हि pour च
[3] A : वीथीव्यूहप्रमाणं तत्पूर्वं परिकल्पयेत्
[4] A : व्यूहास्तु
[5] C, D, E : व्यूहं pour व्यूहो
[6] C, D, E : व्यूहं pour व्यूहा
[7] C, D, E : परिकीर्तितम् pour परिकीर्तिताः
[8] C, E : पञ्चपञ्चेषु
[9] A : शैवे व्यूहे कृतेऽब्जेषु
[10] D, E : अष्टासु pour अष्टसु
[11] C, D : बाह्ये व्यूहेष्वकारादिविसर्गान्तानि लेखयेत् ; E : बाह्ये-व्यूहेष्वकारादिस्वरान षोडश लेखयेत
[12] C, D, E : क्रमतो pour क्रमशो
[13] C : शैवमन्त्रेण pour शैवं तत्रैव
[14] A : सकूर्चान् सापिधानांश्च
[15] A : समन्वितम् pour समायुतम्
[16] A : वस्त्रेण चावृतं चैव
[17] C, D, E : तस्याथ च चोत्तरे
[18] A : गौरीभूतं

N

| | | | | |
|---|---|---|---|---|
| 403 | 404 | 405 | 406 | 407 |
| 402 | 390 | 391 | 392 | 408 |
| 401 | 389 | 384 | 385 | 393 |
| 400 | 388 | 387 | 386 | 394 |
| 399 | 398 | 397 | 396 | 395 |

| | | | | |
|---|---|---|---|---|
| 428 | 429 | 430 | 431 | 432 |
| 427 | 415 | 416 | 417 | 433 |
| 426 | 414 | 409 | 410 | 418 |
| 425 | 413 | 412 | 411 | 419 |
| 424 | 423 | 422 | 421 | 420 |



| | | | | |
|---|---|---|---|---|
| 453 | 454 | 455 | 456 | 457 |
| 452 | 440 | 441 | 442 | 458 |
| 451 | 439 | 434 | 435 | 443 |
| 450 | 438 | 437 | 436 | 444 |
| 449 | 448 | 447 | 446 | 445 |

| | | | | |
|---|---|---|---|---|
| 478 | 479 | 480 | 481 | 482 |
| 477 | 465 | 466 | 467 | 483 |
| 476 | 464 | 459 | 460 | 468 |
| 475 | 463 | 462 | 461 | 469 |
| 474 | 473 | 472 | 471 | 470 |

| | | | | |
|---|---|---|---|---|
| 378 | 379 | 380 | 381 | 382 |
| 377 | 365 | 366 | 367 | 383 |
| 376 | 364 | 359 | 360 | 368 |
| 375 | 363 | 362 | 361 | 369 |
| 374 | 373 | 372 | 371 | 370 |

| | | | | |
|---|---|---|---|---|
| 153 | 154 | 155 | 156 | 157 |
| 152 | 140 | 141 | 142 | 158 |
| 151 | 139 | 134 | 135 | 143 |
| 150 | 138 | 137 | 136 | 144 |
| 149 | 148 | 147 | 146 | 145 |

| | | | | |
|---|---|---|---|---|
| 178 | 179 | 180 | 181 | 182 |
| 177 | 165 | 166 | 167 | 183 |
| 176 | 164 | 159 | 160 | 168 |
| 175 | 163 | 162 | 161 | 169 |
| 174 | 173 | 172 | 171 | 170 |

| | | | | |
|---|---|---|---|---|
| 203 | 204 | 205 | 206 | 207 |
| 202 | 190 | 191 | 192 | 208 |
| 201 | 189 | 184 | 185 | 193 |
| 200 | 188 | 187 | 186 | 194 |
| 199 | 198 | 197 | 196 | 195 |

| | | | | |
|---|---|---|---|---|
| 503 | 504 | 505 | 506 | 507 |
| 502 | 490 | 491 | 492 | 508 |
| 501 | 489 | 484 | 485 | 493 |
| 500 | 488 | 487 | 486 | 494 |
| 499 | 498 | 497 | 496 | 495 |



| | | | | |
|---|---|---|---|---|
| 128 | 129 | 130 | 131 | 132 |
| 127 | 115 | 116 | 117 | 133 |
| 126 | 114 | 109 | 110 | 118 |
| 125 | 113 | 112 | 111 | 119 |
| 124 | 123 | 122 | 121 | 120 |




| | | | | |
|---|---|---|---|---|
| 28 | 29 | 30 | 31 | 32 |
| 27 | 15 | 16 | 17 | 33 |
| 26 | 14 | 9 | 10 | 18 |
| 25 | 13 | 12 | 11 | 19 |
| 24 | 23 | 22 | 21 | 20 |



| | | | | |
|---|---|---|---|---|
| 353 | 354 | 355 | 356 | 357 |
| 352 | 340 | 341 | 342 | 358 |
| 351 | 339 | 334 | 335 | 343 |
| 350 | 338 | 337 | 336 | 344 |
| 349 | 348 | 347 | 346 | 345 |

| | | | | |
|---|---|---|---|---|
| 103 | 104 | 105 | 106 | 107 |
| 102 | 90 | 91 | 92 | 108 |
| 101 | 89 | 84 | 85 | 93 |
| 100 | 88 | 87 | 86 | 94 |
| 99 | 98 | 97 | 96 | 95 |

| | | | | |
|---|---|---|---|---|
| 78 | 79 | 80 | 81 | 82 |
| 77 | 65 | 66 | 67 | 83 |
| 76 | 64 | 59 | 60 | 68 |
| 75 | 63 | 62 | 61 | 69 |
| 74 | 73 | 72 | 71 | 70 |

| | | | | |
|---|---|---|---|---|
| 53 | 54 | 55 | 56 | 57 |
| 52 | 40 | 41 | 42 | 58 |
| 51 | 39 | 34 | 35 | 43 |
| 50 | 38 | 37 | 36 | 44 |
| 49 | 48 | 47 | 46 | 45 |

| | | | | |
|---|---|---|---|---|
| 228 | 229 | 230 | 231 | 232 |
| 227 | 215 | 216 | 217 | 233 |
| 226 | 214 | 209 | 210 | 218 |
| 225 | 213 | 212 | 211 | 219 |
| 224 | 223 | 222 | 221 | 220 |

| | | | | |
|---|---|---|---|---|
| 328 | 329 | 330 | 331 | 332 |
| 327 | 315 | 316 | 317 | 333 |
| 326 | 314 | 309 | 310 | 318 |
| 325 | 313 | 312 | 311 | 319 |
| 324 | 323 | 322 | 321 | 320 |

| | | | | |
|---|---|---|---|---|
| 303 | 304 | 305 | 306 | 307 |
| 302 | 290 | 291 | 292 | 308 |
| 301 | 289 | 284 | 285 | 293 |
| 300 | 288 | 287 | 286 | 294 |
| 299 | 298 | 297 | 296 | 295 |



| | | | | |
|---|---|---|---|---|
| 278 | 279 | 280 | 281 | 282 |
| 277 | 265 | 266 | 267 | 283 |
| 276 | 264 | 259 | 260 | 268 |
| 275 | 263 | 262 | 261 | 269 |
| 274 | 273 | 272 | 271 | 270 |

| | | | | |
|---|---|---|---|---|
| 253 | 254 | 255 | 256 | 257 |
| 252 | 240 | 241 | 242 | 258 |
| 251 | 239 | 234 | 235 | 243 |
| 250 | 238 | 237 | 236 | 244 |
| 249 | 248 | 247 | 246 | 245 |

S

Sthaṇḍila

* Śivakumbha
* Vardhanī

Echelle: 1 prādeśa = 1 côté de carré

क्षीरं दधि घृतं चैव शिवव्यूहे तु विन्यसेत् । ततो विद्येश्वराणां तु व्यूहेष्वष्टस्वपि[1] क्रमात् ॥
[2]मध्ये मधु पुनर्लाजं लाजचूर्णं ततः सुधीः । [3]निशाचूर्णं तथा भस्म ततश्चेक्षुरसं भवेत् ॥१६५
तिलं च सर्षपं चैव न्यस्य पश्चात्स्वरेष्वपि[4] । [5]आकारे चन्दनाम्भः स्यादिकारे[6] लवजं[7] तथा ॥
[8]ईकारे [9]कुष्ठतोयं स्यादूकारे[10] [11]रोचनोदकम् । ऋकारे नवनीताम्भ[12] [13]ॠकारे [14]पत्रतोयकम्
[15]ऌकारे त्रिफलातोयमेकारे[16] [17]तु फलोदकम्[18] । [19]ऐकारे [20]धातुतोयं स्यादौकारे चाभ्र[21]तोयकम्
अंकारे [22]पुष्पतोयं स्याद् अःकारे कुशतोयकम् । एवं प्रधानकलशे सर्वत्रापि क्रमान्न्यसेत् ॥
[23]यवं सिद्धार्थकं चैव तिलं कृष्णं तथैव च । नीवारं [24]वेणुबीजं च गोधूमं श्याममेव च॥१७०॥
प्रियङ्गुं क्रमेण पूर्वादि विद्येशावरणे न्यसेत् । षोडशेष्वथ तद्बाह्ये [25]मल्लिकां चम्पकं तथा ॥
[26]जातीवकुलपुन्नागमर्कं श्वेतं च धातकीम् । कुरवं [27]कर्णिकारं च चतुरङ्गुलमेव च ॥ १७२ ॥
[28]धुत्तूरं द्रोणपुष्पं च नन्द्यावर्तं च माधवीम् । [29]मालतीं यूथिकां चापि सर्वत्र परितो [30]न्यसेत्
तद्बाह्ये [31]च स्वराख्ये च रोचनं कुङ्कुमं तथा । [32]द्राक्षां दार्वीं ततो दूर्वां ज्योतिष्मतीं च सल्लकीम्
वक्त्रं [33]चावरणेऽन्तस्थे कलशेष्वष्टसु न्यसेत् । षोडशेष्वपि तद्बाह्ये बिल्वमारीचमाचिकाः[34] ॥

---

[1] C : अष्टसु च pour अष्टस्वपि ; D, E : अष्टासु च

[2] C et E omettent ce *śloka* 165

[3] A : निशि pour निशा

[4] A : सुरेष्वपि pour स्वरेष्वपि

[5] A, C, D, E : अकारे pour आकारे

[6] A : आकारे pour इकारे ; C : उकारे

[7] A : त्वम्बुजं pour लवजं ; D : लमजं

[8] C : अ pour ई

[9] D : त्रिपु pour कुष्ठ ; C : तुष्ट E : कुष्ट

[10] A, C, D : उकारे D : pour ऊकारे

[11] A, E : चोचतोयकम्

[12] C : अङ्ग pour अम्भस्

[13] C : अ pour ॠ

[14] C : पत्रतोयकः

[15] A, C, D : ऌ pour ऌ

[16] A : ऌकारे pour एकारे ; E : ऐकारे

[17] A : कटुकत्रयम् pour तु फलोदकम्

[18] A ajoute : एकारे पुष्पतोयं स्यादैकारे धातुतोयकम्

[19] A, E : ओकारे

[20] A : मूल pour धातु

[21] A, C, D : अग्र pour अभ्र

[22] A : कन्द pour पुष्प

[23] E : एवं pour यवं

[24] A : वेणुकं चापि pour वेणुबीजं च

[25] C, D : लक्ष्मीकं pour मल्लिकां ; E : वल्लीकं

[26] E : जातीं pour जाती

[27] C, D : कर्णिकानां च

[28] A : धुर्धूरं

[29] A : मालातियुधिका चापि

[30] C, D : लिखेत् pour न्यसेत्

[31] E : तु pour च

[32] C, D, E : लाक्षां pour द्राक्षां

[33] A : चावरणेऽन्तस्थं ; C, D, E : चावरणान्तस्थ०

[34] E : माक्षिकम् pour माचिकाः

[1]दूर्वां चलं च [2]गोकर्णमिन्द्रवल्लीं च वैष्णवीम् । तुलसीं वटशुङ्गं[3] च जम्ब्वपामार्गकौ तथा ॥
गिरिकर्णीद्वयं चाथ[4] कपित्थोदुम्बरावपि । एवं द्रव्यं समाख्यातं [5]व्यूहानां कलशेष्वपि ॥
[6]शिवव्यूहेऽष्टकं प्रोक्तं कलशानां तु तद्बहिः विद्येशावरणे[7] व्यूहेष्वष्टास्वपि[8] ततो बहिः ॥१७८
[9]स्वरावरणव्यूहे च [10]द्वादशस्वभितो भवेत् । प्रतिव्यूहं तु सर्वत्र [11]पञ्चविंशकमुच्यते ॥१७९॥
तेषु [12]मध्ये स्थितं चैकं वस्त्रेणोपरि वेष्टयेत् । एवं संस्थाप्य कलशान्सहस्रार्धांस्तथाष्टकान्[13] ॥

[ कुम्भाधिदेवताः ]

ततो देवं च देवीं च शिवयोः कुम्भयोर्यजेत्[14] । [15]परितो भवादिकानष्टौ शिवव्यूहे तु देशिकः॥
परितो मध्यमे पश्चाद् विद्येशानपि पूजयेत् । विद्येशावरणान्तस्थ[16]कलशेष्वष्टसु क्रमात् ॥१८२
[17]सर्वत्र पूजयेन्मन्त्री लोकपालान्यथाक्रमम् । [18]बाह्येषु कलशेष्वेतानर्चयेत्षोडशानपि ॥१८३॥
प्रमथेशं महेशं च कपिलं [19]कपिलाम्बकम् । [20]कालमूर्तिं कलामूर्तिं[21] खट्वाङ्गधरमुद्धतम्[22] ॥
भृकुटीभीषणं[23] भीमं महाभैरवरूपिणम् । महाभुजं महादंष्ट्रमनवद्य[24]मनिन्दितम् ॥ १८५ ॥
असह्यं चेति रुद्रांश्च षोडशान्क्रमशो यजेत् । स्वरावरणमध्ये तु[25] कलशेषु यथाक्रमम्॥१८६॥
आदित्यान्द्वादशाभ्यर्च्य [26]तदनन्तरमष्टके । [27]वसूनष्ट समभ्यर्च्य तद्बाह्ये षोडशेष्वपि ॥१८७
[28]विद्युज्जिह्वं विशालाक्षं विद्रुमप्रभमुन्मुखम् । [29]वेत्तारं विबुधाध्यक्षं वीरं वीरेश्वरं [30]परम् ॥१८८
[31]कुम्भोदरं निकुम्भं च भूतलं भूतिभूषणम् । [32]व्यालयज्ञोपवीतं च टङ्कहस्तं जटाधरम् ॥१८९

---

[1] C : दूर्वाविलं pour दूर्वां चलं ; D : दूर्वाश्चलं [2] E : गोकाकर्णम् pour गोकर्णम्
[3] A : श्रृङ्गं pour शुङ्गं [4] C, D : अपि pour अथ ; E : एव
[5] C. कलशेष्वपि षोडशे ; D, E : कलशेष्वपि षोडश
[6] A : शिवव्यूहाष्टकं [7] A : आवरणैः pour आवरणे
[8] E : अष्टस्वपि pour अष्टास्वपि [9] A : सुर pour स्वर [10] C, D, E : द्वादशस्वपि देव च
[11] D : पञ्चविंशकमोच्यते [12] D : मध्यस्थितं तेषु वस्त्रेण परिवेष्टयेत्
[13] C : सहस्रार्धांश्च साहसान् ; D, E : सहस्रार्धांश्च साष्टकान्
[14] A : न्यसेन् pour यजेत् [15] परिदौवारिकानष्टौ ; C : परितो वादिकानष्टौ
[16] A : अन्तस्थाः pour अन्तस्थ [17] C : सर्वश्च pour सर्वत्र ; D, E : सर्वांश्च
[18] C, D, E : तद्बाह्ये pour बाह्येषु [19] A : कपिलावहम्
[20] A : काम pour काल ; E : कालं [21] C, D, E : नाथं pour मूर्ति
[22] C, D, E : उद्धृतम् pour उद्धतम् [23] C, D, E : विषमं pour भीषणं
[24] C : निरवद्य pour अनवद्य ; D : अनिवेद्य ; E : अनिवार्य [25] C, D, E : अन्येषु pour मध्ये तु
[26] C, D : तदनन्तरकेऽपि च ; E omet les passages तदनन्तरमष्टके et वसूनष्ट तथाभ्यर्च्य et lit : आदित्यान् द्वादशाभ्यर्च्य तद्बाह्ये षोडशेष्वपि
[27] C, D : वेष्टयेद्वा pour वसूनष्ट [28] C, D et E omettent ce demi-*śloka*
[29] C, E : मुखवेरं बुधाध्यक्षं [30] C, E : हरिम् pour परम्
[31] C, D : मकुटोदरं ; D, E : महोदरं [32] D et E omettent ce demi-*śloka*

## Ṣoḍaśadviśatasnapana

N



| | | | | |
|---|---|---|---|---|
| 161 | 162 | 163 | 164 | 165 |
| 160 | 148 | 149 | 150 | 166 |
| 159 | 147 | 142 | 143 | 151 |
| 158 | 146 | 145 | 144 | 152 |
| 157 | 155 | 155 | 154 | 153 |

| | | | | |
|---|---|---|---|---|
| 186 | 187 | 188 | 189 | 190 |
| 185 | 173 | 174 | 175 | 191 |
| 184 | 172 | 167 | 168 | 176 |
| 183 | 171 | 170 | 169 | 177 |
| 182 | 181 | 180 | 179 | 178 |

| | | | | |
|---|---|---|---|---|
| 211 | 212 | 213 | 214 | 215 |
| 210 | 198 | 199 | 200 | 216 |
| 209 | 197 | 192 | 193 | 201 |
| 208 | 196 | 195 | 194 | 202 |
| 207 | 206 | 205 | 204 | 203 |

O

| | | | | |
|---|---|---|---|---|
| 136 | 137 | 138 | 139 | 140 |
| 135 | 123 | 124 | 125 | 141 |
| 134 | 122 | 117 | 118 | 126 |
| 133 | 121 | 120 | 119 | 127 |
| 132 | 131 | 130 | 129 | 128 |




| | | | | |
|---|---|---|---|---|
| 36 | 37 | 38 | 39 | 40 |
| 35 | 23 | 24 | 25 | 41 |
| 34 | 22 | 17 | 18 | 26 |
| 33 | 21 | 20 | 19 | 27 |
| 32 | 31 | 30 | 29 | 28 |

E

| | | | | |
|---|---|---|---|---|
| 111 | 112 | 113 | 114 | 115 |
| 110 | 98 | 99 | 100 | 116 |
| 109 | 97 | 92 | 93 | 101 |
| 108 | 96 | 95 | 94 | 102 |
| 107 | 106 | 105 | 104 | 103 |

| | | | | |
|---|---|---|---|---|
| 86 | 87 | 88 | 89 | 90 |
| 85 | 73 | 74 | 75 | 91 |
| 84 | 72 | 67 | 68 | 76 |
| 83 | 71 | 70 | 69 | 77 |
| 82 | 81 | 80 | 79 | 78 |

| | | | | |
|---|---|---|---|---|
| 61 | 62 | 63 | 64 | 65 |
| 60 | 48 | 49 | 50 | 66 |
| 59 | 47 | 42 | 43 | 51 |
| 58 | 46 | 45 | 44 | 52 |
| 57 | 56 | 55 | 54 | 53 |



S

✱ Śivakumbha

* Vardhani

☐ Sthandila

Echelle : 1 prādeśa = 1 côté de carré

एवं देवान्समभ्यर्च्य ततः स्नपनमारभेत् । [1]अष्टाधिकसहस्राद्यैरुक्तं स्नपनमुत्तमम् ॥ १९० ॥

[षोडशद्विशतस्नपनम् ; तत्र सूत्रपातः[2]]

षोडशद्विशतैर्वक्ष्ये कलशैः स्नपनं परम् । प्रागग्रैर्द्विगुणैः [3]सूत्रैश्चतुर्भिश्च तथापरैः ॥ १९१ ॥
उदङ्मुखैस्तथाभूतैर्व्यूहानां नवकं [4]भवेत् । [5]सूत्रद्वयान्तरालं तु व्यूहमानं च [6]पूर्ववत् ॥१९२॥
व्यूहेष्वेतेषु[7] नवसु शैवं मध्यममुच्यते । [8]प्रागाद्यास्त्वपरव्यूहा दिक्पालानां भवन्ति हि ॥
स्थण्डिलं तेषु कर्तव्यं पूर्ववल्लक्षणान्वितम् । मध्ये पद्मं समालिख्य त्रिकारदलसंयुतम् ॥१९४॥
[9]अथ तत्कर्णिकामध्ये प्रणवं विन्यसेद् बुधः[10] । इन्द्रादीशानपर्यन्तं तत्तद्बीजं [11]समालिखेत् ॥
गन्धपुष्पादिभिस्तत्र पूजयेदक्षराणि च ।

[कुम्भस्थापनम् ; तत्र निक्षेप्यद्रव्याणि च]

शिवोमारुद्रकुम्भांस्तु पूर्ववत्संस्कृताञ्शुभान्[12] ॥१९६॥
स्थापयेत्क्रमशो विद्वान्सर्वलक्षणसंयुतान् । शिवयोः [13]कुम्भकौ स्थाप्य दलाग्रेष्वभितः क्रमात्॥
पाद्यमाचमनं चार्घ्यं पञ्चगव्यं कुशोदकम् । क्षीरं दधि घृतं चैव [14]दिग्दलाष्टसु विन्यसेत् ॥
मधु[15]तैलेक्षुसाराणि खण्डं पनसमेव च । कदलीफलमाम्रं[16] च मातुलुङ्गं यथाक्रमम् ॥ १९९ ॥
दलेष्वन्येषु विन्यस्य [17]ततश्चेन्द्रादिषु क्रमात् । यवसर्षपलाजांश्च [18]लाजचूर्णं ततस्तिलम्॥२००॥
[19]निशागोधूमचूर्णौ च भस्म चैव क्रमान्न्यसेत् । [20]अन्यान् गन्धोदकैः पूर्णान्कलशान्स्थापयेत्ततः॥
तेषु [21]शातक्रतव्यादिमहादिक्षु [22]यथाक्रमम् । [23]प्रथमावरणस्थेषु कलशेष्वष्टसु[24] क्रमात्॥२०२॥

---

[1] A : साष्टाधिक pour अष्टाधिक

[2] Cf. *Suprabhedāgama*, I, 15, 36-38 :
त्रिंशत्सूत्रं प्रकर्तव्यं प्राङ्मुखोदङ्मुखं क्रमात् । तन्मध्ये पञ्चविंशच्च संग्राह्य परितो द्वयम् ॥
त्यजेद् द्वाराष्टकोपेतं गोमयेन तु वारिणा । दिशश्च विदिशश्चैव पञ्चविंशत्पदं क्रमात् ॥
मध्यमव्यूहमध्यस्थं नवं त्यक्त्वाब्जमालिखेत् । एवं कुर्याद्विधानज्ञः षोडशद्विशतं भवेत् ॥

[3] A : सूत्रं pour सूत्रैः

[4] A : यजेत् pour भवेत्

[5] A : सूत्रद्वयान्तरालान्तं ; C, D : सूत्रद्वयान्तनालं तु

[6] A : पूर्वकम्

[7] A : तेषु pour एतेषु

[8] C, D, E : प्रागाद्यास्तु नवव्यूहा

[9] C, D : अथातः pour अथ तत् ; E : अथाथ

[10] C, D : सुधीः pour बुधः

[11] E : तु संलिखेत् pour समालिखेत्

[12] C, D, E : च तान् pour शुभान्

[13] C, D, E : कुम्भयोः

[14] C, D, E : दलेष्वष्टसु

[15] C, D, E : त्रय pour तैल

[16] C, D : फलमात्रं pour फलमाम्रं

[17] A : ततो विद्यादिषु क्रमात्

[18] A : राज pour लाज

[19] C, D, E : निशागोमययोश्चूर्णं

[20] C : अन्य pour अन्यान् ; D, E : अन्यद्

[21] A : शक्रादि स०यादि pour शातक्रतव्यादि

[22] E : प्रपूजयेत्

[23] A : प्रथमावरणे तेषु

[24] A : एषु च pour अष्टसु

चन्दनं लघु [1]कुष्ठं च [2]त्रुटिकर्पूरमेव च । फलत्रयं च विन्यस्य तद्बाह्ये षोडशस्वथ ॥ २०३ ॥
[3]दार्वी दूर्वां तथा द्राक्षां नागकेसरमेव च । [4]ह्रीबेरं गुग्गुलं चैव [5]मञ्जिष्ठां लोध्रमेव च ॥२०४
अञ्जनं रोचनां चैव [6]तुरुष्कं कुङ्कुमं तथा । [7]विडङ्गं गैरिकं चव रास्नां चैव मनश्शिलाम् ॥
[8]विन्यस्य च विदिक्ष्वेषु चान्येषु च पदेषु च । प्रथमावरणे [9]लक्ष्मीं विष्णुक्रान्ति सहां तथा॥
[10]बिल्वदूर्वाशमीपत्राण्यपामार्गद्वयं तथा । विन्यस्य परितः पश्चात्षोडशेष्वपि[11] विन्यसेत्॥२०७
श्वेतपद्मं च कुमुदं [12]धुत्तूरं चैव मल्लिकाम् । करवीरं पाटलीपुष्पं पुन्नागं [13]रक्तपङ्कजम् ॥२०८
आरग्वधं च श्वेतार्कं [14]रक्तार्कं बृहतीं तथा । [15]चम्पकं कुरवं चैव द्रोणपुष्पं च यूथिकाम्॥२०९
एवमेतेषु सर्वेषु न्यस्य द्रव्याणि मन्त्रवित् । [16]व्यूहानां परितो होमं चतुर्दिक्षु प्रकल्पयेत्॥२१०

[ कुम्भाधिदेवताः ]

शिवकुम्भे [17]शिवं पूज्य वर्धन्यां शक्तिमेव च । परितो दिक्षु विद्येशान्विदिक्षु च भवादिकान्॥
बाह्यस्थेषु च दिक्पालान्मध्यस्थकलशेषु च । संपूज्य दिक्षु[18] पूर्वादिचतसृष्वपि केशव॥२१२॥
[19]मातृवृतं च पिङ्गाक्षं भूतपालं बलिप्रियम् । सर्वविद्येश्वरं चैव [20]धातारं दुःखनाशनम्॥२१३॥
सुखदं चैव विन्यस्य रुद्रानष्टसु पूजयेत् । [21]तद्बाह्ये षोडशस्वेतान् [22]रुद्रांश्चैव क्रमान्न्यसेत्[23] ॥
जटाधरं [24]रत्नधरं निधीशं [25]रूपिणं तथा । धन्यं [26]सौम्यं प्रकाशं च प्रमर्दनमतः परम् ॥
[27]सुप्रसादं [28]सुलक्ष्माणं कामरूपं तथा[29] परम् । श्वेतं च जयभद्रं च दीर्घबाहुं [30]बलान्तकम् ॥
आग्नेयादिषु कोणेषु रुद्रानेतान्समर्चयेत् । [31]वडवामुखं सुभीमं च नैर्ऋतं [32]मारणं तथा॥२१७

---

[1] C, D, E : कोष्ठं pour कुष्ठं
[2] A : तुटि pour त्रुटि
[3] A : दा०र्यं pour दार्वीं
[4] D : श्रीबेरं
[5] D, E : माञ्जिष्ठां
[6] D : तुरुष्टं
[7] A : विटङ्कं ; E : माक्षिकं
[8] C, D, E : विन्यस्यातो विदिक्स्थेषु
[9] A : लक्ष्मीर्विष्णुक्रान्तिः सहा तथा
[10] C : बिल्वं दूर्वा pour बिल्वदूर्वा० ; D : बिल्वदूर्वा
[11] C, D, E : षोडशेष्वपि
[12] A : धुर्धूरं
[13] E : चम्पकं तथा
[14] E : वकुलं pour रक्तार्कं
[15] E : चिबुकं pour चम्पकं
[16] C, D et E omettent ce demi-*śloka*
[17] A : शिव. पूज्यो वर्धन्यां शक्तिरेव च
[18] C, D, E : आशासु pour दिक्षु
[19] A : केशवं मात्रपित्तं च भूतपालि
[20] C, D : वातारिं pour धातारं ; E : वातापिं
[21] A : तद्बाह्य pour तद्बाह्ये
[22] C, E : अथ रुद्रान् pour रुद्रांश्चैव
[23] C : यजेत् pour न्यसेत्
[24] C : रक्तधारं
[25] C, D : रूपदं ; E : रूपवान्
[26] C : स्वर्गं pour सौम्यं ; D : स्वर्ग
[27] C, D : सुप्रपादं
[28] C, D : लक्ष्मीवन्तं ; E : कूर्चवन्तं
[29] A : अतः pour तथा
[30] A : जलान्तकम् ; D : तलान्तकम्
[31] A : वडवामुखभीतं च ; E : बन्धनं सुमुखं भीमं
[32] A : वारुणं pour मारणं

## Aṣṭottaraśatasnapana

N

| | | |
|---|---|---|
| 95 | 96 | 97 |
| 94 | 58 | 59 |
| 93 | 57 | 30 |

| | | | | |
|---|---|---|---|---|
| 98 | 99 | 100 | 101 | 102 |
| 60 | 61 | 62 | 63 | 64. |
| 31 | 32 | | 33 | 34 |

| | | |
|---|---|---|
| 103 | 104 | 105 |
| 65 | 66 | 106 |
| 35 | 67 | 107 |

O

| | | |
|---|---|---|
| 92 | 56 | 29 |
| 91 | 55 | 28 |
| 90 | 54 | |
| 89 | 53 | 27 |
| 88 | 52 | 26 |

| | | | | |
|---|---|---|---|---|
| 11 | 12 | 13 | 14 | 15 |
| 10 | | | | 16 |
| 9 | | | | 1 |
| 8 | | | | 2 |
| 7 | 6 | 5 | 4 | 3 |

| | | |
|---|---|---|
| 36 | 68 | 108 |
| 17 | 37 | 69 |
| | 38 | 70 |
| 18 | 39 | 71 |
| 19 | 40 | 72 |

E

| | | |
|---|---|---|
| 87 | 51 | 25 |
| 86 | 50 | 49 |
| 85 | 84 | 83 |

| | | | | |
|---|---|---|---|---|
| 24 | 23 | | 22 | 21 |
| 48 | 47 | 46 | 45 | 44 |
| 82 | 81 | 80 | 79 | 78 |

| | | |
|---|---|---|
| 20 | 41 | 73 |
| 43 | 42 | 74 |
| 77 | 76 | 75 |

S

✱ Śivakumbha

* Vardhanī



☐ Sthaṇḍila

Echelle : 1 tāla = 1 cm.

हन्तारं क्रूरदंष्ट्रं च [1]भयानकमतः परम् । [2]ऊर्ध्वकेशं च सर्वेषु प्रथमावरणे क्रमात् ॥ २१८ ॥
द्वितीयावरणे पश्चाद्धूम्रं[3] लोहितदंष्ट्रकम्[4] । [5]याम्यं मृत्युहरं चैव [6]कर्तारं धर्मनायकम् ॥२१९॥
[7]योक्तारं ज्वलनं भानुं [8]बभ्रुं भस्मविभूषितम् । क्षयान्तकं कपालीशमजं [9]बुद्धं च वज्रिणम् ॥
क्रमाद्विन्यस्य संपूज्य ततः स्नपनमारभेत् । षोडशद्विशतैरेवं स्नपनं परिकीर्तितम् ॥ २२१ ॥
एवं व्यूहक्रमात्प्रोक्तमुत्तमस्नपनत्रयम्[10] । पदक्रमेण वक्ष्यामि स्नपनं [11]मध्यमत्रयम् ॥२२२॥

[अष्टोत्तरशतस्नपनम्[12] ; तत्र सूत्रपातः]

[13]अष्टोत्तरशतैर्वक्ष्ये कलशैः स्नपनं परम् । [14]प्रागग्रं मनुसूत्रं स्यादुदगग्रं तथैव च ॥ २२३ ॥
नवषष्टिशतं सम्यक् [15]पदमेकत्र सुस्थितम् । पदप्रमाणं सर्वत्र तालमात्रमिति स्मृतम् ॥२२४॥
तत्र मध्ये नवपदं पद्मार्थं [16]परिलोपयेत् । [17]बाह्ये तु षोडशपदैः प्रथमावरणं भवेत् ॥ २२५ ॥
परितश्च ततो वीथी [18]पदपङ्क्त्यैकया भवेत् । [19]अष्ट द्वाराणि वीथ्यग्रे कोणपार्श्वेषु कल्पयेत्॥
त्रिभिस्त्रिभिः पदैरेवं[20] [21]कृते तत्र भवन्ति हि । [22]पदप्रान्तास्तु मध्यादि नवसंख्या जनार्दन ॥
तेषु पूर्वादिसंस्थेषु [23]प्रान्तेष्वथ चतुर्ष्वपि । तिथिसंख्यापदेष्वन्तर्वीथीपार्श्वेषु मध्यमम् ॥२२८॥
पदमेकं परित्यज्य स्थण्डिलं तेषु कल्पयेत् । एवं कृते महादिक्षु चतुर्दशपदं भवेत् ॥ २२९ ॥

[ कुम्भस्थापनम् ; तत्र निक्षेप्यद्रव्याणि च ]

कोणेष्वपि नव प्रोक्तास्ततः स्थापनमारभेत् । प्रोक्षयित्वास्त्र[24]जप्तेन वारिणा देशिकस्ततः॥२३०

---

[1] A, C, D : भयान्तक pour भयानक
[2] C, D, E : अग्नि pour ऊर्ध्व
[3] D : धूमं pour धूम्रं
[4] A : दंष्ट्रिणम् pour दंष्ट्रकम्
[5] C, D : याम्ये
[6] C : करणीं जन्तनायकम् ; D : करणीं धर्मचारिणम् ; E : करणं धर्मनायकम्
[7] C, D, E : ओकारं pour योक्तारं
[8] A : वभ्रुवं भस्मभूषणम्
[9] A : अश्वत्थमन्त्रिणम् pour बुद्धं च वज्रिणम्
[10] A : उत्तमत्रयमेव हि pour उत्तमस्नपनत्रयम्
[11] C, D : मध्यमं त्रयम्
[12] Pour अष्टोत्तरशतस्नपन voir *Rauravāgama*, vol. I, pp. 102-112
[13] C, D : शतैरष्टोत्तरैर्वक्ष्ये ; E : शतमष्टोत्तरं वक्ष्ये
[14] C, D : प्रागग्रैर्मनुसूत्रैः स्यादुदगग्रैस्तथैव च
[15] A : पदमेकत्र पण्डितम् ; E : पदमत्र व्यवस्थितम्
[16] C. D, E : परितो लिखेत्
[17] C, D, E : तद्बाह्ये pour बाह्ये तु
[18] A : पदं प्रत्येकया भवेत्
[19] C : अष्टौ चाराणि ; D : अष्टौ द्रव्याणि ; E : अष्टौ द्वाराणि
[20] C, D : एव pour एवं
[21] C, D : क्षितिं pour कृते ; E : त्रिभिः
[22] A : पदप्रदास्तु
[23] C, D : प्रान्तेष्वपि चतुर्ष्वपि ; E : प्रान्तेषु चतसृष्वपि
[24] C, D, E : अथ pour अस्त्र

[1]तेषु सर्वेषु [2]मध्येषु स्थण्डिलं पूर्ववद्भवेत् । ततः [3]शिवाख्यकलशं [4]पूर्ववत्कल्पितं सुधीः ॥२३१
कर्णिकायां तु विन्यस्य वर्धनीं तस्य चोत्तरे । [5]ततश्चावरणे त्वाद्ये पूर्वादिक्रमयोगतः ॥२३२॥
पाद्यमाचमनं चार्घ्यं पञ्चगव्यं कुशोदकम् । क्षीरं दधि घृतं चैव दिक्षु चान्येषु[6] विन्यसेत् ॥
मधु [7]भस्मेक्षुसारं च लाजचूर्णमतः परम् । लाजं च रजनीचूर्णं [8]तिलं सर्षपमेव च ॥ २३४ ॥
विन्यस्याथ च सर्वेषु [9]शेषेष्वावरणक्रमात् । गन्धोदपूरितान्[10]पश्चात्कलशांस्तेषु विन्यसेत्॥२३५
[11]द्वितीयावरणे त्वेतान्वक्ष्यमाणान्यथाक्रमम् । पनसं [12]मातुलुङ्गं च [13]दाडिमं चाम्रमेव च॥
नालिकेरमतश्चापि[14] नारङ्गद्वयमेव च । कदलीं चासितां[15] चैव जम्बूफलमतः परम् ॥२३७॥
[16]द्राक्षां च नवनीतं च ह्रीबेरं [17]मुस्तकं ततः । वक्रं रास्नां [18]नतं चापि दान्तकं च मुरां तृणम् ॥
[19]ज्योतिष्मतीं द्वितीयेषु विदिशेषु कलशेषु च । [20]शालिनीवारकौ चैव प्रियङ्गुयववेणुजम्[21] ॥
[22]रोचनां कुङ्कुमं चैव गैरिकं च मनःशिलाम् । तालमञ्जनकं श्यामं रक्तचन्दनमेव च ॥२४०
[23]श्रीवेष्टकं गन्धरसं सल्लकीं च ततः क्रमात् । तुरुष्कं च [24]विडङ्गं च ततश्चेन्द्रयवाह्वयम् ॥
चव्यं सिद्धार्थकं चैव[25] जीरकद्वयमेव च । मञ्जिष्ठां च तथा मांसीं तालीसं चाप्यवेणुजे[26] ॥
कर्पूरं फलिनीं लोध्रां माक्षिकं च ततः परम् । तृतीयावरणे [27]न्यस्य तद्बाह्ये तु जनार्दन॥२४३
पद्मं नीलोत्पलं चैव रक्तमुत्पलमेव च । चम्पकं [28]जातिपुन्नागवकुलं चतुरङ्गुलम् ॥ २४४ ॥

---

[1] C, D : ते च pour तेषु
[2] C, D, E : मध्यादि pour मध्येषु
[3] C : शिवाख्यं कलशं
[4] A : पूर्ववत्कल्पयेत् सुधीः
[5] C, D : ततश्चावरणेष्वाद्ये ; E : ततश्चावरणेष्वन्ये
[6] A : अन्यासु pour अन्येषु
[7] C : रसैक्सारं ; D, E : भस्मैक्सारं
[8] A : तिलसर्षपमेव च
[9] C, D, E : शेषे त्वावरणे क्रमात्
[10] A : न्यस्त्वा pour पश्चात्
[11] C, E : तृतीय pour द्वितीय
[12] C : मातुलङ्गं
[13] C : डाडिमं
[14] A : अधश्चापि pour अतश्चापि
[15] A : सविदं pour चासितां ; C : च सितां
[16] C : द्राक्षं च
[17] C, E : मुस्तमेव च
[18] C, E : ततश्चापि
[19] A : ज्योतिष्मच
[20] E : शालीं नीवारकं चैव
[21] A : वेणु च pour वेणुजम् ; cf. *Vaidyakaśabdasindhu*, p. 919 : वेणुजः = वेणुयवः
[22] E : कुङ्कुमं गैरिकं चैव लाक्षा सर्जरसं तथा
[23] A : श्रीवेष्टगन्धकरसं
[24] A : विलङ्गं
[25] C, E : अपि pour एव
[26] Cf. *Vaidyakaśabdasindhu*, p. 103 : आप्यम् = कुष्ठौषधिः ; *ibid*, p. 919 : वेणुजम् = मरिचम्
[27] A : न्यस्त्वा
[28] A : जातिपुन्नागं वकुलं

करवीरं तथा द्रोणं नन्द्यावर्तं च मल्लिकाम् । [1]धुत्तूरं चैव बन्धूकं जपाकुसुममेव च ॥ २४५ ॥
[2]कर्णिकारं शमीं चैव सहां विष्णुवधूं तथा । दूर्वां च भृङ्गराजं च [3]चक्रवल्लीं वराहिकाम्॥२४६
भद्रां लक्ष्मीं च पाषाणं गिरिकर्णीद्वयं तथा । अपामार्गद्वयं चैव[4] गोक्षुरं तुलसीं तथा ॥२४७॥
नागपुष्पं च तक्कोलमुशीरं [5]पत्रमेव च । [6]त्रुटिं चैलाफलं चैव त्वगरुं चन्दनं तथा ॥ २४८ ॥

[कुम्भकलशाधिदेवताः]

एवं द्रव्याणि विन्यस्य चतुर्थावरणे क्रमात् । शिवं गौरीं तयोर्यष्ट्वा कुम्भयोस्तदनुक्रमात् ॥
प्रथमावरणे दिक्षु लोकपालान्समर्चयेत् । अन्येष्वष्टसु[7] विद्येशान्पदेषु क्रमशो यजेत् ॥ २५० ॥
वैकर्तनं विवस्वन्तं भवं शर्वमतः[8] परम् । [9]मार्ताण्डं भास्करं चैव [10]रविं रुद्रं तथैव च ॥२५१॥
[11]उद्बीजमुग्रनामानं लोकभासकमेव च । [12]लोकसाक्षिणमप्यन्यं महान्तं भीममेव च ॥२५२॥
त्रिविक्रमं [13]तथादित्यं सूर्यमंशुमता सह । दिवाकरं तथैशानं द्वितीयावरणे क्रमात् ॥ २५३ ॥
तृतीयावरणे बाह्ये पूजयेदीशगोचरे । [14]वरदं वीरभद्रं च [15]विमलं विश्वगोचरम् ॥ २५४ ॥
वेदनिष्ठं [16]परानन्दं परमेशं महाद्युतिम् । महोरस्कं गुरुं [17]रम्यममेयमनघं शुचिम् ॥ २५५ ॥
त्रिलोचनमनौपम्यं टङ्कपाणिं [18]महागतिम् । शूलपाणिं महोत्साहं महाभैरवरूपिणम् ॥२५६॥
[19]दंष्ट्रालं च दुराधर्षं [20]हारभूतिं च वज्रिणम् । दण्डिनं शिपिविष्टं च व्याघ्रचर्मधरं हरम्॥२५७
अनलाक्षमलक्ष्यं च सर्वलक्षणलक्षितम् । [21]दुःसहं च त्रयीरूपं [22]देवारिमथनं तथा ॥ २५८
गणेशं च सुरेशं च [23]व्यालयज्ञोपवीतिनम् । [24]दुर्गं च सुरसेनाद्यं [25]पूजयेत्क्रमशः सुरान्॥२५९
इत्यभ्यर्च्य ततो देवान्क्रमाँल्लिङ्गेऽभिषेचयेत् । एवमष्टशतैः प्रोक्तं कलशैः स्नपनं हरे ॥२६०॥

---

[1] A : धुर्धूरं pour धुत्तूरं
[2] E : ईशमूलीं pour कर्णिकारं
[3] Cf. *Vaidyakaśabdasindhu*, p. 377 : चक्रवल्लरी = स्नुहीभेदे
[4] C, E : अपि pour एव
[5] A : भद्रमेव च
[6] C, E : तुलसीं च फलं चैव
[7] A, C, E : अष्टासु pour अष्टसु
[8] C : ततः pour अतः
[9] C : मार्तण्डं
[10] C : हरं pour रविं
[11] E : उग्रं पशुपतिं चैव लोकप्रकाशमेव च
[12] A : लोकसाक्षिमनन्तं च
[13] C, E : यथानित्यं
[14] E omet les demi-*śloka* 254b et 255a
[15] C : पिङ्गलं
[16] A : पुरानन्दं
[17] A : रम्यमेधमानसुखं शुचिम्
[18] C : महागनम् ; E : महाङ्गदम्
[19] C : दंष्ट्रिणं चैव दुर्धर्षं
[20] C : भूरिभूतिं ; E : भूतिमूर्तिं
[21] E omet ce demi-*śloka*
[22] A : देवारिमनजं तथा ; E : देवारिमनलं तथा
[23] C : व्याघ्र pour व्याल
[24] C : दुर्दरं pour दुर्गं च ; E : उरगं
[25] C, E : पूजयेत्तु क्रमात्

[अष्टचत्वारिंशत्स्नपनम्[1] ; तत्र सूत्रपातः]

अथाष्टचत्वारिंशद्भिः कलशैर्वक्ष्यतेऽधुना । प्रागग्रैर्दशभिः सूत्रैरुदगग्रैस्तथैव च ॥ २६१ ॥
एकाशीतिपदं कृत्वा मध्ये नवपदं पुनः । [2]एकीकृत्य तु पद्मार्थं तद्बाह्ये षोडशैः पदैः ॥२६२॥
वीथीं कृत्वा तु वीथ्यग्रे द्वाराण्यष्टौ प्रकल्पयेत् । [3]एवं कृते पदान्यत्र षट् षट् दिक्षु [4]भवन्ति हि॥
कोणेष्वपि च चत्वारि स्थण्डिलं पूर्ववद्भवेत् । मध्ये पद्मं समालिख्य साष्टपत्रं सकर्णिकम् ॥

[कुम्भस्थापनम्; तत्र निक्षेप्यद्रव्याणि च]

[5]शिवकुम्भं वर्धनीं च पूर्ववद्विन्यसेत्सुधीः । पाद्यमाचमनं चार्घ्यं पञ्चगव्यं कुशोदकम्॥ २६५
क्षीरं दधि घृतं चैव [6]दलेष्वष्टसु विन्यसेत् । [7]मधुलाजशकृच्चूर्णं लाजचूर्णं हरिद्रकम् ॥२६६॥
भस्म चेक्षुरसं चैव कदलीफलमेव च । तिलं वै सर्षपं चैव पनसं [8]नालिकेरकम् ॥ २६७ ॥
नारङ्गस्य द्वयं चैव मातुलुङ्गं च [9]दाडिमम् । षोडशैतानि विन्यस्य द्वितीयावरणे [10]तथा ॥२६८
तृतीयावरणे पश्चाद्गन्धोदपरिपूरितान् । [11]कलशानभितो [12]न्यस्य तेषु द्रव्याणि निक्षिपेत् ॥
चन्दनं लघु [13]कुष्ठं च [14]कच्चोलपुष्पपत्रकम्[15] । कर्पूरं कुङ्कुमं चैव दिक्षु चान्येष्वपि क्रमात् ॥
चम्पकं तुलसीं चैव पुन्नागं बिल्वमेव च । [16]मल्लिकामप्यपामार्गं जातिं चैव शमीं तथा॥२७१॥
वकुलं [17]विष्णुक्रान्तिं च माधवीं च तपस्विनीम् । [18]धुत्तूरं गिरिकर्णीं च शङ्खिनीं पद्ममेव च॥

[ अधिदेवताः ]

एवं द्रव्याणि विन्यस्य देवानभ्यर्चयेत्ततः । शिवयोः कुम्भयोश्चैव पूजयेत्तावुभावपि ॥ २७३ ॥
विद्येशान्प्रथमे यष्ट्वा द्वितीयावरणे ततः । लोकपालान्स्वदिक्संस्थांस्तत्पार्श्वस्थान्भवादिकान् ॥
[19]तृतीयावरणे चापि वज्रादीन् दिक्पदाश्रितान् । वसूंश्च मरुतश्चाष्ट कलशेष्वपि पूजयेत् ॥ २७५
[20]एवं संपूज्य विधिवत्पश्चात्स्नपनमाचरेत् । [21]अष्टाधिकैश्चत्वारिंशैः स्नपनं कलशैर्युतम्[22]॥२७६

---

[1] Pour अष्टचत्वारिंशत्स्नपनम् voir *Rauravāgama*, vol. I, pp. 97-101

[2] C, E : एवं कृत्वा तु

[3] C : मुखं pour एवं

[4] C : वदन्ति pour भवन्ति

[5] C : शिवकुम्भं च वर्धन्यां

[6] C, E : दलाग्रेष्वष्टसु न्यसेत्

[7] E : मधुलाजं शकृच्चूर्णं

[8] A : नालिकेमरम्

[9] C : डाडिमम्

[10] C, E : ततः pour तथा

[11] A : कलशानि pour कलशान्

[12] A : न्यस्त्वा pour न्यस्य

[13] C, E : कोष्ठं pour कुष्ठं

[14] A : कचोलं पुष्पपत्रकम्

[15] Cf. *Vaidyakaśabdasindhu*, p. 625 : पुष्पम् = लवङ्गम् ; p. 574 : पत्रम् = एलादि

[16] A : मल्लिका चाप्यपामार्ग जाती चैव शमी तथा

[17] C : विष्णुक्रान्तां

[18] A : धुर्धूरं ; C : धूधरं ; E : धुत्तूरं

[19] C, E : द्वितीय pour तृतीय

[20] C, E : पूजयेद्देवेशं पश्चात्

[21] A : साष्टचत्वारिंशद्भिः ; E : अष्टाधिकचत्वारिंशैः

[22] C, E : इदम् pour युतम्

# Aṣṭacatvāriṃśatsnapana

N

| | |
|---|---|
| 40 | 41 |
| 39 | 19 |

| | | |
|---|---|---|
| 42 | 43 | 44 |
| 20 | 21 | 22 |

| | |
|---|---|
| 45 | 46 |
| 23 | 47 |

O

| | |
|---|---|
| 38 | 18 |
| 37 | 17 |
| 36 | 16 |




| | |
|---|---|
| 24 | 48 |
| 9 | 25 |
| 10 | 26 |

E

| | |
|---|---|
| 35 | 15 |
| 34 | 33 |

| | | |
|---|---|---|
| 14 | 13 | 12 |
| 32 | 31 | 30 |

| | |
|---|---|
| 11 | 27 |
| 29 | 28 |

S

✱ Śivakumbha

⁎ Vardhanī

Echelle : 1 tāla = 1 cm.

## Caturviṃśatikalaśasnapana




* Śivakumbha
* Vardhanī

Echelle : 1 tāla = 1 cm.

[चतुर्विंशतिकलशस्नपनम्[1] ; तत्र सूत्रपातः]

चतुर्विंशैश्च कलशैः प्रवक्ष्याम्यधुना परम् । प्रागग्रैर्वसुभिः सूत्रैरुदगग्रैस्तथैव च ॥ २७७ ॥
पदान्येकोनपञ्चाशत्पिण्डितानि[2] भवन्ति हि । तेषां मध्ये नवपदं पद्मार्थं परिलोपयेत्॥२७८॥
[3]पदस्य द्वितयं तस्य दिक्षु स्थाप्य विदिक्षु च । स्थाप्य चत्वारि चत्वारि शेषान्षोडश लोपयेत्॥

[कुम्भस्थापनम्; तत्र निक्षेप्यद्रव्याणि च]

पूर्ववत्स्थण्डिलं कृत्वा मध्येऽष्टदलमालिखेत् । अम्बुजं कर्णिकायुक्तं तत्र शैवं तु विन्यसेत् ॥
पूर्वोक्तलक्षणोपेतं कुम्भं तस्याथ चोत्तरे । गौरीकुम्भं तु विन्यस्य परितश्च क्रमान्न्यसेत् ॥२८१
पाद्यमाचमनं चार्घ्यं पञ्चगव्यं कुशोदकम् । क्षीरं दधि घृतं चैव प्रथमावरणे [4]न्यसेत्॥२८२॥
मधु चेक्षुरसं चैव गोशकृच्चूर्णमेव च । [5]हरिद्राचूर्णं लाजं च तिलं सर्षपमेव च ॥ २८३ ॥
लाजचूर्णं [6]ततश्चाथ दिक्ष्वष्टस्वपि विन्यसेत् । कदलीं [7]मातुलुङ्गं च [8]दाडिमीं पनसं तथा ॥
पद्मं नीलोत्पलं चैव तुलसीं बिल्वपत्रकम् । कोणपार्श्वेषु सर्वेषु [9]वह्न्यादिषु च विन्यसेत्॥२८५

[अधिदेवताः]

एवं द्रव्याणि विन्यस्य देवानभ्यर्चयेत्ततः । महेश्वरं महादेवीं कुम्भयोस्तु तयोर्यजेत्[10]॥२८६॥
प्रथमावरणे [11]चैव विद्येशान्परितो यजेत् । लोकपालान्द्वितीये तु यथास्थानं समर्चयेत् ॥२८७
भवादिकांस्तु परितः कोणपार्श्वे तु पूजयेत् । एवं [12]पदक्रमात्प्रोक्तं स्नपनं मध्यमत्रयम् ॥

[ षोडशकलशस्नपनम्[13] ]

दलक्रमेण वक्ष्यामि स्नपनं कन्यसत्रयम् । तत्र षोडशभिः श्रेष्ठं कलशैः स्नपनं भवेत्॥२८९॥

---

[1] Pour चतुर्विंशतिकलशस्नपनम्, voir *Rauravāgama*, vol. I, pp. 94-96
[2] A : पदानि च pour पिण्डितानि [3] C, E : पद्मद्वयं च तस्यैव
[4] C, D, E : ततः pour न्यसेत् [5] C, E : हरिद्राचूर्णलाजं च
[6] A : तथा चाथ [7] C : मातुलङ्गं [8] C : डाडिमी
[9] C : विरिञ्चादिषु pour वह्न्यादिषु च ; E : वर्यादिषु च
[10] E : न्यसेत् pour यजेत् [11] C, D : पश्चाद् pour चैव [12] A : पदक्रमं प्रोक्तं ; D : व्रतक्रमात् प्रोक्तं
[13] Cf. *Vīrāgama*, 14, 1-15 :
पितामहः - प्रणम्य भगवन्तं हि पर्यपृच्छत्पितामहः । कलशान् षोडशान् किं वा ब्रूहि मे परमेश्वर ॥
ईश्वरः - तत्सर्वमखिलं वक्ष्ये शृणुत्र चतुरानन । प्रासादस्याग्रतः कुर्यान्मण्टपं चतुरश्रकम् ॥
दर्भमालाभिरावेष्ट्य चतुस्तोरणभूषितम् । वितानेनोर्ध्वमाच्छाद्य दिग्ध्वजैश्च प्रलम्बितम् ॥
वस्त्रैरावेष्टयेद्विद्वान् मुक्तादामैरलंकृतम् । सर्वालंकारसंयुक्तं सूत्रपातं तु कारयेत् ॥
प्रागग्रमष्टसूत्रं स्यादुदगग्रं तथैव च । मध्ये नवपदं स्थित्वा तस्यान्नतपदं त्यजेत् ॥
अष्टवीथीसमायुक्तं तद्बाह्यैकपदं स्थितम् । शालिना विकिरेत्तत्र पूर्वोक्तविधिना सह ॥
शाल्यर्धं तण्डुलं न्यस्य तस्यार्धं तु तिलं न्यसेत् । परिस्तरेच्च दर्भैश्च गन्धपुष्पादिनार्चयेत् ॥

पूर्वोक्तमण्टपे कुर्यात्स्थण्डिलं [1]परिमण्डलम् । [2]मध्ये पद्मं समालिख्य त्रिकारदलसंयुतम् ॥२९०॥
कर्णिकाकेसरैर्युक्तं [3]तिलतण्डुलसंयुतम् । [4]कर्णिकायां ततो मध्ये लिखेत्कूटाक्षरं बुधः ॥२९१॥
स्वराणि च दलाग्रेषु पूर्वादि परितो न्यसेत्[5] । शिवयोः [6]कलशौ तत्र [7]कर्णिकायां तु पूर्ववत्॥
[8]संस्थाप्याथ दलाग्रेषु पूर्वादि परितः क्रमात् । पाद्यमाचमनं चार्घ्यं पञ्चगव्यं कुशोदकम् ॥
क्षीरं दधि घृतं चैव [9]विन्यसेत्तदनुक्रमात् । गन्धोदपूरितानष्ट[10] शेषेषु कलशान्न्यसेत् ॥२९४
एवं संस्थाप्य देवांश्च यजेत्पश्चात्क्रमेण [11]तु । [12]देवं देवीं [13]समारभ्य तत्तत्कुम्भे च पूजयेत् ॥
लोकपालान्भवादींश्च यजेत्पूर्वादितः क्रमात् । लोकपालान्स्वदिक्स्थांश्च [14]भवादीनितरस्थितान् ॥
एवं संपूज्य विधिवत्ततः[15] स्नपनमाचरेत् ।

[ अष्टकलशस्नपनम्[16]]

[17]अष्टाभिः कलशैर्वक्ष्ये स्नपनं तत्र [18]मण्टपे ॥२९७॥

---

मध्यमे शिवकुम्भं तु प्रासादेन तु विन्यसेत् । गौरीबीजेन वर्धनीं स्थापयेद्देशिकोत्तम ॥
चतुर्णां कलशानां तु चतुर्दिक्षु च विन्यसेत् । आग्नेयादिषु कोणेषु चतुरः कलशान्न्यसेत् ॥
शिवकुम्भे शिवं पूज्य चतुरश्रसमन्वितम् । वस्त्रयुग्मेन संवेष्ट्य वेणिकाभिरलंकृतम् ॥
गौरीं च वर्धन्यां न्यस्य सवस्त्रं सहिरण्यकम् । गोमूत्रं गोमयं चैव क्षीरं दधि घृतं तथा ॥
उशीरं चन्दनं चैव कुष्टेनैव समन्वितम् । सद्यादीशानपर्यन्तं यथाक्रमेण विन्यसेत् ॥
हुत्वान्ते तु यदस्येति पूर्णाहुतिमथाचरेत् । स्नापयेच्छिवकुम्भं तु व्योमव्यापि समुच्चरन् ॥
गौरीबीजेन वर्धनीं स्नापयेत्तु विशेषतः । पञ्चब्रह्मषडङ्गेन स्नापयेत्कलशांस्ततः ॥
नैवेद्यं पायसं दद्यात्ताम्बूलं तु निवेदयेत् । आचार्यदक्षिणां दद्याद्वस्त्रहेमाङ्गुलीयकैः ॥

[1] A : प्रतिमण्डलम् ; C : पदमण्डलम् ; E : पद्ममण्डलम्
[2] C, D, E : तन्मध्येऽम्बुजमालिख्य
[3] D : तिलं pour तिल०
[4] C, D : कर्णिकायास्ततो
[5] A : यजेत् pour न्यसेत्
[6] D : कलशं
[7] C, D : कर्णिकायास्तु पूजयेत्
[8] C, D, E : ततः स्थाप्य pour संस्थाप्याथ
[9] C : विन्यसेत्तानुक्रमात्; D : विन्यसेत्तमनुक्रमात् E : विन्यसेत्तान्यनुक्रमात्
[10] C, D, E : अष्टौ pour अष्ट
[11] E : वै pour तु
[12] C, D : देवदेवीं
[13] A : समावाह्य
[14] C, D : भवादीनि विदिक्स्थितान्
[15] A : तत्तत् pour ततः
[16] Cf. *Kāraṇāgama*, I, 48, 1-6a :
अष्टभिः कलशैर्वक्ष्ये स्नपनं तत्र मण्टपे । चतुर्द्रोणयवैः कृत्वा स्थण्डिलं तु सुवृत्तकम् ॥
कर्णिकाष्टदलोपेतं तत्र पद्मं समालिखेत् । कूटाक्षरं लिखेन्मध्ये दलेष्वष्टसु च क्रमात् ॥
यकारादिवकारान्तं शकाराद्धान्तमेव च । दिग्विदिक्ष्वक्षराण्यष्ट लिखेत्पूर्वादितः सुधीः ॥
शिवयोः कुम्भयोर्मध्ये पूर्ववत्स्थाप्य तद्बहिः । दलाग्रेषु क्रमात्स्थाप्य पाद्यादीनां तथाष्टकम् ॥
पाद्यमाचमनं चार्घ्यं पञ्चगव्यं कुशोदकम् । क्षीरं दधि घृतं चैव दलाग्रेषु च विन्यसेत् ॥
एवमष्टभिरुद्दिष्टम्"
[17] C, D, E : अथाष्टकलशं वक्ष्ये
[18] C, E : मण्डपे pour मण्टपे




Ṣoḍaśakalaśasnapana




Aṣṭakalaśasnapana




Catuṣkalaśasnapana

Echelle : 1 tāla=1 cm.

⁎ Śivakumbha

* Vardhanī

[1]चतुस्तालमितं कृत्वा स्थण्डिलं [2]तु सुवृत्तकम् । कर्णिकाष्टदलोपेतं तत्र पद्मं समालिखेत् ॥२९८
कूटाक्षरं लिखेन्मध्ये दलेष्वष्टसु[3] च क्रमात् । [4]यकारादि [5]वकारान्तं [6]शकाराद्धान्तमेव च ॥
[7]दिग्विदिक्ष्वक्षराण्यष्ट लिखेत्पूर्वादितः सुधीः । शिवयोः कलशौ[8] मध्ये पूर्ववत्स्थाप्य [9]तद्बहिः॥
दलाग्रेषु क्रमात्स्थाप्य [10]पाद्यादीनां तदष्टकम् । अथवा गन्धतोयेन पूर्णांश्च कलशान्न्यसेत् ॥
एवं विन्यस्य कलशान्देवं देवीं च [11]पूर्ववत् । संपूज्य परितः पश्चादष्ट[12] विद्येश्वरान्न्यसेत्[13] ॥
ततः क्रमेण कुर्वीत स्नपनं देशिकोत्तमः । एवमष्टभिरुद्दिष्टं चतुर्भिरथ कथ्यते ॥ ३०३ ॥

[चतुःकलशस्नपनम्[14] ]

पूर्ववत्स्थण्डिलं कृत्वा [15]तत्र पद्मं चतुर्दलम् । आलिख्य कर्णिकामध्ये व्योमाक्षरमथालिखेत् ॥
पृथिव्यादीनि वर्णानि पूर्वादिक्रमशो[16] भवेत् । [17]पूर्ववच्छिवकुम्भं [18]तु वर्धन्या सह देशिकः॥
विन्यस्याथ [19]घृतक्षीरदधिक्षौद्राणि च क्रमात् । पूर्वादिषु दलेष्वेतान्विन्यसेदथवाम्बुना[20] ॥३०६
[21]पूरितान्वा न्यसेन्मन्त्री [22]ततो यजनमारभेत् । शिवयोः कुम्भयोस्तौ च पूर्ववत्सम्यगर्चयेत् ॥
धर्मादींश्च [23]चतुर्ष्वन्येष्वर्चयेच्च विधानतः । [24]एवमभ्यर्च्य तान्पश्चात्तैः कुर्यात्स्नपनं [25]परम् ॥
[26]एवं नवविधं प्रोक्तं स्नपनं भोगमोक्षदम् । एषामेकतमं कुर्याद्विभवस्यानुरूपतः ॥ ३०९ ॥

---

[1] A : चतुस्तालमिदं ; C, D : चतुस्तालमितां
[2] C, D : च pour तु ; E : वा
[3] C, D, E : अष्टासु pour अष्टसु
[4] C, E : ढ pour य
[5] D : प pour व ; E : फ
[6] A : शकाराधन्तिमेव च ; C : शकादीशान्तमेव च
[7] C, D, E : क्रमेण चाक्षराण्यष्टौ
[8] A : कुम्भयो: pour कलशौ
[9] C : तत्सुधीः ; E : च सुधीः
[10] C, D, E : पाद्यादीनि
[11] C, D, E : पूजयेत्
[12] C, D, E : अष्टौ pour अष्ट
[13] E : यजेत् pour न्यसेत्
[14] Cf. *Kāraṇāgama*, I, 48, 6b-11a :

पूर्ववत्स्थण्डिलं कृत्वा ततः पद्मं चतुर्दलम् । आलिख्य कर्णिकामध्ये त्वपोऽक्षरमथालिखेत् ॥
पृथिव्यादीनि वर्णानि पूर्वादि क्रमशो भवेत् । पूर्ववच्छिवकुम्भं तु वर्धन्या सह देशिकः ॥
विन्यस्याथ घृतक्षीरदधिक्षौद्राणि च क्रमात् । पूर्वादिषु दलेष्वेतान्विन्यसेदथवा बुधः ॥
पूरितान्वा न्यसेन्मन्त्री ततो यजनमारभेत् । शिवयोः कुम्भयोश्चैव पूर्ववत्सम्यगाचरेत् ॥
धर्मादींश्च चतुर्ष्वेषु अर्चयेत्तु विधानतः । एवमभ्यर्च्य तान् पश्चात्तैः कुर्यात्स्नपनं परम् ॥

[15] A : ततः pour तत्र
[16] C, D, E : क्रमतो pour क्रमशो
[17] C : पूर्वत्र pour पूर्ववत्
[18] D, E : च pour तु
[19] E : घृतं क्षीरं दधि क्षौद्राणि
[20] A : बुधः pour अम्बुना
[21] A : पूरिता वा ; C, D : पूरितान्या
[22] A : तयोः pour ततो
[23] E : चतुष्कुम्भेष्वर्चयेच्च
[24] C, D, E : एवमभ्यर्चनात्पश्चात्तैः
[25] A : वरम् pour परम्
[26] E omet ce demi-*śloka*

[ सकलस्नपनम् ]

सकलेष्वपि सर्वेषु स्नपनं [1]कारयेद् बुधः[2] । उत्तमत्रयवर्ज्यं[3] तु यस्य स्यात्स्नपनं हरे॥३१०॥
क्रियते [4]तत्र तद्वेवं मध्यकुम्भे समर्चयेत् । सकलं शक्तियुक्तं चेद्वर्धन्या सह विन्यसेत् ॥ ३११
अन्यत्सर्वं यथापूर्वं विधिना कारयेत्सुधीः ।

[ नित्ये स्नपनक्रमः ]

नित्ये प्रवर्तमाने तु काले प्राप्तं [5]यदा भवेत् ॥ ३१२ ॥
स्नपनं [6]चैव तत्काले तस्मिन्नारभ्य तत्सुधीः । [7]नित्यातिक्रमणं तत्र [8]यथा न भवति ध्रुवम् ॥
तथा [9]तत्स्नपनं कार्यमन्यथा नैव कारयेत् । नित्यावसाने प्राप्तं चे्ारपूजादि पूर्ववत् ॥३१४॥
स्नपनं कारयेद्विद्वान् [10]यथाशास्त्रविनिश्चितम् । इति यः कारयेन्मर्त्यः स्नपनं विधिपूर्वकम् ॥
सर्वयज्ञफलं प्राप्य शिवेन सह मोदते ॥ ३१६ ॥

[11]इत्यजिताख्ये [12]महातन्त्रे [क्रियापादे] [13]स्नपनविधिर्नाम

एकोनत्रिंशः पटलः ॥

---

[1] C, D, E : कारयेत्सुधीः

[2] L'ordre des *śloka* dans le ms. D est le suivant : 310a, 313b, **314**, 315, 310b, 311, 31**2**, 313a, **316**

[3] A : वा विधिस्नपनमारभेत्

[4] A यत्र pour तत्र

[5] A : यथा pour यदा

[6] C, D, E : तु महत्काले

[7] A : नित्यादिक्रमणं

[8] A : तथा न भवति ध्रुवम् ; E : यथा च न भवेत्तथा

[9] A : हि pour तत्

[10] A : तान्यथाशास्त्रनिश्चितम्

[11] E : इत्यजिते pour इत्यजिताख्ये

[12] E omet महातन्त्रे

[13] **A** : महास्नपनविधिः अष्टाविंशः पटलः ; C : स्नपनविधिर्नाम अष्टाविंशः पटलः समाप्तः ; D : स्नपनविधिपटलः अष्टाविंशत् । ग्रन्थं ३०४ ; E : स्नपनविधिपटलः ।

## [[1]त्रिंशः पटलः]

## [विशेषार्चनविधिः[2]]

### [विशेषार्चनफलम्[3]]

विशेषादर्चनं वक्ष्ये [4]तच्छृणु त्वं जनार्दन । अकालमृत्युशमनं[5] सर्वव्याधिविनाशनम् ॥ १ ॥
[6]शोकमोहहरं पुंसामशेषाधिविनाशनम् । अपस्मारग्रहादीनां शमनं सर्वशान्तिदम् ॥ २ ॥
विष[7]शत्रुप्रशमनं सर्व[8]विघ्ननिवारणम् । परसेनास्तम्भनं च स्वसेनारक्षणं तथा ॥ ३ ॥
जयदं पुष्टिदं लोके [9]दुर्भिक्षभयनाशनम् । अवग्रहहरं चैव सर्वसस्यविवर्धनम् ॥ ४ ॥
[10]सूर्यादिग्रहदोषाणां शमनं कालवञ्चनम् । सर्वपापहरं पुंसां धनधान्यविवर्धनम् ॥ ५ ॥

### [[11]विशेषार्चनकालः]

अष्टम्यां च चतुर्दश्यां पक्षयोः पर्वणोरपि । संक्रान्तौ ग्रहणे [12]चापि राज्ञां जन्मदिनेऽपि च ॥६॥
[13]राजजन्मदिने वापि विपदि प्रत्यरे तथा । [14]कर्मान्ते च तथार्द्रायामर्कवारे च कारयेत् ॥७॥

### [लिङ्गे प्रतिमायां च विशेषार्चने फलम्]

शिवलिङ्गेऽथवार्चायां[15] कर्तव्यं तद्विधानतः । [16]अर्चायां यजने [17]तस्माल्लिङ्गार्चायां फलं तु यत् ॥

---

[1] Le ms. B s'achève avec le *paṭala* précédent ; voir aussi p. 360, note 15.

[2] Pour विशेषार्चनविधि, voir *Acintyaviśvasādākhya*, *paṭala* 39 et *Kāraṇāgama*, I, 133

[3] Cf. *Kāraṇāgama*, I, 133, 1-3 :

अतः परं प्रवक्ष्यामि विशेषयजनं शृणु । सर्वरोगविनाशार्थमायुरारोग्यवर्धनम् ॥
मोक्षदं कामदं पुण्यं सर्वशत्रुविनाशनम् । अनावृष्टौ च दुर्भिक्षे परराष्ट्रप्रवेशके ॥
राजाभिषेकसमये युद्धारम्भे तथैव च । विशेषपूजां यत्नेन इष्टकाम्यफलप्रदाम् ॥

[4] A : तच्छृणुष्व pour तच्छृणु त्वं

[5] C, E : मथनं pour शमनं ; E : मरणं

[6] A : भोगमोक्षप्रदं

[7] A : शस्त्र pour शत्रु ; E : जन्तु

[8] E : शत्रु pour विघ्न

[9] C : दुर्भिक्षे pour दुर्भिक्ष

[10] C et E omettent ce *śloka* 5

[11] Cf. *Kāraṇāgama*, I, 33, 6b-7 :

संक्रान्तौ च चतुर्दश्यां पर्वण्युभयपक्षयोः । अयने विषुवे राहुग्रसने मासपूजके ॥
एतेष्वन्येषु सर्वेषु नैमित्तिकमिहोच्यते ।

[12] A : वा pour च

[13] C, D et E omettent ce demi-*śloka*

[14] A : तीर्थान्ते pour कर्मान्ते

[15] A : तथार्चायां pour अथवार्चायां

[16] A : अर्चायां यजनं ; D : अर्चाया यजनं

[17] A : तस्य कृतार्चायां ; C, D : तस्माल्लिङ्गार्चायाः

भवेच्छतगुणं [1]तत्तु लिङ्गेष्वपि यथाक्रमम् । मानुषं चार्षकं दिव्यं [2]गाणपं च चतुर्विधम् ॥९॥
स्वयंभूतं [3]तथान्यच्च लिङ्गं पञ्चममुच्यते । तेषु [4]चाद्यात्फलं चापि भवेद्दशगुणोत्तरम् ॥ १० ॥
सर्वयज्ञतपोदानतीर्थादिषु च[5] यत्फलम् । तत्फलं लभते मर्त्यः सकृल्लिङ्गार्चनेन तु ॥ ११ ॥
मानुषस्य तु लिङ्गस्य फलमेतदुदाहृतम् । तस्मात्सर्वप्रयत्नेन शिवलिङ्गं समर्चयेत् ॥ १२ ॥
[6]लिङ्गार्चनसमं नास्ति पुण्यं लोकत्रये हरे । यथा [7]व्योम्नः परस्यास्य क्वचिदन्तं न दृश्यते ॥
तथा [8]लिङ्गार्चनोद्भूतपुण्यस्यान्तं न [9]विद्यते । भोगमोक्षप्रदं पुंसामिदमेव हि[10] कथ्यते ॥१४॥
शिवस्य परिपूर्णस्य [11]लिङ्गार्चनविधेर्बलात् । देवदेवत्वमापन्ना ब्रह्मविष्णुपुरोगमाः ॥ १५ ॥
मुक्तानां पुरुषाणां तु न हि संख्या प्रदृश्यते । स श्लाघ्यस्तु भवेन्मर्त्यः स कुलीनः स बुद्धिमान्॥
स शूरः स च विक्रान्तो [12]यो लिङ्गं सकृदर्चयेत् । [13]लिङ्गे देवो महादेवः [14]साक्षादेव प्रतिष्ठितः॥
अनुग्रहाय लोकानां तस्माल्लिङ्गं समर्चयेत् । लिङ्गं यत्र भवेद्राष्ट्रे [15]पूजाहीनं चिराय वै ॥१८॥
तत्र व्याधिश्च दुर्भिक्षमनावृष्टिश्च जायते[16] । प्रवासी [17]पथि दृष्ट्वा तु पुष्पहीनं तु मस्तकम्॥१९
[18]शिवलिङ्गस्य गच्छेच्चेत्सर्वपापनिधिर्भवेत् । तस्मात्पूजाविहीनं तु लिङ्गं दृष्ट्वा पथि स्थितम्॥२०
स्नाप्य पुष्पं च[19] पत्रं वा [20]शिवस्याधार्य यो व्रजेत् । अश्वमेधसहस्रस्य वाजपेयशतस्य च ॥२१॥
स पुण्यं लभते मर्त्यो नात्र कार्या विचारणा । [21]दूरं गत्वा तु [22]यो लिङ्गमनाथं पूजयेत्सकृत् ॥
सर्वयज्ञफलं तस्य दद्याल्लिङ्गेऽर्चिते[23] शिवः । अभिप्रेतार्थसिद्ध्यर्थं विशेषादर्चनं[24] भवेत् ॥२३॥
पूर्वाह्णे शान्तिकं [25]तत्स्यान्मध्याह्ने पुष्टिदं भवेत् । [26]सायाह्ने तु जयार्थं स्यादर्धयामे तु[27] सर्वदम्॥

---

[1] E : यत्तु pour तत्तु
[2] A : गाणवं
[3] C, D, E : तथा ह्यन्यं
[4] C, D, E : चान्यत्फलं pour चाद्यात्फलं
[5] C, D : तीर्थवेदेषु pour तीर्थादिषु च ; E : तीर्थदेशेषु
[6] Cf. supra, *paṭala* 18, *śloka* 6a
[7] A : व्योम्नि
[8] A : लिङ्गार्चनाभूत° pour लिङ्गार्चनोद्भूत°
[9] A : दृश्यते
[10] D : इष्टमेव हि pour इदमेव हि ; E : अष्टमेऽहनि
[11] A : लिङ्गार्चनविधौ बलम्
[12] C, D : तयो लिङ्गं समर्चयेत्
[13] E omet les demi-*śloka* 17b et 18a
[14] C : साक्षाद्देवप्रतिष्ठत:
[15] A : बलहीनं
[16] E : प्रजायते pour च जायते
[17] A : पतितं दृष्ट्वा pour पथि दृष्ट्वा तु
[18] C, D, E : शिवलिङ्गं च
[19] A : तु pour च
[20] C, D : शिवस्याराध्य ; E : शिवमाराध्य
[21] C : पुरा pour दूरं ; D, E : पुरं
[22] A : ये pour यो
[23] C : लिङ्गेऽर्चितं pour लिङ्गेऽर्चिते ; D : लिङ्गेऽर्चित ; E : लिङ्गार्चनात्
[24] C, D, E : यजनं pour अर्चनं
[25] C, D : च pour तत्
[26] C, D : साये च विजयार्थं
[27] E : च pour तु

[ विशेषार्चनप्रकारः ]

साधकः शान्तचित्तस्तु कृतनित्यः शुचिस्तदा[1] । सोष्णीषः सोत्तरीयश्च [2]नववस्त्रेण वेष्टितः ॥

[ स्नानोदकम् ]

पञ्चशुद्धिं पुरा कृत्वा पूर्ववत्पूजयेच्छिवम् । स्नानोदकं तु नादेयं नवकुम्भेषु पूरितम् ॥ २६ ॥
एकरात्रोषितं शुद्धं वस्त्रपूतं सुशीतलम् । [3]उशीरेण समायुक्तं त्रुटिचन्दनकोष्ठजैः[4] ॥ २७ ॥
चूर्णैः कर्पूरसंयुक्तैर्लोलितं पुष्पगन्धितम् । स्नानार्थमाहरेत्तत्र [5]पञ्चगव्यकमेव च ॥ २८ ॥

[ अभिषेकः[6] ]

[7]संवत्सरात्मना पूर्वमुदकेनाभिषेचयेत् । [8]पञ्चगव्याभिषेकं तु[9] पञ्चब्रह्म समुच्चरन् ॥ २९ ॥
पञ्चामृतं सगन्धोदं षडङ्गैरभिषेचयेत् । कदलीपनसाम्राणां [10]फलसारसमन्वितम् ॥ ३० ॥
नालिकेरफलोदेनाप्यभिषेकं[11] [12]हृदा भवेत् । ततस्तैलेन शुद्धेन कर्पूरागरुगन्धिना ॥ ३१ ॥
[13]लिङ्गमालिप्य सर्वत्र सपीठं तु शिवास्त्रतः । [14]माषेण यवचूर्णेन समुद्वर्तनमेव च ॥ ३२ ॥
शालिपिष्टेन [15]वा कुर्यादस्त्रमन्त्रं समुच्चरन् । [16]पञ्चब्रह्मोच्चरन्पश्चात्क्षालयेच्छुद्धवारिणा ॥३३॥
ततो गन्धोदकेनापि वत्सरेणाभिषेचयेत् । स्नपनं चात्र कुर्वीत सहस्रादिषु संभवैः ॥ ३४ ॥

---

[1] E : तथा pour तदा
[2] C, D : नववासोऽवसंस्थित. ; E : नववासोऽथ संस्थित:
[3] A : उशीररजसा युक्तं
[4] A : कोष्ठकम् pour कोष्ठजैः ; E : कोष्ठकैः
[5] A : गव्यपञ्चकमेव च
[6] Cf. *Kāraṇāgama*, I, 133, 5-10 :
गोक्षीरेण तु संपूर्य क्रमेणैव विशेषतः । घृतेनैवाभिषेकं तु तच्छ्रेष्ठं च विशिष्यते ॥
इक्षुसारफलं कृत्वा शालिभिर्विमलैस्तथा । गन्धपुष्पादिनाभ्यर्च्य हृदयेनैव मन्त्रतः ॥
शरावे ताम्रपात्रे वा स्थापयेत्तु ततोपरि । पञ्चगव्यविधिं स्थाप्य पञ्चामृतं तु कल्पयेत् ॥
पुण्याहं वाचयेत्तत्र पूजयित्वा विशेषतः । त्रियम्बकेन मन्त्रेण कुर्यात्क्षीराभिषेचनम् ॥
शिवाङ्गैश्चैव विद्याङ्गैर्ब्रह्मपञ्चकमुच्चरन् । शिवमन्त्रेण संपूज्य कुर्यात्तत्पञ्चगव्यकैः ॥
व्योमव्यापि षडङ्गेन कुर्यात्पञ्चामृतं तथा । जलेन स्नापयेत्पश्चात्प्रासादेन तु मन्त्रतः ॥
[7] C, D, E : संवत्सरात्मकं
[8] C et E omettent les demi-*śloka* 29b et 30a
[9] A : अभिषेकस्तु pour अभिषेकं तु
[10] C : पथैः सार pour फलसार ; D : फलैः सार०
[11] C, D : साभिषेकं pour अप्यभिषेकं
[12] A : तथाचरेत् pour हृदा भवेत्
[13] C : लिङ्गमालेप्य सर्वत्र ; D : लिङ्गमारभ्य सर्वत्र ; E : समारभ्य च सर्वत्र
[14] C, D, E : सन्नापयवचूर्णेन
[15] A : तु तथा कुर्यादस्त्रं समुचरन्
[16] A : पञ्चब्रह्मो वरान् पश्चात्

[ अर्चनम्[1] ]

नित्योक्तमर्चनं [2]कुर्यात्पाद्यमाचमनार्घ्यकम् । चन्दनागरुकाश्मीरैः[3] [4]श्लक्ष्णपिष्टैः [5]परार्ध्यकैः ॥
कर्पूरक्षोदमिश्रैस्तु[6] [7]शिवलिङ्गं सपीठकम् । [8]क्रमात्पर्याप्तमालिप्य सर्वात्मानं समुच्चरन् ॥३६॥
सिद्धार्थकांस्तिलान्कृष्णान्बिल्वपत्रसमायुतान्[9] । प्रासादेन तु मन्त्रेण [10]निक्षिपेल्लिङ्गमूर्धनि ॥
चम्पकोत्पल[11]जात्यादिसत्पुष्पैश्च समर्चयेत् । तैरेव [12]माल्यैराच्छाद्य [13]लिङ्गं मूलात्ततः शनैः ॥
मस्तकान्तं [14]पवित्रैस्तु [15]प्रादक्षिण्यक्रमेण तु । वेष्टयित्वा [16]तु तन्मूर्ध्नि स्वर्णपुष्पं तु विन्यसेत् ॥
धूपं [17]कृष्णागरुभवं कर्पूरेण च दापयेत् । [18]दीपमालां ततः पूर्णां कर्पूरागरुवर्तिना ॥ ४० ॥
गोघृतेन [19]शिवाभ्याशे दापयेत्तौ हृदार्पयेत् । शुद्धान्नं पायसं गौलं मुद्गान्नं कृसरं तथा ॥४१॥
सर्वोपदंशसंयुक्तं गुलखण्डाज्यसंयुतम् । [20]निवेदयेत्तु देवाय फलैः स्वादुभिरन्वितम् ॥ ४२ ॥
ईशानादिषु वक्त्रेषु [21]पञ्चस्वपि यथा पुरा । गुलखण्डयुतापूपं[22] दापयेत्तु [23]तथा पुनः ॥ ४३
ताम्बूलं दापयेत्पश्चात्पञ्चसौगन्धिकान्वितम्[24] । मातुलुङ्गफलैश्चापि[25] नालिकेरफलैरपि ॥ ४४
दापयेत्पञ्चवक्त्रेषु तत्तन्मन्त्रेण मन्त्रवित् । नीराजनं ततः कुर्याच्छास्त्रदृष्टेन कर्मणा ॥ ४५ ॥
नानासुगन्धकुसुमैः कृत्वा [26]मालाः सुशोभनाः । [27]नानावर्णसमायुक्तास्ताभिरूर्ध्वे मनोरमम् ॥
लिङ्गस्य [28]मण्टपं कुर्यान्मालालम्बनशोभितम्[29] । वीणावेणुमृदङ्गाद्यैः श्राव्यैर्वाद्यविशेषकैः ॥४७

---

[1] Cf. *Kāraṇāgama*, I, 133, 11-12 :
आसनावरणादीनि पूर्ववत्परिकल्पयेत् । नित्यपूजावसानान्ते विशेषयजनं ततः ॥
पायसान्नं ददेत्पश्चात्कदलीफलसंयुतम् । नैवेद्यं दापयेत्पश्चाद्यथाशास्त्रानुसारतः ॥

[2] C, D, E : कृत्वा कुर्याद् pour कुर्यात्पाद्यम् [3] C, D, E : कोष्ठं च pour काश्मीरैः

[4] A : क्षण pour श्लक्ष्ण [5] A : वरार्थकम्; C : पराघ्यंकैः [6] C, D, E : संमिश्रैः pour मिश्रैस्तु

[7] A : शिवलिङ्गस्य पीठकम् ; C, D, E : शिवलिङ्गं ततः क्रमात्

[8] C : कर्पूरेण समालिप्य : D, E : पर्याप्तं च समालिप्य

[9] C, D, E : समन्वितान् pour समायुतान् [10] C, D, E : क्षिपेल्लिङ्गस्य मूर्धनि

[11] A : जात्याद्यैः गन्धपुष्पं ; C : जात्यादिसंपुष्पैश्च ; D : जात्यादिसुपुष्पैश्च

[12] A : मालामाबध्य ; C, D, E : मालामाच्छाद्य

[13] A : लिङ्गपूजा ; C, D : लिङ्गमूलं ; D : लिङ्गमूलां

[14] A : पवित्रस्य [15] A, C : प्रदक्षिण pour प्रादक्षिण्य

[16] A : कृतं मूर्ध्नि [17] A : कृष्णागरूद्भूतान्

[18] A : A : दीपमाला ततस्तत्र ; D : दीपमालां ततस्तूर्णं

[19] A : शिवाभ्यां च शिरसारोपयेत्ततः [20] A : निवेदयित्वा ; E : निवेदयेच्च

[21] C, D, E : हविः पञ्च यथा पुरा [22] C : यथापूपं pour युतापूपं ; D : यथापूपान्

[23] C : यथा पुनः ; D : यथा पुरः ; E : यथा पुरा

[24] A : अन्वितान् pour अन्वितम् [25] E : फलं चापि pour फलैश्चापि

[26] A : मालां सुशोभनाम् [27] A : नानावर्णसमायुक्तां स्थापितोर्ध्वे मनोरमाम्

[28] C, D : मण्डपे [29] A : शोभनम् pour शोभितम्

गीतनृत्तस्तुतिस्तोत्रैर्जयशब्दादिमङ्गलैः । [1]प्रणामैर्दण्डवद्भूमौ देवदेवं समर्चयेत् ॥ ४८ ॥
ततश्चागरुधूपेन [2]प्रासादाभ्यन्तरं सुधीः । धूपयित्वाथ संताड्य [3]घण्टामस्त्रेण मन्त्रवित् ॥४९॥
[4]प्रच्छादनपटं कृत्वा [5]कवाटावथ बन्धयेत् । प्रदक्षिणत्रयं कृत्वा नत्वा [6]चैव पुनः पुनः ॥५०॥
प्रसीद देवदेवेति प्रार्थयित्वा [7]समापयेत् । पूजा वैशेषिकी [8]चैषा पवित्राद्यन्तयोरपि ॥ ५१ ॥
[9]वसन्ते चापि नैवेद्ये नवे चापि विशेषतः । कृत्तिकादीपकाले च घृतकम्बलके तथा ॥ ५२ ॥
[10]संप्रयोज्या [11]विधिज्ञैस्तु केवलोत्सवसंयुता[12] । [13]ध्वजभेर्यङ्कुरैर्हीनो बलिदानादिवर्जितः[14] ॥
[15]एकाहश्च दिवारात्रं वेरेणेष्टेन वा न वा । केवलोत्सव इत्युक्तो भक्त्या [16]भक्तैः प्रकल्पितः ॥
एवं यः कुरुते मर्त्यः [17]सकृद्वा लिङ्गपूजनम् । त्रिसप्तकुलसंयुक्तः शिवलोके [18]महीयते ॥५५॥
मोदते चाक्षयं कालमिति शास्त्रस्य [19]निश्चयः ॥ ५६ ॥

[20]इत्यजिताख्ये [21]महातन्त्रे [क्रियापादे] [22]विशेषार्चनविधिर्नाम
त्रिंशः पटलः ॥

---

[1] A : प्रणम्य pour प्रणाम
[2] A : प्रासादादन्तरं ; E : प्रासादाभ्यन्तरे
[3] A : घण्टामन्त्रेण
[4] A : प्रच्छादान्तःपटं कृत्वा ; C : प्रच्छादनं पुटं कृत्वा ; E : प्रच्छादनं पटं वापि
[5] C : कवाटं वाथ
[6] A : एनं pour एव
[7] C, E : समर्चयेत्
[8] C, D, E : ख्याता pour चैषा
[9] A : वसन्तेनापि नैवेद्ये मासपूजाविशेषतः
[10] A : संप्रयोज्य ; C : संप्रयोक्ता ; E : प्रयोक्तव्या
[11] A : विधिज्ञेयैः
[12] A : संयुते pour संयुता
[13] A : ध्वजभेर्यङ्कुरे हीने
[14] A, E : वर्जिते pour वर्जितः
[15] A : एकदाहर्दिवारात्रौ वेरे चैव सुदेवपि
[16] A : भक्त्या pour भक्तैः
[17] A : स कृत्वा pour सकृद्वा ; E : सकृच्च
[18] A : यथा शिवः pour महीयते
[19] A : निश्चितम् ; C, D : निश्चितः
[20] E : इत्यजिते pour इत्यजिताख्ये
[21] E omet महातन्त्रे
[22] A : विशेषार्चनविधिः एकोनत्रिंशः पटलः ; C : विशेषार्चनविधिपटलः समाप्तः ; D : विशेषार्चनविधिपटलः

## [एकत्रिंशः पटलः]

### क्षीराभिषेकविधिः[1]

[क्षीराभिषेकफलम्[2]]

क्षीराभिषेकं वक्ष्यामि वाञ्छितार्थप्रदं शुभम्[3] । अकालमृत्युमथनमायुरारोग्यवर्धनम्[4] ॥ १ ॥
श्रीकरं जयदं चैव सर्वसस्यविवृद्धिदम्[5] । अवग्रहहरं[6] लिङ्गे विधिना तत्समाचरेत् ॥ २ ॥

[कुम्भेषु क्षीरपूरणम्[7]]

सौवर्णान्राजतान्वापि ताम्रजान्मृण्मयांस्तु वा । कलशान्पञ्च निष्पाद्य [8]शिवार्धपरिपूरितान् ॥
निर्दोषान् [9]परिशुद्धांश्च सितसूत्रविचित्रितान्[10] । सर्वात्मनैव मन्त्रेण संक्षाल्य [11]प्रोक्ष्य तान्सुधीः॥
तेषु [12]गव्यं पयः सम्यगापूर्य प्रणवेन तु । सितपुष्पाणि [13]कूर्चं च कुशोदं तत्र निक्षिपेत् ॥

---

[1] Pour क्षीरभिषेकविधि, voir *Aṃśumad* 62, *Kāraṇa* I, 17 et II, 38, *Dīpta* 28 et *Vīra* 53.

[2] Cf. *Aṃśumadāgama*, 62, 1-4a :
अथातः संप्रवक्ष्यामि क्षीरस्नानविधिक्रमम् । क्षीराभिषेकं देवस्य यः करोति सकृन्नरः ॥
तस्यापस्मारदोषस्तु सहसैव विनश्यति । कासश्वासक्षयाद्यैस्तु महारोगैर्निपीडितः ॥
संस्नाप्य पयसा शंभुं सर्वरोगैर्विमुच्यते । कीर्तिदं विजयं पुण्यमायुरारोग्यदं सदा ॥
सर्वदानफलं चैव सर्वयज्ञफलप्रदम् ।

[3] A : फलप्रदम् pour प्रदं शुभम्

[4] A : आरोग्यदं तथा pour आरोग्यवर्धनम्

[5] A : विवर्धनम् pour विवृद्धिदम्

[6] A : करं pour हरं

[7] Cf. *Vīrāgama*, 53, 8-16a :
गोक्षीरं गृह्य सर्वासामेकभाण्डे प्रपूरयेत् । शिवस्य पुरतो विप्र गोमयेनानुलेपयेत् ॥
शालिना स्थण्डिलं कृत्वा पुण्याहं वाचयेत्ततः । सूत्रपातः प्रकर्तव्यः शास्त्रदृष्टेन तन्तुना ॥
चतुर्दशानि सूत्राणि पूर्वाभिमुखमेव च । उत्तराग्रं तथा सूत्रं विन्यसेद्देशिकोत्तमः ॥
मध्ये नवपदं स्थित्वा तद्बाह्यैकं परित्यजेत् । तद्बाह्यावरणाद्बाह्ये पदमेकं तु ह्रासयेत् ॥
द्वारार्थं च चतुर्दिक्षु पदमेकं तु ह्रासयेत् । मध्यमे च पदे चैव शालिना विकिरेत्ततः ॥
शाल्यर्धं तण्डुलं न्यस्य तण्डुलार्धं तिलं न्यसेत् । परिस्तरेत्तु दर्भैश्च प्रोक्षयेद्धृदयेन तु ॥
मुद्राञ्चितकलशांश्च आढकेनैव पूरितान् । कलशान् ग्राहयेत्तेन सूत्रेण वेष्टयेत्ततः ॥
क्षालयेद्वारिणा चैव ईशानेन तु प्रोक्षयेत् । मध्यमे शिवकुम्भं तु क्षीरेणैवाभिपूरयेत् ॥
वर्धनीं तस्य वामे तु पूरयेत्क्षीरमेव च ।

[8] A : शिवाम्बु pour शिवार्ध

[9] C, D, E : परितः शुद्धान्

[10] A : विनिश्चितान् pour विचित्रितान्

[11] C, D, E : प्रोक्षितान् pour प्रोक्ष्य तान्

[12] A : मध्ये pour गव्यं

[13] A : कूर्चांश्च pour कूर्चं च

[1]पिधाय च पिधानेन शिवमन्त्रेण देशिकः । शिवाग्रे गोमयालिप्ते स्थण्डिलं [2]व्रीहिभिस्ततम् ॥
[3]विधानात्कल्पयित्वाथ पद्मं तत्र प्रकल्पयेत् । चतुर्दलसमायुक्तं[4] [5]कर्णिकाशोभितं च तत्॥७॥

[ कुम्भस्थापनम्[6] ]

तद्रेखां पूरयित्वाथ[7] तण्डुलैस्तु[8] तिलैस्ततः । पृथिव्यादीनि तत्त्वानि प्रदीपेन समर्चयेत् ॥८॥
मध्यादीनि [9]स्वनाम्नैव कर्णिकायां ततो न्यसेत् । [10]कलशांस्तारमुच्चार्य[11] तदाद्यांश्चापि[12] देशिकः
पूर्वादि विन्यसेत्तेन चतुरः कलशानपि । मध्यस्थं शुद्धवस्त्रेण वेष्टयित्वा समाहितः ॥ १० ॥
तेषु हृन्मन्त्रमुच्चार्य गन्धपुष्पादिनार्चयेत् । प्रधानकलशं तेषु पञ्चमेनाभिमन्त्रयेत् ॥ ११ ॥
पुरुषेणेन्द्रदिक्संस्थमघोरेण तु याम्यगम् । वामेनोत्तरदिक्संस्थं [13]पश्चिमं सद्यमन्त्रतः ॥ १२ ॥
[14]एवं तानभिमन्त्र्याथ [15]धेनुं तेषु प्रदर्शयेत् । [16]तत्प्राच्यां दिशि देवाग्रे शान्तिहोमं [17]समारभेत्॥

---

[1] A : विधाय च विधानेन ; C : पिधाय च विधानेन

[2] A : व्रीहिसंयुतम् ; C, E : व्रीहिभिस्ततः [3] A : विधानं कल्पयित्वाथ ; E : चतुरश्रं कल्पयित्वा

[4] C, D, E : सुसंयुक्तं pour समायुक्तं

[5] D : कर्णिकाशोभनं च तत् ; E : कर्णिकं शोभनं च तत्

[6] Cf. *Vīrāgama*, **53**, 16b-23a :

शिवबीजेन मन्त्रेण स्थापयेच्छिवकुम्भकम् । गौरीबीजेन वर्धनीं स्थापयेद्देशिकोत्तमः ॥
सवस्त्रं सहिरण्यं च सकूर्चं सापिधानकम् । गन्धपुष्पादिनाभ्यर्च्य स्थापनं तु समारभेत् ॥
प्रथमावरणे चैव कलशानष्ट विन्यसेत् । द्वितीयावरणे चैव विंशतिं कलशान्न्यसेत ॥
तृतीयावरणे चैव षट्त्रिंशत्कलशान्न्यसेत् । चतुर्थावरणे चैव चतुश्चत्वारिंशकं भवेत् ।
क्षीरेण पूरयेद्द्रोनं सवस्त्रं सापिधानकम् । विन्यसेत्तु विशेषेण देवतानाम शृण्वथ ॥
प्रथमावरणे चैव विद्येश्वरांश्च विन्यसेत् । द्वितीयावरणे चैव विघ्नेशस्तत्र देवता ॥
तृतीयावरणे चैव ब्रह्मा तत्राधिदेवता । गन्धैः पुष्पैश्च धूपैश्च दीपैश्चैव निवेदयेत् ॥

[7] A : तु pour अथ

[8] A : सतिलैः pour तु तिलैः

[9] C, D : स्वनामेन

[10] A : कलशान्तरमुच्चार्य

[11] A omet le passage qui va de कर्णिकायां ततो न्यसेत् à तेषु हृन्मन्त्रमुच्चार्य (11a) et lit : कलशान्तरमुच्चार्य गन्धपुष्पादिनार्चयेत्

[12] E : अथ pour अपि

[13] C, D : पश्चिमे

[14] C, D, E : ईशानेनाभिमन्त्र्याथ

[15] E : धेनुमुद्रां pour धेनुं तेषु

[16] A : प्राच्यां दिशि च

[17] E : समाचरेत्

[शान्तिहोमः[1]]

कुण्डे [2]वा चतुरश्रे तु[3] स्थण्डिले सैकतेऽपि [4]वा । समिदाज्यचरूणां तु प्रत्येकं तु [5]शताहुतीः ॥
जुहुयात्तिलसंमिश्र[6]तण्डुलं च तथा भवेत् । [7]आज्याहुतिशतं पश्चाज्जुहुयाद्देशिकोत्तमः ॥१५॥
[8]समिधो हृदयेनाथ [9]चाज्यं तु [10]शिखया हुनेत् । अघोरेण [11]चरुं चैव [12]तिलमन्त्रेण होमयेत् ॥
सर्वात्मना पुनः सर्पिरेवं कृत्वा समाहितः । अभिषेकं तु तत्काले तैस्तैर्मन्त्रैः समर्पयेत् ॥१७॥

[ अभिषेकः[13] ]

प्रत्येकं धूपमुत्क्षिप्य [14]तोयस्नानान्तरान्तरम् । शङ्खभेर्यादिनिर्घोषैः [15]स्तोत्राध्ययनमङ्गलैः॥१८
[16]नृत्तगीतसमायुक्तमभिषेकं [17]समाचरेत् । चन्दनागरुकर्पूरैर्लिङ्गमालिप्य [18]सर्वतः ॥ १९ ॥
नैवेद्यं [19]तु ततो [20]दद्यात्ताम्बूलं च निवेदयेत् । [21]नवाहमुत्तमं प्रोक्तं सप्ताहं मध्यमं भवेत् ॥

---

[1] Cf. *Vīrāgama*, 53, 23b-30:
ततो होमः प्रकर्तव्यो नव पञ्चैकमेव वा । कुण्डं वा स्थण्डिलं वापि चतुरश्रं वृत्तमेव वा ॥
अग्निमुखं च संकल्प्य पूर्वोक्तेन क्रमेण तु । समिदाज्यचरुलाजाः सर्षपाश्च यवास्तिलाः ॥
मुद्गमाषसमायुक्तं नवद्रव्यमिहोच्यते । समिध ईशमन्त्रेण आज्यं च पुरुषेण तु ॥
अघोरेण चरुं हुत्वा लाजान्वामेन चैव हि । सर्षपं सद्यमन्त्रेण यवान्हृदयमन्त्रतः ॥
तिलान्वै शिरोमन्त्रेण मुद्गं तु शिखया युतम् । माषं नेत्रेण हुत्वाथ यथाक्रमेण हूयते ॥
अष्टोत्तरशतं वापि पञ्चाशत्पञ्चविंशतिः । हुतसंख्या इति प्रोक्ता द्रव्यान्ते व्याहृतिं हुनेत् ॥
घृतमिश्रेति मन्त्रेण जुहुयात्तदनन्तरम्। हुत्वान्ते च यदस्येति पूर्णाहुतिमथाचरेत् ॥
आचार्यं पूजयेत्तत्र पदार्थान्पूजयेत्ततः ।

[2] E : तु pour वा
[3] E : वा pour तु
[4] A : च pour वा
[5] A : शताहुतिः
[6] A : संमिश्रं pour संमिश्र
[7] A : आज्याहुतिं शतं
[8] A : समिद्धृदयमन्त्रेण
[9] A : प्राज्यं तु
[10] C, E : शिवयोर्भवत्
[11] C : चरुंश्चैव
[12] C, D : मिश्रमन्त्रेण ; E : लाजं वामेन
[13] Cf. *Vīrāgama*, 53, 31-32a:
प्रासादेन तु मन्त्रेण स्नापयेच्छिवकुम्भकम् । गौरीबीजेन मन्त्रेण वर्धनीं स्नापयेत्ततः ॥
शेषांश्च कलशांश्चैव स्नापयेत्तु यथाक्रमम् ।
[14] A : ततः pour तोय
[15] A : तत्र pour स्तोत्र
[16] C, D, E : गीतनृत्त pour नृत्तगीत
[17] C, D, E : समाप्य च
[18] C, D, E : सर्वशः
[19] E : च pour तु
[20] C, E : दत्त्वा pour दद्यात्
[21] Cf. *Kāraṇāgama*, I, 17, 14b-15a :
मासं वाप्यर्धमासं वा सप्तवारमथापि वा । पञ्चाहं वा त्रिरात्रं वा एकाहं संप्रपूजयेत् ॥

पञ्चाहमधमं [1]चैव प्रोक्तं क्षीराभिषेकतः । [2]देशिकं साधकं चापि स्तोत्राध्ययनपाठकान्[3] ॥२१॥
[4]तोषयेद्धेमवस्त्राद्यैर्यथाविभवविस्तरम् । अथवान्यप्रकारेण वक्ष्ये क्षीराभिषेचनम् ॥ २२ ॥

[क्षीराभिषेके प्रकारान्तरम्[5]]

[6]गाः शिवाग्रे समानीय प्रोक्षयित्वा शिवाम्भसा । [7]मार्त्तिके नवपात्रे वा काञ्चनादिविनिर्मिते॥
[8]क्षालिते प्रोक्षितेऽस्त्रेण दोहयित्वाथ सत्वरम् । धारोष्णेन ततस्तेन वत्सरेणाभिषेचयेत्॥२४॥

[दध्याज्याभिषेकः]

[9]पूर्वोक्तेन प्रकारेण [10]पञ्चभिः कलशैस्तु वा । [11]दध्याज्यमपि संस्थाप्य पूर्ववद्धोमसंयुतम्॥२५॥
तद्वदेवाभिषिच्यैवं सर्वयज्ञफलं [12]लभेत् ।

[गोप्रशंसा[13]]

[14]गोभ्यः पवित्रं लोकेऽस्मिन्न किंचिदपि[15] विद्यते ॥२६॥
[16]गवामूधसि गङ्गाद्या वेदयज्ञाः समन्त्रकाः । संस्थिताः सर्वदेवाश्च तासामङ्गानि संश्रिताः ॥

---

[1] C, D, E : प्रोक्तमेवं pour चैव प्रोक्तं
[2] A : देशिकः साधकश्चापि
[3] C, D, E : पारगान् pour पाठकान्
[4] C, D, E : तोषयेदथ pour तोषयेद्धेम
[5] Cf. *Vīrāgama*, 53, 5-7 :
नन्दा भद्रा च सुरभिः सुशीला सुमनास्तथा । पञ्च गावः समुत्पन्ना लोकानुग्रहकाम्यया ॥
तासां वर्गेषु जातानां क्षीरं संगृह्य देशिकः । क्षीरस्नानं त्रिधा प्रोक्तमुत्तमं मध्यमाधमम् ॥
धारोष्णपयसा चैव स्नापयेद्धृदयेन तु । अधमं चैतदुद्दिष्टम् ”
[6] A : गां pour गाः
[7] C : मुक्तिकेन तु पात्रे ; D : मृत्तिकेन ते पात्रे ; E : मौक्तिके चैव पात्रे
[8] C, D, E : क्षालितेऽस्त्रेण तस्मिंस्तु
[9] A : पूर्वमुक्तप्रकारेण ; C, D : पूर्वोक्तस्य प्रकारस्य
[10] A : फलं च विकलं भवेत्
[11] A : दध्याज्यमावपि
[12] A : भवेत् pour लभेत्
[13] Cf. *Dīptāgama*, 28, 4-9 et 11-12a :
देवानां यजनार्थाय सर्वलोकहिताय च । गावो माता स्मृता भूमौ स्नानार्थं तु शिवाज्ञया ॥
गोषु देवाः शिवा नित्यं गोभिर्यज्ञः प्रवर्तते । ब्रह्मविष्णू स्थितौ नित्यं शृङ्गमूले व्यवस्थितौ ॥
शृङ्गाग्रे तु स्थितं तीर्थं स्थावरं जङ्गमं तथा । ललाटे षण्मुखः प्रोक्तो ग्रीवामध्ये स्थितो हरः ॥
कम्बलाश्वतरौ नागौ नासापुटसमाश्रितौ । कर्णयोरश्विनौ देवौ चन्द्रार्कौ चक्षुषि स्थितौ ॥
दन्तेषु मरुतो देवा जिह्वायां वरुणः स्थितः । सरस्वती च हुंकारे यमयक्षौ च गण्डयोः ॥
खुरमध्ये च गन्धर्वाः खुराग्रेषु च पन्नगाः । खुराणां पश्चिमाग्रे तु खुरेषु गण एव च ॥...
क्षीरपाने गवां नित्यं राशयोऽङ्गुलिसंस्थिताः । आदित्यरश्मयो वाले गोमूत्रे जाह्नवी तथा ॥
ऋषयश्च तथा सर्वे रोमकूपे व्यवस्थिताः ।
[14] A : योग्यः pour गोभ्यः
[15] A : किंचिदन्यं न pour न किंचिदपि
[16] A : गावं मूलेऽथ गङ्गाद्यदेवयज्ञाः समन्त्रकान्

[ गव्यैः षड्भिरभिषेके फलम् ]

तस्माद्गोदेहजैः षड्भिर्मूत्राद्यै रोचनान्तकैः । शिवप्रियैर्विशेषेण शिवपूजां समाचरेत् ॥ २८ ॥
पञ्चगव्यविधानेन [1]पञ्चभिर्वा पृथक् पृथक् । पूर्वाह्णे चैव मध्याह्ने लिङ्गे कृत्वाभिषेचनम्॥२९॥
[2]गोरोचनामथाभ्यर्च्य चन्दनक्षोदमिश्रिताम्[3] । [4]शिवलिङ्गे तु यो भक्त्या [5]सकृद्वापि [6]समर्चयेत्॥
सोऽनन्तफलमाप्नोति शैवं धाम गमिष्यति ॥ ३१ ॥

जलं पयो दध्यपि [7]सर्पिरन्यल्लिङ्गे सकृद्वा विधिना प्रयुक्तम् ।
[8]एनांसि पुंसः क्रमशः शतार्धैः शतोत्तरं [9]संहरतीति विद्धि ॥ ३२ ॥

यः पञ्चगव्येन सकृत्करोति लिङ्गेऽभिषेकं शुचिरप्रमत्तः ।
स सप्तजन्मप्रभवैश्च पापैर्विमुच्यते नात्र हि[10] संशयोऽस्ति ॥ ३३ ॥

[11]तस्माच्च गोदेहभवैश्च षड्भिर्भक्त्या [12]च यत्नेन शिवं सकृद्वा ।
समर्चयेद्यो विधिवन्मनुष्यस्तस्यापि च स्यात्सफलं तु जन्म ॥ ३४ ॥

इदं सर्वेषु [13]कर्तव्यं सकृद्वा [14]विधिवन्नरैः । अष्टम्यां च चतुर्दश्यां [15]कृष्णे पर्वणि [16]चादरात्॥
॥ ३५ ॥

[17]इत्यजिताख्ये [18]महातन्त्रे [क्रियापादे] [19]क्षीराभिषेकविधिर्नाम

एकत्रिंशः पटलः[20] ॥

---

[1] A : पञ्चगव्यां [2] A : गोरोचनम् pour गोरोचनाम् [3] A : मिश्रकान् pour मिश्रिताम्
[4] A : शिवलिङ्गं [5] A : सकृच्चापि ; C : सकृत्सापि [6] C, D : समाचरेत्
[7] A : सर्पिकं वा लिङ्गे [8] A : एवं हि pour एनांसि
[9] C, D, E : वै महर्तीति विद्धि [10] C : तु pour हि ; E : च
[11] E : तस्मात्तु [12] E : युतः साम्बशिवं सकृद्वा
[13] C, D, E : देवेश pour कर्तव्यं [14] C : विधिना नरैः
[15] A : कृष्णपर्वणि [16] C, D : वाचरेत् ; E : कारयेत्
[17] E : इत्यजिते pour इत्यजिताख्ये [18] E omet महातन्त्रे
[19] A : क्षीराभिषेकविधिः त्रिंशः पटलः ; C, E : क्षीराभिषेकविधिपटलः ; E : क्षीराभिषेकविधिस्त्रिंशतपटलः
[20] C ajoute समाप्तः

## [द्वात्रिंशः पटलः]

### [1]लिङ्गपूरणविधिः[2]

[लिङ्गपूरणफलम्; पूरणद्रव्याणि च[3]]

**[4]लिङ्गपूरविधिं वक्ष्ये सर्वकामार्थसाधनम् । यत्र राष्ट्रे तु विधिना क्रियते लिङ्गपूरणम्[5] ॥ १ ॥**
**तत्र [6]मृष्टान्नपानादीँल्लभन्ते सततं प्रजाः । शालि[7]नीवारगोधूमयवाद्यन्नं [8]सुसंस्कृतम् ॥ २ ॥**
**नवमृत्पात्र[9]संसिद्धं [10]दध्याज्याभ्यां परिप्लुतम् । संपाद्य तेन कुर्वीत [11]तथा वै तण्डुलैर्नवैः ॥**

---

[1] Les détails concernant le लिङ्गपूरणविधि viennent dans les मासपूजाविधिपटल des autres *āgama*; cf. *Aṃśumad* 8, *Kāmika* II, 12 et 16, *Kāraṇa* I, 111, **116**, 119, 124 et 128 et II, 36, 37 et 41, *Cintya* 22, *Sahasra* **15**, 22, 24 et 25 et *Svāyambhuva* **27**, 28 et 32

[2] C : लिङ्गपूजाविधि:

[3] Cf. *Kāraṇāgama*, I, 118, 1-3 :
अथात: संप्रवक्ष्यामि अन्नपूजाविधिक्रमम् । अन्नं प्राणात्मकं श्रेष्ठं सर्वजन्तुप्रतिष्ठितम् ॥
तस्मादन्नाभिषेकं तु मम प्रीतिकरं शुभम् । अन्नरूपं विशेषेण मम रूपमिति स्मृतम् ॥
शाल्यन्नमुत्तमं प्रोक्तं व्रीह्यन्नं मध्यमं भवेत् । चरुपाकविधानेन अर्चनार्थं हि विग्रहे ॥

cf. *ibid*, I, 124, 3b-4 :
तिलपूजाफलसमो न भूतो न भविष्यति । भारादिदशभारान्तं पूजनार्थं प्रगृह्य च ॥
क्षालनं शोधनं कृत्वा शोषयेच्चास्त्रमन्त्रत: ।

cf. *ibid*, I, 116, **1-2** :
अथात: संप्रवक्ष्यामि गन्धपूजाविधिक्रमम् । श्रीकरं विजयं पुण्यं सर्वरोगनिवारणम् ॥
गन्धं शतपलं प्रोक्तमगरुं कृष्णगन्धकम् । कुङ्कुमं मृगनाभिं च कर्पूरं हिमतोयकम् ॥

cf. *ibid*, I, 119, 3-4 :
नानापुष्पसमायुक्तैश्चम्पकोत्पलजातिभि: । नीलोत्पलप्रसूनैश्च पूर्वोक्तपुष्पजातिभि: ॥
पुष्पै: पत्रै: समाहृत्य संपातं सम्यगाचरेत् ।

cf. *Svāyambhuvāgama*, **28, 1** :
ज्येष्ठमासे तु कर्तव्यं फलपूजाविधिं शृणु । पनसाम्रकदल्यादि सुपक्वं फलमानयेत् ॥

[4] A : लिङ्गपूरणविधि ; C : लिङ्गपूजाविधि [5] C, D, E : पूरकम् pour **पूरणम्**

[6] A : मृष्टान्नपानादि लभते ; E : मृष्टान्नपानादीन् भजन्ते [7] A : गोधूमनीवार pour नीवारगोधूम

[8] **A** : तु pour सु [9] A : पिण्ड pour पात्र [10] A : दध्याज्यं परित: प्लुतम् ; C : दध्याज्यामपरिप्लुताम्

[11] A : तेषां pour तथा

तिलैः कृष्णैश्च सिद्धार्थैः [1]क्षालितैः [2]शोधितैस्ततः । गव्येन नवनीतेन सर्वगन्धमयेन वा[3]॥४॥
[4]क्षोदेन पञ्चगन्धैश्च [5]पुष्पैर्नानाविधैरपि । फलैः स्वादुतरैश्चापि पत्रै[6]र्बिल्वादिभिस्ततः ॥ ५ ॥

[अन्नादिद्रव्यपूरणविधिः[7]]

[8]नित्यावसाने चाप्यह्नि [9]सहस्रादिषु संभवैः । कलशैरभिषिच्येशं[10] कृत्वा पूजां विशेषतः ॥६॥
मूर्तिहोमं दिशाहोमं शान्तिहोममथापि वा । कारयित्वा हविर्दत्त्वा परमान्नं [11]घृतप्लुतम्॥७॥
प्रभूतं चाथ ताम्बूलं मुखवाससमन्वितम् । दत्त्वा [12]देवस्य पार्श्वे तु तद्द्रव्यैः पूरणं भवेत् ॥८॥
तानि पात्रेषु [13]संगृह्य प्रोक्षयित्वा शिवाम्भसा । पुण्याहं वाचयित्वाथ चालभ्यास्त्रेण मन्त्रवित्॥
स्थलशुद्धिं ततः कृत्वाभ्युक्ष्य[14] गन्धोदकेन च । चम्पकोत्पलजात्यादिनाना[15]पुष्पाभिरामया॥

---

[1] C : क्षालिते pour क्षालितैः

[2] A : सूचितैः pour शोधितैः ; C : शोधिते [3] A : च pour वा

[4] C : क्षोदे चारिगन्धैश्च; D : क्षोदेन वारिगन्धैश्च ; E : क्षोदैश्चागरुगन्धैश्च

[5] C, D, E : पूर्णैः pour पुष्पैः [6] A : ज्वाला pour बिल्व

[7] Cf. *Kāraṇāgama*, I, 118, 4-11a [ अन्नपूरणविधिः ] :
सद्योऽधिवासनं कुर्यात्सर्वकर्म समाचरेत् । पयसा स्नापयेद्दध्ना घृतेन मधुना ततः ॥
खण्डशर्करया पश्चात्फलपुष्परसैस्ततः । स्नानं मूलेन कर्तव्यं प्रत्येकं नववारिणा ॥
शतमष्टोत्तरं देयं कलशानां क्रमेण तु । संपूज्य धूपदीपादि दत्त्वाप्यञ्जलिपूर्वकम् ॥
पश्चादन्नेन संपूर्य लिङ्गं पीठं क्रमेण तु । दद्याद्वित्तानुसारेण भारादि दशभारकम् ॥
संपूज्य मूलमन्त्रेण दत्त्वार्घ्यं हृदयेन तु । नैवेद्यं दापयेत्पश्चाद्व्यञ्जनादिसमन्वितम् ॥
हस्तोद्वर्तनताम्बूलं मुखवाससमन्वितम् । श्रीमत्पञ्चमहाशब्दैर्दर्पणच्छत्रचामरैः ॥
गेयनृत्तकरस्तोत्रैः संतोष्याप्यभिवन्द्य च । आचार्यं पूजयेत्पश्चाद्दक्षिणां संप्रदाय च ॥
अन्नपूजाविधिः प्रोक्तः "

cf. *ibid*, I, 124, 6b-12a [तिलपूरणविधिः] :
कुण्डमण्डलहोमादि पूर्ववत्सर्वमाचरेत् । द्वारपूजां ततः कृत्वा लिङ्गशुद्धिं समाचरेत् ॥
क्षीरं वा गन्धतोयं वा पञ्चामृतमथापि वा । यथेष्टं स्नापयेद्धीमाञ्शिव मन्त्रमनुस्मरन् ॥
पूर्वोक्तेन विधानेन स्नपनं कारयेत्ततः । व्योमव्यापि समुच्चार्य तिलवज्राङ्कितं बुधः ॥
शक्तिमन्त्रं विशेषेण भूसुराणां जपेत्ततः । प्रभूतहविषं दत्त्वा ताम्बूलं च निवेदयेत् ॥
धूपदीपसमायुक्तमुपचारेण संयुतम् । इत्येवं शिवपूजायां शनिदोषनिकृन्तनम् ॥
आचार्यं पूजयेत्तत्र वस्त्रहेमाङ्गुलीयकैः । एवं यः कुरुते मर्त्यः स पुण्यां गतिमाप्नुयात् ॥

cf. *ibid*, I, 116, 3-6 [गन्धपूरणविधिः] :
नानापुष्पसमायुक्तमधिवासनमारभेत् । यागशालामलंकृत्य कुण्डमण्डलसंयुतम् ॥
पूजयेत्तु विशेषेण होमकार्यं समाप्य च । वाद्यघोषसमायुक्तं प्रविशेद्गर्भगेहकम ॥
नित्यपूजावमाने तु लेपयेत्तु सुगन्धकैः । नैवेद्यं धूपदीपादीन्कल्पयेत्तु चतुर्मुख ॥
एवं यः कुरुते मर्त्यः पुत्रपौत्रविवर्धनम् । गन्धपूजाविधिः प्रोक्तः "

cf. *Kāraṇāgama*, I, 119, 1-2 et 4b-8 [पुष्पपत्रपूरणविधिः]
अथ वक्ष्ये विशेषेण पुष्पपूजाविधिक्रमम् । सर्वपापहरं चैव सर्वदोषनिकृन्तनम् ॥
विशेषस्नपनोपेतं पञ्चामृतसमन्वितम् । विशेषहोमसंयुक्तं समिदाज्यान्नकैः सह ॥
पूर्ववद्विधिना सर्वं कारयेत्तु विचक्षणः । लिङ्गमापूरयेद्विद्वानुक्तपुष्पैर्विशेषतः ॥
लिङ्गमूर्धादि पीठान्तं स्थलान्तं वा समाचरेत् । वस्त्रैराभरणैर्माल्यैरलंकृत्य विशेषतः ॥
नैवेद्यं दापयित्वाथ व्यञ्जनेन समन्वितम् । पानीयाचमनं दद्यात्ताम्बूलं दापयेत्ततः ॥
धूपदीपसमायुक्तं दर्पणछत्रचामरैः । गीतवाद्यसमायुक्तं नृत्तान्तं सम्यगाचरेत् ॥
एवं संपूज्य विधिवत्कर्तुरिष्टफलं भवेत् ।

cf. *Kāmikāgama*, II, 16, 1b-6a [पत्रपुष्पपूरणविधिः] :
विशेषस्नपनोपेतं पञ्चामृतसमन्वितम् । विशेषपूजासंयुक्तं पायसेन समन्वितम् ॥
विशेषहोमसंयुक्तं समिदाज्यान्नकैः सह । नानाफलसमायुक्तैर्द्रव्यैः पूर्णां विधाय च ॥
पीठादिलिङ्गमूर्धान्तं फलैर्मूलेन वा नयेत् ॥ कृत्वान्तर्हितलिङ्गं तु तद्बहिः पूरणं तु वा ॥
वस्त्राभ्यां वेष्टयेल्लिङ्गं पीठं कवचमन्त्रतः । सन्ध्यन्तरे परे वाह्नि तानि तस्माद्बहिर्नयेत् ॥
क्रियान्ते पूजयेत्कर्ता देशिकं वस्त्रकाञ्चनैः । यद्यदिष्टफलं कर्तुस्तत्तच्छीघ्रं भविष्यति ॥

[8] A : नित्यादिविदितेऽप्यह्नि
[9] C : संस्नावादिषु
[10] A : एनं pour ईशं
[11] C : घृतं प्लुतम् ; E : परिप्लुतम्
[12] A : देवं च पश्चात्तु
[13] A : संग्राह्य
[14] E : प्रोक्ष्य pour अभ्युक्ष्य
[15] A : पुष्पाणि श्रद्धया pour पुष्पाभिरामया

मालया वेष्टयेल्लिङ्गमभितः सर्वतः समम् । [1]वेष्टयित्वा तथा पीठं पश्चाद्दत्त्वार्घ्यमुत्तमम् ॥११॥
दत्त्वा चाचमनं तत्र ततः पूरणमाचरेत् । पूरयेद्गर्भगेहं[2] तु यथा लिङ्गं न दृश्यते ॥ १२ ॥
[3]सवेदिकं ततश्चापि मालाभिः परिवेष्टयेत् । संवत्सरात्मकं मन्त्रं ततः सर्वात्मसंज्ञकम्[4] ॥१३॥
[5]पठेन्मन्त्रं तदा मन्त्री नमस्कृत्वा मुहुर्मुहुः । स्तोत्रमङ्गलवाद्यैस्तु गीतनृत्तसमाकुलैः ॥ १४ ॥
शङ्खभेर्यादिनिर्घोषैस्तत्कालेऽध्ययनं[6] भवेत् । कवाटयोगं [7]कृत्वाथ कृत्वा चैव प्रदक्षिणम्॥१५॥
[8]पतित्वा दण्डवद्भूमौ [9]निर्गच्छेद्देशिकोत्तमः । अष्टम्यां च चतुर्दश्यां पञ्चदश्यां [10]सितेतरे ॥
आर्द्रायामर्कवारे[11] [12]चाप्येवं कुर्वन्सकृन्नरः । सर्वयज्ञतपोदानतीर्थवेदेषु[13] यत्फलम् ॥ १७ ॥
तत्फलं सकलं लब्ध्वा शिवेन सह मोदते । फलपूरप्रदाने तु[14] फलं दशगुणोत्तरम् ॥ १८ ॥
भक्त्या वित्तानुसारेण चललिङ्गेऽथवाचले । तुल्यमेव हि तत्प्रोक्तं फलमाढ्यदरिद्रयोः ॥१९॥

[15]इत्यजिताख्ये [16]महातन्त्रे [क्रियापादे] [17]लिङ्गपूरणविधिर्नाम
द्वात्रिंशः पटलः ॥

---

[1] C, D, E : वेष्टयित्वाथ पीठान्तं
[2] A : गेहे pour गेहं
[3] C : वेदिकं च ; E : वेदिकां च
[4] A : संस्थितम् pour संज्ञकम्
[5] A : पीठे मन्त्रं
[6] C : तत्कालाध्ययनं pour तत्कालेऽध्ययनं
[7] E : कृत्वा वै कुर्यादथ
[8] E : निपत्य pour पतित्वा
[9] C, D, E : निर्गच्छेद्देशिकः सुधीः
[10] A : सिते नरैः
[11] E : इन्दुवारे pour अर्कवारे
[12] A : वा pour च
[13] A : देवैश्च pour वेदेषु ; E : देशेषु
[14] A : प्रदानस्तु pour प्रदाने तु ; E : प्रदानेन
[15] E : इत्यजिते pour इत्यजिताख्ये
[16] E omet महातन्त्रे
[17] A : पूरणविधिः एकत्रिंशः पटलः ; C : लिङ्गपूजाविधिपटलः समाप्तः ; D : लिङ्गपूरविधिरेकत्रिंशत्पटलः । ग्रन्थं १९ ; E : लिङ्गपूरणविधिपटलः

## Sahasraprasthaghṛtasnapana

N

| | | |
|---|---|---|
| 86 | 87 | 88 |
| 85 | 49 | 50 |
| 84 | 48 | 20 |
| 83 | 47 | 19 |
| 82 | 46 | 18 |
| 81 | 45 | 17 |

| | |
|---|---|
| 89 | 90 |
| 51 | 52 |
| 21 | 22 |

| | |
|---|---|
| 91 | 92 |
| 53 | 54 |
| 23 | 24 |

| | | |
|---|---|---|
| 93 | 94 | 95 |
| 55 | 56 | 96 |
| 25 | 57 | 97 |
| 26 | 58 | 98 |
| 27 | 59 | 99 |
| 28 | 60 | 100 |

O




E

| | | |
|---|---|---|
| 80 | 44 | 16 |
| 79 | 43 | 15 |
| 78 | 42 | 14 |
| 77 | 41 | 13 |
| 76 | 40 | 39 |
| 75 | 74 | 73 |

| | |
|---|---|
| 12 | 11 |
| 38 | 37 |
| 72 | 71 |

| | |
|---|---|
| 10 | 9 |
| 36 | 35 |
| 70 | 69 |

| | | |
|---|---|---|
| 5 | 29 | 61 |
| 6 | 30 | 62 |
| 7 | 31 | 63 |
| 8 | 32 | 64 |
| 34 | 33 | 65 |
| 68 | 67 | 66 |

S

✱ Śivakumbha
* Vardhanī

Echelle : 1 tāla = 1 cm.

## [त्रयस्त्रिंशः पटलः]

### घृतस्नानविधिः[1]

[घृतस्नानकालः, तद्भेदाश्च]

[2]घृतस्नानमथो[3] वक्ष्ये सर्वशान्तिकरं परम् । [4]इषोर्जयोस्तु पूर्णायां सहस्साहस्ययोस्तथा ॥ १ ॥
आर्द्रायामर्कवारे च कर्तुर्जन्मदिनेऽपि [5]च । नूतनं तु [6]घृतं गव्यं सर्वदोषविवर्जितम् ॥ २ ॥
[7]मार्गशीर्षकमासे[8] तु ह्यार्द्रायां च विशेषतः । [9]सहस्रप्रस्थमर्धं[10] वा शतप्रस्थमथापि वा ॥ ३ ॥
[11]संगृह्य स्नापयेत् [12]कृष्णे चतुर्दश्यां तु देशिकः । उत्तमं मध्यमं चान्यत्त्रिविधं तत्प्रकीर्तितम्
सौवर्णादिषु संस्थाप्य कलशेषु विधानतः । स्नपनं तु ततः कुर्यात्स्थापनं चाधुनोच्यते ॥ ५ ॥

[सहस्रप्रस्थघृताभिषेकः; तत्र सूत्रपातादि[13]]

[14]पूर्वोक्तमण्टपे [15]सम्यग्गोमयेनानुलेपिते । प्राङ्मुखैर्मनुसूत्रैस्तु तथैवोदङ्मुखैरपि ॥ ६ ॥

---

[1] Pour घृतस्नानविधि, voir *Kāmika*, II, 9, *Kāraṇa* I, 126, *Dīpta* 27, *Sahasra* 20 et *Sūkṣma* 28.

[2] Cf. *Dīptāgama*, 27, 1-2a :
अतः परं प्रवक्ष्यामि घृतस्नानविधिं परम् । आयुरारोग्यदं चैव पुत्रश्रीकीर्तिवर्धनम् ॥
राजा विजयमाप्नोति सर्वराष्ट्रविवर्धनम् ॥

[3] A : घृतस्नानं ततो

[4] A : सुषोज्ययोस्तु पौर्णम्यां

[5] A : वा pour च

[6] C : न गन्तव्यं pour घृतं गव्यं

[7] Cf. *Kāmikāgama*, II, 9, 1 :
मार्गशीर्षाख्यमासे तु यजेदार्द्रोडुके शिवम् । घृतस्नानसमोपेतं प्रागुक्तविधिना सह ॥

[8] D : मार्गशीर्षे तु मासे तु

[9] Les *śloka* 3b, 5, 12b, 13, 14a, 19b, 20a, 35a, 47b, 48, 50b, 51, 52, 53, 55a, 57b, 58 et 59b sont cités dans le *Saṃgrahasāraratnāvalī-kriyādīpikā* (ms. de Svāmināthaśivācārya, Dharmapuram, [ S ])

[10] A : आज्यं pour अर्धं

[11] A : संग्राह्य

[12] A : कृष्णचतुर्दश्यां

[13] Cf. *Dīptāgama*, 27, 2b-10a :
प्रासादस्याग्रतः कुर्यान्मण्डपं चाष्टहस्तकम् । चतुर्द्वारसमायुक्तं चतुस्तोरणभूषितम् ॥
पूर्णकुम्भयुतं चाग्रे वितानध्वजशोभितम् । दर्भमालासमायुक्तं मुक्तादामैर्विभूषितम् ॥
पुष्पमालासमायुक्तं स्तम्भानां परिवेष्टितम् । दर्पणोदरसंकाशमष्टमङ्गलशोभितम् ॥
गोमयालेपनं कृत्वा सूत्रं च तन्तु कारयेत् । त्रयोदशानि सूत्राणि प्राङ्मुखोदङ्मुखक्रमात् ॥
शताधिकानि चत्वारि चत्वारिंशत्पदं भवेत् । मध्यमे षोडशपदं बाह्यमेकावृतं त्यजेत् ॥
अष्टद्वाराणि संकल्प्य चतुर्विंशत्पदं भवेत् । दिशासु द्वादशपदं विदिशासु नव भवेत् ॥
एवं कृते पदे सम्यक् स्थण्डिलं कारयेद्बुधः । चतुःप्रस्थोत्तमं व्रीहिस्त्रिप्रस्थं मध्यमं भवेत् ॥
द्विप्रस्थमधमं प्रोक्तं तदर्धं तण्डुलं भवेत् । तदर्धं तिलमेवं तु लाजदर्भैः समन्वितम् ॥

[14] D : पूर्वोक्ते मण्टपे

[15] A : सम्यग्गोमयेनोपलिप्यते ; C : सम्यग्गोमये ननु लोप्यते

पदानि शालिपिष्टाक्तसूत्रेण परिकल्पयेत् । तालमात्रप्रमाणानि [1]पिण्डितानि [2]च तेष्वपि ॥७॥
पञ्चविंशत्पदं[3] मध्ये कुर्यादेकपदं ततः[4] । तद्बाह्ये परितो वीथीं महादिक्षु [5]च मध्यमे ॥ ८ ॥
द्वारार्थमपि तत्रैव [6]पदेनैकेन कल्पयेत् । कोणपार्श्वेऽथ[7] वीथ्यग्रे [8]द्वाराणि परिकल्पयेत् ॥९॥
स्थण्डिलं पूर्ववत्कृत्वा शालिभिर्विमलैस्ततः[9] । सर्वेषां मध्यमे [10]रन्ध्रपदे पद्मार्थमत्र तु ॥१०॥
संलुप्य[11] स्थण्डिलं कृत्वा कर्णिकाकेसरैर्युतम् । चतुर्दलसमायुक्तमब्जमालिख्य शोभनम् ॥११॥

[कुम्भस्थापनम्[12]]

प्रोक्षयित्वा शिवास्त्रेण ततः स्थापनमारभेत्[13] । शिवयोः [14]कलशौ द्वौ तु द्रोणद्रोणार्धपूरितौ[15] ॥
[16]तथान्ये कलशाः सर्वे दशप्रस्थेन [17]पूरिताः । [18]निर्दोषाः सुसमा ग्राह्याः क्षालयेत्ताञ्शिवाम्भसा॥
सितसूत्रेण तान्सर्वान्समावेष्ट्य [19]समन्ततः । प्रोक्षयित्वाथ [20]तान्सर्वाञ्शिवयोः कलशौ ततः॥
पञ्चगव्येन युक्तेन यथाविधि जनार्दन । [21]आपूर्य च ततो रत्नं काञ्चनं चापि निक्षिपेत्॥१५
[22]कूर्चावपि पिधायैतौ वस्त्रयुग्मेन वेष्टयेत् । ततश्च रुद्रकलशान्दशप्रस्थाज्य[23]पूरितान् ॥ १६ ॥
सर्वानपि समानीय प्रोक्षयित्वा शिवाम्भसा । स्थापयेत्कर्णिकामध्ये [24]शिवकुम्भं च वर्धनीम् ॥
[25]तयोर्बाह्ये [26]च चतुरः कलशांस्तु दलेषु च । स्थापयेच्च ततः [27]सर्वान्पूर्वाद्यावरणक्रमात्[28] ॥१८॥

---

[1] C : पण्डितानि ; E : खण्डितानि
[2] A : तथैष्वपि
[3] A : पदे pour पदं
[4] A : पदस्थित: pour पदं ततः
[5] C, D, E : अथ pour च
[6] C, D, E : पदमेकेन
[7] A : तु pour अथ
[8] A : द्वारार्थं pour द्वाराणि
[9] A : तथा pour ततः
[10] C, D, E : रन्ध्रे पदे pour रन्ध्रपदे
[11] C, D, E : विलिख्य pour संलुप्य
[12] Cf. *Dīptāgama*, **27**, 10b-11 :
शातकुम्भं शतं चैव विम्बप्रभसनन्वितम् । तन्तुना चित्रितान्कुम्भांस्त्रिद्विरेकक्रमेण तु ॥
क्षालयेद्धृतिमान्मन्त्री साधयेत्तु विशेषतः ।
[13] C, E : आचरेत् pour आरभेत्
[14] C : कलशोद्धृतं pour कलशौ द्वौ तु
[15] A : पूरिते pour पूरितौ ; C : पूरितम् ; S : द्रोणं तु शिवकुम्भं स्याद् द्रोणार्धं वर्धनी भवेत्
[16] A : नान्येक pour तथान्ये ; S : ततश्च रुद्रकलशान् शतप्रस्थाज्यपूरितान्
[17] A : पूरितान्
[18] S : निर्दोषांश्च च संगृह्य क्षालयेत्तु शिवाम्भसा
[19] C : समन्तरम् ; D, E : समान्तरम्
[20] C, D : सर्वांस्तान् pour तान्सर्वान् ; E : ताः सर्वाः
[21] A : आचार्यस्तु pour आपूर्य च
[22] A : कूर्चाय पिदधेदेतौ ; C : कूर्चावपि विधायैतौ ; E : सकूर्चपल्लवावेतौ
[23] A : आदि pour आज्य
[24] A : शिवकुम्भस्य
[25] A : ततो pour तयोः
[26] E : तु pour च
[27] E : सर्वानाद्यावरणसंस्थितान्
[28] C, D : स्थितान् pour क्रमात्

[ देवतायजनम्[1] ]

पुण्याहं वाचयित्वाथ[2] [3]प्रोक्ष्य घोरास्त्रमन्त्रतः । [4]शिवाख्ये पूर्ववद्यष्टा [5]शिवं देवीं तथोत्तरे ॥
[6]तयोर्बाह्ये यजेदेतान् [7]रुद्रान्मन्त्री शतेष्वपि । शम्भुं विभुं गणाध्यक्षं त्रियक्षं [8]च चतुर्ष्वपि ॥
पूर्वादिदलसंस्थेषु[9] रुद्रान्कुम्भेषु पूजयेत् । द्वितीयावरणे चाथ प्रागादिषु समर्चयेत् ॥ २१ ॥
देववन्द्यं च संवाहं विवाहं च [10]नभोलिहम् । विचक्षणमनन्तं च पावकं धीरमेव च ॥ २२ ॥
पातालाधिपतिं चापि वृषं वृषभमेव च । [11]उग्रनासं च शुभ्रं च लोहितं सर्वतोमुखम् ॥ २३ ॥
[12]विद्याधिपं ज्ञानभुजं सर्वज्ञं वेदपारगम् । [13]मातृवृतं [14]पिङ्गलाक्षं भूतपालं बलिप्रियम् ॥ २४ ॥
[15]सर्वविद्याधिपं चापि पूजयेत्क्रमशस्तथा[16] । तृतीये चापि धातारं सर्वदुःखहरं तथा ॥ २५ ॥
शीघ्रं लघुं वायुवेगं सूक्ष्मं तीक्ष्णं क्षयान्तकम् । [17]पञ्चाननं[18] पञ्चशिखं [19]कपर्दिमेघवाहनौ ॥२६
बलं चातिबलं [20]चैव पाशहस्तं महाबलम् । श्वेतं च श्वेतरूपं च श्वेतवासं [21]जलान्तकम् ॥२७॥
[22]वडवामुखं च भीमं च भूतिदं भूतिभूषणम्[23] । हन्तारं क्रूरदृष्टिं च [24]भवमन्तकमेव च ॥२८॥
[25]ऊर्ध्वकेशं विरूपाक्षं [26]धूम्रं लोहितमेव च । पूर्ववत्पूजयेदेतान्[27] प्रागादिषु[28] यथाक्रमम्॥२९॥
चतुर्थावरणे चापि [29]यमं [30]मृत्युहरं तथा । [31]धातारं च विधातारं [32]कर्तारं कालमेव च ॥३०
धर्ममीशं तथा ख्यातं संयोक्तारं यमप्रियम् । अग्निं रुद्रं हुताशं च पिङ्गलं [33]खादकं गुरुम् ॥३१

---

[1] Cf. *Dīptāgama*, 27, 12-13a :
शतरुद्राधिदैवत्यमेकैकं चार्चयेत्क्रमात् । प्रणवादिचतुर्थ्यन्तस्वनामाद्येन पूजयेत् ॥
गन्धपुष्पादिना पूज्य ''

[2] A : तु pour अथ
[3] C, D : प्रोक्ष्याघोरेण मन्त्रतः ; E : प्रोक्ष्य चाघोरमन्त्रतः
[4] S : शिवाख्यं
[5] A : अधिदेवीं ; C, S : शिवां देवीं
[6] C, D, E, S : ततो बाह्ये
[7] S : रुद्रान्मन्त्रशतैरपि
[8] E : चतसृष्वपि
[9] A : संस्थे तु pour संस्थेषु
[10] A : नभोऽनिलम्
[11] C, D, E : उग्रनाभं
[12] C, D, E : विद्यापतिं ज्ञानपतिं
[13] A : मातृवृत्तं ; C : मात्रा वृतं
[14] A : च लिङ्गाक्षं भूतपालिं
[15] A : सर्वविद्याशिवं
[16] C : तदा pour तथा ; D, E : ततः
[17] C, E : पञ्चशिखं कपर्दिं च निधीशं मेघवाहनम्
[18] D : पञ्चान्तकं
[19] A : कपर्दी मेघवाहनम्
[20] E : चापि
[21] A : जलान्तरम्
[22] A : बडवामुखभीमं च ; E : बडवामुखमीशं च
[23] C : लक्षणम् pour भूषणम्
[24] A : भगवन्तकमेव च
[25] E : ऊर्ध्वशेफं
[26] C, D, E : नीललोहितमेव च
[27] C, D, E : देवान् pour एतान्
[28] E : पूर्वादिषु
[29] A : याम्यं
[30] E : मृत्युं हरं
[31] C : यातारं
[32] A : कर्त्रलंकारमेव च
[33] C : खादगं ; D : खातदं

ज्वलनं दहनं [1]बभ्रुं [2]भस्मान्तं च भयान्तकम् । कपालीशमजं बुद्धं वज्रदेहं [3]पुरार्दनम् ॥३२॥
जटामकुटयुक्तं च नानारत्नधरं तथा । [4]निधीशं रूपवन्तं च [5]धन्यं सौम्यं [6]प्रमर्दनम् ॥३३॥
[7]सुप्रसादं प्रसादं च [8]लक्ष्मीशं बान्धवं तथा । कामरूपं सुदंष्ट्रं च पूजयेत्क्रमशः पुनः॥ ३४ ॥

[ अभिषेकः[9] ]

एवं संपूज्य गन्धाद्यैः स्वनामपदमन्त्रकैः । स्नापयेद्देवदेवेशं [10]कलशैस्तैर्यथाक्रमम् ॥ ३५ ॥
[11]आज्यं सर्वं तदादाय बहिरग्नौ विनिक्षिपेत् । तदर्धैः स्नपनं कुर्यात्प्रस्थैः पञ्चशतैरपि ॥३६

[ पञ्चशतप्रस्थघृताभिषेकः ]

मध्यमं तु समुद्दिष्टं तस्य च स्थापनक्रमः[12] । पूर्ववद्देवपूजा च विशेषोऽयं [13]प्रदृश्यते ॥ ३७ ॥
तत्संख्याः कलशाः सर्वे तदर्धपरिमाणकाः । शेषं सर्वं समं विद्धि ; कन्यसं यत्प्रकीर्तितम् ॥

[ शतप्रस्थघृताभिषेकः ; तत्र सूत्रपातः ]

[14]शतप्रस्थैर्घृतैस्तस्य स्थापनं चाधुनोच्यते । प्रागग्रैः कौशिकैः सूत्रैरुदगग्रैस्तथैव च ॥ ३९ ॥
पञ्चविंशत्पदं कृत्वा परितः षोडशं विना । मध्ये नवपदैरेकपदं [15]कृत्वा ततः सुधीः ॥४०॥

[ कुम्भस्थापनम् ]

[16]स्थण्डिलं पूर्ववत्कृत्वा यथाविधिपुरःसरम् । शिवयोः कुम्भयोर्युग्मं पञ्चगव्येन पूर्णयोः ॥
[17]रत्नहेमाढ्ययोश्चापि कूर्चयोः सापिधानयोः । वस्त्रवेष्टितयोश्चापि पूर्ववद्विन्यसेत्सुधीः ॥४२॥
ततो [18]बाह्ये दलाग्रेषु प्रागादिषु चतुर्ष्वपि । पूर्वप्रमाणान्कलशांश्चतुरो विन्यसेत्सुधीः॥ ४३ ॥
षोडशेष्वथ तद्बाह्ये पदेषु च [19]तथाविधान् । कलशान्षोडश[20] न्यस्य ततः पूजां [21]समारभेत् ॥

---

[1] D : बाहुं pour बभ्रुं
[2] E : भस्मान्तकं pour भस्मान्तं च
[3] A : प्रमर्दनम्
[4] C : तिथीशं रूपवर्णं च ; D : त्रयीशं रूपवर्णं च
[5] C : धरं pour धन्यं
[6] A : प्रदर्शनम्
[7] A : सुप्रसादप्रदं चैव
[8] A : लक्ष्मीवन्तं पुरं तथा
[9] Cf. *Kāraṇāgama*, I, 126, 6-8 :
द्वारपूजादिकं सर्वं पूर्ववत्कारयेद् बुधः । पश्चाद् घृतेन संपूज्य मूलमन्त्रमनुस्मरन् ॥
लिङ्गपीठं ततः स्नाप्य गन्धाद्यैरर्चयेद् बुधः । वस्त्राभरणैर्माल्यैरलंकृत्य विशेषतः ॥
नैवेद्यं पूर्ववत्कृत्वा ताम्बूलं च निवेदयेत् । धूपदीपसमायुक्तं नृत्तान्तं सम्यगाचरेत् ॥
[10] C, D, E : तैस्तैर्मन्त्रैः pour कलशैस्तैः
[11] A : पूज्य pour आज्यं
[12] A : स्थापनं क्रमात्
[13] E : प्रदर्श्यते
[14] A, C : शतप्रस्थघृतैस्तस्य
[15] A : कृत्वाथ तत्सुधीः
[16] E omet les *śloka* 41 et 42
[17] A : रत्नहेमौ तयोश्चापि ; C : रक्तहेमाढ्ययोश्चापि
[18] A : बाह्य pour बाह्ये
[19] A : यथा pour तथा
[20] A : षोडशान् pour षोडश
[21] E : समाचरेत्

## S'ataprasthaghṛtasnapana

N




S

✱ S'ivakumbha
✱ Vardhanī

Echelle : 1 tāla = 1 cm.

[ देवतायजनम् ]

[1]शिवौ पूर्ववदभ्यर्च्य [2]कुम्भयोस्तु चतुर्ष्वथ । धर्मादीन्पूर्वतोऽभ्यर्च्य ततो विद्येश्वरानपि॥४५

दिक्षु संपूजयेत्पश्चाद्विदिक्षु च[3] भवादिकान् । एवमभ्यर्च्य देवांस्तु ततः स्नपनमाचरेत्[4]॥४६॥

[5]त्रयाणामपि चैतेषां शान्तिहोमं तु कारयेत् । एवमेव [6]विधिः प्रोक्तो मधुनश्चापि केशव॥४७॥

[घृतस्नानानन्तरकरणीयम्[7]]

स्नापयेच्च ततो [8]धीमान्घृतस्नानादनन्तरम् । कलशैरपि पूर्वोक्तैः सहस्रादिषु [9]संभवैः ॥ ४८ ॥

ततो माषादिचूर्णेन सुगन्धामलकेन च । उद्वर्त्य बहुशो लिङ्गं [10]शुद्धं कृत्वा सपीठकम्॥४९॥

सुगन्धेनेषदुष्णेन[11] वारिणा [12]चाभिषिच्य च । ततो हरिद्रया [13]वापि समालिप्यार्द्रया शिवम्॥

[14]गन्धोदेनाभिषिञ्चेच्च शीतलेन [15]समाहितः । उशीरबिल्वपत्राद्यैर्विघृष्य बहुशः सुधीः ॥५१॥

[16]उष्णाम्बुना समन्ताच्च पीठं च क्षालयेत्स्थलम् । एवं कर्मणि निर्वृत्ते [17]नित्यवत्पूजयेच्छिवम्॥

---

[1] A : शिवं pour शिवौ

[2] A : चोभयोस्तु

[3] C, D, E : अपि pour च

[4] C, D : आरभेत् pour आचरेत्

[5] Cf. *Dīptāgama*, 27, 13-18a :

" पश्चाद्धोमं समाचरेत् । चतुर्दिक्षु चतुर्होमं कुर्यादध्ययनं तथा ॥
समिदाज्यचरूँल्लाजान्सर्षपांश्च यवांस्तिलान् । समिधः सद्यमन्त्रेण आज्यं वामेन हूयते ॥
चरुश्चैव हृदेनैव लाजं घोरास्त्रमन्त्रतः । सर्षपं पुरुषेणैव ईशानेन यवं हुनेत् ॥
तिलं वै कवचेनैव प्रत्येकाष्टशतं हुनेत् । शतमर्धं तदर्धं वा हूयते क्रमशः पुनः ॥
द्रव्यान्ते व्याहृतिं हुत्वा स्विष्टं पूर्णाहुतिं तथा । आचार्यं पूजयित्वा तु वस्त्रहेमाङ्गुलीयकैः ॥
मूर्तिपान्पूजयेत्पश्चात्तदन्तेऽध्यायिनां ददेत् ।

[6] A : विधिप्रोक्तामधुना चापि : C : विधिं प्रोक्तमधुना चापि ; D : विधिं प्रोक्तमधुनापि च ; E : विधिः प्रोक्तमधुनापि च ; corrigé sur la base du *Saṃgrahasāraratnāvalī*

[7] Cf. *Kāraṇāgama*, I, 126, 9-12 :

सन्ध्यान्ते चैव कर्तव्यं निर्माल्यापनये कृते । नालिकेरेण मुद्गं च मर्दयित्वा विचक्षणः ॥
उष्णोदकेन संस्नाप्य लिङ्गपीठस्थलं क्रमात् । कदलीदधिसंयुक्तं गुलखण्डसमन्वितम् ॥
लेपयित्वा विशेषेण मर्दयित्वा विचक्षणः । तुलसीबिल्वपत्रैश्च गन्धैश्चैव विघृष्य च ॥
यथेष्टं स्नापयेत्पश्चाच्छेषं पूर्ववदाचरेत् । एवं यः कुरुते मर्त्यः स पुण्यां गतिमाप्नुयात्

[8] S : धीमान् घृतस्नानान्तरेऽपि वा

[9] S : संभवे

[10] A : शुद्धिं pour शुद्धं

[11] C, E : कदुष्णेन pour ईषदुष्णेन

[12] A : चाभिषिच्यते

[13] A : च pour वा

[14] A : गन्धोदेनाभिषिच्यैनं ; S : गन्धोदकेनाभिषिञ्चेन्

[15] A : हरे ततः pour समाहितः

[16] C : कृष्णाम्बुना ; E : उष्णाम्बुभिः

[17] S : नित्यं संपूजयेच्छिवम्

चन्दनागरु[1]कर्पूरकुङ्कुमै [2]रोचनायुतैः । लिङ्गं पर्याप्तमालिप्य [3]धूपदीपे गुरुस्ततः ॥ ५३ ॥
पायसं च हविर्दत्त्वा क्षमस्वेति [4]समापयेत् । अधमं वा घृतस्नानं [5]यः सकृद्वापि कारयेत्॥५४॥
कल्पकोटिसहस्रं तु[6] शिवलोके महीयते[7] ।

[[8]घृतकम्बलविधिः[9]]

[10]घृतकम्बलकं चापि [11]यः शिवाय निवेदयेत् ॥५५॥
घृतस्नानफलं तस्य जायते तद्विधिं शृणु । सहस्रसहस्रमासे तु कृष्णपक्षे विशेषतः ॥ ५६ ॥
चतुर्दश्याममावास्यां घृतकम्बलमाचरेत् । नवनीतं [12]विशुद्धं तु गव्यं [13]संगृह्य देशिकः ॥५७॥

---

[1] A : कर्पूरै : pour कर्पूर
[2] E : रोचनैर्युतः
[3] A : धूपदीपेऽगरुं ततः ; C , E : धूपं दद्याद्गुरुस्ततः ; D : धूपं देयाद्गुरुस्ततः ; S : धूपयेदगरुं ततः
[4] A : समर्चयेत्
[5] C , D : यत् pour यः
[6] A : सहस्रैस्तु pour सहस्रं तु
[7] Cf. *Dīptāgama*, 27, 22-23a :
विसृज्य सर्वपापानि शिवलोके महीयते । कल्पकोटिसहस्राणि महाभाग्यसमन्वितः ॥
पुण्यक्षयात्परिभ्रष्टो राजा भवति धार्मिकः ।
[8] Pour घृतकम्बलविधि voir *Acintyaviśvasādākhya* 51, *Kāmika* II, 10, *Kāraṇa* I, 117 et II, 32, *Sahasra* 19 et *Svāyambhuva* 24
[9] Cf. *Kāmikāgama*, II, 10, 1-14a :
माघमासे मघर्क्षे तु कुर्याद्वै घृतकम्बलम् । कापिलं केवलं चाज्यं कृमिकीटादिवर्जितम् ॥
निरोमं नूतनं शुद्धं सुगन्धं स्थापयेद् गुरुः । शस्त्रेण निक्षिपेत्तोये वारुणं बीजमुच्चरन् ॥
तदाज्यं पिण्डवत्कृत्वा कुङ्कुमागरुसंस्कृतम् । हरिद्राचूर्णकर्पूरचूर्णाभ्यामपि संस्कृतम् ॥
हेमादिपात्रे संस्थाप्य धूपयित्वाभिमन्त्रयेत् । पञ्चब्रह्मषडङ्गैश्च शिवेन तदनन्तरम् ॥
विशेषस्नपनं कुर्यात्पञ्चगव्यामृतैस्तु वा । विशेषपूजां कृत्वान्ते स्थण्डिले स्थापयेद् घृतम् ॥
गन्धाद्यैरर्चयेद्धीमान् हृन्मन्त्रं सम्यगुच्चरन् । तत्पूर्वे स्थण्डिले धीमांस्तर्पयेच्छिवपावकम् ॥
पलाशसमिदाज्यान्नतिललाजसमन्वितम । शतमष्टोत्तरं हुत्वा पूर्णामन्ते विधाय च ॥
घृते संपातहोमं च पवित्रारोहवर्त्मना । कृत्वा संस्थापयेत्पूर्वं स्थण्डिले सपिधानकम् ॥
कवचेनावकुण्ठ्याथ प्रातर्मध्याह्न एव वा । संपूज्य पूर्ववद्देवं स्नपनादिसमन्वितम् ॥
विशेषेणार्चयित्वा तु सर्वालंकारसंयुतम् । धामप्रदक्षिणं कृत्वा शिवमन्त्रं समुच्चरन ॥
लिङ्गं सर्वत्र चालिप्य पीठान्तं सर्वपीठकम् । गन्धाद्यैरर्चयित्वा तु कम्बलेन च वेष्टयेन ॥
दद्यादेवं हविः शम्भोस्ताम्बूलेन समन्वितम् । सन्ध्यन्तरे परेद्युर्वा कम्बलाद्यं विवर्ज्य च ॥
पूर्ववत्पूजयेद्देवं गुरुं संपूजयेत्तदा । दक्षिणां दापयेत्तस्य यथाविभवविस्तरम् ॥
अङ्कुरार्पणपूर्वं वा रहितं वैतदाचरेत् ।
[10] C, D, E : घृतेन कम्बलं चापि
[11] D : यच्छिवाय
[12] D : विशुद्धस्तु; E : विशुद्धं च
[13] C, E : संग्राह्य

[1]सम्यगुत्तेजयित्वाथ [2]गन्धयुक्ते सुशीतले । [3]ज्वलदग्निसमोष्णं तत्प्रक्षिपेच्च विचक्षणः ॥५८॥
तस्मादन्ये[4] ततश्चापि [5]पात्रे तोये सुशीतले । पुनः प्रक्षिप्य तस्माच्च पुनस्तद्वत्तथापरे[6] ॥ ५९ ॥
प्रक्षिप्य बहुशस्तत्र निक्षिप्य [7]च घृतं तथा । कृत्वा कम्बलवत्तेन लिङ्गमाच्छाद्य सर्वतः ॥६०
नित्यवत्पूजयित्वेशं [8]परमान्नं हविस्तदा । दत्त्वा च मुखवासेन ताम्बूलमथ दापयेत् ॥ ६१ ॥
एवं कृत्वा ततो देवं नत्वा पूजां समापयेत् । ततः [9]संध्यन्तरे प्राप्ते विसृज्य घृतकम्बलम् ॥
प्रक्षिपेदग्निमध्ये तु [10]बहिर्गर्तप्रदीपिते । ततः [11]स्नाप्य च देवेशं सहस्रादिषु संभवैः ॥ ६२ ॥
कलशैस्तु[12] हविर्दत्त्वा [13]प्रभूतमुखवासयुक् । ताम्बूलं च ततो दत्त्वा क्षमस्वेति समापयेत् ॥६४

[14]इत्यजिताख्ये [15]महातन्त्रे [क्रियापादे] [16]घृतस्नानविधिर्नाम
त्रयस्त्रिंशः पटलः ॥

---

1 A : सम्यगाच्छादयित्वाथ; C : सम्यक् तज्जापयित्वाथ; S : सम्यक्तच्छोधयित्वा तु

2 A : गन्धयुक्तेन शीतले

3 A : जले त्वग्निसमोष्णं

4 La forme grammaticale correcte est अन्यस्मिन्

5 C, E : पात्रतोये

6 A : समाचरेत् pour तथापरे

7 C, D, E : तु घृतं ततः

8 C : परान्नं तु pour परमान्नं

9 A : संध्यान्तरे

10 A : बहिर्गत्वा pour बहिर्गर्त

11 A : स्नाप्येत pour स्नाप्य च

12 A : च pour तु

13 D, E : प्रभूतं pour प्रभूत

14 E : इत्यजिते pour इत्यजिताख्ये

15 E omet महातन्त्रे

16 A : घृतस्नानविधिः द्वात्रिंशः पटलः; C : घृतकम्बलविधिपटलः; D : घृतस्नानघृतकम्बलविधिपटलः द्वात्रिंशत्; E : घृताभिषेकविधिपटलः

## [चतुस्त्रिंशः पटलः]

### शीतकुम्भविधिः[1]

[शीतकुम्भफलम्[2]]

शीतकुम्भविधिं वक्ष्ये शृणु देवारिसूदन । दिव्यान्तरिक्षभौमानामद्भुतानां विनाशनम् ॥ १ ॥
ज्वरमारी[3]प्रशमनमनावृष्टिहरं परम् ।

[त्रिपादीविधानम्[4]]

याज्ञिकं वृक्षमादाय [5]त्रिपादीं कारयेत्सुधीः ॥ २ ॥
लिङ्गस्योपरि [6]तस्याः स्यादुच्छ्रयं [7]हस्तमात्रकम् । दक्षिणेतरपृष्ठेषु [8]पादास्तस्यास्त्रयः स्मृताः ॥३
द्वादशाङ्गुलकं नाहं [9]पादेषु परिकीर्तितम् । त्रिकोणफलका[10] तत्र गायत्र्यङ्गुलसंमिता[11] ॥४॥
सुषिरं तालमात्रं [12]स्याद्घनमक्ष्यङ्गुलं भवेत् । एवं संपाद्य तां सम्यक् क्षालयित्वा शिवाम्भसा ॥

---

[1] Pour शीतकुम्भविधि, voir *Kāmika* II, 15, *Kāraṇa* I, 44, *Yogaja* 10, *Vīra* 86, *Suprabheda* I, 16 et *Sūkṣma* 24; les *śloka* 1b, 3b, 4b, 5a, 6, 7, 8b, 9a, 14b, 15, 16, 17b, 19b, 20b, 23, 24a, 25b et 27a sont cités dans la *Saṃgrahasāra-ratnāvalī-kriyādīpikā*

[2] Cf. *Kāraṇāgama*, I, 44, 1-3a:
अथ वक्ष्ये विशेषेण शीतकुम्भविधिक्रमम् । सर्वलोकहितं पुण्यं सर्वदा सस्यवर्धनम् ॥
अनावृष्टौ ज्वरोत्पत्तौ महामारीप्रकोपने । प्रवर्तितेऽग्निदिग्दाहे ग्रामेऽपि नगरेऽपि वा ॥
वाहनानां तु रोगार्त्तौ शीतकुम्भं तु कारयेत् ।

[3] D : प्रमथन pour प्रशमन

[4] Cf. *Kāraṇāgama*, I, 44, 13-17 :
याज्ञिकैस्तरुभिः कुर्यात्त्रिपादीं लक्षणान्विताम् । रत्निमात्राधिकं लिङ्गमूर्ध्नि चोपरि कल्पयेत् ॥
त्रिपाददैर्घ्यमेवं तु [कल्पयेत्] कल्पवित्तमः । युगाश्रं वा सुवृत्तं वा द्वादशाङ्गुलनाहकम् ॥
पक्षतालप्रमाणेन तदूर्ध्वे फलकां कुरु । अक्ष्यङ्गुलेन सुषिरं वृत्तमध्ये प्रकल्पयेत् ॥
क्षालयेत्पञ्चगव्यैश्च शिवतोयेन सेचयेत् । अधिवासनकाले तु पादानभ्यर्च्य देशिकः ॥
गुणत्रयेण पादेषु गन्धपुष्पादिभिर्यजेत् । वस्त्रेण वेष्टयेत्पादान्प्रोक्षयेत्पुरुषेण तु ॥

[5] C, D : त्रिपादीन्

[6] A : तस्याः स्यान्मुद्रया; C : भागाः स्यादुच्छ्रयं; D, E : भागस्य उच्छ्रयं

[7] C, D, E : हस्तमानतः

[8] C, E : पादास्तस्य त्रयः

[9] A : पदेषु परिवर्तितम्

[10] A : फलकां pour फलका

[11] A : संमिताम् pour संमिता

[12] E : स्याद्घनं मत्स्याङ्गुलं

त्रिपादीं [1]गर्भगेहे [2]तु विन्यसेदस्त्रमुच्चरन् । [3]लिङ्गोर्ध्वे फलकारन्ध्रं यथा मध्यस्थितं तथा ॥६॥
तत्पादफलकाश्चापि[4] नववस्त्रेण वेष्टयेत् । द्वात्रिंशत्प्रस्थसंपूर्णौ कुम्भौ[5] बिम्बफलप्रभौ[6] ॥ ७ ॥

[एकस्य कुम्भस्य त्रिपाद्युपरि स्थापनम्[7]]

[8]वेष्टयित्वाथ सूत्रेण तयोरेकस्य पृष्ठतः । कृत्वा छिद्रं सुमध्यस्थं [9]तत्र नालं प्ररोपयेत् ॥ ८ ॥
[10]तच्च सौवर्णमेव स्याद् धुत्तूरकुसुमोपमम् । [11]तस्य द्व्यङ्गुलकं दैर्घ्यं तस्य वक्त्रे [12]च विस्तरम् ॥
[13]तत्प्रमाणं च तन्मूले [14]गोवालाग्रमितं भवेत् । [15]सनालं तु ततः कुम्भं [16]प्रक्षाल्यास्त्रं समुच्चरन्[17]॥

[कुम्भान्तरस्य स्थण्डिले स्थापनम्[18]]

[19]सर्वात्मजपपूर्वं तु त्रिपाद्यूर्ध्वे तु[20] विन्यसेत् । कुम्भमन्यमथैशान्ये स्थण्डिले [21]शालिनिर्मिते॥

---

[1] D : गज pour गर्भ [2] C, D, F : अथ pour तु

[3] A : लिङ्गोर्ध्वे फलकारन्ध्रं ; C : लिङ्गोर्ध्वफलकान्र्ध्वं [4] C, D : फलकांश्चापि pour फलकाश्चापि

[5] A : संपूर्णं कुम्भं pour संपूर्णौ कुम्भौ ; E : संपूर्णौ कुम्भे

[6] E : प्रभे pour प्रभौ

[7] Cf. *Kāraṇāgama*, I, 44, 34-36 :
सर्वलक्षणसंयुक्तं सर्वतोयसमायुतम् । कुम्भमुद्धृत्य शिरसा बाह्यधामप्रदक्षिणम् ॥
त्रिपाद्यूर्ध्वे न्यसेत्कुम्भं व्योमव्यापि समुच्चरन् । सुषिरं कुम्भपृष्ठे तु कारयेत्तु विचक्षणः ॥
माषमात्रं सुवर्णेन चतुरङ्गुलमानतः । नालं तत्र प्रकर्तव्यं यवार्धसुषिरं कुरु ॥

[8] C, D, E : वेष्टयित्वा ससूत्रेण [9] S : हेमनालं pour तत्र नालं

[10] E : सौवर्णेन कृतं कार्यं धुत्तूर० ; S : सौवर्णं नालमेवं तु धुर्धूर०

[11] A : तस्यापि द्व्यङ्गुलं दैर्घ्यं [12] A : तु pour च

[13] C : यत्प्रमाणक्रमं मूले ; D, E : यत्प्रमाणं क्रमान्मूले

[14] C : गोपालाग्रामिदं ; D, E : गोवालाग्रामिदं [15] C, D : स्वनालं

[16] A : प्रक्षाल्य अस्त्रमुच्चरन्

[17] *Saṃgrahasāraratnāvalī* ajoute :
सर्वालंकारसंयुक्तं सर्वातोयसमन्वितम् । कुम्भमुद्धृत्य शिरसा बाह्यधामप्रदक्षिणम् ॥

[18] Cf. *Suprabhedāgama*, I, 16, 3-9a :
द्वात्रिंशत्प्रस्थसंपूर्णं बिम्बप्रभासमन्वितम् । त्रिसूत्रैर्वेष्टयित्वा तु यवान्तं वाथवाङ्गुलम् ।
शिवाग्रे स्थण्डिलं कृत्वा यावदष्टौ सकर्णिकम् । तण्डुलैः शोभितं कृत्वा तिलैर्दर्भैः परिस्तरेत् ॥
अष्टद्रोणेन शालिना तदर्धैस्तण्डुलैर्युतम् । तण्डुलार्धतिलैर्युक्तं कारयेत्तु विचक्षण. ॥
वस्त्रपूतेन तोयेन शिवकुम्भं तु पूरयेत् । सर्वगन्धसमायुक्तं पञ्चरत्नसमन्वितम् ॥
सवस्त्रं सापिधानं च सकूर्चं हेमसंयुतम् । स्थण्डिले विन्यसेत्कुम्भं गन्धपुष्पादिभिर्युतम् ॥
पूर्वेद्युरधिवासः स्याद्रात्रौ जागरमाचरेत् । दिशास्वध्ययनं कार्यं कुम्भं स्पृष्ट्वा विशेषतः ॥
शान्तिहोमं प्रकर्तव्यं तस्याग्रे तु विशेषत. ।

[19] A : सर्वात्मानं जपेत्पूर्वं त्रिपाद्यग्रेषु [20] E : च pour तु

[21] C, D : शालि निर्दिशेत् ; E : शालिभिस्तते

आलिख्याष्टदलं पद्मं कर्णिकाकेसरान्वितम् । तण्डुलैः [1]सतिलैर्लाजैरवकीर्य समन्ततः ॥ १२ ॥
[2]कुशैश्च संपरिस्तीर्य [3]वामाद्यास्तु दले यजेत् । मनोन्मनीं यजेन्मध्ये [4]तत्र तं चापि विन्यसेत् ॥
गन्धतोयेन [5]तं मन्त्री पूरयेद्ब्रह्मपञ्चकैः । एलालवङ्गकर्पूरचन्दनागरुकुङ्कुमैः ॥ १४ ॥
[6]पेषितैर्लोलितं[7] तोयं गन्धपुष्पाधि[8]वासितम् । [9]पुनश्च [10]वस्त्रपूतं तद्गन्धतोयमिति स्मृतम् ॥
कुम्भाम्भसि क्षिपेद्धैमं[11] पद्ममप्यक्षरान्वितम् । [12]कूर्चं प्रक्षिप्य तत्रैव [13]पिधानेन [14]पिधाय च॥
[15]वस्त्रेण [16]वेष्ट्य तं मन्त्री गन्धपुष्पादिनार्चयेत् । हृन्मन्त्रेण ततो [17]हस्तं दक्षिणं तन्मुखे सुधीः॥
न्यस्य मन्त्रं जपेत् सम्यक् संवत्सरमयं समम् । ततोऽपि पञ्चब्रह्माणि चेशानादि पठेत्सकृत् ॥
ततस्तत्कुम्भपूर्वादिचतुर्दिक्षु ऋगादिभिः । [18]सार्धमध्ययनैर्धीमान् दिशाहोमं तु कारयेत् ॥ १९॥
शान्तिहोमं तु वा [19]कुर्याद्देशेऽस्त्रनवमंयुतम् । तत्काले स्नपनं चापि सहस्रादिषु [20]संभवैः॥२०॥
विधिवत्कलशैः कुर्याद्देशिकः शास्त्रचिन्तकः । प्रतिकुम्भे ततो वारि समादाय सुशीतलम्॥२१॥

[कुम्भे शीनवारिपूरणम्[21]]

कुम्भे देवोपरि न्यस्ते [22]पूरयेद्वत्सरेण तु । [23]सर्वात्ममन्त्रपूर्वं तु [24]पिधानेन पिधाय च ॥ २२ ॥

---

[1] C, E : सु pour स
[2] C, D : कुशया pour कुशैश्च
[3] C : वामादींस्तु दले यजेत् ; D : वामादीन् तद्दलैर्यजेत् ; E : वामादींश्च दले यजेत्
[4] C, D, E : ततश्चाप्यथ विन्यसेत्
[5] A : तन्मन्त्री
[6] S : चूर्णितैः pour पेषितैः
[7] A : लोलितैः pour लोलितं
[8] A : आदि pour अधि
[9] S : पुनः । गन्धतोयेन तन्मध्ये पूरयेत्पञ्चगव्यकैः
[10] A : वस्त्रपूतेव pour वस्त्रपूतं तद्
[11] S : हेम pour हैमं
[12] A : कूर्चं तत्रैव निक्षिप्य
[13] C, S : विधानेन
[14] C : विधाय च
[15] A omet les *śloka* 17 à 22
[16] C, E : वेष्टितं मन्त्री
[17] D : हस्ते दक्षिणे तन्मुखैः ; S : हस्तं दक्षिणान्तं मुखैः
[18] E : मार्धं जपं चरेद्धीमान्
[19] D : कुर्याद्देशे pour कुर्याद्देशे
[20] S : संभवे
[21] Cf. *Kāraṇāgama*, I, 44, 37b-43a :

तद्द्रव्येण समापूर्य स्थण्डिलेऽप्युपकुम्भकम् । स्थापयित्वा विशेषेण मन्त्रन्यासादिवर्जितम् ॥
मध्वादि शोषणात्पूर्वमुपकुम्भं तु पूरयेत् । मासं वाप्यर्धमासं वा अथवा दिनसप्तकम् ॥
पञ्चाहं वा त्र्यहं वापि दिनमेकमथापि वा । यावन्निश्चित्य दिवसं तावदेवं समाचरेत् ॥
ब्राह्मणान्भोजयेन्नित्यं यथावित्तानुसारतः । कुम्भादेव स्नवं कुर्यान्नित्यं नैमित्तिकं तथा ॥
पूर्वे निश्चित्य काले तु मध्याह्ने त्ववरोहणम् । कृत्वा संपूजयेद्देवं स्नपनं कारयेत्ततः ॥
शान्तिहोमं ततः कृत्वा पूजयेत्तु विशेषतः । एवं यः कुरुते मर्त्यः सोऽन्ते क्षेममवाप्नुयात् ॥

[22] C, D : प्रक्षिपेद् pour पूरयेद्
[23] C : सर्वात्मापूपपूर्वं तु ; D : सर्वात्मपूर्वपूर्वं तु
[24] C : विधानेन विधाय च

वस्त्रेण [1]वेष्टयेत्पश्चात्पुष्पं [2]तस्योर्ध्वतो न्यसेत् । [3]पुण्याहपूर्वकं [4]सर्वकर्म कुर्याद्विचक्षणः ॥२३॥
कर्म कृत्वा [5]तु पूर्वाह्णे [6]मध्याह्ने [7]तज्जलं क्षिपेत् । एवं प्रतिदिनं कुर्याद्यावत्सप्तदिनान्तकम् ॥
हवनं स्नपनं चैव जलस्यावर्तनं तथा । हविर्निवेदयेन्नित्यं [8]प्रभूतं सर्वशान्तये ॥ २५ ॥
समाप्तौ स्नपनं पूजां विशेषेण प्रकल्पयेत् । [9]देवस्य पूजकादीनां[10] दक्षिणां दापयेत्तदा[11]. २६॥
[12]माहेश्वरांस्तु विप्रेन्द्रान्भोजयेत्सर्वशान्तये ॥ २७ ॥

[13]इत्यजिताख्ये [14]महातन्त्रे [क्रियापादे] [15]शीतकुम्भविधिर्नाम

चतुस्त्रिंशः पटलः[16] ॥

---

[1] S : आवेष्टयेत् pour वेष्टयेत्

[2] A : तस्योर्ध्वे विन्यसेत् ; S : तस्योपरि न्यसेत्

[3] A : पुण्याहं पूर्वकं

[4] A : कर्म कुर्यात्तत्र विचक्षणः ; S : सर्वं कर्म कुर्याद्विचक्षणः

[5] A : अथ pour तु

[6] C : मध्यान्तु pour मध्याह्ने

[7] A : तु जलं pour तज्जलं

[8] E : पठितं pour प्रभूतं

[9] Les *śloka* **26**b et 27a et le colophon manquent dans le ms. D

[10] E : देशिकाध्येतृजापीनां

[11] *Saṃgrahasāraratnāvaḥ* ajoute :

दशभिष्कमधमं ज्ञेयं द्विगुणं मध्यमं भवेत् । त्रिगुणं चोत्तमं प्रोक्तं देशिकस्य तु दक्षिणा ॥

[12] E : माहेश्वरांश्च ; S : माहेश्वरादि

[13] E : इत्यजिते pour इत्यजिताख्ये

[14] E omet महातन्त्रे

[15] A : शीतकुम्भविधिः त्रयस्त्रिंशः पटलः ; C, E : शीतकुम्भविधिपटलः

[16] C ajoute समाप्तः

## [पञ्चत्रिंशः पटलः]

### अङ्कुरार्पणविधिः[1]

[त्रिविधमङ्कुरार्पणम्[2]]

**अथाङ्कुरविधिं[3] वक्ष्ये शृणु देवारिसूदन । शिवयज्ञेषु सर्वेषु कर्षणादिषु [4]देशिकैः ॥ १ ॥**

**मङ्गलार्थं प्रयोक्तव्यं [5]विधिना मङ्गलाङ्कुरम् । उत्तमं मध्यमं [6]चान्यदिति त्रैविध्यसंयुतम्॥२॥**

[अङ्कुराधाराः,[7] बीजावापनकालाश्च[8]]

**पालिका [9]घटिकाश्चैव शरावास्त्रिविधाः स्मृताः । [10]सौवर्णा राजता वापि ताम्रजा मृण्मयास्तु वा॥**

---

[1] Pour अङ्कुरार्पणविधि, voir *Acintyaviśvasādākhya* 7, *Kāmika* I, 63, *Kāraṇa* I, 20 et II, 12, *Dīpta* 87, *Raurava* I, ii, 17, *Vīra* 43 et *Suprabheda* I, 35; ms. D omet ce *paṭala*.

[2] Cf. *Kāmikāgama*, I, 63, 1-2a :
अथातः संप्रवक्ष्यामि अङ्कुरार्पणलक्षणम् । सर्वमङ्गलकार्यादौ कर्तव्यो मङ्गलाङ्कुरः ॥
उत्तमो मध्यमो नीचस्त्रिविधः परिकीर्तितः ।
cf. *Vīrāgama*, 43, 5b-6a :
स्थापने प्रोक्षणे यागे उत्सवे स्नपनेऽपि च । अन्ये च मङ्गले कार्ये मङ्गलाङ्कुरमुच्यते ॥
voir aussi *Rauravāgama*, I, ii, 17, 1 (p. 65)

[3] A : अङ्कुरार्पणविधिं वक्ष्ये

[4] A : देशिकः

[5] E : विधिकं

[6] A : चान्यमिति pour चान्यदिति

[7] Cf. *Kāmikāgama*, I, 63, 9-16 :
शरावाः पालिकाश्चैव घटिकाश्च त्रिधा स्मृताः । सर्वैः कृतं यदुत्कृष्टं वर्गाभ्यां मध्यमं भवेत् ॥
कनिष्ठं चैकवर्गेण तेषां लक्षणमुच्यते । सौवर्णं राजतं ताम्रं निर्मितं मृण्मयं स्मृतम् ॥
पालिकाननविस्तारो मन्वङ्गुलमुदाहृतम् । एकैकाङ्गुलहीनं स्यान्मध्यमे कन्यसे क्रमात् ॥
विस्तारे सममुत्सेधः पादतारस्तदर्धतः । विस्तारे कौशिकांशेन परितः शेष उच्यते ॥
विस्तारस्य त्रिभागैकवर्तितं-बिलमुच्यते । विस्तारयुगभागैको दण्डविस्तार इष्यते ॥
घटिका कलशाकारा दण्डपादौ तु पूर्ववत् । विद्येश्वराङ्गुलः कुम्भविस्तारः पञ्चवक्त्रयुक् ॥
पालिकार्धप्रमाणेन त्रिपादो वा शरावकः । यथासंभवमानं वा पालिकादि प्रकीर्तितम् ॥
भिन्नं कृष्णं च सुषिरं दुर्गन्धं च पुराणकम् । छिन्नलिङ्गादिसंयुक्तं वर्जयेदङ्कुरार्पणे ॥
voir aussi *Rauravāgama*, I, ii, 17, 12-15a :

[8] Cf. *Kāmikāgama*, I, 63, 2b-4a :
नवाहे वाथ सप्ताहे पञ्चाहे त्रिदिनेऽपि वा । सद्योऽङ्कुरार्पणं वापि शिवं संपूज्य चारभेत् ॥
सायादिदिनमारभ्य देवानामङ्कुरार्पणम् । तद्दिने तु मनुष्याणां देवानामपि संमतम् ॥
voir aussi *Rauravāgama*, I, ii, 17, 2

[9] A : घटिका चैव ; C : यदि वा चैव

[10] A : सौवर्णं राजतं वापि ताम्रजं मृण्मयं तु वा

भवेयुरङ्कुराधाराः सर्वलक्षणलक्षिताः । शिवमुद्दिश्य यत्कर्म यत्र वै क्रियते जनैः ॥ ४ ॥
तस्मात्पूर्वं[1] प्रयुञ्जीत नवमे सप्तमेऽपि वा[2] । पञ्चमे वा[3] त्र्यहे वापि कुर्यात्तद्बीजवापनम् ॥५॥

[अङ्कुराधारसंख्या[4]]

उक्तानां दिवसानां तु निशि पूर्वे प्रयोजयेत् । प्रत्येकमष्टभिस्त्वेतैः पालिकाद्यैर्वरं भवेत् ॥ ६ ॥
पालिकाभिरथाष्टाभिश्चतुर्भिर्घटिकाह्वयैः[5] । शरावैश्चापि तत्संख्यैर्मध्यमं [6]परिकीर्तितम् ॥ ७ ॥
चतस्रः पालिकाश्चैव चतस्रो घटिकास्तथा । शरावाश्च[7] तथैव स्युः [8]कन्यसे चाङ्कुरार्पणे ॥ ८ ॥

[स्थण्डिलादिकरणम्, कुम्भस्थापनं च[9]]

सर्वेषां स्थापनं तेषां भवेद्यागगृहेऽथवा । देवाग्रे पार्श्वयोश्चापि गोमयेनानुलेपिते ॥ ९ ॥
कुट्टिमे स्थण्डिलं कुर्यात्सप्ततालसुविस्तृतम् । षट्तालं मध्यमं प्रोक्तं पञ्चतालं तु कन्यसम् ॥
शालिभिर्विमलैस्तत्र द्वात्रिंशत्प्रस्थसंमितैः । प्रस्थैर्वाथ चतुर्विंशैः षोडशैर्वापि तत्र च ॥ ११ ॥
पद्ममष्टदलं कुर्यात्कर्णिकाकेसरान्वितम् । कर्णिकायां यजेत्पूर्वमादिशक्तिं मनोन्मनीम् ॥ १२ ॥

---

[1] C, E : पूर्वे pour पूर्वं  [2] E : च pour वा  [3] E : च pour वा

[4] Cf. *Kāmikāgama*, I, 63, 18-19 :
पृथक्षोडशसंख्यातमुत्तमं परिकीर्तितम् । मध्यमं मनुसंख्यातं दशतः कन्यसं भवेत् ॥
उत्तमक्रममेवं स्यादष्टषड्वेदसंख्यया । मध्यमक्रममुद्दिष्टं त्रिद्व्येकैः कन्यसं भवेत् ॥
cf. *Kāraṇāgama*, I, 20, 22b-23 :
"पालिकादिषु । चतुर्विंशतिसंख्याभिः स्थापयेत्तु विशेषतः ॥
षोडशद्वादशं चैव वसु चैव चतुर्थकम् ।
cf. *Suprabhedāgama*, I, 35, 16 :
"पालिकादीनि विन्यसेत् । प्रत्येकं षोडशं वापि अष्टौ वा चतुरोऽपि वा ॥

[5] A : आह्वयम् pour आह्वयैः  [6] C, E : समुदाहृतम्

[7] C, E : तु pour च  [8] A : कन्यसं चाङ्कुरार्पणम्

[9] Cf. *Kāraṇāgama*, I, 20, 24-30a :
प्रासादस्याग्रके वापि दक्षिणे चोत्तरेऽपि वा । गोमयालेपिते शुद्धे मण्टपे समलंकृते ॥
प्राक्सूत्रं वसुभिः कुर्यादुदक्सूत्रं तथैव च । व्योमव्यापिपदं ग्राह्य लेपयेदभिकोष्ठकम् ॥
त्रीणि चाभ्यन्तरे त्यक्त्वा चतुर्दिक्षु क्रमाद्बुधः । द्वारार्थं च महाशासु पदमेकं परित्यजेत् ॥
स्थण्डिलं कारयेद्धीमानष्टद्रोणैश्च शालिभिः । तस्य मध्ये लिखेत्पद्ममष्टपत्रं सकर्णिकम् ॥
स्थापयेत्कर्णिकामध्ये चन्द्रकुम्भं नवं शुभम् । सौवर्णं राजतं वापि पङ्कजं त्वर्धचन्द्रवत् ॥
कुम्भमध्ये तु तोयं स्यात्तोयमध्ये तु पङ्कजम् । पङ्कजस्यैव मध्ये तु चन्द्ररूपं प्रशस्यते ॥
ससूत्रं सापिधानं च सवस्त्रं वारिपूरितम् ।

प्रागादिषु दलेष्वष्ट[1] वामाद्याः परितो यजेत् । कर्णिकायां न्यसेत्कुम्भं काञ्चनाद्यैस्तु निर्मितम्॥
क्षालितं शोधितं चैव [2]द्रोणपूर्णं मनोरमम् । सितसूत्रविचित्रं च गन्धोदपरिपूरितम् ॥ १४ ॥

[उत्तमाङ्कुरे पालिकादिस्थापनम्[3]]

सकूर्चं सापिधानं च सहेमं वस्त्रवेष्टितम् । [4]ततस्तद्दलमूलेषु न्यसेदष्ट[5] शरावकान् ॥ १५ ॥
दलमध्ये न्यसेत्तद्वत्क्रमेण घटिकाष्टकम् । दलाग्रेषु ततश्चाष्ट[6] पालिकाः परितो न्यसेत् ॥१६॥
शुद्धमृत्तिकया [7]पूर्णा गोशकृच्चूर्णयुक्तया । एवं श्रेष्ठप्रकारं [8]स्यान्मध्यमं त्वधुनोच्यते ॥ १७॥

[मध्यमाधमाङ्कुरयोः पालिकादिस्थापनम्[9]]

पूर्ववत्पालिकाः स्थाप्य दलमध्ये ततः क्रमात् । विन्यसेद्घटिका दिक्षु शरावांश्च विदिक्षु वै ॥

---

[1] C, E : अष्टौ pour अष्ट [2] C : द्रोणपूर्वमनोरमम

[3] Cf. *Kāmikāgama*, I, 63, 20b-31a :

[उत्तमोत्तमाङ्कुरविधि.]

गोमयालेपनं कृत्वा पिष्टचूर्णैर्विचित्रयेत् । पञ्चगव्येन संप्रोक्ष्य सूत्रपातमथाचरेत् ।
सूत्रप्राप्तिर्दश प्राच्यां दशोदीच्यां तथैव च । नव मध्ये च संगृह्य परितः षोडशं त्यजेत् ॥
चतुर्दिक्षु च चत्वारि द्वाराणि द्विपदानि च । कोणे द्वादशसंख्यानि तेषु स्युः पालिकादय. ॥
मध्ये नवपदे पद्मं पालिकाः कोणदेशके । घटिका द्वार वामे स्युः शरावा द्वारदक्षिणे ॥
एवं द्वारेषु चान्येषु कल्पयेद्देशिकोत्तमः ।

[उत्तममध्यमाङ्कुरविधिः]

प्राक्सूत्रं वसुसंख्यानमुदक्सूत्रं तथैव च । मध्ये व्योमपदं हित्वा परितोऽष्टपदं त्यजेत् ॥
मध्यमे सोमकुम्भः स्यात्पूर्वपङ्क्तिद्वये पुनः । पालिका मनुसंख्याताः पश्चिमे घटिका मता ॥
तदन्तरालषट्के च दक्षेऽदक्षे शरावकाः । कुम्भपार्श्वे द्वयं प्रोक्तं पूर्वस्मिन्पश्चिमे द्विजाः ॥
श्रेष्ठमध्यममेवं स्यादुत्तमाधममुच्यते ।

[उत्तमाधमाङ्कुरविधिः]

प्राक्सूत्रं मुनिसंख्यानमुदक्सूत्रं तथैव च । मध्ये वेदपदं मुक्त्वा तत्र कुम्भं निवेशयेत् ॥
ईशानकोणादारभ्य पालिका बाह्यपङ्क्तिके । राक्षस्यां दिशि कोणान्तं शरावा. परिकीर्तिताः ॥
अन्तर्दिशासु द्वौ द्वौ वा वायावीशे परा मताः । उत्कृष्टकन्यसं प्रोक्तम् ”

voir aussi *Rauravāgama* I, ii, 17, 18a et note 6

[4] A : ततस्तु pour ततस्तद् [5] C, E : अष्टौ pour अष्ट

[6] C, E : अष्टौ pour अष्ट [7] A : चूर्णं pour पूर्णा

[8] A : स्यादधमं

[9] Cf. *Kāmikagama*, I, 63, 31b-43a :

पञ्चपञ्चपदं कृत्वा मध्यमे स्थापयेद्घटम् । चतुर्दिक्षु च कोणेषु स्थापयेत्पालिका बहिः ॥
कुम्भबाह्ये च घटिकाः स्वान्तरेऽष्टौ प्रकीर्तिताः । शरावान्स्थापयेद्बाह्ये पालिकानाळ्यान्तरे ॥
मध्यमे ज्येष्ठमाख्यातं मध्यमध्यमथोच्यते ।

[1]एवं [2]मध्ये क्रमः प्रोक्तः कन्यसं त्वधुनोच्यते । [3]पालिका दिग्दलाग्रेषु चतुर्ष्वपि च विन्यसेत् ॥
विदिक्षु घटिकास्तद्वद्दलमूले शरावकान् । चतुर्दिक्षु न्यसेन्मन्त्री परिस्तीर्य कुशांस्ततः ॥ २० ॥

[बीजावापनादि[4]]

पुण्याहं वाचयित्वाथ प्रोक्षयेद्धृदयेन तु । सोमराजं ततः कुम्भे गन्धाद्यैरर्चयेत्क्रमात् ॥ २१ ॥

---

[ मध्यममध्यमाङ्कुरविधिः ]

षोढा प्रागग्रसूत्राणि तथैवोत्तरगानि च । मध्ये नवपदं कृत्वा ईशानं नैर्ऋतं विना ॥
पालिकाः पञ्च पूर्वस्थाः पश्चिमस्थाः शरावकाः । दक्षिणे त्रितये वामे घटिकाः षड् व्यवस्थिताः ॥
अन्तरीशानदेशे तु पालिकैका व्यवस्थिता । तथैव नैर्ऋते देशे शरावः सुव्यवस्थितः ॥

[ मध्यमाधमाङ्कुरविधिः ]

षोडशांशं ततः कृत्वा मध्ये वेदैर्व्यवस्थिताः । पालिका घटिकाश्चैव शरावाश्च यथाक्रमात् ॥
ईशानकोणादारभ्य वह्न्यन्ताः समुदीरिताः । अनेनैव क्रमेणैव वह्न्यादिषु च विन्यसेत् ॥

[ अधमोत्तमाङ्कुरविधिः ]

कृत्वा नवपदं मध्ये सोमकुम्भो व्यवस्थितः । पूर्ववत्पालिकाद्यं तु शर्वमारभ्य विन्यसेत् ॥
अवशिष्टं बहिः सोमे कन्यसाद्यं प्रकीर्तितम् ।

[ अधममध्यमाङ्कुरविधिः ]

प्राग्वन्नवपदं कृत्वा द्वारे पूर्वत्र पश्चिमे । ईशानकोणादारभ्य पालिकाद्यं तु विन्यसेत् ॥
एतत्कन्यसमध्यं स्यात्ततः कन्यसकन्यसम् ।

[ अधमाधमाङ्कुरविधिः ]

कृत्वा नवपदं चापि त्यजेत्कोणचतुष्टयम् । मध्ये कुम्भं च पूर्वादि पालिकादींश्च विन्यसेत् ॥
एवं न्यासक्रमः प्रोक्तः"

[1] C et E omettent les *śloka* 18b, 19 et 20a

[2] A : मध्यक्रमं प्रोक्तं [3] A : पालिकादीन् दलाग्रेषु

[4] Cf. *Kāmikāgama*, I, 63, 48-60a :

तन्मध्ये विन्यसेदिन्दुं तन्मन्त्रेण शिवद्विजः । पायसं दापयेद्विद्वांस्ताम्बूलं दापयेत्ततः ॥
ईशानेन तु मन्त्रेण पालिकादीनि विन्यसेत् । दर्भैः कुशैः पलाशैर्वा निश्छिद्रं सुषिरं नयेत् ॥
शुद्धदेशोत्थमृद्भिस्तु पालिकादीनि पूरयेत् । द्रव्याणि वापयेत्पश्चात्पयसा भावितानि वै ॥
तिलसर्षपमुद्गांश्च माषशिम्बाढकानि च । कुलुत्थं सर्वबीजानि वापयेदुत्तमस्य तु ॥
माषमुद्गकुलुत्थं च तिलं च सर्षपं तथा । एवं तु मध्यमं प्रोक्तं कन्यसं तिलसर्षपम् ॥
अधमं त्वेवमाख्यातमथवान्यदिहोच्यते । तिलसर्षपमुद्गाश्च माषशिम्बकुलुत्थकाः ॥
शालिप्रियङ्गुयवश्यामार्गयवश्यामिहोच्यते । अथवान्यप्रकारेण द्रव्यलक्षणमुच्यते ॥
तिलसर्षपमुद्गाश्च ततो माषकुलुत्थकौ । निष्पावशाल्यपामार्गशिम्बव्रीह्याढकाः स्मृताः ॥
श्यामगोधूमसस्येन्द्रवेणवाः परिकीर्तिताः । पयसा भावितान्यत्र निर्वपेद्धृदयेन तु ॥
अङ्कुरा वर्धनीयाः स्युर्यथाशोभावहा द्विजाः । वापयेद्बीजमुख्येन प्राङ्मुखो वाप्युदङ्मुखः ॥
तत्कुम्भस्थजलेनैव पालिकादीनि सेचयेत् । कुम्भाम्भःशोषणात्पूर्वं गन्धतोयेन पूरयेत् ॥
नित्यं संपूज्य हविषां दापयेत्तद्दिनान्तकम् । निर्दिष्टदिवसे प्राप्ते सोममुद्वासयेत्सुधीः ॥
निर्वापान्ते पिधायैव स्मृत्या गुप्तं निधापयेत् ।

स्वनामपदमन्त्रेण [1]हविर्दद्यात्ततो बुधः । मुद्गमाषकुलत्थं च[2] तिलसर्षपकौ तथा ॥ २२ ॥
निष्पावशाल्यपामार्गं[3] [4]शिम्बो व्रीहिस्तथैव च । [5]आढकी च तथा श्यामा गोधूमयववैणवम्[6] ॥
सर्वैरुत्तममेतैस्तु दशभिर्मध्यमं भवेत् । पञ्चभिः कन्यसं प्रोक्तं [7]बीजैर्मुद्गादिभिः क्रमात्॥२४॥
प्रक्षाल्य पयसा [8]बीजान् प्रोक्षयेद्धृदयेन[9] तु । शङ्खदुन्दुभिनिर्घोषैर्गीतनृत्तसमाकुलम्[10]॥ २५ ॥
पञ्चब्रह्म समुच्चार्य वापयेत्पालिकादिषु । सोमकुम्भजलेनैव पालिकादिषु [11]सेचयेत् ॥ २६ ॥
दलाग्रस्थेषु सर्वेषु लोकपालान्समर्चयेत् । मरुतो दलमध्ये [12]तु दलमूले वसूनपि ॥ २७ ॥
पूजयेदुत्तमे [13]प्रोक्तान्मध्यमे तु वसूनपि । [14]न्यस्य समर्चयेच्छेषानधमे चापि [15]तैः सह ॥२८॥
मरुतश्चापि वर्ज्याः स्युर्दलमूलस्थितेष्वपि । चतुर्ष्वपि च [16]धर्मादीन्प्रागादिक्रमतो[17] यजेत्॥२९
एवं तदा समभ्यर्च्य स्वस्तिमङ्गलवाचकैः । [18]पिधाय च [19]पिधानैश्च सुष्ठु गुप्ते [20]निधापयेत्॥३०
अलाभे चोक्तदेशस्य शुचौ रक्षासमन्विते । देशेऽङ्कुरार्पणं कुर्याद्गोमयेनानुलेपिते ॥ ३१ ॥
एवमर्चनमुद्दिष्टं यावदुद्धारणान्तकम् । प्रत्यहं सेचनं चैव कुम्भे चाम्भःप्रवेशनम् ॥ ३२ ॥

[अङ्कुरलक्षणवशाच्छुभाशुभज्ञानम्[21]]

मध्याह्ने कारयेद्धीमानङ्कुराणि च लक्षयेत् । अवक्राणि च शुभ्राणि सर्वसंपत्कराणि च ॥३३॥
धूम्राणि [22]चाथ कुब्जानि [23]श्रेयोविघ्नकराणि च । [24]एवं ज्ञात्वाशुभं[25] तत्र शान्तिहोमं तु कारयेत् ॥ ३४ ॥

[26]इत्यजिताख्ये [27]महातन्त्रे [क्रियापादे] [28]अङ्कुरार्पणविधिर्नाम
पञ्चत्रिंशः पटलः[29] ॥

---

[1] E : हविर्दत्त्वा ततो
[2] A : कुलस्थानि pour कुलत्थं च
[3] A : अपामार्गान् pour अपामार्गं
[4] C : शिवव्रीहि pour शिम्बो व्रीहि ; E : शिम्बव्रीहि
[5] A : आढकां ; E : आढकं
[6] A : वैणवान् pour वैणवम्
[7] A : बीज pour बीजैर्
[8] Le mot बीज se trouve ici au masculin au lieu du neutre
[9] A : पुरुषेण pour हृदयेन
[10] A : समाकुलैः pour समाकुलम्
[11] C : सेवयेत्
[12] E : अपि pour तु
[13] A : प्रोक्तं pour प्रोक्तान्
[14] A : न्यस्त्वा pour न्यस्य
[15] A : ते pour तैः
[16] A : धर्मादि pour धर्मादीन्
[17] A : क्रमशो pour क्रमतो
[18] C : विधाय च
[19] C : विधानैस्तु ; E : पिधानेन
[20] A : निधाय च
[21] Cf. *Kāmikāgama*, I, 63, 60b-62a :
अङ्कुरास्तु सिताः शस्ताः कोमला ऊर्ध्वगामिनः । कृष्णं च धूम्रवर्णं च पिङ्गलं श्यामलं तथा ॥
तिर्यग्गतं च कुब्जं च वर्जयेच्छुद्धकर्मणि । शान्तिहोमं ततः कुर्यात्तन्निवृत्त्यर्थमेव च ॥
[22] E : वा pour च
[23] A : श्रेयोविघ्नकारणम्
[24] E : एतद् pour एवं
[25] A : अशुभैः pour अशुभं
[26] E : इत्यजिते pour इत्यजिताख्ये
[27] E omet महातन्त्रे
[28] A : अङ्कुरार्पणाविधिः चतुस्त्रिंशः पटलः ; C, E : अङ्कुरार्पणविधिपटलः
[29] C ajoute समाप्तः

## BIBLIOGRAPHIE

### I

### IMPRIMÉS


*Amarakośa*, Oriental Book Agency, Poona, 1941.

Bhattacharya, Tarapada : *A study on Vastuvidya, or Canons of Indian Architecture*, Patna, 1947.

*Īśānaśivagurudevapaddhati* (ou *Siddhāntasāra*) par Īśānaśivagurudevamiśra ; éd. par T. Gaṇapatiśāstri ; vol. I *Sāmānyapāda*, 1920 ; vol. II *Mantrapāda*, 1921 ; vol. III *Kriyāpāda*, *paṭala* 1-30, 1922 ; vol. IV *Kriyāpāda*, *paṭala* 31-64 et *Yogapāda*, 1925 ; Trivandrum Sanskrit Series nº 69, 72, 77 et 83.

*Kāmikāgama*, 2 vols. ÇivañāNapôtayantraçālai, Çintātripêṭṭai, Madras, 1909 (Vol. I *Pūrvakāmikāgama* ; vol. II *Uttarakāmikāgama*) (car. grantha).

*Kāraṇāgama*, ÇivañāNapôtayantraçālai, Çintātripêṭṭai, Madras (vol. I *Pūrvakāraṇāgama*, 1921 ; vol. II *Uttarakāraṇāgama*, 1901) (car. grantha).

*Karmakāṇḍakramāvali* par Somaśambhu, The Kashmir Series of Texts and Studies nº 73, 1947 (voir aussi *Somaśambhupaddhati*).

*Kāvyādarśa* de Daṇḍin, éd. par M. Rangacharya, Brahmavadin Press Madras, 1910.

*Kiraṇāgama*, Śivāgamasiddhāntaparipālanasaṃgha, Dêvakoṭṭai, 1932 (I *Vidyāpāda* ; II *Kriyāpāda* ; III *Caryāpāda* ; IV *Yogapāda*) (car grantha).

*Kriyādīpikā* par Śivāgrayogīndrajñānaśivācārya, Muttukumaratampirān, Madras, 1929 (car. grantha.)

*Kriyākramadyotikā* (ou *Aghoraśivācāryapaddhati*) par Aghoraśivācārya, avec le commentaire *Prabhā* de Nirmalamaṇideśika, Chidambaram, 1927 (car. grantha).

*Kumārasaṃbhava* de Kālidāsa, Nirṇayasāgar Press, Bombay, 1955.

*Matsyapurāṇa*, Ānandāśramasaṃskṛtagranthāvaliḥ, nº 54, 1907.

*Mṛgendrāgama*, (*Kriyāpāda* et *Caryāpāda*) avec le commentaire de Bhaṭṭa Nārāyaṇakaṇṭha, 1962, Publication de l'Institut Français d'Indologie Nº 23.

*Mudrānighaṇṭu*, Tantrik Texts, vol. I, pp. 68-82, 1937.

*Mudrāvidhi*, éd. par Priyabala Shah, M. S. University Oriental Series nº 2, Baroda, 1956.

*Muhūrtacintāmaṇi* de Daivajña-Rāmaśarman, Lakṣmī-Veṅkaṭeśvara Press, Kalyāṇ-Bombay (Saṃvat 1979).

*Nāṭyaśāstra* de Bharata, Nirṇayasāgar Press, Bombay, 1943.

*Prabhā* voir *Kriyākramadyotikā*.

*Rauravāgama*, vol. I, Publication de l'Institut Français d'Indologie, nº 18, (I *Vidyāpāda* ; II *Kriyāpāda*).

*Śabdakalpadruma* par Rājā Rādhākānta deva, 5 vols., Baptist Mission Press, Calcutta, 1886.

*Sakalāgamasārasaṃgraha*, ÇivañāNapotayantraçālai, Çintātripêṭṭai, Madras, 1912.

*Sāṃkhyatattvakaumudī* de Vācaspatimiśra, com. sur *Sāṃkhyakārikā*, Nirṇaya sāgar Press, Bombay, 1940.

*Śivāgamaśekhara* (ou *Śivaliṅgapratiṣṭhā*), 2 vols., par ça Kumāra çuvāmik kurukkaḷ, YāLpāṇam, 1949, 1953. (car. grantha).

*Somaśambhupaddhati* par Somaśambhu, Publication de l'Institut Français d'Indologie, nº 25, 1963.

*id.*, Śivāgamaparipālanasaṃgha, Dêvakôṭṭai, 1935.

*Suprabhedāgama*, ÇivañāNapotayantraçālai, Çintātripeṭṭai, Madras, 1907 (I *Kriyāpāda* ; II *Caryāpāda* ; III *Yogapāda*, IV *Jñānapāda*) (car. grantha).

*Vaidyakaśabdasindhu* par Umesa Chandra Gupta, Calcutta, 1914.

*Vātulaśuddhākhya*, ÇivañāNapotayantraçālai, Çintātripêṭṭi, Madras, *id.*, (ou *Āgamarahasyam*) éd. par Talakāḍu āgamika Kṛṣṇadīkṣita, Bangalore, 1958.

## II

## MANUSCRITS

*Acintyaviśvasādākhya*, copies des manuscrits de M. K. Sundareśa Baṭṭar, Madurai et de A. Rāmanātha gurukkaḷ, Kaṇḍanūr (nº T. 7 et 8).

*Aṃśumadāgama*, copies des manuscrits d'Akṣaya gurukkaḷ, KîLvelûr et de M. K. Sundareśa Baṭṭar, Madurai (nº T. 3 et 6).

*Aṃśumatkāśyapa*, copies des manuscrits d'Akṣaya gurukkaḷ, KîLvelûr et de Nāgarāja gurukkaḷ, Periyakuḷam (n° T. 1 et 2).

*Cintyāgama*, copies des manuscrits d'Akṣaya gurukkaḷ, KîLvelûr et de Svāminātha Śivācārya, Tiruvāṭuturai (n° T. 13 et 14).

*Dīptāgama*, copies des manuscrits d'Akṣaya gurukkaḷ, KîLvelûr et de Sundareśa Baṭṭar, Madurai (n° T. 15 et 16).

*Kālottarāgama*, copies des manuscrits de Madras Government Oriental Mss. Library, n° R 14343 et R. 16805 (n° T. 59 et 60).

*Makuṭāgama*, copies des manuscrits d'Akṣaya gurukkaḷ, KîLvelûr, de Kanaka dīkṣitar, Tirunelvêli et de A. Rāmanātha gurukkaḷ, Kaṇḍanûr (n° T. 18, 19 et 20).

*Mataṅgapārameśvara, kriyāpāda*, copie du manuscrit de Subrahmaṇya gurukkaḷ, KuNRkkuḍi (n° T. 21).

*Sahasrāgama*, copie du manuscrit d'Akṣaya gurukkḷ, KîLvelûr (n° T. 33).

*Saṃgrahasāraratnāvalī-kriyādīpikā*, manuscrit de Svāminātha Śivācārya, Dharmapuram Ādhīnam.

*Śivadharmottara*, copies des manuscrits d'Adyar Library and Research Centre, Madras, n° R 66014 et R 75425 (n° T. 75 et T. 72).

*Sūkṣmāgama*, copies des manuscrits d'Akṣaya gurukkaḷ, KîLvelûr, de Kanaka dīkṣitar, Tirunelvêli et de J. Viśvanātha gurukkaḷ, Mêlmaṅgalam (n° T. 36, 37 et 38).

*Svāyambhuvāgama*, copies des manuscrits d'Akṣaya gurukkaḷ, KîLvelûr et de Kanaka dīkṣitar, Tirunelvêli (n° T. 39 et 40).

*Vāruṇapaddhati*, copie du manuscrit d'Ayyāmaṇi Śivācārya, Tiruvāḍānai (n° T. 55).

*Vīrāgama*, copies des manuscrits d'Akṣaya gurukkaḷ, KîLvelûr, de Subrahmaṇya gurukkaḷ, KuNRakkuḍi et de Rāmanātha gurukkaḷ, Kaṇḍanûr (n° T. 29, 30 et 31).

*Yogajāgama*, copies des manuscrits de M. K. Sundareśa Baṭṭar, Madurai et de J. Viśvanātha gurukkaḷ, Mêlamaṅgalam (n° T 24 et 26).

# ERRATA

| Page | ligne | au lieu de | lire | Page | ligne | au lieu de | lire |
|---|---|---|---|---|---|---|---|
| 13 | 1 | तिर्यग्योनं | तैर्यग्योनं | 91 | 1 | नासशैलं | नालशैलं |
| ,, | 15 | **375** | 451 | **97** | 4 | कुण्डमेकेन | कण्ठमेकेन |
| **17** | 8 | कुर्यादिकैकं | कुर्यादेकैकं | 101 | 11 | मकरं मु | मकरं तु |
| **18** | 13 | B,C,D,B | B,C,D,E | 133 | **6** | पूवार्ध | पूर्वार्ध |
| 21 | 8 | तत्क्रमाम् | तत्क्रमात् | 137 | **7** | पक्केष्टकामयम् | पक्वेष्टकामयम् |
| 23 | 22 | विष्णवंशतद्वदेवं | विष्णवंशस्तद्वदेवं | **148** | **1** | दीपवर्ज्याणि | दीपवर्ज्यानि |
| 27 | 25 | महार्षिभि: | महर्षिभिः | 152 | **31** | कार्याक्तिचरेत् | कार्याक्तिमाचरेत् |
| 29 | 21 | I, 48b-**52**a: | I, 33, 48b-52a: | **156** | 10 | **180-187** | 180-181 |
| 30 | **10** | प्रक्रीर्तितम् | प्रकीर्तितम् | -61 | **12** | मनोमन्यास्तु | मनोन्मन्यास्तु |
| **31** | 4 | विवार्जिता | विवर्जिता | 163 | **22** | स्मरम् | स्मरन् |
| 34 | **1** | खङ्ग | खड्ग | 165 | **18** | 96-96a: | 94b-96a: |
| ,, | **23** | कङ्ककाकासि | कङ्ककाकाहि | 166 | **17** | पश्चान्मुख० | पश्चान्मुख० |
| **36** | 22 | सौगान्धिक | सौगन्धिक | **171** | **1** | तेनव | तेनैव |
| 37 | 9 | पुल्लोरु | फुल्लोरु | **173** | **12** | वारुणामाग्नेयं | वारुणमाग्नेयं |
| ,, | 11 | उत्पुल्ल | उत्फुल्ल | **176** | **1** | माणिना | पाणिना |
| 44 | 19 | शुक: | शुक: | ,, | 24 | **3**b-13a | 8b-13a |
| ,, | **22** | **226** | 252 | ,, | **25** | पश्चाच्छौचं | पश्चाच्छौचं |
| 48 | **12** | ईशानं जयेत् | ईशानं पूजयेत् | **180** | **21** | तस्पुरुषेणैव | तत्पुरुषेणैव |
| ,, | 18 | दवापद्मं | दूर्वापद्मं | 190 | 17 | द्वयङ्लं | द्व्यङ्गुलम् |
| **51** | 16 | I, 3-**5**: | I, 3, 86-88 | 207 | 7 | पूर्वखड्गुग्रयोरपि | पर्वखड्गुग्रयोरपि |
| 58 | 4 | इष्टकानाम-मधिवास० | इष्टकानामधिवास० | **215** | 3 | वामाशाखा | वामशाखा |
| | | | | 222 | 2 | हृद्री च | हृद्रीजं च |
| 60 | 24 | स्यण्डिलोपारे | स्थण्डिलोपरि | **223** | **28** | तस्माददाय | तस्मादादाय |
| **65** | 25 | **5**, 8b-6: | 5, 3b-**6** | **227** | **17** | अजाघुतमलाभे | अजाघृतमलाभे |
| **68** | 6 | I, **1**b-15a: | I, **5**, **1**b-15a: | **229** | **14** | वायव्यां जयेद् | वायव्यां पूजयेद् |
| **71** | 14 | पञ्चाभिर् | पञ्चभिर् | **230** | **5** | सामा यार्ध्यकरो | सामान्यार्ध्यकरो |
| 73 | **1** | तिमायास्तु | प्रतिमायास्तु | **232** | **6** | विसर्जभेत् | विसर्जयेत् |
| 76 | 20 | ०धसुत्तमं | ०धमुत्तमं | **242** | **28** | द्क्षिणोत्तरम् | दक्षिणोत्तरम् |
| 77 | 9 | ०त्सेधच्यते | ०त्सेधमुच्यते | 243 | **10** | न्यत्सेत्पूर्वे | न्यसेत्पूर्वे |
| ,, | 10 | प्रकीर्तितत् | प्रकीर्तितम् | ,, | ,, | वतुलं | वर्तुलं |
| ,, | 20 | p. **65** | p. 69 | **250** | 11 | I, 20 | II, 20 |
| 79 | **15** | संप्रवक्ष्याभि | संप्रवक्ष्यामि | ,, | **16** | I, 20 | II, 20 |
| 81 | 11 | वस्त्वाधारस्य | वस्त्राधारस्य | **251** | 23 | कुण्डमर्काम्भसा | कुण्डमध्याम्भसा |
| 82 | 8 | परिकीर्तितत् | परिकीर्तितम् | **254** | **5** | जुहुयादग्निषोम | जुहुयादग्नीषोम |

| Page | ligne | au lieu de | lire |
|---|---|---|---|
| 255 | 28 | घोरण | घोरेण |
| 256 | 12 | १०८ | ११० |
| 268 | 18 | संस्थाप्याभ्य-चर्येद् | संस्थाप्याभ्यर्चयेद् |
| 273 | 5 | वर्ज्याणि | वर्ज्यानि |
| 284 | 22 | पात्राण्युद्धत्य | पात्राण्युद्धृत्य |
| 302 | 23 | चाङ्गुल्यो-श्चोर्ध्वगाः | चाङ्गुल्यश्चोर्ध्वगाः |
| 305 | 12 | I, 3, 4-5a : | II, 3, 4-5a : |
| 309 | 31 | cet | ce |
| 310 | 20 | *Kriya-krama* | *Kriyākrama* |
| 314 | 30 | 8, 14-15a : | 83, 14b-15a : |
| 315 | 30 | प्रात काले | प्रातःकाले |
| 318 | 21 | वितानेन | विधानेन |
| 325 | 28 | च्च | च |
| 332 | 10 | सप्तभिर्मध्ययत्रये | सप्तभिर्मध्यमत्रये |
| 337 | 21 | सयायुक्तान् | समायुक्तान् |
| 339 | 12 | न देवेशं | च देवेशं |
| 358 | 31 | 144-115 | 115-144 |
| 370 | 3 | चव | चैव |
| 377 | 7 | चतु:कलश० | चतुष्कलश० |
| 383 | 12 | प्रणाम | प्रणामैर् |
| 386 | 11 | होग: | होमः |
| 389 | 23 | नानापूप्प | नानापुष्प |
| 393 | 26 | समामुक्तं | समायुक्तं |
| 395 | 14 | अग्नि | अग्निं |
| 408 | 18 | शिम्बो त्रहि | शिम्बो व्रीहि |

---

## *TABLE DES PLANCHES*

*TABLE DES MATIÈRES*

# अनुक्रमणिका


CENTRAL